## NOTES

1. निरूप्य—नि + रूप + णिच् + ल्यप् having acted. The root रूप means 'to act' from which comes रूपक a drama. Compare "अमरवाणीं रूपयति," 'भरतो रथवेग निरूपयति" etc.

2. (a) निरायत etc.—This indicates running at top speed. (b) निष्कम्प etc—The Chamars were ornamental and were placed between the ears. Owing to great speed, their कम्प was not noticed cp. 'चित्रारम्भमिवनिश्चलं हरिशिरस्यायतयात्मरम्" Vikramorvasiya. (c) निभृतोर्ध्व etc,—निभृत is स्थिर। In this sense compare निभृत in "निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम्। तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥" Also we have अनिभृत in the sense अस्थिर in "अनिभृतकरेष्वाक्षिपत्सु प्रियेषु"। ऊर्ध्व does not mean vertical. It merely implies that the ears were inclined upwards, and not drooping. (b) आत्मोद्धतैः etc.—We assume that the wind was favourable i. e. blowing from behind. Even thus the dust did not touch them. Hence they were faster than the wind. *

3. Remark—The metre is वसन्ततिलका or वसन्ततिलकम्। "उक्तं वसन्ततिलकं तभजा जगौ गः"। The triads त, भ, ज ज appear in order followed by two heavy syllables. The figure is स्वभावोक्ति in the first three lines and उत्प्रेक्षा in the last.

राजा—सत्यमतीत्य हरितो हरींश्च वर्तन्ते वाजिनः।

> यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
> यदर्धे विच्छिन्नं भवति कृतसन्धानमिव तत्।
> प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोर्
> न मे दूरे किंचित् क्षणमपि न पार्श्वे रथजवात् ॥८॥

सूत पश्यैनं व्यापाद्यमानम् ( शरसन्धानं नाटयति )।

* Adopted by Prof. Gajendragadkar.

KING—Verily, the horses are surpassing the *Harits* and the *Haris.* For through the speed of the car, that which is minute to the view suddenly attains vastness, that which is really disconnected at once becomes as if with union effected, even that which is by nature crooked immediately appears straight to the eyes; nothing for a moment even remains at a distance or at my side. Charioteer, behold it being killed ( Acts aiming the arrow ).

राजेति। 'वाजिनः' मदीया अश्वा 'हरितः' सूर्य्याश्वान् 'हरीन्' इन्द्राश्वान् 'च अतीत्य' वेगेन पराभूय 'वर्त्तन्ते' इति 'सत्यम्'। 'तथा हि' यतः—

यदिति। अन्वयः—रथजवात् सहसा आलोके यत् सूक्ष्मं तत् विपुलतां व्रजति, यत् अर्द्धे विच्छिन्नं तत् कृतसन्धानमिव भवति, यत् प्रकृत्या वक्रं तदपि नयनयोः समरेखं—क्षणमपि न किञ्चित् मे दूरे न पार्श्वे[2] ॥ व्याख्या—'रथस्य जवात्' वेगात् (हेतौ पञ्चमी) 'सहसा' तत्क्षणमेव, आलोके' दर्शने यत् सूक्ष्मं' दृश्यते तदेव तत्क्षणं रथवेगात् समीपे भूत्वा स्थूलं लक्ष्यते। 'यत्' वस्तु 'अद्धा' तत्त्वतः 'विच्छिन्नं' व्यवधानवत् दृश्यते 'तत्' तदेव तत्क्षणं 'कृतं सन्धानं' योजना यस्य 'तत् इव' भवति लक्ष्यते। यौ हि समीपे व्यवहितौ दृष्टौ तावेव वेगात् तत्क्षणं दूराद्दृष्टौ संलग्नाविव लक्ष्येते। 'यत्' वस्तु 'प्रकृत्या' स्वभावेन 'वक्रं' समीपात् दृष्टं कुटिलं दृश्यते 'तदपि' तत्क्षणं 'नयनयोः' नेत्रयोः सम्बन्धे, न तु तत्त्वतः, 'समा' ऋज्वी 'रेखा' यस्य तत् भवति। 'क्षणमपि न किञ्चित्' किमपि वस्तु 'मे दूरे' तिष्ठति 'न पार्श्वे', समीपे तिष्ठति ॥ [ "यदर्द्धे" ( त-, का- )…"यदर्द्धं" ( रा-, म- )…"यदन्तः" ( वि- ) ॥ "मे दूरे…न पार्श्वे" ( रा-, त-, का-, म- )…"मे पार्श्वे…न दूरे" ( वि- ) ] ॥

सूतेति। 'एनं' हरिणम् ( अन्वादेशे एनादेशः ) 'व्यापाद्यमानं' मया हन्यमानं 'पश्य'। 'शरस्य सन्धानं' मृगं प्रति प्रयोगाध्यवसायं 'नाटयति' नाट्येन दर्शयति। राजवेशो नटः हस्तचालनादिना बाणप्रयोगं सूचयति इत्यर्थः ॥

NOTES

1. सत्यम् etc.—This is a hyperbole. तथा हि introduces the next sloka as an apparent justification for the exaggeration.

(a) किमर्थं हरिद्भिरिति—हृ + इति ( औणादिक ) कर्तरि हरित् । हरतीति हृ + इ (औणादिक) कर्तरि हरि । The former is the name of the seven horses of सूर्य । "जयोजयश्च विजयो जितप्राणो जितश्रमः । मनोजवो जितक्रोधो वाजिनः सप्त कीर्तिताः." ॥ Comp. "दिशा हरिद्भिश्चरितामिवेश्वरः" and "हरिद्भिरिव निरगुणप्रग्रहैर्ग्राहिव बालचन्द्रमा." । The latter is strictly speaking "golden" "स्वर्णवर्णे हरित् स्मृतः" इत्यनेकार्थकोषः । Indra's steeds were of that description. Comp. "हरिं विदित्वा हरिभिश्च वाजिभिः" ।

2. (a) आलोके सूक्ष्मम्—आ + लोक + घञ् भावे = आलोक. seeing दर्शनम् । आलोके सूक्ष्मम्—minute in seeing. i e looks minute owing to great distance (b) सहसा—Suddenly. The suddeness of the change suggests great speed. (c) यद्धा—An अव्यय meaning तत्त्वत. in reality. "स्फुटेऽवधारणे तत्त्वे यद्धा प्रोक्ता मनीषिभि"। यद्वे or यत्र for यद्धा does not seem to give good sense. (d) कृतसन्धानम् etc —सम् + धा + ल्युट् भावे = सन्धानम् placing together, i e joining The disconnected appears connected, this too is सहसा hence again the inference of speed (e) वक्ररेखम्—वक्र is ऋजु straight, रेखा—line i e outline This may apply to the transference of the object from near to far or the reverse (f) दूरे पार्श्वे = This is the order of the words in almost all editions. Only one edition reads पार्श्वे दूरे । Remembering that the first line refers to change from दूर to पार्श्व, and the second to that from पार्श्व to दूर, it seems natural to have first दूर then पार्श्व in the fourth line The third line is not decisive as it applies equally to both kinds of change

3 Remark—The metre is शिखरिणी, the definition being रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी—"the triads य, म, न, स, भ, are in order followed by one light and one heavy syllable

4 व्यापाद्यमानम्—वि + आ + पद + णिच् + शानच् कर्मणि being killed.

( नेपथ्ये )—भो भो राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः !

(IN The DRESSING ROOM)—Ho ! Ho ! king, it is a stag of the hermitage, it must not be killed, it must not be killed !

सूतः ( आकर्ण्यावलोक्य )—आयुष्मन्, अस्य खलु ते बाणपथवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः ।

CHARIOTEER ( Listening and espying ) - O Long-lived one, anchorites have appeared in the region of the stag which is now in the very line of flight of your arrow.

राजा (ससम्भ्रमम् )—तेन हि प्रगृह्यन्तां वाजिनः ।

KING (Hastily)—Then indeed let the horses be checked

सूतः—तथा ( रथं स्थापयति ) ।

CHARIOTEER—Very good. ( Stops the car ).

नेपथ्ये इति । 'आश्रमस्य' कण्वाश्रमस्य 'मृगः अयं न हन्तव्यः त्वया । (आवेगे द्विरुक्तम् )।

सूत इति । 'आकर्ण्य' नेपथ्ये यदुक्तं तत् श्रुत्वा 'अवलोक्य' दृष्ट्वा 'च' आह । 'ते' बाणस्य पन्थाः 'बाणपथः'( "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तः अप्रत्ययः)। तस्मिन् वर्तते यः 'कृष्णसार तस्य 'अन्तरे' अवकाशे । यत्र भवान् बाणं प्रयुङ्क्ते तस्मिन्नेव देशे, तव च हरिणस्य च मध्ये इत्यर्थः 'उपस्थिताः' प्राप्ताः । एतेन ब्रह्महत्याभयं दर्शितम् ॥ ( "बाणपथ" ( वि-, म- ) "बाणपात" ( रा-, त-, का- ) ] ।

राजेति । सम्भ्रमेण' त्वरया 'सह' । तेन 'हि' निमित्तेन 'वाजिनः' अश्वा "प्रगृह्यन्तां" स्थिरीक्रियन्ताम् । अथवा रश्मिभिः दृढिताः सुसंयताः । *

सूत इति । यथा भवान् आज्ञापयति 'तथा' करोमि, अश्वान् प्रगृह्णामि इत्यर्थः । रथमिति । 'स्थापयति' स्थिरीकरोति ।

## NOTES

1. प्रगृह्यन्ताम्—प्र + ग्रह + लोट + अन्ताम् कर्मणि let them be checked. The ascetics were in imminent danger of being run over by the car. Hence the सम्भ्रम of the king.

---

* Adopted by Prof. Gajendragadkar.

( ततः प्रविशति सशिष्यो वैखानसः )। वैखानसः ( हस्त-मुद्यम्य ) राजन्, आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः।

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्व बत हरिणकानां जीवितञ्चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥ १० ॥

तत् साधु कृतसन्धानं प्रतिसंहर सायकम्।
आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि ॥ ११ ॥

(Then enter an anchorite with disciples). ANCHORITE (Raising his hand)—Sir, this is a stag of the hermitage. It must not be killed, it must not be killed. This arrow is indeed not to be planted on the tender body of the stag—not to be planted indeed—like fire on a heap of cotton. Alas! where is the frail existence of poor stags, and where are your shafts, keen at the point and strong as the thunder-bolt? Well, then retract the shaft that has been aimed. Your weapon is for the protection of the distressed and not to strike at the innocent.

तत इति। 'ततः' तदनन्तरं स्थापिते रथे शिष्याभ्यां सह 'सशिष्यः' (सहशिष्यः वा) शिष्यद्वयसमेतः 'वैखानसः' तापसः 'प्रविशति' रङ्गमञ्चमागच्छति॥ [ "सशिष्यः" (त-, व्या-, वि-) —"आत्मना तृतीयः" ( रा-, म- ) ]।

वैखेति। 'हस्तं दक्षिणहस्तम्' 'उद्यम्य' उद्धृत्य। निषेधसूचनार्थं हस्तोत्तोलनम्।

नेति। अन्वयः—मृदुनि अस्मिन् मृगशरीरे अयं बाणः तूलराशौ अग्निरिव न खलु सन्निपात्यः। हरिणकानाम् अतिलोलं जीवितञ्च बत क्व, निशितनिपाताः वज्रसाराः ते शराश्च क्व। व्याख्या—'मृदुनि सुकुमारे' 'अस्मिन्' 'मृगस्य' आश्रमस्य 'शरीरे'

ईदृशे 'अयं बाणः' धनुषि योजित एष शरः 'तूलानां राशौ' समूहे 'अग्निरिव' न खलु न खलु न नूनं 'सन्निपात्यः' पातयितव्यः (आवेगे द्विरुक्तम्) 'हरिणकानाम्' अनुकम्पितानां मृगाणाम् 'अतिलोलं' सुचपलं 'जीवितञ्च प्राणास्तु 'क्व' कुत्र, निशिताः तीक्ष्णा 'निपाताः' अग्रभागाः येषां तथाविधः अपि 'वज्रस्य सारः' बलं 'वज्रसार इव सारः येषां' तादृशा वज्रकठिनाः 'ते शराश्च' बाणाः पुनः 'क्व' कुत्र। शरशरीरयोर्महदन्तरं क्व इति द्विरुक्तं सूचयति। च इति भेदे॥ (राघवभट्टस्तु इमं श्लोकं न पठति)॥

तदिति। अन्वयः—तत् कृतसन्धानं सायकं साधु प्रतिसंहर। वः शस्त्रम् आर्त्तत्राणाय, अनागसि प्रहर्त्तुं न। व्याख्या—'तत्' तस्मात् कृतं सन्धानं धनुषि योजना यस्य तथाविधं 'सायकम्' एतं साधु 'प्रतिसंहर' तूणीरं प्रत्यानय (साधु इति वाक्यालङ्कारे—"साधु यामि" इत्यादौ यथा) 'वः'युष्माकं पौरवाणां 'शस्त्रम् आर्त्तानां' विपन्नानां त्राणाय' रक्षा य (तादर्थ्ये चतुर्थी) अस्ति, अनागसि' निरपराधे 'प्रहर्त्तुं' न' अस्ति (अस्तिक्रियायोगे तुमुन्)॥ ["तत् साधु" (रा॰, वि॰, म॰)—"तदाशु" (त॰, न्या॰,)॥ "वः शस्त्रम्" (रा॰, त॰, न्य॰, स॰)—"ते शस्त्रम्" (वि॰)]॥

## NOTES

1. वैखानसः—An ascetic, The derivation is uncertain. "वैखानसो वनेवासी वानप्रस्थश्च तापसः"—वैजयन्ती quoted by Mahamahopadhya Nyayapanchanana. No intelligible derivation is available. It is best treated as a primitive word (अव्युत्पन्नप्रातिपदिक)।

2. सन्निपात्यः—सम+नि+पत+णिच्+यत् कर्मणि। Ought to be planted. पातनयोग्यः।

3. (a) बत हरिणकानाम् etc.—बत implies निन्दा censure (See next). "निन्दायां विस्मये बत" इति हलायुधः। हरिणक has कन, अनुकम्पायाम्। Or—बत expresses अनुकम्पा pity—"खेदानुकम्पा सन्तोषविस्मयामन्त्रणे बत" इत्यमरः। But in this case हरिणक has कन् ... not अनुकम्पायाम् because अनुकम्पा is already expressed by बत। (b) निशितनिपाताः—नि+शो+क्त कर्मणि=निशिताः or निशाताः keen तीक्ष्णाः। निपतन्ति एभिः इति

नि + पत + घञ् करणे = निपाताः the parts by which they alight i. e. tips, points. *

4. क्व जीवितं क्व शराः—Implies great incongruity between the two. Compare "क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः" where Malli says "द्वौ क्वशब्दौ महदन्तरं सूचयतः"। The bringing together of two such incongruous things is mildly censured by बत।* The metre is मालिनी defined as "ननमयययुतेयं मालिनी भोगिलोकैः"—The triads न, न, म, य, य appear in order giving fifteen syllables to each line. The figure is उपमा। The definftion is "यथाकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते। उपमा नाम सा...॥" In the first half मृगशरीर and तूलराशि, also बाण and अग्नि, are compared. In the second half the समास in वज्रसार establishes resemblance between वज्र and सार।

5. (a) तत्—Therefore, i. e., such being the incongruity, put back your arrow. (b) साधु—Prof. G. disapproves our interpretation of साधु as a mere expletive and prefers to have it as a विशेषण qualifying सन्धानक्रिया। I am unwillng to take it as a क्रियाविशेषण for two reasons.—(i) if the प्रतिसंहार of the arrow is necessary it will be withdrawn be it well ( साधु ) or ill aimed. So the reference to the correctness of the aim (साधुता of सन्धान) is superfluous. (ii) Dushyanta was admittedly the foremost archer on Earth. Compare "का कथा बाणसन्धाने ज्याशब्देनैव दूरतः हुङ्कारेणेव धनुषः स हि विघ्नानपोहति।" Even among gods he has no rival. Comp. 'तव शरैरधुनानतपर्वभिः पुरुहूतकेसरिवच्च पुरा मखैः"। For an ordinary ascetic to shout "well-aimed" to such a man when he is about to shoot is a piece of impertinence. (c) सायकम्—स्यति खण्डयति इति सो + ण्वुल् कर्तरि = सायकः the chopper बाणः। (d) अनागसि...अविद्यमानम् आगः पापम् अपराधो वा यस्य यस्मिन् वा अनागाः or अविद्यमानागाः by the Varttika "नञोऽस्त्यर्थानां...वा चोत्तरपदलोपः"। तस्मिन्। [illegible] सप्तमी। When a distinction is made between दैव

---

* [illegible]ted by Prof. Gajendragadkar.

and ईप्सित the former is taken as the आधार—as it really is—of प्रहारक्रिया। Compare "मयि नाम्नकोऽपि प्रभुः प्रहर्तुम्" "कद्रीनस्त्रा तु प्रहर्तं त्वयास्याम्," तस्मिन् प्रजास्वपि सर्व एव" &c.

9. Remark—The metre is श्लोक। The verse too conveys a mild censure. Your arrow is meant for one purpose, you are using it to another! *"वः शस्त्रम्" is the more common reading. It refers to the uniform family practice of the Pauravas, and thus gives point to the censure. As to the practice itself, compare "आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः"···Act II. Infra.

राजा—एष प्रतिसंहृतः। ( यथोक्तं करोति )।

KING—Here, it is retracted ( Does as said ).

वैखानसः—सदृशमेतत् पुरुवंशप्रदीपस्य भवतः।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।

पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि॥ १२॥

ANCHORITE—This is worthy of thee, the light of the race of Puru. This is extremely worthy of you whose birth is in the race of Puru. May you get a son, endowed with such virtues and presiding over the whole circle of kings.

राजा ( सप्रणामम् )—प्रतिगृहीतम्।

KING (With a bow)—Accepted.

राजेति। 'एष' इति अविलम्बसूचकः। आज्ञातमात्रमेव 'प्रतिसंहृतः' इत्यर्थः। 'यथा उक्तं करोति। यद्वा—उक्तस्य अनतिक्रमं 'यथोक्तम्। तत् करोति। 'बाणं' प्रतिसंहरति।

वैखेति। 'पुरोः' ययातितनयस्य यो 'वंशः तस्य यः 'प्रदीपः' प्रदीपवत् उद्भासकः तस्य 'भवतः एतत्' ब्राह्मणानुवर्तित्वं 'सदृशं योग्यम्। पौरवाः सदैव ब्राह्मणानाम-नुकूला आज्ञाकराश्च इत्यर्थः।

जन्मेति। अन्वयः—इदं तव युक्तरूपं यस्य पुरोर्वंशे जन्म, एवंगुणोपेतं

* Adopted by Prof. Gajendragadkar.

चक्रवर्तिनं पुत्रम् आप्नुहि ॥ व्याख्या—"इद" ब्राह्मणाशापालनं 'तव युक्तरूपम्' अतिशयेन युक्तम् (प्रशंसार्थां रूपप्प्रत्ययः) ; यद्वा—'युक्तं रूपंस्वरूपमस्य इति'। 'यस्य' ते 'पुरोः' वंशे जन्म' (यच्छब्दस्य उत्तरवाक्यगतत्वेन उपादानात् तच्छब्दोपादानं नापेक्षितम्)। 'एवम् ईदृशैः' 'गुणैः' उपेतं युक्तम्। चक्रे वर्तते राजचक्रमाक्रम्य तिष्ठति इति चक्रवर्तिनं राजाधिराजं 'पुत्रम् आप्नुहि' लभस्व। इत्यमोघात्तुष्टात् विप्रादाशिषः।

राजेति। प्रथमं ब्राह्मणा आशिषमुच्चारयन्ति, ततो राजा प्रणम्य तामाशिषं स्वीकरोति, इति राजसु नियमः। प्रणामेन सह 'सप्रणामम्' सहप्रणामं वा। प्रतिगृहीतं' स्वीकृतम् ब्राह्मणवचः इति शेषः। आशीरियं गृहीता इत्यर्थः।

NOTES

1. एष &c.—एषः implies instant execution. तत्त्वचकरणम् Compare "एष त्वामभिनवकण्ठशोणितार्थी शार्दूलःपशुमिव हन्मि चेष्टमानम्"—Act VII. Infra, Mark how the king stands unrufffled under the censure. He is all humility.

2. एवं गुण &c.—एवं गुणाः एवं गुणा such virtues, सहसुपेति समासः। तैः उपेतः। तृतीया तत्—। तम्। Benediction of a Brahmana is of unfailing efficacy. Hence this foretells the birth of सर्वदमन। * Compare. "पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव"।" इत्यं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम्। राजापि लेभे सुतमाशु तस्मात्—।।" The metre is श्लोक।

वैखानसः—राजन्, समिदाहरणाय प्रस्थिता वयम्। एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातः प्रविश्य प्रतिगृह्यताम् आतिथेयः सत्कारः। अपि च—

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥१३॥

* Adopted by Prof. Gajendragadkar.

ANCHORITE—Sire, we are going to collect faggots. The hermitage of Kanva, the master of Munis, can indeed be seen ( from here ) on the bank of the Malini. Unless there is obstruction of other duties, please enter and accept the rites of hospitality. Besides (beholding the rites of the ascetics, with obstruction removed and therefore pleasant, you will know ( the answer to ) this—"how far defends my arm marked with the scar of the bow-string ?")

वैखेति । 'समिधां' यज्ञकाष्ठानाम् 'आहरणाय' 'वयं प्रस्थिता:' चलिता: । 'एष खलु' अयं हि 'अनुमालिनीतीरं'' मालिनीनदीतीरे (विभक्त्यर्थेऽव्ययीभाव:) 'कुलपते:' अयुतशिष्यपोषकस्य मुनिकुलेश्वरस्य 'कण्वस्य आश्रमो दृश्यते' । 'चेत्' यदि 'अन्यस्य कार्यस्य अतिपातो' व्याघातो 'न' स्यात्, तदा 'प्रविश्य' आश्रमं गत्वा आतिथेय: सत्कार:' अतिथियोग्या पूजा 'प्रतिगृह्यतां' स्वीक्रियताम् । कुलपतिना पूर्वमेव आश्रम: समित्संग्रहाय याम इति भवन्तम् आश्रमं प्रापयितुमशक्ता वयम् । ततस्त्वयमेव गच्छ इति भाव: ॥ [ ''कण्वस्य कुलपते: ( रा-, त- श्या-, म- )—'काश्यपस्य कुलपते:'' ( वि- ) ] ।

रम्या इति । अन्वय:—तपोधनानां प्रतिहतविघ्ना: रम्या: क्रिया: समवलोक्य "मौर्वीकिणाङ्क: मे भुज: कियत् रक्षति" इति अपि ज्ञास्यसि च ॥ व्याख्या—'तपोधनानां तापसानां 'प्रतिहता:' निरस्ता 'विघ्ना:' प्रत्यूहा: याभ्य: यासां वा ता: अतएव 'रम्या:' तोषकरी: क्रिया:' अनुष्ठानानि 'समवलोक्य दृष्ट्वा 'मौर्व्या:' गुणस्य किण: चिह्न'' ज्याघातरेखा स 'अङ्क:' भूषणं यस्य तादृशो 'मे भुज: अयं बाहु:' कियत् किम्परिमाणं 'रक्षति इति अपि ज्ञास्यसि' प्रत्यक्षीकरिष्यसि च ॥ मद्दतो हि रक्षा त्वया नो विहिता तच्च न ते विदितम् । आश्रमं गत्वा न केवलमातिथ्यं लप्स्यसे, किन्तु तां रक्षाम् अपि ज्ञात्वा नैषमवादृक्षसि इति भाव: ।

NOTES

1. समिदाहरण &c—समिध्यते आभि: इति सम्+इन्ध्+क्विप् कर्मणि समिध: faggots. समिदाहरणं कर्तुम् i. e. समिदाहरणार्थम् gives कर्मणि चतुर्थी by the rule "क्रियार्थोपपदस्य च कर्मणि स्थानिन:" (when a तुमुन्नन्तक्रिया

disappears its नम takes चतुर्थी ), or तादर्थ्ये चतुर्थी । This explains why he cannot accompany the king and see him entertained.

2. कुलपतेः—कुलपति is a sage who boards and lodges ten thousand disciples. "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः"—Quoted by Vidyasagara.

3. Remark—कण्वस्य कुलपतेः is the usual reading. It gives the name of the sage and hence is preferable to काश्यपस्य कुलपतेः which refers to the गोत्र only.

4. (a) आतिथेयः सत्कारः—अविद्यमाना तिथिर्यस्य इति अतिथिः an unexpected guest. तस्मिन् साधु इति अतिथि + ढञ् आतिथेयः । सत् is an अव्यय, here meaning आदरः honour. In this sense it is a गति by the rule "आदरानादरयोः सदसती" । Hence सत् + कृ + घञ् भावे कर्मणि वा सत्कारः reception, welcome &c. गतितत्—। 5. तपोधनानाम्—तपोधनान्येषां तपोधनाः to whom asceticism is wealth. Hence the रक्षा is with regard to asceticism ( तपस् ) only. 6 प्रतिहतविघ्नाः—विहन्यते एभिः इति वि + हन् + क करणे घञर्थे = विघ्नाः obstructions The obstructions being removed, तपस् is well-protected. Owing to this the क्रिया must be pleasing (रम्य) to you to whom the रक्षा is due. The रक्षा is complete. *

राजा—अपि सन्निहितोऽत्र कुलपतिः ?

KING—Is the master of munis present there ?

वैखानसः—इदानीमेव दुहितरं शकुन्तलाम् अतिथिसत्काराय सन्दिश्य, दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

ANCHORITE—Just now, having ordered his daughter Sakuntala to honour guests, he has gone to Soma Tirtha to avert an adverse destiny of hers.

* Adopted by Porf. Gajendragadkar.

 Correct & justify

राजा—भवतु तामेव पश्यामि। सा खलु विदितभक्तिं मां महर्षेः कथयिष्यति। incorrect

KING—Very well, her I shall see. Surely she will report me to the sage on knowing my devotion.

राजेति। 'अपि कुलपतिः' कण्वः; 'अत्र' आश्रमे 'सन्निहितः' आत्मना उपस्थितः।

वैखेति। 'इदानीमेव' अस्मिन्नेव क्षणे 'दुहितरं' शकुन्तलाम् 'अतिथीनां सत्कारार्थ' पूजार्थं अतिथिसत्कारं कर्त्तुमित्यर्थः 'सन्दिश्य आज्ञाप्य' 'अस्याः' दुहितुः 'प्रतिकूलं' सकोपं 'दैवं' भागधेयम् 'अनुकूलयितुं' 'सोमतीर्थं' गतः'। आश्रमं गच्छ, शकुन्तला ते आतिथ्यं विधास्यति इत्यर्थः। प्रतिकूलदैवशमनेन शापात् त्यक्तापि शकुन्तला भूयो दुष्यन्तेन सङ्गता भविष्यति इति सूच्यते।

राजेति। 'भवतु' इत्यव्ययं निश्चयद्योतकम्। असन्निहितः कुलपतिः, तत् आश्रमं यामि न वा इति वितर्के निश्चयमाह—'तामेव' दुहितरं शकुन्तलामेव 'पश्यामि'। सा खलु 'विदिता' ज्ञाता 'भक्तिः' तापससेवा यस्य तथाविधं 'मां' महर्षेः: कण्वस्य समक्षं 'कथयिष्यति'। मद्गतां श्रद्धां स्वयं ज्ञात्वा कण्वस्य गोचरे करिष्यति इत्यर्थः।

NOTES

I. (a) अतिथिसत्काराय—"क्रियार्थोपपदस्य—" (See Note 1 above) इति कर्मणि चतुर्थी, or तादर्थ्ये चतुर्थी। There are arrangements to receive guests in his absence; you will not be inconvenienced. * (b) दैवमस्याः &c.—कण्व knew शकुन्तला would suffer much; though it is not clear if the exact nature of her misery was also known to him at this early stage. (c) शम् + णिच् + तुमुन् = शमयितुम्, the वृद्धि being barred in णिच् by the rule "मितां ह्रस्वः।" (d) सोमतीर्थ is a name of प्रभासतीर्थ। Here सोम was cursed of consumption. "पुण्यं प्रभासं समुपाजगाम यक्ष्मोद्भूताद् यक्ष्मणा क्लिश्यमानः।...... एवं तु तीर्थप्रवरं पृथिव्यां प्रभासनामास्य तु स प्रभासः।" Bhagawata quoted in the वाचस्पत्य।

2. (a) पश्यामि has वर्त्तमान in the भविष्यत्काल owing to वर्त्तमानसा-

* Adopted by Prof. Gajendragadkar.

मौप्य। (b) भक्ति is of the प्रियादि class. Hence the पुंवद्भाव of विदित in विदितभक्ति comes under theprohibition—"अपूरणीप्रियादिषु"। Bhoja explains that the भक्ति in the प्रियादि list means the object of worship and is derived भज्यते सेव्यते स्वयम् इति भज + क्तिन् कर्मणि। It thus bars पुंवद्भाव in compounding भवानी भक्तिरस्य which give भवानीभक्ति: without पुंवद्भाव and not भवभक्ति: with पुंवद्भाव। But भक्ति is derived with भावे क्तिन् in compounds like विदितभक्ति, दृढ़भक्ति etc. Hence the prohibition does not apply and we have पुंवद्भाव। Vamana however gives a different explanation. He starts with a सामान्यनिर्देश like इदम् अस्य अस्ति। The विशेष comes in after thus—इदं किमस्ति ? Ans—यत् इदमस्ति सा भक्ति:। So he says—"दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धम्।" Bhattoji's explanation in such cases is also to this tenor. See also Pratima under निरतिशयभक्ति:। (c) मद्दव:—शेषे षष्ठी। मद्दर्चे: समीपे कथयिष्यति इति अप्रयुज्यमानं "समीपे" "समक्षम् इत्यादिपदं गम्यते ; यद्वा—सम्बन्धसामान्ये षष्ठी।

वैखानस:—साधायमस्तावत्। [सशिष्यो निष्क्रान्त:]।

ANCHORITE—Now then we proceed. (Exit with Pupils)

राजा—सूत, नोदयाश्वान् पुण्याश्रमदर्शनेनात्मानं पुनीमहे !

KING—Charioteer, urge on the horses. We purify ourselves with a look at the holy hermitage.

सूत:—यदाज्ञापयत्यायुष्मान् ! [भूयो रथवेगं निरूपयति]।

CHARIOTEER—As the long lived one commands. (Again acts the speed of the car).

राजा—सूत, अकथितोऽपि ज्ञायते एव अयम् आभोगस्तपोवनस्येति।

KING—Charioteer, though not told, this (place) is indeed known as the outskirts of the forest of penance.

सूत:—कथमिव ?

CHARIOTEER—How so ?

वेखंति। तावदिति वाक्यालङ्कारे अवधारणे वा अव्ययम्। 'साधयामः' गच्छामः। मिथ्याभ्यां सह 'सनिष्यो' वैखानसौ 'निष्क्रान्तः' रङ्गमञ्चादपगतः।

राजेति। 'सूत, अश्वान् नोदय' प्रेरय। 'पुण्यस्य' 'पावनस्य' 'आश्रमस्य' कण्वाश्रमस्य 'दर्शनेन आत्मानं पुनीमहे' पवित्रीकुर्महे।

सूत इति। आयुष्मान् यत् आज्ञापयति' तत्करोमि, अश्वान् नोदयामि इत्यर्थः। 'भूयः' पुनरपि 'रथस्य वेग'' सत्वरगमन 'निरूपयति' नाटयति, हस्तसञ्चालनादिना वेगाभिनयं करोति।

राजेति। 'सूत, अयम्' एष देशः 'अकथितोऽपि' अन्येन अनिवेदितोऽपि 'तपोवनस्य आभोगः' विस्तारः प्रान्तभूमिः 'इति ज्ञायते एव'। न केनापि कथ्यते वयं तपोवनस्य प्रान्तभूमिम् आगता इति, किन्तु लक्षणानि दृष्ट्वा ज्ञायते इत्यर्थः॥ [ "आभोगस्तपोवनस्य" ( रा-, त-, श्या-, म- )—"आश्रमस्तपोवनस्य'' ( वि- ) ]।

## NOTES

1. साधयामः—साध + णिच means "to go'' "प्रायेण: गच्छतेः साधिर्गमेः स्थाने प्रयुज्यते"—Shahityadarpana. प्रयोग implies two things—(1) That the use is not restricted to नाटक। Compare"साधयाम्यहम—विघ्नमस्तु ते"—Raghu. Also (2) That गम too appears in नाटक। Compare "गच्छायतः,'' "अयमहमागच्छामि" etc.

2. सूत etc—अकथितः undescribed, i. e. no one has told me that these are the precincts of the hermitage, yet from certain signs I know this place to be such. आभोग is पूर्णता fullness. भावे घञ्। "पूर्णत्वायतनावाभोगौ'' इति विकाण्डशेषः। But "कृदभिहितो भावः द्रव्यवत् प्रकाशते" also "भावामयने "द्रव्यामयनम्''। Here thus आभोग secondarily means the things that accomplish पूर्णता, i. e. the precincts, outskirts.

4. Remarks—The reading "आभोगस्तपोवनस्य'' is preferable to "आश्रमस्तपोवनस्य'' because the आश्रम was not reached then. Later on further progress is recorded [स्तोकमन्तरं गत्वा]। The car then stops and the king proceeds on foot. Then again we find him go still further [ परिक्रम्य अवलोक्य च ] when he sees the entrance

of the आश्रम and exclaims इदमाश्रमद्वारं यावत् प्रविशामि। Hence here he has reached only the precincts ( आभोग ) of the hermitage and not the hermitage itself. Thus आभोगस्तपोवनस्य is more suitable.

राजा — किं न पश्यति भवान् ? इह हि—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ १४ ॥

KING—Do you not see? Here indeed—(In some places) under the trees are wild grains slipped from mouths of hollows in which parrots dwell; somewhere slabs of stone, excessively oily, are indeed betrayed as crackers of the Ingudi fruit; owing to access of confidence, the deer, with their gait unchanged, tolerate the sound (of the car); and paths to the reservoirs of water are marked with lines of water running from the ends of bark-garments.

सूतः—सर्वमुपपन्नम्। Charioteer—All true.

नीवारा इति। अन्वयः—इह हि ( क्वचित् ) तरूणामधः शुकगर्भकोटरमुखभ्रष्टा नीवाराः ( दृश्यन्ते )। क्वचित् प्रस्निग्धा उपला इङ्गुदीफलभिद एव सूच्यन्ते, (क्वचित्) विश्वासोपगमात् अभिन्नगतयो मृगाः शब्दं सहन्ते, ( क्वचित् ) च तोयाधारपथा वल्कल-शिखानिष्यन्दरेखाङ्किताः ( दृश्यन्ते )। व्याख्या—'इह हि' अत्र तु 'क्वचित्' कुत्रापि देशे 'तरूणामधः तले 'शुका गर्भे' मध्ये येषां तादृशानाम् ( गड्वादेराकृतिगणत्वात् सप्तम्यन्तस्य परनिपातः ) 'कोटराणां' विलानां 'मुखेभ्यः भ्रष्टाः' भूमौ पतिता "नीवाराः" दृश्यन्ते, 'क्वचित्' क्वापि 'प्रकर्षेण स्निग्धाः' चिक्कणाः 'उपलाः' शिलातलादि 'इङ्गु-दीफलानि भिन्द' न्ति भेदयन्ति वा इति 'एव सूच्यन्ते' अनुमीयन्ते। क्वचित् अन्यत्र 'विश्वासस्य उपगमात्' आधिक्येन 'अभिन्ना अविकृता' 'गतिः' [illegible]

तात्पविरहात् गतिमेदम् अनवलम्बमाना 'मृगाः शब्दं' रथगर्जनं सहन्ते' साधु सहन्ते वृत्ति। क्वचित् 'च' कुत्राप्यन्यत्र तोयाधाराणां' जलाशयानां 'पथ्यानः' मार्गाः ( "ऋक्पूरब्धूः-पथामानक्षे" इतिसमासान्तः अप्रत्ययः ) 'वल्कलानां' जातात्मितानां मुनीनां परिधेयः-भूतानां 'शिखाभ्यः' यः निस्यन्दः 'जलसृवः तस्या या रेखाः' धाराः ताभिः 'अङ्किताः' चिह्निताः दृश्यन्ते ॥ अत्र नीवाराः, अन्यत्र इङ्गुदीफलभिदः उपलाः, तत्र अवञ्चीक हरिणाः अमुत्र च वल्कलपतिता जलधराः। नैतत् सर्वं तपोवनसन्निकर्षादन्यत्र सम्भवति ॥ [ "शुकगर्भकोटर" ( ता-, वि-, म, )—शुककोटरार्भक" ( त-, न्या- ) ]।

सूत इति—'सर्वम् उपपन्नं युक्तमुक्तं भवता। तपोवनाभोग एवायम् इत्यर्थः।

NOTES

1. (a) शुभगर्भ etc.—गर्भ here means अभ्यन्तर inside. शुका गर्भे येषां ते शुकगर्भाः बहु—। तादृशाः कोटराः शुकगर्भकोटराः hollows having parrots inside, तेषां मुखानि शुकगर्भकोटरमुखानि। तेभ्यो भ्रष्टाः। सहसुपेति समासः। The idea is—Parrots carry wild grains to their young ones in the hollows. These advance up to the edge of the hollow to receive them and through eagerness, drop some. The Bengali reading शुककोटरार्भकमुखभ्रष्टाः bring out the idea very clearly. (b) प्रस्निग्धाः—प्र indicates excess प्रकर्ष। From excess of oiliness, follows the inference that nuts are constantly being cracked on them. Hence the proximity of ascetics. (c) इङ्गुदी etc.—इङ्गुदी is the tree from the fruits of which oil is extracted by ascetics for domestic purposes. इङ्गुद्याः फलानि इङ्गुदीफलानि। इङ्गुदीफल + भिद् + क्विप ताच्छील्ये कर्त्तरि। तादृशः सूच्यन्ते declared as crackers of Ingudinuts. (d) अभिन्नगतयः—The deer do not alter their gait, i. e. do not run away. Hence they are not wild, so some hermitage must be near. (e) तोयाधारपथाः—आध्रियन्ते एषु इति आ + धृ + घञ अधिकरणे संज्ञायां निपातनात् = आधाराः receptacles. तोयानाम् आधाराः तोयाधाराः। तेषां पन्थानः। अ समासान्तः। (f) वल्कलशिखा etc.—नि + स्यन्द + घञ् भावे निस्यन्द or निष्यन्द। ष is

Adopted by Prof. Gajendragadkar.

optional in the case of अग्रासिन् by the rule "अनुविपर्थ्याभिनिभ्यः स्यन्दतेरप्राणिषु"। वल्कलानां शिखा वल्कलशिखाः। ताभ्यो निस्यन्दः वल्कलशिखानिस्यन्दः flow from the tips of barks. But आधानयते द्रव्यानयनम्। Hence this means the things that establish the flow, i. e. जल। तस्य रेखाः वल्कलशिखानिस्यन्दरेखाः। ताभिरङ्किताः—इतम्—।

2. Remarks—After this the Bengali editions followed by Monier Williams read—अपि च

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दं मन्दं चरन्ति।

I am sorry having to reject this sloka. It has poetry in it and the diction is very good. Unfortuntely it does not seem to suit the context, The first half of the sloka suits admirably the hermitage itself but not its precincts. The second half is only a paraphrase of the third line of the preceeding sloka. A cautious writer like Kalidasa will have one of these only not the two together. But the first sloka is undoubtedly authentic as it is quoted by आनन्दवर्द्धन in his ध्वन्यालोक written about the ninth century A. D. Hence I think the second has to go. Prof.G however retains it and on the reasons we have given above he remarks—'···we think they are incorrect···Kulyas are absolutely necessary for watering the trees in the precincts ; while in the hermitage, they are not required,···Sacrifices were not confined to the hermitage itself.···Besides the smoke of Ghee would wander anywhere according to the whims of the wind—while the last stanza refers to the deer···this stanza refers to the young ones of the deer···The two descriptions are thus distinct···'

My answer is—

(a) The watering of the trees is always left to the hermit

**girls. They would not care to go any distance outside the hermitage to fill up with water the trenchesround the trees there. Without water, the trenches are dry and useless. Hence it is not unreasonable to suppose that trees outside the hermitage were left to nature and had no trenches dug round them.**

Again, we shall see Anasuya, pointing at the trees in the hermitage, remarks to Sakuntala "त्वमेतेषाम् आलवालपूरणे नियुक्ता" । Hence the trees in the hermitage had kulyas dug round them.

While describing Vasistha's hermitage in Raghu. I our poet has—

"सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥"

This is enough of Prof. G's statement "that Kulyas are necessary in the precincts but not in the hermitage itself."

(b) Sacrifices outside the hermitage would be rare indeed; smoke wafted by the breeze would not be enough to impart its tinge to leaves outside the hermitage. It is the नित्यहोम of the आहिताग्नि performed in the अग्निशरण that causes the discoloration ; cp. "हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम्"—Bhatti.

(c) मृगः in the first verse refers to मृगजाति Including मृग and मृगी both young and old. Had only one of these been intended the poet would have specially mentioned मृग्यः instead of मृगाः, because the female is more susceptible to fear.

On these grounds I am inclined to think that my reasons have not been sucessfully met with and still hold good.

An additional reason strikes me now. It is this—

When the king says—"अकथितोऽपि ज्ञायत एव," he evidently **means that broad indications are absent but signs are visible to the close observer. These are so subtle that the charioteer does not see them and he asks कथमिव । The king then explains—**

Here are grains of wild paddy under a tree while young parrots are chirping in a hole above ; there the surface of a rock-slab appears oily ; yonder are deer staring quietly at us, here again are lines of dripping water along walks to lakes.

Declarations in the second verse such as a garden (उपवन), trees with कुल्य dug round them, are as clear as daylight and do not fit in with the subtle signs of the first verse. The second is thus altogether out of place here and cannot be authentic.

I purposely omit to refer to the defects of composition in the verse.

राजा—(स्तोकमन्तरं गत्वा)—तपोवननिवासिनामुपरोधो मा भूत्। एतावत्येव रथं स्थापय। यावदवतरामि।

KING—(Going a short distance)—Let there be no inconvenience to the residents of the hermitage. Here do thou stop the chariot. I will get down.

सूतः—धृताः प्रग्रहाः। अवतरत्वायुष्मान्।

CHARIOTEER—The reins are drawn in. Let the Long-lived one alight.

राजा—(अवतीर्य)—सूत, विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम। इदं तावद्गृह्यताम्। (सूतस्याभरणानि धनुश्च उपनीय) सूत, यावदाश्रमवासिनः प्रत्यवेक्ष्य अहमुपावर्त्ते, तावदार्द्र पृष्ठाः क्रियन्तां वाजिनः॥

KING—(Having alighted)—Charioteer, hermitages have to be entered in a humble attire. You better hold this. (Having made over his bow and jewellery to the charioteer). Charioteer, let the horse have their back watered by the time I come back visting the inmates of the hermitage.

सूतः—तथा (निष्क्रान्तः) । Charioteer—So be it. (Exit).

राजेति । 'स्तोकम्' अल्पम् 'अन्तरम्' अवकाशं 'गत्वा' आह—तपोवने ये 'निवसन्ति' तापसाः तेषाम् 'उपरोधः' पीड़ा 'माभूत्' । 'एतावति एव' एतत्परिमाणे एव वर्त्मनि गते 'रथं स्थापय' स्थिरीकुरु । 'अवतरामि यावत्' पद्भ्यामेव गच्छामि । यावदवधारणे अव्ययम् । यावद्योगे लट् ।

सूत इति । 'प्रगृहाः' रश्मयः 'धृताः' संयमिताः । 'आयुष्मान् अवतरतु' ।

राजेति । 'अवतीर्य' रथात् भूमिं प्राप्य । तपोवनानि नाम' ("नाम कोपेऽभ्युपगमे" इति मेदिनी ) 'विनीतः' शान्तः यो 'वेषः' वस्त्रालङ्कारादिभिः कृतं रूपं तेन 'प्रवेष्टव्यानि' प्रवेष्टुं योग्यानि । शान्तेन वेषेण तपोवनं विशेत् इत्यर्थः । 'इदम्' एतत् "तावत् गृह्यताम्" रक्ष्यतां त्वया । 'सूतस्य' (दानाभावात् षष्ठी एव न चतुर्थी) 'आभरणानि' अलङ्करणानि 'धनुश्च उपनीय' उपहृत्य आह । 'यावत्' यत्कालम् 'अहम् आश्रमे ये वसन्ति' तान् 'प्रत्यवेक्ष्य' दृष्ट्वा सम्भाष्य उपावर्त्ते' प्रत्यागतो भवामि तावत्' तत्काल 'वाजिनः' अश्वाः 'आर्द्राणि' सजलानि 'पृष्ठानि' येषां तथाविधाः क्रियन्तां' विधीयन्ताम् । अश्वान् विश्रामय इत्यर्थः ॥ [ 'सूतस्य" ( रा-, त-, न्या-, म- )—सूताय" ( वि ) ॥ "उपनीय" ( म- )—"उपनीय अर्पयति" ( रा-, त-, न्या-, वि- ) ] ॥

सूत इति । 'तथा' यथा भवान् आदिशति तथा करोमि । 'निष्क्रान्तः' रङ्गमञ्चादपगतः ।

## NOTES

1.(a) तपोवननिवासिनाम्—तपःसाधनं वनं तपोवनम् । तपोवन+नि+वस+णिनि कर्त्तरि ताच्छील्ये=तपोवननिवासिनः । तेषाम् । कृद्योगे कर्मणि षष्ठी । (b) मा भूत—"माङि लुङ्" इति माङ्योगे भविष्यत्काले लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः ।

2. (a) सूतस्य—No दान is implied. Hence षष्ठी as in रजकस्य वस्त्रं ददाति । (b) उपनीय—उप+नी+ल्यप् having made over. Several editions read उपनीय अर्पयति । But the usual and more





logical practice is to have the stage direction with a निरूप or ल्यप् word when the speech ends, otherwise one with क्त्वा, ल्यप्, &c. Compare निमित्तं सूचयन् ( not सूचयति ), अवलोक्य च (not अवलोकयति च), निपुणं निरूप्य ( not निरूपयति ) &c., in the middle of a speech, also विलोकयन् स्थितः ( not स्थित्वा), उपवेशनं रूपयति ( not रूपयित्वा), निर्वर्णयति ( not निर्वर्णयित्वा ) &c., at the end. Hence अपवार्य is better omitted.

राजा ( परिक्रम्यावलोक्य च )—इदमाश्रमद्वारम् । यावत् प्रविशामि । (प्रविश्य निमित्तं सूचयन्) ।

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १५ ॥

KING—(Going round and espying) This is the entrance to the hermitage. I will enter. (Entering and indicating an omen.) The site of this hermitage is self-restrained yet my arm quivers. Whence is its fruition here ? Or there are doors for the destined everywhere.

नेपथ्ये— इदो इदो सहीओ [ इतः इतः सख्यौ ] ।

IN THE DRESSING ROOM—This way my friends, this way.

राजेति । 'परिक्रम्य' रङ्गमध्ये परितः कतिचित् पदानि गत्वा 'अवलोक्य' अग्रतो दृष्ट्वा 'च' आह । परिक्रमणन्तु अत्र गमनस्य सूचकम् । 'इदम् आश्रमस्य द्वारं' प्रवेशमार्गो लक्ष्यते । 'यावत् प्रविशामि' । आश्रमाभ्यन्तरं गच्छामि । 'प्रविश्य' अन्तर्गत्वा 'निमित्तं' परिचयसंसि दक्षिणबाहुस्पन्दनं 'सूचयन्' नाट्येन दर्शयन् आह—

शान्तेति । अन्वयः—इदम् आश्रमपदं शान्तम् । बाहुश्च स्फुरति । इह अस्य फलं कुतः ? अथवा भवितव्यानां द्वाराणि सर्वत्र भवन्ति ॥ व्याख्या—'इदम् आश्रमपदं' तपोवनस्थलं 'शान्तं' शमप्रधानम् सर्वदा च शमो राजते, राजसत्व । 'बाहुश्च' तथापि मम दक्षिणो भुजः 'स्फुरति' स्पन्दते । इह,

अस्मिन् आश्रमे 'अत्र' बाहुलकात् एवम 'कुत' वराङ्गनालाभः 'कुतः' हेतोः सम्भवति। न कुतोऽपि इत्यर्थः। 'अथवा' सूचयामास्य भवितव्यापि वा भवेत्। कुत इत्याह— भवितव्यानाम्' अवश्यम्भाविनाम् अर्थानां 'द्वाराणि' भागमनमार्गा 'सर्वत्र भवन्ति' यदा विधिरभिमुखः तदा कुतोऽपि आगत्य घटयन्ति तत् केनापि यत्नं न कार्यं तदलं विचार्य इति भावः।

नेपथ्ये इति। हे 'सख्यौ इत इतः' अस्मिन् प्रदेशे आगच्छतम्। [ सम्बुद्धि विवक्षितम् ]।

## NOTES

1. निमित्तं सूचयन्—निमित्त is सूचक an omen. Here it is the throbbing of the right arm which indicates approaching marriage. सूचयन्—सूच + णिच् + शतृ having indicated i. e. having shown to the audience by gestures &c—that the right arm was throbbing.

2. (a) शान्तम्—शम + णिच् + क्त कर्मकर्त्तरि = शान्तम् or शमितम्। (b) आश्रमपदम्—आश्राम्यति अस्मिन् इति आ + श्रम + घञ् अधिकरणे = आश्रमः hermitage. तस्य पदं स्थानम्। (c) भवितव्यानाम् = भू + तव्य आवश्यके कर्त्तरि बाहुलकात् = भवितव्यानि those that are destined to be. तेषाम्। Destiny is all—powerful; impossible can be possible through it cp. "सर्वङ्कषा भगवती भवितव्यतैव"। This कर्त्तरि तव्य does not bar the usual भावे तव्य। The meter is आर्या। See—आ परितोषात् &c ante.

राजा ( कर्णं दत्त्वा)—अये दक्षिणेन वृक्षवाटिकाम् आलाप इव श्रूयते। यावदत्र गच्छामि। ( परिक्रम्यावलोक्य च ) अये एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुम् इत एवाभिवर्त्तन्ते। ( निपुणं निरूप्य ) अहो मधुरमासां दर्शनम्।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥ १६॥

यावदिमां छायामाश्रित्य प्रतिपालयामि। (विलोकयन् स्थितः)

KING—(Listening)—Ha ! Methinks I hear conversation to the right (or—south) of this grove of trees ; I will go there. (Going round and espying)—Ah ! Here are ascetic-girls with watering vessels suited to their size, coming this very way to water the young plants. ( Eyeing closely ) Oh ! Pleasing is their appearance. If to one living in a hermitage belongs this figure which is rarely found in the inner apartments of the royal household, then indeed are garden creepers distanced by virtues by forest creepers. I will wait going under this shade. (Stands watching)

राजेति। 'कर्णं दत्वा' श्रवणार्थं प्रेरयित्वा आह—अये इति सम्भ्रमे। 'इयावाटी' या 'वाटिका' मण्डप: पुरो दृश्यते, तां दक्षिणेन' ततो दक्षिणे देशे (एनप्प्रत्यययोगे अत्र द्वितीया) 'आलाप: श्रूयते इव' मन्ये संलापो वर्त्तते। 'एता: दृश्यमाना:'' तपस्विनां' 'कन्यका:' कुमार्य्य: 'बालेभ्य: ह्रस्वेभ्य: 'पादपेभ्यो' वृक्षेभ्य: 'पयो' जलं दातुं स्वस्व 'प्रमाणस्य' आकृते: 'अनुरूपै: योग्यै: क्षुद्रैरित्यर्थ: 'सेचनार्थै: घटै:' कलसै: 'इत एव' अस्यामेव दिशि 'अभिवर्त्तन्ते' आगच्छन्ति। 'निपुणं'' सूक्ष्मं निरूप्य दृष्ट्वा—'अहो ( आश्चर्य्ये ) 'आसां' तपस्विकन्यकानां 'दर्शनं रूपं 'मधुरं' मनोहरम्।

शुद्धान्तेति। अन्वय:—इदं शुद्धान्तदुर्लभं वपु: आश्रमवासिनो जनस्य यदि (तदा) खलु उद्यानलता: वनलताभि: गुणै: दूरीकृता। व्याख्या—'इदम' अग्रतो दृश्यमानं 'शुद्धान्ते' राजावरोधे ("शुद्धान्तोऽन्त:पुरे" इति मेदिनी) दुर्लभं दुष्प्रापं 'वपु:' शरीरम् 'आश्रमे' तपोवने यो 'वसति' तस्य जनस्य 'यदि' सम्भूतं 'तदा खलु' नूनम् 'उद्यान-पालिता लता: वनस्थाभि: 'लताभि:' गुणै: सौन्दर्य्यसौरभादिभि: 'दूरीकृता' अध:कृता: ॥

यावदिति। 'यावदिमां 'छायामाश्रित्य' छायया अन्तरित: सन् प्रतिपालयामि तिष्ठामि [ सर्वत्र 'यावत्' योगे भविष्यति लट् ] ( 'विलोकयन्' पश्यन् 'स्थित:' )।

## NOTES

1. दक्षिणेन—दक्षिण + एनप् सप्तम्यर्थे। An अव्यय meaning here "close to the south." एनप् is not available if not close. If a

long way to the south, we should say उपवाटिकाया दक्षिणस्याम् with सप्तमी।

2. (a) तपस्वि &c—तप एषामस्ति इति तपस् + विनि मत्वर्थे = तपस्विन: asectics. कन्या एव कन्यका। कन् स्वार्थे। Optionally we get कन्यिका also ; though गणकार places it in the क्षिपकादि list. (b) स्वप्रमाण etc.—प्रमाण is measure, hence, here stature, अनुगतं रूपमेषाम् अनुरूपा: similar. स्वस्य प्रमाणं स्वप्रमाणम्। तस्य अनुरूपा:। तै:। (c) सेचनघटै: —सिच + ल्युट् भावे सेचनम watering. तदर्था: or तस्य घटा: सेचनघटा: शाकपार्थिवादि or ६तत्—। तै:। इत्थम्भूतलक्षणे तृतीया। The watering-vessels indicate that they were going out to water plants. Hence these are लक्षण (indicator) of इत्थम्भूत ( पयोदानोन्मुख )। Or —घटै: सह इति सहार्थे तृतीया।

3. दर्शनम्—दृश + ल्युट् कर्मणि बाहुलकात that which is seen, रूप, appearance. Here he is equally interested in all the three girls and speaks in the plural (आसाम्)। He is not yet specially attached towards any one of them.

4. (a) शुद्धान्तदुर्लभम्—शुद्ध: अन्त: अवधिर्यस्य स शुद्धान्त: the royal apartment बहु—। तत्र दुर्लभम् rare in the royal apartments, सुपसुपा। (b) इदं वपु: etc.—जातावेकवचनम्। He is thinking of all the three though speaking in the singular. This is obvious from the plural in आसाम् and वनलताभि:। (c) आश्रमवासिन:—आश्रम + वस + णिनि कर्तरि ताच्छील्ये। तस्य।

5 Ramark—The king believed that the inmates of his royal apartments could not be beaten in point of beauty any where on the earth. But the belief is shattered on seeing these girls. In wonder he exclaims that this defeat of the beauties of the harem by dwellers of a hermitage, is as surprising as that creepers that growwild in forests should surpass in beauty those that are reared in his gardens with constant care. * The यदि in the text implies comparison, if this, then that i. e. both are equally (सदृश) surprising. Hence

* Adopted by Prof. Gajendragadkar.

the अलङ्कार is निदर्शन which Dandin thus defines—"अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम्। सदसद्वा निदर्श्येत यदि तत् स्यान्निदर्शनम्॥" Here the king is तापसकन्यकाकर्तृकमन्तःपुरनारीपराभवं वर्णयितुं प्रवृत्तः। The तत्सदृशं फलम् is वनलताकर्तृक उद्यानलतापराभवः। Dandin's definition of प्रतिवस्तूपमा does not apply here. He says "वस्तु किञ्चिदुपन्यस्य न्यसनात् तत्सधर्मणः। साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा···॥" Here न्यस्य न्यसनम् clearly implies two distinct statements ( वाक्यद्वयम् ) । On this point he has the support of all later Rhetoricians. Thus Mammata defines—"प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः॥" In the sloka above we have a single statement, not two distinct statements. The metre is आर्या।

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला )।

शकुन्तला—इदो इदो सहीओ ( इतः इतः सख्यौ )।

[ Then enter, engaged as described, Sakuntala with her two friends ].

SAKUNTALA—This way my friends, this way.

अनसूया—हला सउन्दले, तुवत्तो वि तादकस्सवस्स इमे अस्समरुक्खओ पिअदरेत्ति तक्केमि। येन णोमालिआकुसुमपेलवा वि तुमं एदाणं आलवालपूरणे णिउत्ता [ हला शकुन्तले, त्वत्तोऽपि तातकाश्यपस्य इमे आश्रमवृक्षकाः प्रियतरा इति तर्कयामि। येन नवमालिकाकुसुमपेलवापि त्वम् एतेषाम् आलवालपूरणे नियुक्ता ]

ANASUYA—My dear Sakuntala, I believe these plants in the hermitage are dearer than thee to father Kasyapa; for which reason though tender as the Navamalika flower thou hast been employed to fill their trenches.

शकुन्तला—ण केवलं तादणिओओ एव्व अत्थि मे सोदर-

सिनेहोवि एदेसु [ न केवलं तातनियोग एव, अस्ति मे सोदर-स्नेहोऽपि एतेषु ]। ( वृक्षसेचनं रूपयति )।

SAKUNTALA—In the matter of these. there is my fraternal affection too, certainly *not* father's command alone. (Acts watering the trees).

तत इति। 'ततः' अनन्तरं राजनि अन्तरिते। उक्तस्य अनतिक्रमः यथोक्तम्। तद्वान् 'यथोक्तः' कथितानुरूपः 'व्यापारः' चेष्टा यस्याः, स चनोद्यता इत्यर्थः 'शकुन्तला सखीभ्यां सह प्रविशति' रङ्गमञ्चमागच्छति।

अनसूये—'हला इति सखिनामन्योऽन्यं सादरसम्भाषणम्। 'हला' अयि 'शकुन्तले तातस्य काश्यपस्य काश्यपसगोत्रस्य कण्वस्य 'इमे आश्रमवृक्षकाः' तपोवनतरवः त्वत्तोऽपि प्रियतराः वल्लभतरा 'इति तर्कयामि ऊहे। 'येन' हेतुना, प्रियतरत्वेन इत्यर्थः —यद्वा 'येन' काश्यपेन 'नवमालिकाकुसुममिव पेलवा' कोमला 'अपि'। सर्वथा एतदनर्हा अपि इत्यर्थः। 'त्वम्' एतेषां' वृक्षकाणाम् 'आलवालस्य' जलाधारस्य 'पूरणे नियुक्ता व्यापारिता।

शकुन्तलेति। 'न केवलं तातस्य नियोगः आदेश 'एव' मे जलसेचने कारणं, किन्तु 'एतेषु' वृक्षकेषु 'मे सोदरेषु सहोदरेषु भ्रातृषु यः 'स्नेहः' ममता सः 'अस्ति'। यथा ताताज्ञया, स्नेहाच्च तथैव सिञ्चामि।

## NOTES

I. (a) यावत = Implies अवधारण। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे"। (b) यथोक्त etc.—उक्तस्य अनतिक्रमः यथोक्तम् accordance with what is said अव्ययीभावः। यथोक्त + अच् मत्वर्थे = यथोक्तः as said. Now see Tika.

2 हला etc.—(a) त्वत्तः—"पञ्चमी विभक्ते" इति पञ्चमी। ततसिः स्वार्थे। (b) तातश्चासौ काश्यपश्च। तस्य॥ (c) हस्वा वृक्षा वृक्षकाः हस्वार्थे or अल्पार्थे कन्। आश्रमस्य वृक्षकाः॥ (d) येन—For which reason. i. e. because he loves the shrubs more. An अव्यय। Or येन—by whom; तच्छब्द is not necessary. उत्तरवाक्यगतत्वेन उपादानात् तच्छब्दस्यापेक्षा नास्ति। (e) नवमालिका is a night-blooming sweet-scented flower. नवमालिका च

कुसुमश्च नवमालिकाकुसुमम् । "विशेषणं विशेष्येण" इति समासः । तदिव पेलवा । उपमानसमासः । (f) आलवाल &c.—आ समन्तात् लवं जललवम् आलाति गृह्णाति इति आ + लव + आ + ला + क कर्त्तरि = आलवालम् trenches, dug round the root of trees for watering purposes.

3. (a) न केवलम् &c—नि + युज् + घञ् भावे नियोगः order. This is a reply to Anasuya whose speech insinuates that Sakuntala does not like the watering herself—is an unwilling worker at it—but waters them because her father orders it. The reply is = even if father had not ordered me I would have done it, because अस्ति मे सोदरस्नेहः ।* (b) सोदर &c—सह also means सदृश । Hence सदृशमुदरमेषाम् इति सोदराः or सहोदराः brothers, बहु—of the नित्यसमास class. सह becomes स optionally by the rule "वोपसर्जनस्य"

राजा—कथमियं सा कण्वदुहिता ! असाधुदर्शी खलु तत्रभवान् काश्यपः य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥१६॥

भवतु पादपान्तरित एव एनां विस्रब्धां पश्यामि । ( तथा करोति ) ।

KING—How now ! Is this the daughter of Kanva ? Truly,his holiness Kasyapa is not a good judge—Kasyapa who commands this one to the course of life in a hermitage. (The sage who hopes to render this artlessly charming figure capable of penance, certainly tries to cut a *Sami*-twig with the edge of a leaf of the blue lotus.) Well, concealed as I am by trees, I will watch her at her ease. ( Does the same ).

राजेति । 'कथम्' आश्चर्ये । आश्चर्यात् सम्भ्रमः [ "कथं प्रश्ने सम्भ्रमे च" इति विश्वः ] । 'इयं सा' वैखानसोक्ता 'कण्वस्य' कुलपतेः 'दुहिता' कन्या । राज्ञा तु प्रथमम् इयम् अर्थयुक्ता नीता । पश्चात् सख्या 'हला सउन्तले' इति सम्बोधनात्

---

* Adopted by Prof. Gajendragadkar.

ज्ञातम् स्वयमेव कण्वदुहिता इति। 'असाधु' असमीचीनं 'पश्यति खलु' पश्यत्येव 'तत्र-भवान् पूज्यः 'काश्यपः यः' [उत्तरवाक्यगतत्वेन न तच्छब्दोपादानम्] 'इमाम आश्रमस्य तपोवनस्य धर्मे' अनुष्ठाने 'नियुङ्क्ते' व्यापारयति॥

इदमिति। अन्वयः—यः ऋषिः अव्याजमनोहरम् इदं वपुः तपःक्षमं साधयितुम् इच्छति, स ध्रुवं नीलोत्पलपत्रधारया शमीलतां छेत्तुं व्यवस्यति किल। व्याख्या—'यः ऋषिः' कण्वः 'अव्याज' 'कृत्रिमशोभारहितं च, मनोहरं मधुरं च, स्वभावसुन्दरमित्यर्थः 'इदम्' अनुपमं 'वपुः' शकुन्तलायाः शरीरं 'तपःक्षमं' तपसो योग्यं 'साधयितुं' कर्त्तुम् 'इच्छति' वाञ्छति, स ऋषिः 'ध्रुवं' निश्चितं 'नीलोत्पलपत्रस्य इन्दीवरदलस्य 'धारया' प्रान्तेन 'शमीलतां' कठिनां शमीशाखां 'छेत्तुं व्यवस्यति' यतते 'किल'। नत्वद्य शङ्के ["वार्त्तायामरुचौ किल" इति त्रिकाण्डशेषः] ॥ कोमलया उत्पलपत्रधारया शमीशाखा-च्छेदनं यथा असम्भवं सुकुमारेण शकुन्तलायाः शरीरेण तपश्चरणमपि तथैव इति भावः॥

भवत्विति। 'भवतु' आस्तां तावदेतत्। 'सम्प्रति पादपैः' वृक्षैः 'अन्तरितः' व्यवहित 'एव' प्रकाशमगत्वा इत्यर्थः 'एनां' शकुन्तलां 'विस्रब्धां' विश्वस्तां, पुरुषसान्निध्यम् अज्ञात्वा स्वैरविहारिणीम् इत्यर्थः 'पश्यामि' विलोकयामि। ('तथा करोति' पाद-पान्तरित एव विलोकयति इत्यर्थः)।

## NOTES

1. (a) कथमियम् &c—Sakuntala has how revealed herself by replying to अनसूया। सा refers to what was said by the वैखानस। प्रकान्तार्थत्वात् यच्छब्दोपादानं नापेक्षते। (b) साधु = सम्यक् proper. न साधु असाधु। Qualifies दर्शनक्रिया। असाध + दृश + णिनि कर्त्तरि ताच्छील्ये। (c) तत्रभवान्—तत्र has here प्रथमार्थे त्रल्। तत्र भवान् इति सुप्सुपा or कर्मधा[?]. This is allowed by connection with the words भवत्, दीर्घायुर्, आयुष्मत्, देवानांप्रिय by the rule "इतराभ्योऽपि दृश्यन्ते"। Also comp. "जयमत्रभवान् नूनमरातिष्वभिलाषुकः—" Kirat. XI. (d) इमाम refers to शकुन्तला। The king here speaks of the impropriety of employing शकुन्तला in this work. The impropriety regarding the other two girls, does not strike him. He is interested, but the interest has not yet deepened into love. *

* Adapted by Prof. Gajendragadkar.

2 (a) अव्याज &c = वि + अज + घञ् करणे = व्याज a counterfeit छविमच्छोभा। अविद्यमानो व्याजः अस्मिन् अव्याजम्, बहु—। तच्च तत् मनोहरञ्च artless yet charming. समंधा—। (b) नीलोत्पल &c.—नीलमुत्पलं नीलोत्पलम् a variety of lotus, इन्दीवरम्। कर्मधा—। तस्य पत्रम् leaf of the blue-lotus. तस्य धारा the edge of a leaf of the blue lotus. तया : नीलोत्पल resembles a steel sword in colour, also is very delicate, so it is used here. (c) शमीलताम्—लता is शाखा a twig ; शमी is a sacred tree with a tough timber. शम्या लता a twig of the शमी। ताम्। Specially mentions the शमी because that is a tree whose twigs have to be cut every day by ascetics for sacrificial purposes. (d) वि + अव + सो ( दिवादि ) + लट् ति = व्यवस्यति। स्यो, सास्यति, असात,—आसासीत्। कर्मणि—व्यवसीयते।

3. Remark—वंशस्थविल is the metre. The figure is निदर्शन or निदर्शना for which see under शुद्धान्तदुर्लभमिदम् &c. Also we have विभावना in the first line "प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम्। तत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना।" Here the मनोहरत्व is taken as स्वाभाविक।

4. (a) भवतु—Be it so, let it pass. &c. This is idiomatic. It is used when one subject is dropped and a new subject is taken up. (b) पादैस पिबतीति पाद + पा + क कर्त्तरि—पादपः atree. अन्तर = अन्तर्द्धि concealment. "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।" इत्यमरः। अन्तरं जातमस्य इति अन्तर + इतच = अन्तरितः concealed. (c) एव—Indicates determination not to come out of his concealment. He was concealed already ; c. f.—यावदिमां छायामाश्रित्य प्रतिपालयामि—Ante. (d) विस्रब्धाम्—वि + स्रम्भ् ( श्रम्भ ) + क्तकर्त्तरि = विस्रब्धा at ease विश्वस्तवती। "समौ विश्रम्भविस्रम्भौ" इति कोषः।

**शकुन्तला (स्थित्वा)—सहि अणसूए अदिपिणद्धेण वक्कलेण पिअंवदाए णिअंतिदम्हि। सिढिलेहि दाव णं [ सखि अनसूये, अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि। शिथिलय तावदेतत् ]।**

**SAKUNTALA—(Having stopped) Friend Anasuya. I am**

pinioned by Priyamvada with a bark fastened too tight. Do loosen it.

अनसूया—तह [ तथा ]। ( शिथिलयति )।

ANASUYA—All right. (Loosens ).

प्रियंवदा (सहासम्)—एत्थ पओहरवित्थारइत्तिअं अत्तणो जोव्वणं उवालह [ अत्र पयोधरविस्तारयितृ आत्मनो यौवनम् उपालभस्व ]।

PRIYAMVADA—[With a laugh]—In this matter, blame your youth that causes the expansion of the breasts.

शकुन्तलेति। ['स्थिता' संचनात विरम्य]। पिनद्धं बद्धम। 'अतिपिनद्धेन' अतिमात्रं बद्धेन दृढबद्धेन इत्यर्थः [अपिपूर्वात् नह बन्धने इत्यस्मात् क्तः। अपेरकारलोपः पाक्षिकः] वल्कलेन' त्वचा वासोभूतया "नितरां यन्त्रिता' निरुद्धव्यापारा 'अस्मि'। 'एतत् वल्कलं तावत् शिथिलय शिथिलं कुरु। [शिथिलयति = शिथिलं करोति ]।

प्रियंवदेति। [हासेन सह 'सहासं विहस्य इत्यर्थः, आह] 'अत्र' अस्मिन् नियन्त्रणे 'आत्मनः' तव पयोधरयोः, स्तनयोः विस्तारयितृ, वर्द्धकं 'यौवनं' वान्त्यात परं वयः 'उपालभस्व' निन्द। यौवनेन वर्द्धितं स्तनयुगं नाधुना स्वल्पायतने वल्कले माति अत्र को मे दोष इति परिहासः।

NOTES

1. (a) अतिपिनद्धेन—अपि + नह + क्त कर्मणि = अपिनद्धम् or पिनद्धम् the अ of अपि being dropped optionnally—"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपञ्चैव हलन्तानां यथा वाचा निशा दिशा।" इति वचनात्। (b) शिथिलय—शिथिलं शुथं कुरु इति शिथिल + णिच् + लोट् हि = शिथिल (नामधातु) + हि = शिथिलय slacken. (c) तावत् indicates अवधारण। Cp.—"कुरुष्व तावत् करभोरु पश्चात्" &c.

2. (a) अत्र—In this matter. i. e. in the restraint. (b) विस्तारयतीति—वि + स्तृ + णिच् + तृच् कर्त्तरि क्लीबे = विस्तारयितृ that which has caused to develop. धरतीति धृ + अच् कर्त्तरि = धरः the holder. पयसां दुग्धस्य धरः पयोधरःthe breasts. तस्य विस्तारयितृ। शेषषष्ठ्या समासः। Avoid पयः धरतीति, for this gives पयोधार by "कर्मण्यण्"। Cp. "कण्व वर्ह्वि

अशाधरभूधरादयः। कर्मणः शेषत्वविवक्षायां भविष्यन्ति"—Bhattoji (c) उपालभ्यम्—उप + आ + लभ + लोट् मध do censure. उपालभ् means to censure.

2. Remark.—The old garments have just become too tight. This indicates fresh youth.

राजा—काममननुरूपमस्या वपुषो वल्कलम्। न पुनरलङ्कार-श्रियं न पुष्यति। कुतः—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥१७॥

KING—True, the bark is unsuitable for her figure. But it is not that it does not cherish the charm of a decoration. (Do you ask) why?—The lotus is lovely even though smeared with the scum ( Saivala ). The spot though dark, promotes the beauty of the moon. This slim one is more attractive even with a bark. What indeed is not a decoration for a charming figure ?

राजेति। 'वल्कलम्' एतत् वासोभूतम् 'अस्याः' शकुन्तलायाः 'वपुषः' लावण्यमयस्य शरीरस्य 'अननुरूपम्' अयोग्यं 'कामम्' मया अनुमन्तव्यम् [ "कामं प्रकामेऽनुमतौ" इति विश्वः ]। 'पुनः' किन्तु 'अलङ्कारश्रियं' वपुषो भूषणशोभां 'न पुष्यति' न तनोतीति इति 'न' अयोग्यमपि वल्कलमिदमस्या वपुर्भूषयत्येव॥ ["वपुषो वल्कलम्" (त-, भा-म- )...'वयसो वल्कलम्' ( रा-, वि- ) ]॥

सरसिजेति। अन्वयः—शैवलेनापि अनुविद्धं सरसिजं रम्यम्; लक्ष्म मलिनमपि हिमांशोर्लक्ष्मीं तनोति, वल्कलेनापि तन्वी इयम् अधिकमनोज्ञा। मधुराणामाकृतीनां किमिव हि न मण्डनम्। व्याख्या—'शैवलेनापि' तृणकया जलनील्या अपि (जलनीलया अपि:) 'अनुविद्धं' 'सरसिजं' कमलं 'रम्यं' मधुरम्। 'लक्ष्म' चिह्नं कलङ्कः ("चिह्नं लक्ष्म च" इत्यमरः) 'मलिनमपि' श्यामवर्णम् अतः असितमपि, 'हिमांशोः

शिशिरा: 'अंशव: किरणा यस्य तस्य, शीतरश्मेश्चन्द्रस्य 'लक्ष्मीं' शोभां 'तनोति' विस्तारयति। 'वल्कलेनापि' इयं वल्कलवाससा अपि 'तन्वी' कृशाङ्गी 'इयं शकुन्तला 'अधिकं' यथा तथा 'मनोज्ञा' हृद्या मनोहरतरया। एतत् वितयमालोच्य मन्ये मधुराणां मनोज्ञानाम् 'आकृतीनां वपुषां किमिव हि तुच्छमपि 'वस्तु न मण्डनं' न भूषणम्। अपि तु सर्वमेव कान्तमूर्त्तेर्भूषणं भवति।

## NOTES

1. (a) कामम्—Implies अनुमति (admission). (b) अनुगत रूपम् इति अनुरूपं योग्यम्। प्रादितत्—। न अनुरूपम् unsuitable नञ्तत्—। (c) पुनर् Implies भेद difference. "पुनरप्रथमे भेदे" इति कोष:। (द) अलङ्कारश्रियम्—अलङ्क्रियते भूष्यते अनेन इति अलम्+कृ+घञ करणे=अलङ्कार: decoration. तस्य श्री: or तत्कृता श्री: the charm caused by decoration इतत्—or शाकपार्थिवादि। ताम्। (e) न ··न—The double negation emphasises the affirmation.

Remark.—A bark garment for this charming figure is an obvious incongruity. This is the admission implied by कामम्। But पुनर् modifies the admission. Though obviously incongruous, you cannot say that the bark does not enhance her beauty. I prefer the reading वपुष:, because the poet closes the sloka following with "किमिव हि मधुराणां मण्डनं नाकृतीनाम्।" The inference there being about आकृति, it seems more relevant here to speak of वपुस् than of वयस् which is not आकृति।

3. (a) सरसिजम्—सरसि जातम् इति सरसि+जन+ड कर्त्तरि=सरसिज or सरोज by the rule "तत्पुरुषे कृति बहुलम्"। The बहुल implies variety i.e. whether लुक् or अलुक or both has to be known from शिष्टप्रयोग। Thus both सरसिज and सरोज occur in authoritative writing, but preferably write सरोरुह not सरसिरुह, पङ्केरुह not पङ्करुह। (b) अधिकमनोज्ञा—मनसा जानाति इति मनस्+ज्ञा+क कर्त्तरि=मनोज्ञा Lit. that which takes one by the mind, i. e. captivates the mind. Hence—charming. अधिकं यथा तथा मनोज्ञा excessively charming, सुप्सुपेति समास: (c) वल्कलेन—···इतीया करणे। It is करण of the क्रिया in मनोज्ञा। (d) किमिव—the इव here is merely orna-

mental—बाधाकाकार। "इवेति ईषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेषु" इति श्र-ख्याः। (e) किम्—is emphatic. Thus किं न मण्डनम् means what is not a decoration' which is a mere question, or by काकु "may imply that everything is a decoration. The कि emphasises the काकु—"what indeed is not a decoration." For a similar idea compare—"न रम्यमाहार्यमपेक्षते गुणम्"—Kirata; "सर्वशोभनीयं सुरूपं नाम"—Bhasa.

4. Remark—Note the course of the king's love. His interest in Sakunlala has not developed into admiration.* The metre is मालिनी and the figure अर्थान्तरन्यास (see under आ परितोषाद्विदुषाम् etc—Ante). Here the particular instances are first cited, the general conclusion then follows. It is perfectly legitimate. When दण्डिन् says—वस्तु प्रस्तुत्य तत्साधनसमर्थस्य न्यास:—he does not mean that in actual writing the conclusion has to be stated first. In thought however, the conclusion is first before the mind's eye and facts are then brought together in support.

शकुन्तला (अग्रतोऽवलोक्य)—एसो वादेरिदपल्लवाङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ। जाव णं सम्भावेमि [एष वातेरितपल्लवाङ्गुलीभिस्त्वरयति इव मां केसरवृक्षकः। यावत् एनं सम्भावयामि।] (परिक्रामति)।

SAKUNTALA—[Looking in front]—This Kesara tree hurries me as it were with its fingers of twigs urged by the wind. I will attend to it. [Walks round].

प्रियंवदा—हला—सउन्दले, एत्थ एव दाव मुहुत्तअं चिट्ठ। जाव तुए उवगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि [हला शकुन्तले, अत्र एव तावत् मुहूर्तकं तिष्ठ, यावत् त्वया उपगतया लतासनाथ इव अयं केसरवृक्षक: प्रतिभाति]।

* Adopted by Prof. Gajendragadkar

PRIYAMVADA—My dear Sakuntala, do thou stay at this very place for a moment. For, with you near, this Kesara tree appears as if blessed with a creeper.

शकुन्तला—अदो क्खु पिअंवदासि तुमं [ अतः खलु प्रियंवदासि त्वम् ]।

SAKUNTALA—Hence indeed you are called Priyamvada.

शकुन्तलेति। ['अयतः' पुरः 'अवलोक्य' आह ] 'एष अयतो दृश्यमानः 'केसरवृक्षकः' बकुलपादपः वातेन वायुना 'ईरिताः' चालिताः याः पल्लवरूपा 'अङ्गुल्यः' ताभिः 'मां त्वरयति' सत्वरमागमनार्थम् आह्वयति 'इव'। एहि शकुन्तले झटिति मां सेचनेन संवर्धय इति सङ्केतयति इव। 'यावत् एनं बकुलकं 'सम्भावयामि' मत्वा जलसेचनेन संवर्धयामि। [ "परिक्रामति" इत्यस्य परितो गच्छति ]।

प्रियंवदेति। 'हला' अयि शकुन्तले अत्र केसरतरुतले 'एव तावत् मुहूर्तकं' क्षणमात्रं 'तिष्ठ'। 'यावत्' प्रशंसायाम् [ "यावत् कात्स्न्येऽवधारणे। प्रशंसायाम्" इति मेदिनी]। 'उपगतया' समीपवर्त्तिन्या 'त्वया' [इति तृतीया] 'अयं केसरवृक्षकः बकुलपादपः लतया सनाथः नाथवान् 'इव' अलङ्कृत इव इत्यर्थः : 'प्रतिभाति' लक्ष्यते। त्वमत्र बकुलमूले स्थिता, मन्ये लतया इव कयाचित् अयमनुगृहीतो बकुलः इति शकुन्तलाया रूपप्रशंसा।

शकुन्तलेति। मधुरसुत्त्यौ तवया 'अतः खलु' ईदृशेनैव प्रियभाषणेन 'त्वं प्रियंवदा असि' प्रियंवदा इति नाम्ना आहूयसे। या प्रियं वदति सैव प्रियंवदा। प्रियभाषणेन पुनर्यथार्थं ते नाम।

## NOTES

1. (a) वातेरित &c.—ईर + क्त कर्मणि = ईरिताः urged. पल्लवरूपा अंगुल्यः पल्लवांगुल्यः। वातेन ईरिता वातेरिताः urged by the wind. तादृशाः पल्लवांगुल्यः। ताभिः। करणे ३या। (b) केसरवृक्षकः—ह्रस्वो वृक्षः वृक्षकः young tree, केसर is a name of बकुल। स आसौ वृक्षकश्च। (c) यावत् indicates अवधारण also.

2. Remark—Here we have रूपक in पल्लवांगुली। The defini-

tion in "उपमैव तिरोभूतभेदा रूपकमुच्यते"। Through the रूपक, we see अङ्गुलिसञ्चालन in the केशरवृक्ष; this is likened, not openly but by implication (समासरूप) to a lover's accosting (नायकसङ्केत); Hence the रूपक raises a समासोक्ति which is "वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुन:। उक्ति: संक्षेपरूपत्वात् सा समासोक्तिरिष्यते॥" as defined by दण्डिन्। Lastly, Sakuntala goes to the केशरवृक्षक as if—though not really – through this accosting. This is उत्प्रेक्षा [see under लग्नसारे ददशुः etc.]। रूपकानुप्राणितसमासोक्त्युत्प्रेक्षयोः सङ्करः।

3. खलु—implies अवधारण; for this very reason. 'प्रियभाषण is the cause of your being called प्रियंवदा। The refernce is to the derivation of the word. Thus प्रियं वदतीति प्रिय + वद-खच्, कर्त्तरि स्त्रियाम = प्रियंवदा by the rule "प्रियवशे वद: खच्"।

राजा—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा। अस्या: खलु—

अधर: किसलयराग: कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥ १८॥

KING—Priyamvada tells Sakuntala the truth though it is agreeable. Indeed—her lower lip has the lustre of a new leaf. the arms imitate tender twigs, in the limbs is arrayed attractive youth like [a crop of] flowers.

अनसूया—हला सउन्दले, इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणि त्ति णोमालिआ। णं विसुमरिदा सि [हला शकुन्तले, इयं स्वयंवरवधू: सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका। एनां विस्मृतासि]।

ANASUYA—My dear Sakuntala, here is the self-elected bride of the Sahakara, the Navamalika named by thee Vanajyotsna. Hast thou forgotten it?

पालेति। लोके हि यत् प्रियमुच्यते तत् मिथ्या भवति। किन्तु वदैतत् 'प्रियंवदा

शकुन्तलाम् 'आह' कथयति [ "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति वर्त्तमाने ब्रुव् आहादेशश्च ] तत् 'प्रियमपि' मधुरमपि 'तथ्यं' सत्यं न मिथ्या। ननमियं शकुन्तला बकुलमूले लता इव लक्ष्यते। नात्र प्रियंवदायाः चाटुवादः।

अधर इति। अन्वयः—अस्याः खलु अधरः किसलयरागः बाहू कोमलविटपानुकारिणौ अङ्गेषु कुसुममिव लोभनीयं यौवनं सन्नद्धम्। व्याख्या—'अस्याः खलु' शकुन्तलायाः किल 'अधरः' निम्नोष्टः 'किसलयस्य' नवपल्लवस्य 'रागः' रक्तिमा इव 'रागो' यस्य तथाविधः पल्लवताम्र इत्यर्थः। 'बाहू कोमलयोः' नम्रयोः नवजातयोः विटपयोः' शाखयोः अनुकारिणौ सदृशौ। अङ्गेषु स्तनजघनादिषु 'कुसुममिव' पुष्पमिव 'लोभनीयं' मनोहरं 'यौवनं' तरुणिमा 'सन्नद्धं' सज्जित विजृम्भितम्। शकुन्तलायाः अधरः नवपल्लवसदृशो बाहू च अचिरप्ररूढौ विटपौ इव यौवनं तु कुसुममिव। एभिः पुनरियमपि लतासदृशी इति सत्यम्।

अनसूयेति। इयम् एषा पुरोवर्त्तिनी 'सहकारस्य' रसालस्य 'स्वयंवरप्राप्ता वधूः' (शाकपार्थिवादिः) या हि स्वयमेव प्रसृत्य सहकारं श्रितवती सा इत्यर्थः त्वया 'कृतं' विहितं वनज्योत्स्ना इति नामधेयं नाम [ स्वार्थे धेयप्रत्ययः ] यस्याः सा 'नवमालिका कुसुमलता। 'एनां' नवमालिकां 'विस्मृता असि' [ गोणकर्मणः गत्यर्थत्वात् कर्त्तरि क्त. ] मन्ये विस्मृतिवशात् एषा त्वया न सिक्ता।

## NOTES

1. प्रियमपि &c.—Sakuntala takes Priyamvada's remarks as merely complimentary. But the King thinks, the remark is a true one.*

2. (a) किसलय &c.—किसलयस्य रागः the lustre of a new leaf इतत्—। स इव रागो यस्य whose lustre is like that of a new leaf बहु—by the Varttika "सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च वक्तव्यः"। (b) कोमल etc.—साधु अनुकरतः इति अनु + कृ + णिनि साधुकारिणि कर्त्तरि अनुकारिणौ कोमलौ विटपौ two tender twings. कर्मधा—। तयोः अनुकारिणौ imitators of two tender twigs, i. e. like twigs. "तथा अनुकरोति'

* Adopted by Prof. Gajendragadkar.

is a सादृश्यवाचक phrase. 'तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः' इति दण्डी ।

3. लोभनीयम्—लुभ् विमोहने + णिच् अनीयर् कर्त्तरि बाहुलकात् attractive.

4. Remark.—लोभनीय is suggestive. It betrays the King's wish to possess her. But just now the wish is not perceptible even to the king himself. Hence he says in a general manner लोभनीयं यौवनम् not लोभयति मां यौवनम् with a personal reference.*

5. स्वयंवर &c—स्वयम् आत्मना व्रियते अस्मिन् इति स्वयम् + वृ + घ अधिकरणे संज्ञायाम् = स्वयंवरः by the rule "पुंसि संज्ञायां घः प्रायेण" । तत्र वधूः etc. Or after भानुजी—स्वयं वृणोते इति स्वयम् + वृ + अच् कर्त्तरि स्त्रियाम् = स्वयंवरा one who chooses a husband herself. सा च सा वधूश्च । कर्मधा— ।

6. (a) वनज्योत्स्ना—ज्योतिरस्त्यासाम् इति ज्योतिस् + न मत्वर्थे = ज्योत्स्ना निपातनात् by the rule "ज्योत्स्ना तमिस्रा—" । वनस्य ज्योत्स्नेव उद्भासकत्वात् ! (b) एनाम—There is no शेषविवक्षा here. Hence the rule "अधीगर्थदयेशां कर्मणि" does not apply; we get द्वितीया because of कर्मविवक्षा । (c) विस्मृता—वि + स्मृ + क्त कर्त्तरि । स्मरति = मनसा गच्छति । Hence secondarily स्मृ is गत्यर्थ । So it takes कर्त्तरि क्त by the rule "गत्यर्थाकर्मक—" ।

शकुन्तला—तदा अत्ताणं विसुमरिस्सं [तदा आत्मानमपि विस्मरिष्यामि]। (लतामुपेत्य अवलोक्य च) हला रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो। णवकुसुमजोव्वणा वणजोसिणी, बद्धपल्लवदाए उवहोअक्खमो सहआरो [हला रमणीये खलु काले अस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः। नवकुसुमयौवना वनज्योत्स्ना बद्धपल्लवतया उपभोगक्षमः सहकारः]। (पश्यन्ती तिष्ठति।)

SAKUNTALA—Then I shall forget even my own self

Adopted by Prof. Gajendragadkar.

(Approaching the creeper and looking at it). Darling, at a most opportune moment indeed has taken place the union of this couple of a creeper and tree. The Vanajyotsna has fresh youth in her flower and the Sahakara is capable of enjoying because of its growth of twigs (Stands gazing).

सकुन्तलेति। यदि वनज्योत्स्नां विस्मरामि 'तदा आत्मानमपि विस्मरिष्यामि'। अभिन्ना इयं मत्तः, या हि वनज्योत्स्ना सैव अहम् इत्यर्थः। [लता वनज्योत्स्नाम् 'उपेत्य' प्राप्य, लतासमीपङ्गत्वा, 'अवलोक्य' दृष्ट्वा 'च' आह] 'हला' अनसूये 'रमणीये' मनोहरे 'खलु काले' समये 'लतायाः' वनज्योत्स्नायाः 'पादपस्य' सहकारस्य च यत् मिथुनं इयं, तस्य 'अस्य व्यतिकरः' समागमः 'संवृत्तः' जातः। रमणीयतां दर्शयति— 'वनज्योत्स्ना' तदाख्या। इयं नवमालिका 'नवम्' अचिरोद्गतम् नूतनत्वात् मनोरमं कुसुमरूपं यौवनं यस्याः तादृशी। 'सहकारः' आम्रः 'बद्धा' सन्नद्धाः 'पल्लवाः' यस्य 'तत्तया' नवपल्लवोद्गमात् उपभोगस्य छायासेवनादिसुखस्य 'क्षमः' योग्यः। यौवनेनेयं सहकारं प्रीणाति सोऽपि चैनां छायया सम्भावयति। प्रवृत्तश्चोष्णातपो ग्रीष्मकालः, पल्लवैः प्रच्छायशीतलश्च सहकारतलं तत्रापि नवमालिकाकुसुमसौरभम्। इत्यहो लोकसुभगोऽयमनयोः समागमः। ['पश्यन्ती' लतापादपौ अवलोकयन्ती मनसा च समागममाधुर्यं स्तुवती 'तिष्ठति' आस्ते]।

## NOTES

1. (a) रमणीये &c.—रमयति इति रम + णिच् + अनीयर् कर्तरि बाहुलकात् = रमणीय, charming. तस्मिन्। (b) लतापादप etc.—लता च पादपश्च लतापादपौ creeper and tree. तयोर्मिथुनं द्वन्द्वम् pair of a creeper and tree, तस्य। (c) व्यतिकरः—वि + अति + कॄ + घ अधिकरणे संज्ञायाम् Union. (d) नवकुसुम etc.—नवं कुसुमं नवकुसुमम्। तत् यौवनं यस्याः। See व्याख्या for another view. In अधरः किसलयरागः etc. यौवन is spoken of as कुसुम। Working in the same line here कुसुम is taken not merely as like यौवन but as यौवन itself. (d) बद्धपल्लव etc.—बद्धाः पल्लवा यस्य स बद्धपल्लवः having an array of twigs. तस्य भावः बद्धपल्लवता। तया। हेतौ तृया। (i) उपभोग etc.—उप + भुज + घञ् भावे उपभोगः enjoyment. तस्य क्षमः इतत्—।

प्रियंवदा—अनसूए, जाणासि किं सउन्दला वनजोसिणिं अदिमेत्तं पेक्खदित्ति [ अनसूये, जानासि किं शकुन्तला वनज्योत्स्नाम् अतिमात्रं प्रेक्षते इति ] ।

PRIYAMVADA—Do you know Anasuya, why Sakuntala is earnestly looking at Vanajyosna ?

अनसूया—ण क्खु विभावेमि । कहेहि [न खलु विभावयामि । कथय ] ।

ANASUYA—I cannot indeed guess. Do tell me.

प्रियंवदा—जह वनजोसिणी अनुरूवेण पाअवेण संगदा अवि णाम एव्वं अहं वि अत्तणो अनुरूवं वरं लहेअं त्ति [ यथा वनज्योत्स्ना अनुरूपेण पादपेन सङ्गता, अपि नाम एवमहमपि आत्मनः अनुरूपं वरं लभेय इति ] ।

PRIYAMṀVADA—As Vanajyotsna is united with a suitable tree, so may not I too get a bridegroom suiting myself"—This (is her thought).

शकुन्तला—एसो णूणं तुह अत्तगदो मनोरहो [ एष नूनं तव आत्मगतो मनोरथः ] । [ कलसमावर्जयति ] ।

SAKUNTALA—Surely, this is the desire within your self. (Inverts the pitcher).

प्रियंवदेति । 'अनसूये' शकुन्तला किं किं निमित्तं 'वनज्योत्स्नाम् अतिगता मात्रा' यस्मिन् तत् तथा तथा सातिशयमित्यर्थः 'प्रेक्षते' पश्यति, पश्यन्ती आस्ते 'इति' एतत् 'जानासि' ? इति काकुः ।

अनसूयेति । 'न खलु' न नूनं 'विभावयामि' अनुमातुं शक्नोमि । यदि त्वं जानासि 'कथय' मे ।

प्रियंवदेति । 'यथा' यद्वत् 'वनज्योत्स्ना अनुरूपेण' आत्मसदृशेन 'पादपेन' द्रुमेण सहकारेण 'सङ्गता' मिलिता 'अपि नाम' किमिदं सम्भावितं यत् 'अहमपि एवम्

आत्मनः अनुरूपं सदृशं 'वरं' भर्तारं 'लभेय लभ्धुं' 'शक्नुयाम्' 'इति' एतत् मनसिकृत्य इव वनज्योत्स्नां चूतसङ्गतां प्रेक्षमाणा तिष्ठति ।

शकुन्तलेति । नूनं निश्चितम् 'एष' त्वया उक्तः 'तव आत्मगतः' मनसि स्थितः 'मनोरथः' अभिलाषः । अयि चतुरिके, मामाश्रित्य स्वाभिलाषं प्रकटयसि ? ['कलशम्' सेचनघटम् 'आवर्जयति' किञ्चित् अधोमुखं करोति सिञ्चति इत्यर्थः ] ।

NOTES

1. जानासि—The कर्म is इति । Do you know this (इति) । The इति again refers to the sentence—किं शकुन्तला वनज्योत्स्नामतिमात्रं प्रेक्षते ।

2. (a) अपि नाम &c.—The अपि is repeated. The first indicates a question "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः । She is questioning herself. नाम—Implies possibility संभाव्य । 'नाम प्राकाश्यसंभाव्य क्रोधोपगमकुत्सने'' इत्यमरः । Together अपि नाम = Is it possible. The second अपि is समुच्चये । अहमपि = I too (b) लभेय—लभ + लिङ् ईय । शकि लिङ् । (c) इति—This i. e this is her thought इति ध्यायति अतः अतिमात्रं प्रेक्षते इत्यर्थः ।

3. Remark—Priyamvada's reply urges the King on in his course of love. On hearing this, naturally the thought arises in him whether he would be a suitable husband ( अनुरूपो वरः ) for Sakuntala.*

4. आत्मगतः—आत्मानं गतः residing in thyself. एतत्— । The point of the retort is—Priyamavada's speech is direct, अहम् referring to शकुन्तला । Sakuntala haughtily misinterprets—अहम् = the speaker, i. e. प्रियंवदा ।

5. आवर्जयति—आ + वृज + णिच् + लट् ति । Inverts i. e. empties on some shrub at hand, presumably the नवमालिका । Comp. नवमालिकाकुसुमभिन्ना &c. infra. आवर्जन is bending. Compare—"आवर्जितजटामौलिविलम्बिशशिकोटयः:" "शाखाभिरावर्जितपल्लवाभिः" &c.

राजा—अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा स्यात् ? अथवा कृतं सन्देहेन ।

* Adopted by Prof. Gajendragadkar.

असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥१८॥
तथापि तत्त्वत एनामुपलप्स्ये ।

KING—Can it be that this maiden is born of some wife of the Kulapati not of the same caste with him ? Or, away with doubts ! She is undoubtedly fit to be wedded by a Kshattriya, because my honourable mind is inclined towards her. (For, to the good, in matters of doubt, the inclination of their mind are the final authority. Still I must know the fact about her.)

राजेति । 'अपिनाम' किमिदं सम्भावितं यत् 'इयम्' एषा शकुन्तला 'कुलपतेः' अयुतशिष्यपोषकस्य मुनिकुलेश्वरस्य कण्वस्य 'असवर्णं ब्राह्मणेतरं' यत् कलत्रम् ["कलत्रं श्रोणिभार्य्ययोः" इति कोषः] 'तत्सम्भवा' तज्जाता 'स्यात्' भवेत् 'अथवा' पक्षान्तरे 'सन्देहेन' संशयेन 'कृतम्' अलम् । इयं ब्राह्मणपत्नीप्रसूता, तदितरजाता वा, इति अकारणः संशयः ।

असंशयमिति । अन्वयः—[ इयम् ] असंशयं क्षत्रपरिग्रहक्षमा, यत् मे आर्य्यं मनः अस्याम् अभिलाषि । सन्देहपदेषु वस्तुषु सताम् अन्तःकरणप्रवृत्तयो हि प्रमाणम् । व्याख्या—'इयं' शकुन्तला 'असंशयं' निश्चितं 'क्षत्रस्य' क्षत्रियजातेः 'परिग्रहः' पत्नीत्वेन स्वीकारः तस्य 'क्षमा' योग्या । कथमेतत् ज्ञायते इत्याह—यत् 'मे' मम पुरुवंशप्रभवस्य 'आर्य्यम्' आचारपूतं 'मनः अस्यां' शकुन्तलायाम् 'अभिलाषि' सस्पृहम् । यदि प्रवृत्तिरेव अनुसर्त्तव्या, तत्पथप्रवृत्तिरपि आपतति इत्याह—'सन्देहस्य पदेषु' स्थानेषु [ "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ] संशयस्थलेषु 'वस्तुषु' विषयेषु यानि यानि वस्तूनि संशयस्थलानि तेषु इत्यर्थः, सतां साधूनां, न तु प्राकृतानामपि 'अन्तःकरणस्य' मनसः 'प्रवृत्तयः' प्रवर्त्तननिवर्त्तनलक्षणा व्यापारा 'हि' ता एव 'प्रमाणं' कर्त्तव्यनिर्णायकम् ॥ कर्त्तव्याकर्त्तव्येषु साधूनां मन एव प्रमाणम् । पौरवोऽहं साधुरेव । मनश्च मे शकुन्तलां प्रति याति । तन्नूनमियं मे याज्या इति भावः ।

तथापीति। 'तथा' एवं तर्कयं भणीति 'अपि अथ' 'एनां शकुन्तलां 'तत्त्वतः' स्वरूपेण 'उपलप्स्ये' ज्ञास्ये। आश्रमवासिभ्यः परिपृच्छादिभिः आमूलं शकुन्तलाया वृत्तान्तम् अवगमिष्यामि।

## NOTES

1. (a) अपि नाम &c.—The king is discussing the propriety of his union with Sakuntala, as suggested by Priyamvada's reply. (b) कुलपतिः—This has a technical sense. "मुनीनां दश-साहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥" (c) असवर्ण &c.—सं भवत्यस्मात् इति सम् + भू + अप् अपदाने = संभवः origin उत्पत्तिस्थानम्। क्षेत्र is कलत्र wife. "क्षेत्रं कलत्रे केदारे"। समानो वर्णो यस्य तत् सवर्णम् of the same caste. समानस्य सभावः। न सवर्णमसवर्णम। असवर्णं क्षेत्रम् a wife not of the same caste. कर्मधा—। तत् संभवो यस्याः सा। बहु—। (d) स्यात्—शक्ति लिङ्। We do not say संभावनायां लिङ् because सम्भावना is already expressed by नाम। (e) कृतम्—It is an अव्यय here in the sense of अलम्। Hence गम्यमानोपयोगक्रिया प्रति करणत्वात 'सन्देहेन' इति करणे तृतीया।

2. (a) असंशयम्—सम् + शी + अच् भावे = संशयः doubt. अविद्यमानः संशयो यस्मिन् कर्मणि तत् यथा तथा। बहु—। क्षत्रपरि etc.—परि + ग्रह + अप् भावे = परिग्रहः acceptance (as bride). क्षत्रस्य परिग्रहः marriage by a Kshatriya. तस्य क्षमा। Or क्षत्रपरिग्रहं क्षमते इति क्षत्रपरिग्रह + क्षम + ण कर्तरि स्त्रियाम tolerating marriage by a Kshatriya (c) प्रमाणम्—Always neuter singular. (d) अन्तःकरण etc.—क्रियते अनेन इति कृ + ल्युट करणे = करणम् sense इन्द्रियम्। अन्तःस्थं करणम् अन्तःकरणम् the inner sense i. e. the mind शाकपार्थिवादि तत्।

3. (a) तथापि—Still, i. e. though I have no doubts. The enquiry is through curiosity only. He is sure of the result of the enquiry, it will end in proving that Sakuntala is eligible for marriage by a Kshatriya. (b) तत्त्वतः—तत्त्व is facts. Literally I will ascertain her by facts, i, e. I will ascertain the facts about her.

Adopted by Prof. Gajendragadkar

शकुन्तला (ससम्भ्रमम्)—अम्मो सलिलसेअसम्भमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ [अम्मो सलिलसेकसम्भ्रमोद्गतः नवमालिकाम् उज्झित्वा वदनं मे मधुकरः अभिवर्त्तते] (भ्रमरबाधां रूपयति)।

SAKUNTALA—(in a fright) Ah ! Raised by the agitation caused by the sprinkling of water, a bee, having left the Navamalika is coming towards my face ! (Acts the annoyance caused by a bee).

राजा (सस्पृहमवलोक्य)—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव, स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ २० ॥

KING—(Gazing longingly)—O bee ! we are undone through search after fact, thou art successful indeed ! Thou touchest repeatedly her trembling eyes the corners of which are restless ; hovering near her ears, thou softly hummest like one whispering a secret ; while she is waving her hands, thou sippest her lower lips which is the very essence of desire.

शकुन्तलेति। ('सम्भ्रमेण सन्त्रासेन सह आह) 'अम्मो' इति आवेगे। 'सलिलस्य' जलस्य 'सेकात्' यः 'सम्भ्रमः' आन्दोलनं तस्मात् 'उद्गतः' उत्पतितः 'मधुकरः' कश्चित् भ्रमरः 'नवमालिकां' वनज्योत्स्नाम् 'उज्झित्वा' परित्यज्य 'मे वदनं' पद्मगन्धि मुखम् 'अभिवर्त्तते' लोभात् अनुधावति। [ 'भ्रमरात्' बाधां पीड़ां 'निरूपयति' नाट्येन दर्शयति ]।

राजेति—[ स्पृहा अभिलाषः तेन सह इति 'सस्पृहं' (सहस्पृहं वा) साभिलाषम् 'अवलोक्य' भ्रमरवृत्तं दृष्ट्वा आह ]।

चलेति। अन्वयः—हे मधुकर, वेपथुमतीं चलापाङ्गां दृष्टिं बहुशः स्पृशसि, रहस्याख्यायीव कर्णान्तिकचरः ( सन् ) मृदु स्वनसि। करौ व्याधुन्वत्याः रतिसर्वस्वम् अधरं पिबसि। वयं तत्त्वान्वेषात् हताः, त्वं खलु कृती। व्याख्या—हे 'मधुकर' भ्रमर, भयात् वेपथुमतीं कम्पमानाम् अपि च भवदनुसरणात् 'चलः' चञ्चलः 'अपाङ्गः' प्रान्तभागो यस्याः तादृशीं दृष्टिं लोचनं 'बहुशो' बारं बारं स्पृशसि'। रहस्यं गोपनीयं किञ्चित आचष्ट इति 'रहस्याख्यायी' निभृतप्रवक्ता 'इव कर्णयोः अन्तिके' समीपे चरतीति तथाभूतः सन् 'मृदु' नीचैः 'स्वनसि' अस्फुटिधाना सम्बन्धे अव्यक्तं भाषसे। 'करौ' हस्तौ 'व्याधुन्वत्याः त्वामेव निषेद्धुं विशेषेण समन्तात् चालयन्त्याः अस्याः शकुन्तलायाः 'रतिसर्वस्वं' कामसारम् 'अधरं' निम्नौष्टं 'पिबसि' एनां चुम्बसि इत्यर्थः। 'वयम्' अहम् ["अस्मदो द्वयोश्च" इति बहुवचनम् ] 'तत्त्वस्य' मदुद्वाहयोग्या न वा इति वस्तुनः 'अन्वेषात्' निर्णयार्थमनुसरणात् 'हताः' भग्नमनोरथाः जाताः 'त्वं खलु' त्वमेव 'कृती' कृतकृत्यः॥ नवमालिकामुज्झित्वा प्रथमं नीलोत्पलभ्रमात् शकुन्तलाया नेत्रं प्रतिधावितो भ्रमरः। समीपस्थः पुनः कर्णे शिरीषाभ्याम् आकृष्टः तत्र एव चलितः। ततोऽपि च पक्वबिम्बबुद्ध्या अधरमभिगतः। राजा तु अस्यां जातस्पृहः भ्रमरे कामिचरितमारोप्य सासूयमाह इति तात्पर्यम्।

## NOTES

1. (a) सलिल &c.—सलिलस्य सेकः sprinkling of water. तस्मात् सम्भ्रमः agitation from the sprinkling &c. सह्सुपेति समासः। तस्मात् उद्गतः raised by the agitation &c. (d) अभिवर्तते—अभि is here usually taken as a कर्मप्रवचनीय to explain the द्वितीया in वदन। वदनम् अभि = वदनं लक्ष्यीकृत्य। Or we may say अभिवृत् is सकर्मक owing to अभि। "उपसर्गवशात् सकर्मकत्वम्"। In that case वदन takes कर्मणि द्वितीया।

2. (a) चल etc.—The king is ardently in love, and envies the bee that is seen playing with her.* The metre is शिखरिणी। समासोक्ति is the figure. See under वातेरित etc.—Ante. (b) बहुशः—Several times repeatedly. I have not got the chance even once. Hence the envy.* रहस्याख्यायी—रहसि भवम् इति रहस् + यत् = रहस्यम्

* Adopted by Prof. Gajendragadkar.

a secret. तत् आचष्टे आख्याति वा इति रहस्य+आ+चच or ख्या+णिनि ताधुकारिणि कर्त्तरि। According to भट्टोजि, however, ख्या is not available here and we have to derive from चच। "अयं सार्वधातु-कमार्धविषय:" इति भट्टोजि:। (c) कर्णान्तिक etc.—कर्णयो: अन्तिकम् neigh-bour-hood of the ears. तत्र चरतीति कर्णान्तिक+चर+ट कर्त्तरि॥

3. (a) तत्त्व etc.—अनु+इष+घञ् भावे=अन्वेष: search. तत्त्वत: अन्वेष:। तस्मात्। हेतौ पञ्चमी। (b) हता:—Baffled अकृतिन:, or restrained प्रतिहता:। 'मनोहत: प्रतिहत: प्रतिबद्धो हतश्च स:"। (d) कृती—Successful. "इष्टादिभ्यश्च" इति इनिप्रत्यय: is the usual derivation of Madhava, Mallinatha, Bhatti etc. But opinions differ as to whether कृत is of the इष्टादि class An alternative may be given—कृ+क्त कर्मणि भावे वा=कृतम् achievement. तदस्य अस्ति=कृत+इनि मत्वर्थे।

शकुन्तला—ण एसो धिट्ठो विरमदि। अण्णदो गमिस्सं [न एष धृष्टो विरमति। अन्यतो गमिष्यामि]। (पदान्तरे स्थित्वा सदृष्टिक्षेपम्।) कहं इदो वि आअच्छदि। हला परित्ताअह मं इमिणा दुव्विणीदेण महुअरेण अहिहूअमाणं [कथम् इतोऽपि आगच्छति। हला परित्रायेथां माम् अनेन दुर्विनीतेन मधुकरेण अभिभूयमानाम्]।

SAKUNTALA—This impudent bee won't stop. I will move elsewhere. [*Stepping aside and looking around*]. How now; he is coming this way too. Save me, Darling. I am being overpowered by this ill-mannered bee.

शकुन्तलेति। 'एष धृष्ट:' दुर्विनीतो भ्रमर: 'न विरमति' निवर्त्तते। 'अन्यत:' अन्यस्मिन् स्थाने 'गमिष्यामि' (अन्यत् पदं स्थानं 'पदान्तरं' स्थानान्तरम्। तत्र 'स्थित्वा' गमनात् विरता भूत्वा 'दृष्टे:' दर्शनस्य 'क्षेप:' पात: तेन सह भ्रमराभिमुखं दृष्ट्वा आह) 'कथम्' किमेतत् यत् एष: भ्रमर: 'इत: अपि' अस्मिन्नपि स्थाने 'आग-च्छति'। 'हला' अयि सख्यौ 'अनेन दुर्विनीतेन अशिष्टेन 'मधुकरेण अभिभूयमानां' आक्रम्यमाणां 'मां परित्रायेथां' रक्षतम्।

1. (a) न एव etc.—विरमति takes परस्मैपद by the rule "व्याङ्परिभ्यो रमः"। (b) अन्यतः takes तसि after ङि in the सप्तमी विभक्ति। Compare इतः in "प्रयुक्तमप्यस्त्रमितो वृथा स्यात्"। (c) कथम is आश्चर्ये—an अव्यय। Compare "कथमियं सा कण्वदुहिता", "कथं निगडसंयतासि"॥ (d) हला is सखीषु कोमलामन्त्रणे अव्ययम्। "सकामाभिस्तथा सख्यो हला भाष्याः परस्परम्।" (e) दुर्विनीतेन—दुर्+वि+नी+क्त कर्मणि, or दुष्टं विनीतः hardly disciplined. सहसुपेति समासः। Or विनीतं विनयः discipline; भावे क्त। दुःस्थितं विनीतं यस्य तेन। बहु—। (f) अभिभूयमानां परित्रायेथाम् = अभिभवात् परित्रायेथाम्॥

उभे ( सस्मितम् )—का वअं परित्तादुं। दुस्सन्दं अक्कन्द। राअरक्खिदव्वाइं तवोवणाइं णाम [का वयं परित्रातुम्। दुष्यन्तमाक्रन्द। राजरक्षितव्यानि तपोवनानि नाम।]

THE TWO FRIENDS—( Laughing )—Who are we to save, Call (shout for) Dushyanta. Forests of penance are known as to be protected by the king.

राजा—अवसरोऽयमात्मानं प्रकाशयितुम्। न भेतव्यम्—( अर्द्धोक्ते स्वगतम् ) राजभावस्त्वभिज्ञातो भवेत्। भवतु एवं तावदभिधास्ये—

KING—This is the opportunity to disclose myself. Don't be alarmed—(Aside, when only half-uttered). But the royal character will be disclosed; well then, I will speak thus—

शकुन्तला ( पदान्तरे स्थित्वा सदृष्टिक्षेपम्)—कहं इदो वि मं अणुसरदि [ कथमितोऽपि मामनुसरति। ]

SAKUNTALA—(stepping aside and looking around)—What ! following me here too.

उभे इति। 'उभे द्वे अपि सख्यौ 'स्मितेन' ईषद्धासेन सह आह। 'परित्रातु' परित्राणकर्मणि इत्यर्थः 'वयम् आवां द्वे 'का इति काकुः ["अस्मदो द्वयोश्च" इति

वल्कलवसनम् ]। वयं परित्रातुं सर्वथा अनिपुणाः। 'दुष्यन्तः' तदाख्यः राजर्षिम् आक्रन्द आह्वय। 'तपोवनानि' आश्रमपदानि 'राज्ञा रक्षितव्यानि' त्रातव्यानि 'नाम' परिहासोक्तिरियम् ॥ अनेन शकुन्तलायाः सुकुमारता भीरुता च गम्यते ॥

राजेति। आत्मानं 'प्रकाशयितुं' गोपनात् प्रकटयितुम् 'अयम्' एषः 'अवसरः' कालः अस्मिन् मुहूर्ते पादपव्यवधानात् बहिर्गन्तुं यम् इत्यर्थः ! 'न भेतव्यं' भयं मा कुरुध्व। [ अतः परम् "अयमहमागतः" इत्याकारं किञ्चित् वक्तुमुद्यतः 'अहं' न भेतव्यम् इत्यंशे 'उक्ते' सति, शेषमनुक्त्वा एव 'स्वगतम्' आत्मगतम् आह ] "अयमहम्" इति यदि ब्रूयां तदा 'तु राजभावः' मम राजस्वरूपम् 'अभिज्ञातो' विदितः भवेत्' यातु 'एवं तावत्' इत्याकारम् एव 'अभिधास्ये' वक्ष्ये।

शकुन्तलेति। 'अनुसरति' अभिवर्त्तते।

## NOTES

1. (a) परित्रातुम्—भवामः is understood. Hence अलार्थयोगात् तुमुन्। Or तुमुन् is भावे by the maxim—"अव्ययकृतो भावे"। Hence परित्रातुम् परित्राणम्। तस्मिन् विषये का वयम् giving विषय सप्तमी to परित्रातुम्। The सप्तमी is elided [ अव्ययत्वात् ]। (b) नाम—इति प्राकाश्ये अव्ययम्। "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इत्यमरः ॥

2. प्रकाशयितुम् = The construction is प्रकाशयितुम् अवसरः। We have तुमुन् by the rule "कालसमयवेलासु तुमुन्" which includes all कालवाचक words. "पर्य्यायोपादानमर्थोपलक्षणार्थम्। कालार्थेषु उपपदेषु तुमुन् स्यात्"—Bhattoji. Up to this time, the girls do not hear what the king says. But न भेतव्यम् is pronounced aloud so as to be heard. Hence some stage direction is necessary before न भेतव्यम्।*

3. स्वगतम्—This is supposed not to be within the hearing of the other actors on the stage, at the time, though uttered loud enough for the audience 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।' And its opp. is प्रकाशम्।

* **Adopted by Prof. Gajendragadkar.**

राजा ( सत्वरमुपसृत्य )—

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥२१॥

( सर्वा राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ताः ) ।

King (Hastily advancing)—Who is this showing insolence towards guileless ascetic maidens whilst a descendent of Puru a chastiser of the ill-trained, governs the earth ? (All slightly confused on seeing the king).

अनसूया—अज्ज ण क्खु किं वि अच्चाहिदं । इअं णो पिअसही महुअरेण अहिहूअमाना कादरीभूदा [ आर्य्ये न खलु किमपि अत्याहितम् । इयमावयोः प्रियसखी मधुकरेण अभिभूयमाना कातरीभूता ] । ( शकुन्तलां दर्शयति ) ।

ANASUYA—Nothing indeed very alarming. Noble sir, this dear friends of ours, teased by a bee, has got frightened (Points at Sakuntala.)

राजेति । [ सत्वरं' झटिति 'उपसृत्य' अग्रे गत्वा आह ] ।

क इति । अन्वयः—कः अयं, दुर्विनीतानां शासितरि पौरवे वसुमतीं शासति (सति) मुग्धासु तपस्विन्यासु अविनयम् आचरति । व्याख्या—'कः अयं' क एष 'दुर्विनीतानाम् अशिष्टानां 'शासितरि' शासके पौरवे पुरुकुलप्रसूते राजनि वसुमतीं' महीं 'शासति' रक्षति सति । महीं शासत्त पौरवमनादृत्य ["षष्ठी च अनादरे" इति चकारात् सप्तमी] 'मुग्धासु' सरलासु 'तपस्विनां कन्यासु' मुनिकुमारीषु 'अविनयम्' औद्धत्यम् 'आचरति' प्रयोजयिष्यति ॥ पुरुकुले दीप्यमाने भुवि दुर्विनीता नैव सुः । यदि किञ्चिदस्ति तमहमभिभूय राजसकाशं प्रेषयिष्यामि इति भावः ॥

[ 'सर्वाः' तिस्र एव मुनिकन्यका 'राजनं' दृष्ट्वा किञ्चिदिव ईषदेव न बलवत् संभ्रान्ताः' त्रस्ताः ] ।

अनसूयेति । 'आर्य्ये' हे मान्य 'न खलु' नूनं 'किमपि अत्याहितं' महद्भयंप्राप्तम्

किन्तु 'इयमावयोः प्रियसखी शकुन्तला 'मधुकरेण अभिभूयमाना बाध्यमाना सती अकातरा कातरा सम्पद्यमाना भूता 'कातरीभूता' व्याकुलीकृता।

NOTES

1. पौरवे—Refers to दुष्यन्ते। अनादरे भावलक्षणे सप्तमी। This is intended to mislead. पौरवे मयि is the fact पौरवे दुष्यन्ते makes a distinction between the speaker and दुष्यन्त and mislead the maidens (c. f. राजभावस्त्वभिज्ञातो भवेत् above). (b) शासितरि—शास+तृच् अर्हे कर्त्तरि=शासिता the chastiser तस्मिन्। Owing to the तृच् we have षष्ठी in दुर्विनीतानाम्। पौरवो दुर्विनीतानां शासिता=पौरवो दुर्विनीतान् शासितुमर्हति। The metre is आर्या (See आ परितोषात् &c. Ante).

2 Remark—We have an exact parallel in "अहो महीं शासति सूर्यवंशे निरागसः प्राणहरः क एषः"।

3. सर्वा &c.—All were confused but अनसूया was the first to recover self-possession. She addressed the king.*

4. आर्य etc.—अर्य्यते गम्यते शरणत्वेन आश्रीयते इति ऋ+ण्यत् कर्मणि आर्य; Lit: one who succours the distressed. This is very aptly used towards दुष्यन्त at the time he offers protection to the girls. The word is however more commonly used in its secondary sense of a noble man, one of generous impulses, साधु। "महाकुल-कुलीनार्य्य सभ्यसज्जनसाधवः" इत्यमरः। (d) अत्याहितम्—अतीव आहितं मनसि that which has made a deep impression on the mind ; hence a great danger महाभीतिः। "अत्याहितं महाभीतिः" इत्यमरः। आ+धा+क्त=आहित। (c) कातरीभूता—अकातरा कातरा सम्पद्यमाना भूता इति कातरा+च्वि+भू=क्त कर्त्तरिस्त्रियाम्।

**राजा ( शकुन्तलाभिमुखो भूत्वा )—अपि तपो वर्द्धते ?**

**( शकुन्तला साध्वसादवचना तिष्ठति )—**

KING—(Facing toward Sakuntala)—Do your devotional rites prosper ?(Sakuntala stands speechless through confusion).

---

* **Adopted by Prof. Gajendragadkar.**

अनसूया—दाणिं अदिधिविसेसलाहेण। हला सउन्दले गच्छ उडअं फलमिस्सं अग्घं उवहर। इदं पादोदकं भविस्सदि। (इदानीम् अतिथिविशेषलाभेन। हला शकुन्तले गच्छ उटजम् फलमिश्रम् अर्घमुपहर। इदं पादोदकं भविष्यति)।

Anasuya—[ They do ] now by the arrival of a distinguished guest. Dear Sakuntala, go to the cottage and fetch offering mixed with fruits. This will become water for the feet.

राजा—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम्।

KING—Verily, the rites of hospitality have been rendered by your sweet and sincere words.

राजेति। [ 'शकुन्तलामभि' तया एकदिक् 'मुखं' यस्य तथा 'भूत्वा' आह ] 'अपि तपो वर्द्धते' श्रीयमानं भूयते। तपसः कुशलं किम्? [ 'शकुन्तला साध्वसात्' स्वभमात् अविदामाम वचनं भाषणमस्या इति 'अवचना' निरुत्तरा 'तिष्ठति' ]।

अनसूयेति। शकुन्तलां निरुत्तरां दृष्ट्वा अनसूया आह—'अतिथीनां विशेषः' उत्तमः 'अतिथिविशेषः' उत्तमातिथिः भवानेव। तस्य 'लाभेन' प्राप्त्या 'इदानीम्' अधुना तपो वर्द्धते। चाटुवाद एष राजनि॥ पित्रा आदिष्टम् अतिथिपूजनं स्मारयन्ती आह—'हला शकुन्तले उटजं' पर्णशालां 'गच्छ'। ततः 'फलैः मिश्रं' युक्तम् 'अर्घम्' अर्घार्थद्रव्यम् आनीय अत्रभवते 'उपहर' प्रापय। 'इदम्' एतत् अत्र स्थितं जलमेव 'पादोदकं' पाद्यं वारि भविष्यति'। जलमस्ति, दधिकुशादिकं माङ्गल्यमानीय प्रथमं पादप्रक्षालनार्थं पाद्यंततः पूजार्थमर्घं, ततश्च भक्षणार्थं फलं देहि इत्यर्थः।

राजेति। 'भवतीनां सूनृतया' सत्यप्रियया [ "सूनृतन्तु प्रिये सत्ये" इत्यमरः ] 'वाचाएव आतिथ्यं कृतम्' अलं पुनरायासेन।

## NOTES

1. राजा &c.—अभिगतं मुखमस्य इति अभिमुखः facing. वद्—by

the Varttika "प्रादिभ्यो धातुजस्य वह्वीहिर्वाच्यो वाचोत्तरपदलोप:"। शकुन्तलाया अभिमुख: ।

2. शकुन्तला &c.—She has not yet recovered from the confusion. On the contrary, being directly addressed by the king she is more confused and cannot answer, Priyamvada too is confused. Hence Anasuya saves the situation by answering for Sakuntala.*

3. (a) अतिथिविशेष etc.—विशिष्यते or विशेष्यते इति वि + शिष [or शिष + णिच्] + घञ् कर्मणि = विशेष: lit. that which is left [when the husks are removed] i.e. the kernel, that is best. अतिथीनां विशेष: the best of guests. इतत् ।—There is no निर्द्धारण in the वाक्य, because निर्द्धारण requires the presence of three things, the निर्द्धार्यमाण, the class from which the निर्द्धारण is made, and the quality which is the basis of निर्द्धारण ! These conditions are not fulfilled in the present instance. Hence the prohibition "न निर्द्धारणे" does not apply. (b) फलमिश्रमर्घम्—फलैर्मिश्रं फलमिश्रम् इतत्—by "पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णै:"। अर्घ is पूजाविधि an offering to honour a visitor. फलमिश्र: अर्घ: । तम् । फल here is a part of अर्घ । These are distinct. Offer him अर्घ and also offer फल । No फल is necessary to make up an अर्घ । The वाचस्पत्य quotes काशीखण्ड thus—"आप: क्षीरं कुशाग्रञ्च दधि सर्पि: सतण्डुलम् । यव: सिद्धार्थकश्चैव अष्टाङ्गोऽर्घ: प्रकीर्त्तित: ॥" Rice [ तण्डुल ] and mustard [ सिद्धार्थक] in this canot be called फल । (c) पादोदकम्—पादाय उदकम् water for the feet. i.e. water to wash the feet with = पाद्यम् । सहसुपेति समास: । Or पादार्थम् उदकम् इति शाकपार्थिवादि ॥

Remark—Here Anasuya reminds Sakuntala of her father's injunction to attend to guests that come to the hermitage during his absence. Sakuntala is not doing her duty by thus standing confused.*

5. (a) सूनृतया—सुष्ठु नृत्यन्ति जना अनेन हर्षात् इति सु + नृत + क करणे घञर्थे स्त्रियाम् । This is Bhanujis derivation. It is open to

* Adopted by Prof. Gajendragadkar.

the objection that वृत does not occur in the Varttika "घञर्थे कविधानं स्था स्ना पा व्यधि हनि युध्यर्थम्"। Hence Bhanuji suggests the alternative सु + वृत + घञ करणे संज्ञायाम् and explains that वृत does not take गुण [i. e. it does not become वर्त ] by the maxim "संज्ञापूर्वको विधिरनित्यः"। Lastly सु becomes दीर्घ by the rule "अन्येषामपि दृश्यते" ॥ (b) आतिथ्यम्—अतिथये इदम् इति अतिथि + ञ्य।

प्रियंवदा—तेण हि इमस्सिं पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उपविसिअ परिस्समविनोदं करेदु अज्जो [ तेन हि अस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तकमुपविश्य परिश्रमविनोदं करोतु आर्य्यः ]।

PRIYAMVADA—Then let your honour allay his fatigue seated a while on this cool and shady embankment round the saptaparna tree.

राजा—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः।

KING—Surely you too are all fatigued by this work.

अनसूया—हला सउन्दले, उइदं णो पज्जुवासणं अदिहीणं। एहि उवविसम्ह [हला शकुन्तले, उचितं नः पर्य्युपासनमतिथीनाम् एहि उपविशामः ]। ( सर्वे उपविशन्ति )।

• ANASUYA—Dear Sakuntala, it is proper for us to sit near the guest. Come let us sit down. [They all sit down].

प्रियंवदेति। यदि आतिथ्यं कृतमेव मन्यते भवता 'तेन हि' ततश्च 'प्रकृष्टाभिश्छायाभिः' शीतले दृशे 'शीतलायाम् अस्यां सप्तपर्णवृक्षस्य' वेदिकाया मूलवन्धनभित्तौ 'मुहूर्तकं' क्षणमात्रम् 'उपविश्य आर्य्यः' मान्यो भवान् परिश्रमस्य' पथिक्लान्तेः 'विनोदं' 'लाघवं' करोतु' [ प्रच्छाय इति बहुव्रीहिः। प्रकृष्टा छाया इति प्रादिसमासे तु प्रच्छाया इति स्यात् ]।

राजेति। 'नूनं' निश्चितं 'यूयमपि अनेन अतिथिसत्कारूपेण कर्मणा परिश्रान्ताः जातखेदाः। तत् यूयमपि उपविश्य श्रमनोदनं कुरुत।

अनसूयेति। अतिथीनां पर्युपासनं परिहृत्य स्थितिः, लक्षणया छन्दोनुवर्त्तनं 'नः' अस्माकम् 'उचितम्'। यदतिथये रोचते तत् नः कर्त्तव्यम्। 'एहि उपविशामः'।

NOTES

1. प्रच्छाय etc.—प्रकृष्टा छाया यस्मिन् देशे स प्रच्छायः a shady place. तत्र शीतला। Or प्रकृष्टा छाया यस्यां वेदिकायां सा प्रच्छाया। सा च शीतला च इति कर्मधा—। Also see व्याख्या। The first derivation has already been adopted in प्रच्छायसुलभनिद्राः [Prelude]. The व्याख्या adopts this while saying प्रकृष्टाभिश्छायाभिः सेविते देशे शीतलायाम् etc. Prof. G's remarks "Ray's प्रकृष्टाभिः छायाभिः शीतलायाम् is inaccurate" is altogether out of place. The omission of सेविते देशे alter the case completely. With सेविते देशे I refer to the बहुव्रीहि compound प्रच्छायः। Prof. G's Remark omiting सेविते देशे refers to the कर्मधा (तत्-) compound प्रच्छाया which is quite different from mine.

2. पर्युपासनम्—परि + उप + आस + ल्युट् भावे lit. sitting near in a circle. Secondarily 'to honour. It may be taken here in both the senses.

3. सर्वे—Qualifies अभिनेतारो जनाः understood. See Tika ante on निष्क्रान्तौ। Here एकशेष is not available.

**शकुन्तला ( आत्मगतम् )—किं णु क्खु, इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअम्हि संवुत्ता [ किं नु खलु इमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीया अस्मि संवृत्ता ]।**

SAKUNTALA—[ Aside ]—How is it that, on seeing this person I have become the subject of an emotion inconsistent with the penance-grove?

**राजा (सर्वा विलोक्य)—अहो समवयोरूपरमणीयं भवतीनां सौहार्दम्।**

**KING—[Gazing on all of them ]—Oh! Your friendship is charming by equal age and beauty!**

प्रियंवदा ( जनान्तिकम् )—अनसूए, कोणु कखु, एसो महुर-गम्भीराकिदो चउरं पिअं आलवन्दो पहाववदो विअ लक्खीअदि [अनसूये, को नु खलु एष मधुरगम्भीराकृतिः चतुरं प्रियम् आलपन् प्रभाववान् इव लक्ष्यते ]।

PRIYAMVADA [ Aside ]—Anasuya, who indeed is this that, with a pleasing and dignified appearance, speaking smartly and sweetly looks like one full of majesty ?

शकुन्तलेति। ('आत्मगतं यथा अन्यैरश्रुतमित्यर्थः आह ) 'किं नु खलु' कथं तावत् 'इमम्' एतमतिथिं प्रेक्ष्य तपोवनस्य आश्रमस्य 'विरोधिनः' विरुद्धस्य संयमप्रतिकूलस्य 'विकारस्य' चेतोविकृतेः सात्त्विकभावस्य इत्यर्थः 'गमनीया' आस्पदं 'संवृत्ता अस्मि' जातास्मि ? इमं वीक्ष्य कुतो मे चेतोविकृतिः ?

राजेति। ('सर्वाः' तिस्रोऽपि कन्यकाः विलोक्य दृष्ट्वा आह ) 'अहो' आश्चर्यं 'वयसो रूपस्य'च 'समतया'अतीव 'रमणीयं' जातं भवतीनां सौहार्द्दं सख्यम् ["हृद्भग-सिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः। "अनर्थि हृद्भावात्" इति च वामनः ]।

प्रियंवदेति। [ जनानामन्तिके समीपे यथा 'जनान्तिकम अभीष्ट जनं विना अन्यान् अपवार्य', तेषाम अश्रुतम्* आह ] 'अनसूये को नु खलु एषः' कस्तावदयं जनः 'आकृत्या मधुरः मनोहरः अभिगम्यः, अथ च 'गम्भीरः' अधृष्यः 'चतुरं' निपुणं प्रियं हृद्यम् 'आलपन्' आभाषमाणः 'प्रभाववान्' प्रतापशाली 'इव लक्ष्यते अनुमीयते। आकृत्या वाचा च मन्ये नायं प्राकृतो जनः।

## NOTES

1. आत्मगतम्—This is the same as स्वगतम्। See also Note ante. * अश्रुत—this is of course अश्रुत to all except the audience.

2. (a) किं नु etc.—किम् implies प्रश्न to himself. नु suggests that the emotion is there. The प्रश्न refers to the cause of its presence. Last is the वितर्क indicating an attempt on her part

to discover the cause. "नु वितर्कावसानयोः" इति मेदिनी ॥ (b) तपोवन etc.—तपसो वनम् ; तपःसाधनं वनं वा तपोवनम् । तस्य विरोधी, i. e. oppoted to a hermit-life. तस्य । विक्रियते अनेन इति विकारः emotion ; घञ् करणे । Here is love. (c) गमनीया—गम + अनीयर् कर्मणि स्त्रियाम् fit to be reached i. e. accessible.

3. (a) समवयो etc.—वयश्च रूपञ्च age and beauty, द्वन्द्व । समे वयोरूपे equal age and beauty. ताभ्यां रमणीयम् इतम्—॥ (b) सौहार्द्दम—शोभनं हृदयमस्य इति सुहृद् a friend. निपातनात् by the rule "सुहृद्दुर्हृदौ मित्रामित्रयोः" । तस्य भावः इति सुहृत् + अण = सौहार्द्दम् friendship. Also see under "प्रथमसौहृदम्—" Infra Act VI. and Addendum for further details.

4. जनान्तिकम्—This is heard by the audience and the person for whom intnded. "त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत् स्यात् तज्जानन्तिकम् ॥"···Sahitya-darpana.

5. अनसूये etc,—(a) कः—implies प्रश्न । नु suggests वितर्क । Hence this is a वितर्कगर्भः प्रश्नः । खलु is only ornamental = वाक्यालङ्कारे । "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः ॥ (b) मधुरा च गम्भीरा च मधुरगम्भीरा कर्मधा— । मधुरगम्भीरा आकृतिर्यस्य of a pleasing and august presence ; or मधुरा गम्भीरा आकृतिर्यस्य । त्रिपदबहु—॥ (c) चतुर etc.—These are adverbs qualifying आलपनक्रिया ॥ (d) प्रभाव etc. प्रकृष्टो भाव इति प्रभावः majesty प्रादितत्— । We cannot attach घञ् to प्र + भू to obtain प्रभाव because of the rule "श्रिणीभुवोऽनुपसर्गे" the root भू does not take घञ् when an उपसर्ग precedes. प्रभाव मतुप् = प्रभाववान् ।

अनसूया—सहि, मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव [सखि ममापि अस्ति कौतूहलम् प्रक्ष्यामि तावदेनम् ] ।

(प्रकाशम् ) अज्जस्स महुरालावजणिदो वीसम्भो मं मंतावेदि । कदमो अज्जेण राएसिवंसो अलङ्करीअदि कदमो वा विरहपज्जुस्सुअजणो किदो देसो किं निमित्तं वा सुउमारदरो वि तवोवणगमणपरिस्समस्स अत्ता पदं उपणीदो [ आर्यस्य मधुरालापजनितो

विश्रम्भः मां मन्त्रयते । कतमः आर्य्येण राजर्षिवंशः अलङ्क्रियते । कतमो वा विरहपर्युत्सुकजनः कृतो देशः । किं निमित्तं वा सुकुमारतरोऽपि तपोवनपरिश्रमस्य आत्मा पदम् उपनीतः ] ।

ANASUYA—Friend, mine too is the curiosity. Well I will ask him. [Aloud] The confidence caused by the sweet words of your honour prompts me—Which race of the royal sages is being adorned by your honour ? Which country has now its people rendered pining through separation from you ? And for what reason even this extremely delicate self has been subject to the fatigue of a journey to the forest of penance.

अनसूयेति । 'सखि ममापि कौतूहलं' निर्णयकौतुकम् 'अस्ति' । अयं तर्कः मयि अपि आस्ते । एनं 'तावत्' इमं जनमेव 'प्रक्ष्यामि' । [ प्रकाशं स्पष्टम् उच्चैःराजानं प्रति आह ] 'आर्य्यस्य भवतो 'मधुरालापेन' मधुवचसा 'जनितः' उत्पादितः यो 'विश्रम्भः' विश्वासः [ 'समौ विश्रम्भविश्वासौ' इत्यमरः ] स 'मां मन्त्रयते' मन्त्रणकर्मणि, वाक्प्रयोगे नियोजयति । विश्वासेन प्रेरिता अवशा ब्रवीमि, पृच्छतां मर्षय इति भावः । 'आर्य्येण कतमः' प्रसिद्धेषु चन्द्रसूर्य्यादिप्रभवेषु कोवा 'राजर्षीणां वंशः अलङ्क्रियते' जन्मना भूष्यते । पञ्चालशूरसेनादिषु 'कतमो देशः' एतन्मुहूर्त्तं 'विरहेण' भवदर्शनेन 'पर्युत्सुकाः' उत्कण्ठिताः 'जनाः' यस्मिन् तादृशः क्रियते । प्रजारिञ्जनात् अन्वर्थनामा राजासि । 'किं' 'निमित्तं' वा कस्मात् वा निमित्तात् 'सुकुमारतरोऽपि' अतिमृदुरपि 'आत्मा' भवतो देहः [ 'आत्मा देहमनोब्रह्मस्वभावधृति-बुद्धिषु । प्रयत्ने चापि" इति विश्वः ] 'तपोवनस्य' यः परिश्रमः आगमनक्लेशः तस्य पदं स्थानम् 'उपनीतः' प्रापितः । आगमनक्लेशस्वीकारस्य को हेतुः ।

## NOTES

1. (a) सखि &c.—Literally "The curiosity exists in me too" i.e. I am myself curious to know who he is. (b) कुतूहल-

मेव कौतूहलम् curiosity. अण् स्वार्थे—प्रज्ञादि। 'रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्"। The latter occurs in 'माधव्य अपाप्ति शकुन्तलादर्शन कुतूहलम्'—Act II.

2. मधुरालाप &c.—(a) मधुरः आलापः sweet speech. तेन जनितः। (b) विस्रम्भः—वि + स्रम्भ + घञ् भावे confidence; (c) मन्त्रयते—This is causative. Thus—अहं मन्त्रये I hold conversation. Hence मन्त्र (चुरादि) + हेतुमति णिच् + लट् ते ॥ (d) अलङ्क्रियते—अलम् (भूषणार्थे)+ कृ + लट् ते कर्मणि। अलम् is गतिसंज्ञक in the sense of भूषण। No समास—only it is placed before the तिङन्त; cp.—"अतिङन्तश्राय समासः"। (e) विरह &c.—विरहेण पर्युत्सुकाः सुप्सुपा। तादृशा जना यस्मिन्। विच्छेदविधुरप्रजः ॥ (f) सुकुमार &c—तरप implies comparison of two things. Here आत्मा is one thing, the second thing is not mentioned. There is mental (बौद्ध) comparison of दुष्यन्त with other kings. Anasuya suggests "You look like a prince. From your speech I believe you are popular (c f विरहपर्युत्सुकजनः) with your people. Your features are more delicate than those of an ordinary king." Hence बौद्धप्रतियोग्यपेक्षया अतिशायने तरप् ॥ (g) आत्मा etc.—The form in the कर्तृवाच्य was आर्यः आत्मानं पदमुपनीतवान्। कर्मणि it becomes आर्येण आत्मा पदमुपनीतः। Of the two classes of द्विकर्मक roots the नीादि class takes लकार etc. in its प्रधान and the दुहादि in the अप्रधान कर्म in the कर्मवाच्य। Hence the प्रधानकर्म here [आत्मा] becomes उक्त।

शकुन्तला (आत्मगतम्)—हिअअ मा उत्तम्म। एसा तुए चिन्तिदाइं अनसूया मन्तेदि [हृदय मा उत्ताम्य। एषा त्वया चिन्तितानि अनसूया मन्त्रयते]।

SAKUNTALA—[Aside] O heart, be not troubled. This Anasuya is uttering thy thought.

राजा (आत्मगतम्)—कथमिदानीमात्मानं निवेदयामि, कथं वा आत्मापहारं करोमि। भवतु एवं तावदेनां वक्ष्ये—(प्रकाशम्)

भवति, यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

KING (Aside)—How shall I describe myself now and yet how shall I preserve the incognito of myself; Well, I will address her thus. (Aloud) Honoured maiden, I the person that is employed in the department of Religion by the King descended from Puru, have come to this holy forest to know if rites are without obstruction.

शकुन्तलेति । ['आत्मगतम्' अन्यैरश्रुतम आत्मनो हृदयं प्रति आह) हे 'हृदय' मदन्तःकरण 'मा उत्ताम्य' अधीरं मा भू [ तमु इति दैवादिकस्य लोटि मध्यमैकवचने रूपम् । मा—शब्दः अडिदर्थस्मि, स च "माङि लुङ्" इत्यस्य अविषयः । तेन लोट् । "मा कुरु धनजनयौवनगर्वम्" इत्यादिषु यथा ] यानि 'त्वया चिन्तितानि' तानि 'एषा अनसूया मन्त्रयते' भाषते ।

राजेति । अन्यैरश्रुतमाह—'इदानीम्' अधुना एष: 'कथं' कया रीत्या 'आत्मानं' निवेदयामि कथयामि आत्मपरिचयं ददामि । 'कथं वा' केन प्रकारेण च पुनः आत्मनः अपहारं गोपनं 'करोमि' । सत्यं ब्रूयाम् अज्ञातश्च तिष्ठेयम् इति दुष्करं मन्ये । 'यो' जनः पौरवेण राज्ञा' दुष्यन्तेन, अथ च 'पौरवेण 'राज्ञा' मत्पित्रा 'धर्माधिकारे' तपश्चरणविभागे, अथ च धर्माधिकारे चविषयस्य धर्मेणाधिकारे राज्ये इति यावत् 'नियुक्तः' व्यापारितः, 'सः' अहम् 'अविघ्नाः अप्रतिबन्धाः याः 'क्रियाः' तपोऽनुष्ठानानि तासामुपलम्भाय' सम्यक् ज्ञानाय क्रिया अविघ्ना न वा इति ज्ञातुम् 'इदं धर्मारण्यं' तपोवनम् 'आगतः' ।

NOTES

1. हृदय etc —(a) मा उत्ताम्य don't be impatient. उद्+तम (दिवादि)+लोट् हि = उत्ताम्य । लट् ताम्यति, लुङ् = अतमत् । (b) एषा Refers to अनसूया or indicates चिप्रकरण; thus हृदय wants information and forthwith ( चिप्रकरण ) अनसूया asks the king for it. (c) मन्त्रयते—मन्त्र+चुरादि लटते । Here no हेतुमण्णिच् is necessary (c. f. मन्त्रयते ante) ।

2. (a) कथम् etc.—This is how the king deliberates. "She wants to know who I am. I cannot tell a lie. Yet I do not want to be known. How [कथम्] to tell the truth and preserve the incognito is the question." (b) भवतु—Indicates that the king has made up his mind कर्त्तव्यनिश्चयद्योतकम् ॥ (c) भवति etc.— This is truth as well as a hoax. The king refers to his father by पौरवेण राज्ञा and to his kingdnm by धर्माधिकारे। He thus speaks the truth. अनसूया however understands दुष्यन्त by पौरवेण राज्ञा and the तपश्चरणविभाग by धर्माधिकार। Hence she is hoaxed. Thus the king speaks the truth and yet remains unknown. (b) अविघ्न etc.—विहन्यते एभिः इति वि+हन+क करणे=विघ्नाः obstacles; क, thought usually used कर्त्तरि, may be had here करणे by the Varttika "घञर्थे कविधानं स्था स्ना पा व्यधिहनियुध्यर्थम्"। (e) उप+लभ+घञ भावे=उपलम्भः ascertaining. अविद्यमानाः विघ्ना यासु ता अविघ्नाः। अविघ्ना क्रियाः unobsrucled rites. तासामुपलम्भः। Literally "Ascertaining unobstruted rites' i. e. to ascertain if rites are unobstructed or not. कर्मविघातोपलम्भाय इत्यर्थः। तादर्थ्ये ४र्थी। (f) धर्मारण्यम् —रणे साधु रण्यम suitable for a battle. न रण्यम् अरण्यम्। A forest is so called because there the movement of horses, chariots, etc. is impeded and no battle can be fought.* धर्मार्थं धर्मसाधनं वा अरण्यम्।

अनसूया—सणाहा दाणिं धम्मचारिणो [सनाथा इदानीं धर्मचारिणः]। (शकुन्तला शृंगारलज्जां नाटयति)।

ANASUYA—The performers of rites are now provided with a lord. (Sakuntala acts the bashfulness of amour)

सख्यौ—(उभयोराकारं विदित्वा जनान्तिकम्)—हला सउन्दले जइ एत्थ अज्ज तादो सन्निहितो भवे (हला शकुन्तले, यदि अत्र अद्य तातः सन्निहितो भवेत्)।

* Adopted by Prof. Gajendragadkar.

THE FRIENDS (Noticing the demeanour of the two Aside)—Dear Sakuntala, if father comes back here today—

शकुन्तला—तदो किं भवे [ ततः किं भवेत ]।

SAKUNTALA—What will happen then ?

सख्यौ—इमं जीविदसव्वस्सेण वि अदिहिविसेसं किदत्थं करिस्सदि [ इमं जीवितसर्वस्वेनापि अतिथिविशेषं कृतार्थं करिष्यति ]।

THE FRIENDS—He will make this august guest happy even with all he owns in life.

अनसूयेति। 'इदानीम्' अधुना त्वयि तपोवनम आयाते 'धर्मचारिणः धर्मक्रिया-निरताः तापसाः' नाथवन्तो जाताः।

['सनाथा' इत्यस्य 'भर्तृमन्तः' इत्यपि अर्थः। अतः 'शकुन्तला शृङ्गाररसाश्रयां लज्जां नाटयति' अवनतेन मुखेन मुकुलितेन चक्षुषा च दर्शयति ]।

सख्याविति। ['उभयोः शकुन्तलादुष्यन्तयोः आकारं चेष्टां स्निग्धावलोकितं परावृत्तस्य वदनं 'विदित्वा' ज्ञात्वा 'जनान्तिकं' राज्ञः अश्रुतम् आहतुः ] 'यदि अद्य तातः' कण्वः अत्र' आश्रमे सन्निहितो 'भवेत' प्रत्यावृत्तः स्यात।

शकुन्तलेति। 'ततः किं भवेत्' इत्यादि जनान्तिकमेव।

सख्याविति। 'इमम् अतिथिविशेषम्' उत्तमातिथिं 'जीवितस्य' जीवनस्य यत् सर्वस्वं धनं तेन अपि' तदपि दत्त्वा इत्यर्थः कृतार्थं सिद्धमनोरथं करिष्यति। त्वामस्मै प्रादास्यति इति व्यङ्ग्यम्। जनान्तिकञ्चैतत्।

## NOTES

1. सनाथा etc.—(a) नाथ्यते याच्यते अर्थिभिः इति नाथ + घञ् कर्मणि = नाथः the king. Or नाथते पत्नीं इति नाथः the husband. नाथेन सह-वर्त्तमाना ; बहु ॥ धर्मचारिणः—धर्मं चरन्तीति धर्म + चर + णिनि कर्त्तरि those who practice penance. This includes both males and females. Thus the remark means "Ascetics now feel it that they have a king to look after them." But to unmarried

female ascetics it may also suggest—"Ascetic maidens have now found a husband", i. e. they have found in you.*

2, शृङ्गार &c.—शृङ्गार is love. शृङ्गाराभया लज्जा the bashfulness of love. शाकपार्थिवादि । तात् । Sakuntala takes Anasuya's remark in the second sense noted above. Specially because the moment before the king's appearance, the friends had broached to Sakuntala the question of a suitable husband for her ; and because Sakuntala was already feeling herself attracted towards the stranger (i. e. king).

3. सखी &c,—आक्रियते अनेन इति आ + कृ + घञ् करणे = आकारः, इङ्गितम् appearance gesture, manner &c. चेष्टा । "आकाराविङ्गिताकृती" इत्यमरः ॥ (b) सन्निहितः—सम् + नि + धा + क्त कर्मणि near. सन्निहितो भवेत् comes near, i. e. comes back. ह्रैतौलिङ् ।

4. इमम् &c.—(a) जीव + क्त + भावे = जीवितम् life. सर्वं स्वं सर्वस्वम् all own. जीवितस्य सर्वस्वम् life's all own i. e. that which being taken away life ceases. Refers to Sakuntala. The plain meaning is "what he values most." (b) अतिथि &c.—विशिष्यते इति वि + शिष + घञ् कर्मणि = विशेषः Lit. That which is left. But the kernal is left when the husks are removed. Hence विशेष means the best. अतिथीनां विशेषः the best of guest. As already explained, the prohibition "न निर्धारणे" does not apply here and we have a षष्ठीतत् ॥ (c) कृतार्थं न—कृतः निर्वर्त्तितः अर्थः प्रयोजनं शकुन्तलालाभरूपं यस्य तम् whose object is accomplished. "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु". इत्यमरः । The sly hint is— This person is in love with you, you are not averse to him he seems to be a suitable bridegroom too. If father were here, he would have at once offered him your hand."

शकुन्तला—तुम्हे अवेध । किं वि हिअए करिअ मन्तेध । ण वो वअणं सुणिस्सं [ युवाम् अपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि ] ।

* Adopted by Prof. Gajendragadkar.

SAKUNTALA—Go you hence. You have got something into your mind and are chattering. I won't listen to your words.

राजा—वयमपि तावद्भवत्योः सखीगतं पृच्छामः।

KING—I too inquire abous your friend.

सख्यौ—अज्ज अणुग्गहो एव्व इअं अब्भत्थणा [ आर्य, अनुग्रह एव इयमभ्यर्थना ]।

THE FRIENDS—Noble Sir, this request is a favour indeed.

राजा—भगवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः। इयञ्च वः सखी तदात्मजा इति कथमेतत्?

KING—His reverence Kasypa is known as living in perpetual celibacy. But how is it that this friend of yours is his daughter?

शकुन्तलेति। 'युवाम् अपेत' दूरं गच्छतम्; 'किमपि' वस्तु हृदये कृत्वा मनसि निधाय मन्त्रयेथे' एवं भाषेथे। 'युवयोर्वचनं न श्रोष्यामि'। युवामेव जानीथ युवयोरभिप्रायम्। यत् न बुध्यते तच्छ्रुत्वा मे किम् इत्यर्थः। सर्वमेतज्जनान्तिकं जातम्।

राजेति। 'वयमपि' [ "अस्मदो द्वयोश्च" इति बहुवचनम् ]। सखीं गतः सखीगतः' शकुन्तलाश्रयः कोऽपि विषयः। तं पृच्छामः'' "तथापि तत्वत एना-मुपालप्स्ये" इति प्रागुक्तस्य अयमनुबन्धः।

सख्याविति। इयं भवता कृता अभ्यर्थना प्रश्नप्रार्थना अनुग्रह एव। भवादृशैः कृते प्रश्ने मादृशा अनुगृहीता भवन्ति इत्यर्थः।

राजेति। 'भगवान्' षडैश्वर्यशाली ["ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥"] काश्यपः शाश्वते नित्ये 'ब्रह्मणि' ब्रह्मचर्ये 'स्थितः' नैष्ठिकब्रह्मचारी 'इति' एवम् इत्यम्भूतः प्रकाशः लोके विदितः। इयञ्च पश्चान्तरे एषा वः सखी तस्य आत्मजा' औरसी कन्या [ तदात्मजा इति द्वन्—]। इत्येतत् कथं कीदृशम्? सम्भवम् असम्भवं वा वद।

NOTES

1. युवाम् &c.—Sakuntala here feigns anger. Or perhaps

she is really annoyed that the friends have divined her wish. It would have been better if the passage could be rendered "युवाम् अवेथ: किमपि हृदयेकृत्वा मन्त्रयेथे"—You alone know with what trash in your mind you are talking.

2. आर्थं &c.—अभि + अर्थि + युच् भावे स्त्रियाम्—अभ्यर्थना prayer, i. e. the king's prayer to be allowed to ask questions.

3. (a) शाश्वते—शश्वत् is an अव्यय meaning सदा। "पुन: सदार्थयो: शश्वत्" इत्यमर:। शश्वत् भवम् इति शश्वत् + अण् = शाश्वतम् perpetual नित्यम्। "शाश्वतस्तु ध्रुवो नित्यसदातनसनातना:" इत्यमर:। The maxim "अव्ययानां भमात्रे टिलोप:" does not operate here owing to the prohibition 'शाश्वते प्रतिषेधो वक्तव्य:'। This very Varttika gives us the option to attach अण् to शश्वत्, otherwise we should have had ठञ् alone by the rule "कालात् ठञ्" as we see in the rule 'येषाञ्च विरोध: शाश्वतिक:'। "भाष्यकारवचनप्रामाण्यादणप्रत्यय: ठञा च समावेश:"। Hence the two forms शाश्वत् with अण and शाश्वतिक with ठञ (by निपातन in the rule "येषाञ्च विरोध:शाश्वतिक:") ॥ Cp. also our notes on "शाश्वती: समा." in Uttara. Act II. (b) ब्रह्मणि—ब्रह्मन् here stands for ब्रह्मचर्य ( तपस् ) which enjoins celibacy. ब्रह्म तत्त्वतपोवेदे तु द्वयो: पुंसि वेधसि इति मेदिनी। The king's question is "How can a celibate have a daughter."

**अनसूया—सुणादु अज्जो। अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी [ शृणोतु आर्य:। अस्ति कोऽपि कौशिक इति गोत्रनामधेय: महाप्रभावो राजर्षि: ]।**

ANASUYA—Let your honour listen. There is a certain highly majestic royal sage whose family name is Kausika.

**राजा—अस्ति श्रूयते।**

KING—Yes. So I hear.

**अनसूया—तं णो पिअसहीए पहवं अवगच्छ। उज्झिआए सरीरसंवड्ढणादिहिं ताद कस्सवो से पिदा [तम् आवयो: प्रियसख्या:**

Adopted by Prof. Gajendragadkar.

प्रभवम् अवगच्छ। उज्झितायाः शरीरसंवर्द्धनादिभिः तातकाश्यपः अस्याः पिता ]।

ANASUYA—Know him as the progenitor of our dear friend. Father Kasyapa is her father only because of the rearing of her body etc, when she was abandoned,

राजा—उज्झितशब्देन जनितं मे कौतूहलम्। आ मूलात् श्रोतुमिच्छामि।

KING—My curiosity is excited by the word abandoned. I wish to hear from the very beginning.

अनसूयेति। अस्ति कोऽपि कौशिक इति गोत्रं नामधेयं नाम यस्य तादृशः गोत्रनाम्ना कौशिक इति ख्यातः 'महाप्रभावः' प्रभूतप्रतापः राजा ऋषिरिव। ऋषिरिव कश्चिद्राजास्ति गोत्रेण कौशिकः नाम्ना च।

अनसूयेति। तं कौशिकम् आवयोः प्रियसख्याः शकुन्तलायाः प्रभवम् उत्पत्तिस्थानम् 'अवगच्छ' जानीहि। 'उज्झितायाः' त्यक्तायाः अस्याः शरीरस्य संवर्द्धनादिभिः पोषणादिभिः कर्मभिः तातकाश्यपः अस्याः पिता' जातः ["स पिता यस्तु पोषकः" इति]।

राजेति। उज्झितशब्दो भवता प्रयुक्तः। तेन मे कौतूहलं कौतुकं जनितम् 'आमूलात्' आमूलम् आदितः आरभ्य 'श्रोतुमिच्छामि'।

NOTES

1. (a) कुशिकस्य राजर्षेर्गोत्रापत्यं पुमान् कौशिकः। Refers to विश्वामित्र who was the grandson of कुशिक। कान्यकुब्जे महानासीत् राजर्षिः भरतर्षभ गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः। तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः। विश्वामित्र इति ख्यातो बभूव रिपुमर्द्दनः॥ (b) गोत्र &c.—नाम एव इति नाम + धेय स्वार्थे = नामधेयम् name. गोत्र is any issue from the grand-son down-wards. "अपत्यं पौत्रप्रभृति गोत्रम्"। Grandson, great grandson etc., are all गोत्रापत्य or briefly गोत्र of the original progenitor.

कुशिकस्य गोत्रापत्यं पुमान् इति कुशिक + अण् कौशिकः। Strictly speaking then कौशिक is a common description of grandson great grand sen etc. of कुशिक। But विश्वामित्र was named कौशिक। What was गोत्र became to him his नामधेय (name)। He was गोत्रनामधेय। (c) राजर्षिः—राजायम् ऋषिरिव राजर्षिः sage-like. उपमितकर्मधा॥

2. (a) तम् &c.—प्रभवत्यस्मात् इति प्र + भू + अप् अपादाने = प्रभवः the source कारणम् i. e. the father पिता॥ Pred to तम्॥ (b) उज् + क्त कर्मणि स्त्रियाम् = उज्झिता abandoned. (c) शरीर &c.—शरीरस्य संवर्द्धनम् nourishing of the body, तत् आदिर्येषां तैः by all necessary measures commencing with the rearing of her person. तृतीया करणे। (d) पिता—cf. "प्रजानां विनयाधानाद्रक्षणाद्भरणादपि। स पिता पितरस्तासां केवलं जन्महेतवः॥"

3. (a) उज्झितः इति शब्दः उज्झितशब्दः the word उज्झित। कर्मधा। तेन। अनुक्ते प्रयोजके कर्त्तरि तृतीया॥ (b) जनितम्—जन् + णिच् + क्त कर्मणि caused. (c) आ मूलात्—मूल beginning आदि। "मूलमाद्ये शिफाभयोः" इत्यमरः। आ is a कर्मप्रवचनीय here with an inclusive sense (अभिविधि)। पञ्चमी by the rule "पञ्चम्यपाङ्परिभिः"। अव्ययीभाव is optionally allowed by the rule "आङ्मर्यादाभिविध्योः"। The compound form is आमूलम्।

**अनसूया—सुणादु अज्जो। पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किं वि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा पेसिदा णिअमविग्घकारिणी [ शृणोतु आर्यः। पुरा किल तस्य राजर्षेः उग्रे तपसि वर्त्तमानस्य, किमपि जातशङ्कैः देवैः मेनका नाम अप्सराः प्रेषिता नियमविघ्नकारिणी ]।**

ANASUYA—Let your honour listen. Some time back, **when this royal sage was engaged in severe penance, a nymph named Menaka was sent to him as obstructor of his vow, by the gods who somehow got alarmed,**

राजा—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम्।

KING—There is this nervousness of the gods about other's austerities.

अनसूया—तदो वसन्तोदारसमए से उम्मादइत्तअं रूवं पेक्खिअ [ततो वसन्तोदारसमये अस्या उन्मादयितृ रूपं प्रेक्ष्य।—( अर्द्धोक्ते लज्जया विरमति )।

ANASUYA—Then, in pleasant spring time, having noticed her maddening charms—(Stops through delicacy when half-uttered).

अनसूयेति। पुरा किल' इतः पूर्वं तु उग्रे' कठोरे तपसि वर्त्तमानस्य दुश्चरं तपश्चरतः तस्य' कौशिकस्य [ सम्बन्धसामान्ये षष्ठी ] 'नियमस्य' संयमस्य विघ्नकारिणी विघातिका मेनकानाम्' अप्सराः [ "एका अप्सराः" इति भाष्यप्रयोगात अप्सरःशब्दः एकवचनेऽपि ] 'किमपि' केनापि कारणेन 'जाता शङ्का' येषां तैः भीतैः देवैः प्रेषिता'।

राजेति। 'एतत अन्यस्य समाधेः नियमात भीरुत्व'' भयशीलता 'देवानामस्ति'।

अनसूयेति। ततः मेनकायाः आगमनात् परं 'वसन्तेन' तदाख्येन ऋतुना उदारः मनोहरः यः समयः तस्मिन् अस्याः मेनकायाः 'उन्मादयितृ' सम्मोहनं रूपं प्रेक्ष्य' [ 'अर्द्धं' असमयं उक्तं' कथिते लज्जया 'विरमति' विरता भवति ]।

[illegible] (a) प्रणीत &c.—तपसि वर्त्तमानस्य engaged in penance, तपश्चरणे निरतस्य। (b) किमपि—Kalidasa often uses this as an अव्यय meaning कुतोऽपि निमित्तात् somehow or other, c.f.'किमपाहिं स्वस्ववपुषस्मतोऽहम्' (c) अप्सराः—Usually अप्सरस् is in the plural. Here it is singular Compare—"आपः सुमनसो वर्षा अप्सरस्सिकताः समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् ॥" Compare also "अप्सरसा वीतचापल्य व नासीदार्यो मीमांसः"—Act V. (d) नियम etc.—नियम्यते अनेन इति नि + यम् + अप् करणे = नियमः vow व्रतम्। "नियमो व्रतमस्त्री" इत्यमरः। तस्य विघ्नः (see अधिक

Ante )। नियमविघ्नं साधु करोतीति नियमविघ्न + कृ + णिनि साधकारिणि कर्त्तरि स्त्रियाम् ; or—विघ्न + कृ + णिनि साधुकारिणि कर्त्तरि स्त्रियाम् = विघ्नकारिणी। नियमस्य विघ्नकारिणी। Qual. अप्सराः।

2. असूयितत् &c.—अन्यसमाधेः भीरुः alarmed at others austerities, सुपसुपा। तस्य भावः। परतपस्त्रासः। The gods always got nervous in such cases. Nom, to अस्ति।

3. (a) तत &c.—उद्‌ऋयते उत्कर्षं प्राप्यते इति उद् + ऋ + घञ् कर्मणि = उदारः improved ; hence attractive, pleasant मनोहरः। In this sense compare "साकेतोपवनमुदारमध्युवास", "तथाहि ते शीलमुदारदर्शने" &c. वसन्तेन हेतुना उदारः pleasant by reason of the spring season. सुपसुपा, or श्या तत acc. to some। तादृशः समयः॥ (b) उन्मादयितृ शीलमस्य इति उद् + मद + णिच् + तृन् ताच्छील्ये कर्त्तरि। (c) अर्द्धम् उक्तम् अर्धोक्तम् half uttered कर्मधा। Or सुप्सुपा with अर्द्धम् as a क्रियाविशेषण, तस्मिन्॥ (d) विरमति—परस्मैपद by the rule "व्याङ्परिभ्यो रमः।'

राजा—परस्ताद्गम्यत एव। सर्वथा अप्सरःसम्भवैषा।

KING—The sequal is easily guessed. After all, she is born of a nymph.

अनसूया—अह इं [ अथ किम् ]।

ANASUYA—What else ? (Even so).

राजा—उपपद्यते।

मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥२३॥

( शकुन्तला अधोमुखी तिष्ठति )।

KING—That's proper. How could the birth of such beauty happen amongst females that are human ? The flash that is tremulous with lustre does not emanate from the surface of the earth, (Sakuntala remains with downcast eyes.)

राजा ( आत्मगतम् )—लब्धावकाशो मे मनोरथः।

KING—(Aside)—My desire has found scope.

राजेति। 'परस्तात्' ततः परं [ प्रथमार्थे परशब्दात् अस्तातिः ] 'गम्यते' बुध्यते 'एव'। 'सर्वथा' सर्वप्रकारेण 'एषा' शकुन्तला 'अप्सराः सम्भवः' उत्पत्तिस्थानं यस्याः तादृशी।

अनसूयेति। 'अथ किम्' एवमेव [ 'अथ किम्' इति स्वीकारे अव्ययम् ]।

राजेति। एतत् 'उपपद्यते' युज्यते।

मानुषीति। अन्वयः—मानुषीषु अस्य रूपस्य सम्भवः कथं वा स्यात्। प्रभातरलं ज्योतिः वसुधातलात् न उदेति। व्याख्या—'मानुषीषु' मानवस्त्रीषु 'अस्य' अमानुषस्य 'रूपस्य' आकृतेः 'सम्भवः' उत्पत्तिः 'कथं' वा स्यात्' कथमपि न स्यात् [ सम्भावनायां लिङ् ]। प्रभाभिः तरलं ज्योतिः' तेजः वैद्युतं ज्योतिः, सूर्यो वा, चन्द्रो वा, 'वसुधायाः तलात्' पृष्ठात्' भूतलात् 'न उदेति न उद्गच्छति'। विद्युत् भूतलात् न स्फुरति ईदृशञ्च रूपं मानुषीषु न जायते।

( 'शकुन्तला आत्मस्तुत्या' विशेषतोऽभिमतजनात् स्तुत्या, लज्जिता 'अधोमुखी तिष्ठति' )।

राजेति! 'मे मनोरथः' अभिलाषः 'लब्धः' प्राप्तः 'अवकाशः' अन्तरं येन सः। उद्वाहयोग्या एव मे शकुन्तला मदभिलाषस्य विषयो भवितुमर्हति। [ अतः परम्—"किन्तु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः' ( रा-, वि-, म- ) ]।

NOTES

1. अप्सरःसम्भवा—अप्सरस् is not always plural. Compare "आपः सुमनसो वर्षा अप्सरः सिकता-समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्॥" The भाष्य has एका अप्सरा। Also see Note I preceeding. Now see Tika.

2. (a) मानुषीषु—मनोरपत्यानि स्त्रियः इति मनु + अञ् = मनुष् + अञ् – मानुष्यः। The षुक् comes in by the rule "मनोर्जातावञ्यतौ षुक् च"। तासु। (b) कथं वा स्यात्—This is an indirect and emphatic contradiction. How could it happen—most assuredly it could not happen* (c) प्रभातरलं ज्योतिः—This is not necessarily electricity. Any bright object—any beautiful woman—may be

* Adopted by Prof. Gajendragadkar.

said to have तरलप्रभा। Compare—"सुन्दरी सा न वेत्येष विवेकः केन जायते। प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः"—Dandin.

3. The figure is प्रतिवस्तूपमा। See under मुक्तान्तदुर्लभ &c.—Ante. Here there is साम्यप्रतीति। The birth of such रूप among मानुषी is as absured as the उदय of प्रभातरलं ज्योतिः from वसुधातल। Also we have वाक्यद्वय। Hence the लक्षण applies. The metre is श्लोक।

4. लब्धावकाशः etc.—Here two things encourage him. First and foremost of course is Sakuntala's charm coupled with the fact that she is not a ब्राह्मणकन्या। The second is her pedigree. She is अप्सरःसम्भवा from a क्षत्रिय। This places her higher than any ordinary क्षत्रिय girl.*

5. Reading—I have omitted the portion "किन्तु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः।" The परिहास—joke is "यथा वनज्योत्स्ना......अनुरूपं वरं लभेय"—Ante. धृतद्वैधीभावकातरम् = distressed by having acquired द्वैधीभाव। Here evidently the च्वि प्रत्यय is superfluous; because अभूततद्भाव is already expressed by the word धृत! Say either धृतद्वैधभावकातरम् or द्वैधीभावकातरम्। but not धृतद्वैधीभावकातरम्। As a rule कालिदास does not write so loosely. Again द्वि+धमुञ् प्रकारे or अधिकरणविचाले = द्वैधम् in two ways or divided into two. This is मकारान्त। With अ स्वार्थे we get द्वैध + अ = द्वैध which is द्वैधम् in the neuter. च्वि is not available in the first sense because no meaning can be got out of it (अनभिधानात्)। In the second sense, अद्वैधस्य द्वैधस्य भावः इति द्वैध + च्वि + भू + घञ् भावे = द्वैधीभावः the division into two of one previously undivided. This is extremely cumbrous statement. All this is for च्वि। The purpose is easily served without च्वि। Thus द्विधाभवनम् इति द्वैधभावः द्विप्रकारेण स्थितिः इत्यर्थः। तेन कातरम् द्वैधभावकातरम्। A clumsy statement where a simple one is possible is rare with कालिदास।

These two consiperations, taken with the fact that the

* Adopted by Prof. Gajendragadkar

Bengali Recensions omit it, raise grave doubts about the authenticity of the passage.

There is yet another and more serious consideration against the passage. It does not fit in with what follows. For admitting the passage, we find Dushyanta in a fix. He loves Sakuntala, but he is distressed with the suspicion that she loves another person ( note वरप्रार्थना and वृतङ्गीभावकातर ) । But almost in the same breath he exclaims—"Away with suspicious. Advance love !"—भव हृदय साभिलाषं सम्प्रतिसन्देहनिर्णयो जात: &c —Infra. How so ? What has happened to allay his suspicions and justify the jubilation ? Nothing except the information that her father has made up his mind to get her married to a suitable bridegroom if available ( गुरो: पुनरस्या: अनुरूपवरप्रदाने सङ्कल्प:—Infra). Dushyanta was not a fool to think that, her father would force her to marry against her will ; or that at the command of her father, her effection will forsake its present object and flow towards himself ! So this information does not account for the king's joy. The passage is not consistent with the king's exclamation and I am afraid it has to go. Prof. Gajendrakadkar believes that Priyamvada has said enough to allay the king's suspicion ; the jubilation "भवहृदय etc" naturally follows from "गुरो: पुनरस्या: etc" If Prof. G s Dushyanta—a lover already suspicious—deems the simple explanation "गुरो: पुनरस्या: etc." enough to set him at ease, then surely this Dushyanta requires some looking after.

Moreover, Prof. Gajendragadkar considers that the passage "किन्तु सख्या: परिहास etc." is necessary for Priyamvada's remark "पुनरपि वक्तुकाम इव पार्थ्य:" ; without the passage the remark does not arise, because the king with suspicion will not at all become पुनरपि वक्तुकाम: ।

Now let us see what information the king has gathered. He knows—(1) That Sakuntala is not a Brahmana girl

(2) that her father is a renowned Kshattriya king and her mother a celestial nymph ; (3) that she is thus "असंशयं क्षत्रपरिग्रहक्षमा" ।

But then he sees that Sakuntala is practising penance. It is therefore natural that he, already deep in love, should feel the curiosity to know if the penance is to be a temporary one or a perpetual affair with her. Hence the king must be पुनरपि वक्तुकाम: or his interest in Sakuntala becomes a sham.

Hence Prof. G's contention, that the passage "किन्तुसख्या: परिहास etc." is necessary, becomes groundless.

In previous editions I thought I had said enough on the incongruity of the passage and therefore did not think it neeessary to multiply reasons. Other reasons against the passage, however are not wanting.

In the first place the परिहास does not justify the ईर्षाभाव। The परिहास is—"यथा वनज्योत्स्ना···अनुरूप वरं लभेय" । This does not suggest that Sakuntala loves another. अनुरूपं वरं लभेय—may I get a suitable husband—does not mean that she is thinking of any particular individual. The case would have been different if she had said अभिमतं वरं लभेय। But she does not say that. Every girl in the world, with accomplishments however meagre naturally hopes to be suitably united. Thus the remark "किन्तु सख्या: परिहास etc." is quite un-called for.

Secondly, for arguments' sake, let us assume that Dushyanta was an over-jealous hyper-sensitive lover, so even this colourless परिहास set the fire of jealousy ablaze in him. Well with all his jealousy, he was a watchful observer (cf. नीवारा: शुकगर्भ etc), Sakuntala has already betrayed signs of her growing attachment towards the king [ cf. ante, सख्यौ—( उभयोराकारं विदित्वा ) etc]. These could not have escaped the king's—the lover's observation and must have precluded all idea of her interest in another person.

**Hence again the passage—"किन्तुसख्या: etc." has no place here.**

Referring to my condemnation of च्वि in धूतर्द्धीभावकातरम्, Prof. Gajendragadkar says—' Regarding the च्वि we are constrainded to remark, with very great sorrow, that Roy has no clear conception about the proper province of cvi. He evidently has tripped over the expression "अभूततद्भाव" (Gaj. Notes. p. 59). Again "the real province of cvi is there where we have a metaphorical use of the word" (Gaj. Notes p 21). In other words according to Prof. G. if the transformation is real च्वि is not available, it comes in only when the change is figurative.

Prof Gajendragadkar himseif notices that Sanskrit writers all attach च्वि with a real transformation (Gaj Notes p. 21).

The universality of the practice raises grave doubts about the soundness of G's. conception of the province of च्वि। G., however, condemns these usages as 'poetical licence.

Leaving poets to take care of themselves witness "एकस्य अनेकीकरणम्" (p 5. 4 43) of the vrittikara while speaking of the splitting up of a single object into many This is a real transformation and is spoken of with च्वि। कैयट also has the same here

This ought to be enough to condemn Prof. G s interpretation of Nagesa. But if need be, still higher authoritiess may be cited.

In 3. 1. 76 Panini has "तनूकरणे तक्षः" where तनूकरण has च्वि while the sense is actual thinning not metaphorical. This is clear indication of Panini's views in the matter. Panini will have च्वि when the transformation is real.

Katyayana, however, makes the matter clearer by adding "अभूततद्भावे इति वक्तव्यम्"। But with reference to expressions like समीपीभवति, अध्यापीभूत etc, a difficulty strikes him, viz. there is no अभूततद्भाव in these. असमीप is distance and समीप is neighbourhood, and as distance can never become neighbourhood च्वि is not available. "न हि असमीपं समीपं भवति। . किं तर्हि ? असमीपस्थं

समीपस्थं भवति"—Bhashya. The difficulty seems to him insurmountable and for special sanction of these cases he adds another Varttika "समीपादीनामुपसंख्यानम्"। The difficulty and the necessity for this Varttka vanishes, if असमीप is considered समीप metaphorically and not in reality.

Hence Katyayana understands—(1) च्वि is available when the change is real, (2) a metaphorical change does not give च्वि।

Patanjali admits the soundness of Katyayana's contention, but avoids the additional Varttika taking समीप and असमीप in the sense of समीपस्थ and असमीपस्थ by लक्षणा। "तात्स्थ्यात् ताच्छब्द्यं भविष्यति"—Bhashya.

While discussing the absence of ण in कुर्वन्ति Patanjali says "अनुस्वारीभूतो णत्वमतिक्रामति"—escape the change into ण by first becoming an अनुस्वार। Here the अनुस्वार is a real one not metaphorical. His comment on the apparent absence of अनुस्वार in "अट्कुप्वाङ्नुम् व्यवायेऽपि" is "अनुस्वारोऽपि परसवर्णीभूतो निर्दिश्यते" in which the परसवर्ण is not such only metaphorically.

The discussion above leads to the following conclusions :—

(1) च्वि comes in when the change is real.

(2) If the change is metaphorical, च्वि requires defence.

(3) The defence is as indicated by Patanjali that the meaning of the word taking च्वि has to be changed by लक्षणा to make an actual change possible.

It will now be seen that what Prof. Gaj. deems as poetical license, is really in strict accord which the teachings of Panini. Instances like "पुत्रीकृतोऽसौ वृषभध्वजेन" are apparently irregular but become regular if by पुत्र etc. we understand like पुत्र etc, by लक्षणा।

प्रियंवदा ( सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी

भूत्वा )—पुणो वि वत्तुकामो विअ अज्जो [ पुनरपि वक्तुकाम इव आर्यः ]। ( शकुन्तला सखीमङ्गुल्या तर्जयति । )

PRIYAMVADA—( Looking at Sakuntala with a smile and then facing the hero )—Your honour seems as if wishing to speak again. (Sakuntala rebukes her friend with her finger )

राजा—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवण-लोभादन्यदपि प्रष्टव्यम् ।

KING—Rightly observed by you. From my desire to hear the story of the good, arises yet another question.

प्रियंवदा—अलं विआरिअ । अनियन्तणाणुओओ तपस्सि-अणो णाम [ अलं विचार्य । अनियन्त्रणानुयोगः तपस्विजनो नाम ] ।

PRIYAMVADA—No use deliberating. Hermits are indeed persons to whom unrestricted questions may be put.

प्रियंवदेति । ( शकुन्तलाम् अधोमुखीं 'विलोक्य स्मितेन सह' ईषत् हसित्वा 'नायकस्य' कथानायकस्य राज्ञ इत्यर्थः, 'अभिमुखी भूत्वा' तमेव संबोध्य आह ) 'आर्यः मान्यो भवान् पुनरपि' भूयोऽपि किञ्चित् 'वक्तु' कामो यस्य: तादृश इव लक्ष्यते [ 'तुं-काममनसोरपि" इति तुमो मकारलोपः ] । मन्ये अन्यदपि भवतो वक्तव्यमस्ति ।

( शकुन्तला सखीं प्रियंवदाम् 'अङ्गुल्या' तर्जन्या 'तर्जयति' भर्त्सयति ) [ तर्जि-भर्त्स्योरनुदात्तत्वेऽपि अचित्त्वं ङितकरणात् परस्मैपदम् । न हि आत्मनेपदापवादः । तेन तर्जयते भर्त्सयते इत्यपि भवति ] । तिष्ठ दुर्विनीते, अस्य वचसा मां लज्जितां दृष्ट्वा, मदनगतमेव अयं पृच्छति इति जानती अपि, भूयोऽपि मां लज्जयितुं यतसे—ईदृशस्तर्जनप्रकारः ।

राजेति । 'भवत्या सम्यक् साधु 'उपलक्षितं निरूपितम् । 'सतां साधूनां 'चरितस्य' वृत्तस्य यत् 'श्रवणम्' आकर्णनं तस्य यो लोभः' स्पृहा तस्मात् कारणात् 'नः' अस्माकम्

'अन्यदपि प्रष्टव्यं' जिज्ञासितव्यम् 'अस्ति'। अवधीर्य मत्वा न तृप्यामि, श्रोतुमिच्छामि इत्यर्थः। यद्वा—चरितश्रवणलोभः चरितार्थः। तस्मात् अन्यत् प्रष्टव्यमस्ति इति अन्यशब्दयोगे पञ्चमी।

प्रियं वदेति। अलं विचार्य' पृच्छामि न वा इति विचारणा मा भूत। तपस्वि-जनः' तापसाः' अनियन्त्रणः' निर्बाधः 'अनुयोगः' प्रश्नः येषु तथाविधाः 'नाम' यथेच्छं प्रष्टव्याः किल।

NOTES

1. सस्मितम् etc.—सस्मितम qualifies आह understood. She noticed that Sakkntala was feeling uncomfortable through bashfulness. Out of sheer naughtiness she wanted to enjoy the fun at the expense of the poor girl and with a smile—note the smile which betrays her wickndness—she urged the king to talk on in this strain.* शकुन्तला was अधोमुखी and could not have noticed स्मित। The smiie would have been lost on her. Hence the construction सस्मितमाह is better than सस्मित विलोक्य।

2. वक्तुकामः—वच + तुमुन् कर्त्तरि = वक्तुम one who will say (यो वक्ष्यति स)। This is by the general principle—"कर्त्तरि कृत्"। वक्तुम् कामो यस्य is the वाक्य of a समानाधिकरणपद वहु—in which वक्तुम् qualifies कामः। The म of वक्तुम् disappears by the maxim "लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि। समो वा ततहितयोर्मांसस्य पचि युङ्घञोः॥" Again वक्तुम् is an अव्यय and there is another view according to which कृत affix that make अव्यय derivatives are all in the भाववाच्य ("अव्ययकृतो भावे" इति भाष्यम्)। Hence वक्तुम् means वचनम् saying. This gives a व्यधिकरण वहु—। Thus वक्तुं वचने कामो यस्य। वक्तुम् in this has लुप्तसप्तमी because the word is an अव्यय। It is first (पूर्वनिपात) in the compound by the rule 'सप्तमीविशेषणे बहुव्रीहौ"। Priyambada divines the king's motive in asking and wants to extort from him an admission!

3. तर्जयति—She threatens her for her wicked query. तर्जि drops इ which is an अनुदात्त vowel, तर्जि is अनुदात्तेत। Therefore by the rule "अनुदात्तङित आत्मनेपदम्" we expect तर्जयते। Hence तर्जयति requires defending. The root अचिङ suggests the defence. The root drops इ which is अनुदात्त and it drops ङ as well.

* Adopted by Prof. Gajendragadkar.

Hence it is अनुदात्तेत् and also ङित् । The effect of either of these is to give it the आत्मनेपद ! And when पाणिनि attached इ to अच making it अचि, he should have stopped there ; for, the अनुदात्त इकार would have secured the आत्मनेपद desired. But he is not satisfied and adds ङ after अचि for the sake of the आत्मनेपद । This shows that अनुदात्तेत् roots are not necessarily in the आत्मनेपद ; there are exceptions, तर्जि and भर्त्सि are among the exceptions. Thus तर्जयति—तर्जयते, भर्त्सयति-भर्त्सयते । Those who will take ङित् in अचि as to avoid इदितक्रिया (cf.—ङित: अन्तेदित्व-व्याघातचरितार्थत्वात्) will defend such cases as poetical licence or by णयान्तात् णिच् etc.

4. अश्रुत etc.—This is of course only an excuse. He wants to be taken as an indifferent listener, guided in his questions by no other motive but an ardent desire to hear the story of good people. लोभात has हेतौ पञ्चमी । प्रष्टव्यस्य सद्भावे लोभो हेतु: ।

5. (a) विचार्य—Here there is no क्रियार्थक्रिया, yet we have ल्यप् । This is owing to अलम in the sense of "prohibition" ( प्रतिषेध ) । "अलंखल्वो: प्रतिषेधयो: प्राचां क्त्वा" is the rule. अलं विचारेण is also allowable. (b) अनु + युज् घञ् भावे = अनुयोग: question प्रश्न: । "प्रश्नोऽनुयोग:पृच्छा च' इति कोष: । नि + यम ( चुरादि ) + ल्युट or युच् भावे = नियन्त्रणम् or नियन्त्रणा restraint, अविद्यमानं नियन्त्रणा यस्मिन् स: अनियन्त्रण: unrestricted बहु— । "नञोऽस्त्यर्थानां बहुव्रीहि: वा चोत्तरपदलोप'' इति "विद्यमान" पदलोप: । Now See Tika. (c) तपस्वी चासौ जनश्च a person practising penance कर्मधा— । (d) नाम indicates अङ्गीकार, अभ्युपगम admission. "नाम कोपेऽभ्युपगमे" इति मेदिनी । You want to question. I admit ( अभ्युपगम ) your right to question.

राजा—इति सखीं ते ज्ञातुमिच्छामि—

वैखानसं किमनया व्रतमाप्रदानाद्
व्यापाररोधिमदनस्य निषेवितव्यम् ।
अत्यन्तमेव सदृशेक्षणवल्लभाभिर्
आहो निवत्स्यति समं हरिणाङ्गनाभि: ॥२४॥

KING—I wish to know this of your friend—Is the vow of a hermit that hinders the operation of love to be observed by her until betrothal, or will this one dear to these female deer because her eyes are like theirs, really live with them for ever ?

राजेति। 'ते सख्यौं' शकुन्तलाम् 'इति' इत्याकारेण 'ज्ञातुमिच्छामि'। अनुपदं कथ्यमानयो: प्रकारयो: एकतरप्रकारेण ज्ञातुमिच्छति राजा।

वैखेति। अन्वय:—किमनया मदनस्य व्यापाररोधि वैखानसं व्रतम् आ प्रदानात् निषेवितव्यम्, आहोसदृशेक्षणवल्लभा अत्यन्तमेव आभि: हरिणाङ्गनाभि: समं निवत्स्यति ? व्याख्या—'किम्' इति 'आहो' इति च पदद्वयम् निर्दिश्यते। 'किमनया' शकुन्तलया 'मदनस्य' कामस्य 'व्यापार' प्रवृत्तिं रोद्धुं प्रतिषेद्धुं शीलमस्य इति 'व्यापाररोधि' प्रवृत्तिविघातकं वैखानसं तापसं 'व्रत' धर्म:, ब्रह्मचर्य्यम् 'आ प्रदानात्' प्रदानपर्यन्तं विवाहपर्य्यन्तमित्यर्थ: ("पञ्चम्यपाङ्परिभि:" इति-पञ्चमी) 'निषेवितव्यम्' अनुष्ठातव्यम् 'आहो' अथवा सदृशे तुल्ये ईक्षणे नेत्रे यासां तासां हरिणीनां 'वल्लभा' तुल्यचक्षुष्ट्वादेव प्रिया शकुन्तला ('विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ'' इति विशेषणमात्रप्रयोग:) "अत्यन्तमेव' चिरमेव आभि:' पुरतो दृश्यमानाभि: 'हरिणाङ्गनाभि:' मृगवधूभि:'' समं सह' ("समं सह—'' इत्यमर:) 'निवत्स्यति'। सम्प्रति सुमित्रतापि इयं प्रदेया, अथवा यावज्जीवं ब्रह्मचारिणी इति सख्यौं ते ज्ञातुमिच्छामि—इति पूर्वेण सम्बन्ध: ॥ ["अत्यन्तमेव सदृशे" (ता-, वि- व्या- )—'अत्यन्तमेव मदिरे'' (रा- )—"अन्यन्त-मात्मसदृशे" (म)] ॥

## NOTES

1. इति—Has the sense of एवम्, thus I wish to know your friend thus, i. e. I wish to know whether your friend is to be thus or thus. Thus has reference to the alternatives mentioned in the sloka following.

2. (a) वैखानसम्—वैखानसस्य इदम् इति वैखानस + अण् belonging to a hermit. वि + आ + पृ + घञ्भावे = व्यापार: operation प्रवृत्ति:। (b) रोद्धुं शीलमस्य इति व्यापार + रुध + णिनि कर्त्तरि ताच्छील्ये श्रौवे ॥ (c) निषेवितव्यम्—"परिनिविभ्य: सेवसित—" इति षत्वम् ॥ (d) अतिमतम् अन्तं (or—अन्त:) यस्मिन्

कर्मणि च तत् यथा तथा till the end, i. e. so long as life lasts. Qual. निवत्स्यति ॥ (e) सदृश &c.—Usually the whole is taken as one word qualifying हरिणाङ्गनाभिः। सदृशचक्षुष्या वल्लभाभिः favourite because having similar eyes. But then निवत्स्यति wants the nominative. Hence it seems preferable to separate आभिः making सदृशचक्षुर्वल्लभा the nominative as in the Tika. The epithet then implies that Sakuntala was dear to the deer because her eyes resembled theirs, so they had confidence in her. Their fondness for her would be a reason for her prolonged stay at the hermitage. (f) अङ्गानि सन्त्यासां कल्याणानि इति अङ्ग + न मत्वर्थे स्त्रियाम् = अङ्गना: fair-limbed, i. e. female sex. हरिणानामङ्गना:। ताभि: समभिति सहार्थकयोगे तृतीया। "न केवलं सहयोगे, तत्पर्याययोगेऽपि तृतीया। योगश्च श्रापुषो बौद्धो वा "वृद्धो यूना—" इति वचनात्"।

2. Reading—The reading मदिरेक्षणवल्लभा does not sufficiently explain why शकुन्तला was वल्लभा of the deer. The other reading आत्मसदृश &c. omits एव which is not desirable. अत्यन्तमेव – it is really for the whole life—indicates disapproval (परिभव) of the idea. Dushyanta has now so far advanced in his career of love that the suggestion of अत्यन्तवास he cannot broach with approval or even indifference. The एव implies the expected disapproval (परिभव)। "एवौपम्यपरिभवौ" इति हेमः।

प्रियंवदा—अज्ज धम्मचरणे वि परवसो अअं जणो। गुरुणो उण से अणुरूववरप्पदाणे संकप्पो। [आर्य, धर्मचरणेऽपि परवशः अयं जनः। गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः]।

PRIYAMVADA—Noble sir, even in religious practices this person is subject to another. Her father's wish however, is to betroth her to a suitable husband.

राजा (आत्मगतम्)—न खलु दुरवापेयं प्रार्थना।

भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः।

आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥२४॥

KING (Aside)—This prayer is indeed not difficult to obtain. O Heart be hopeful. The solution of doubts is now achieved. What you suspect as fire, is a gem that bears handling.

शकुन्तला ( सरोषमिव )—अणसूए गमिस्सं अहं [ अनसूये, गमिष्याम्यहम् ] ।

प्रियंवदेति । धर्मानुष्ठाने स्त्रियः स्वातन्त्र्यमस्ति, किन्तु 'अयं जनः' शकुन्तलारूपः धर्मस्य 'चरणे अनुष्ठाने 'अपि परवशः' पराधीनः पित्राज्ञावर्त्ती । 'गुरोः पुनः पितुः कण्वस्य तु अस्या शकुन्तलायाः 'अनुरूपाय' योग्याय 'वराय' पात्राय 'प्रदाने सङ्कल्पः' अभिलाषः । योग्योऽसि त्वमस्याः पितरं प्रार्थयस्व, एषा तवैव भविष्यति, इति ध्वनिः ॥

राजेति । 'खलु' नूनं निश्चितम् 'इयं प्रार्थना' एषोऽभिलाषः, शकुन्तलालाभेच्छा दुःखेन अवाप्यते इति 'दुरवापा' दुर्लभा न । क्षत्रियग्राह्या कन्या, प्रदानार्थी पिता, योग्यश्चाहं क्षत्रियः अर्थी, एतत् त्रितयसन्निधाने मन्ये सुलभा मे शकुन्तला ।

भवेति । अन्वयः—हृदय, सम्प्रति सन्देहनिर्णयो जातः, साभिलाषं भव । यत् अग्निमाशङ्कसे, तत् इदं स्पर्शक्षमं रत्नम् ! व्याख्या—हे हृदय चेतः 'सम्प्रति' अधुना 'सन्देहस्य' सन्दिग्धवस्तुनः शकुन्तलारूपस्य 'निर्णयः' तत्त्वतो निरूपणं जातः ।

यद्वा—'सन्देहस्य, संशयस्य मत्परिणययोग्येयं न वा इत्याकारस्य निर्णयः' निराकरणम्, अपगमः इत्यर्थः 'जातः' निवृत्तः । तेन हि 'साभिलाषं' सस्पृहं भव शकुन्तलागतमभिलाषं सादरं पोषय । कीदृशो निर्णय इत्याह—यत्' वस्तुत्वम् 'अग्निं' स्पर्शविदाहि 'आशङ्कसे' मन्यसे, तत् इदं वस्तु स्पर्शं 'क्षमते' सहते इति स्पर्शक्षमं सुखस्पर्शम् आदेयं रत्नं मणिः ।

शकुन्तलेति । ( 'रोषेण' क्रोधेन 'सह इव' क्रुद्धस्य प्रकारमभिनीय । नहि तत्त्वतःक्रुद्धा भूत्वा ] ।

## NOTES

1. खलु &c.—Note the reasons why not दुरवापा । In सुलभा मे in the Tika मे has शेषे षष्ठी—मम सम्बन्धे सुलभा । You may write सुलभा मया if you prefer, but then the diction will suffer.

2. (a) साभिलाषम्—अभि + लष + घञ् भावे = अभिलाषः desire. तेन सह। बहु—by the rule "तेन सहेति तुल्ययोगे" the तुल्ययोग here being in विद्यमानताभाव ॥ (b) सम् + दिह + घञ्, कर्मणि (or भावे) = सन्देहः that about which doubt is felt (i. e. here शकुन्तला)। If भावे, it means the act of doubting. निर् + नी + अच भावे = निर्णयः solution, removal. In the first case he means that he has nowgot definite information about Sakuntala and is no longer in doubt. (c) स्पर्शं क्षमते इति स्पर्श + क्षम + अ कर्त्तरि = स्पर्शक्षमम् that which toterates handling. (d) The second half means—You saw the glow only and thought it was fire (शङ्का—सन्देहः); but it turns out to be a gem (निर्णय)।* The glow refers to तपःप्रभाव which burns and is therefore like अग्नि। Compare 'शमप्रधानेषु गूढं हि दाहात्मकमस्ति तेजः' ।—Act II.

अनसूया—किं णिमित्तं [ किं निमित्तम् ] ।

Anasuya—What for.

शकुन्तला—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्सं [ इमामसंबद्धप्रलापिनीं प्रियंवदाम् आर्यायै गौतम्यै निवेदयिष्यामि ] ।

SAKUNTALA—I will report this incoherent babbler Priyamvada to venerable Gautami.

अनसूया—सहि ण जुत्तं अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छन्ददो गमणं [सखि न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ] । ( शकुन्तला न किञ्चिदुक्त्वा प्रस्थितैव ) ।

ANASUYA—Friend, it is not proper to leave a distinguished guest, with rites of hospitality un-rendered, and go away willfully. (Sakuntala moves on without saying).

---

* Adopted by Prof. Gajendragadkar.

अनसूयेति। 'किं निमित्त'' कस्मान्निमित्तादित्यर्थ: गमिष्यसि। गमनकारणं किम? शकुन्तलेति। 'आर्यायै मान्यायै "गौतम्यै'' गौतमीमभिप्रेत्य गौतमीं बोधयितुं वा, 'असम्बद्धम्' असङ्गतं प्रलपितुं शीलं यस्याः, यद्वा पुनः पुनरसम्बद्धं प्रलपति या ताम् 'इमां प्रियंवदां निवेदयिष्यामि'। प्रियंवदा मामधिकृत्य असबद्धं प्रलपति इति विज्ञापयिष्यामि।

अनसूयेति। 'अकृत:' अविहित: 'सत्कार:' पूजा यस्य तम् 'अतिथिविशेषं" विशिष्टमतिथिं 'विसृज्य विहाय 'स्वच्छन्दत: स्वेच्छया 'गमनं न युक्तम्' अनुचितम्। यस्मैचिदपि अतिथये पूजामदत्त्वा गमनमयुक्तम् अयञ्च पुनरुत्तमातिथि: गमनमपि यदृच्छया कुरुषे, नास्ति कार्य्यान्तरेण आहूता इति किम् अयुक्ततरमतो भवेत्। तन्मा याहि इत्यर्थ:।

[ 'न किञ्चिदुक्त्वा' प्रतिवचनमदत्त्वा 'प्रस्थिता' एव शकुन्तला। ]।

## NOTES

1, किं निमित्तम्—"निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति प्रथमा। (a) असम्बद्ध &c.—सम + बन्ध + क्त कर्मणि = सम्बद्धम् coherent, न सम्बद्धम् incoherent. नञ् तत्—। तथा प्रलपति इति असम्बद्ध + प्र + लप + णिनि कर्त्तरि ताच्छील्ये आभीक्ष्ण्ये वा स्त्रियाम्। ताम्॥ (b) गौतम्यै—गौतमीमभिप्रेत्य प्रियंवदां निवेदयिष्यामि makes a सम्प्रदान of गौतमी by the rule "कर्मणा यमभिप्रैति स सम्प्रदानम्"॥ चतुर्थी सम्प्रदाने। Or गौतमीं बोधयितुं प्रियंवदां निवेदयिष्यामि, whence suppressing बोधयितुम् we get गौतम्यै as कर्मणि चतुर्थी by the rule "क्रियार्थोपपदस्य च कर्मणि स्थानिन:"॥

2. (a) विशिष्यते इति वि + शिष + घञ् कर्मणि = विशेष: excellent, the best. अतिथीनां विशेष: the bests of guests, an illustrations guest तत्—तम्। Here अतिथीनाम् has शेषे षष्ठी। निर्द्धार is not available, because three things are necessary for निर्द्धार, (1) The individual separated, (2) the class from which separated, (3) the ground for separation ; we have not got them here. Thus the prohibition "न निर्द्धारणे" does not apply, and we get षष्ठीतत्पुरुष समास:॥ (b) छन्द is अभिप्राय will, "अभिप्रायवशौ छन्दौ' इति कोष:। स्वस्य छन्द: or स्व:छन्द: own will, तेन इति स्वच्छन्द + टा + तस् करणे सार्वे = स्वच्छन्दत:। करणे तस is available by the Varttika "तसिप्रकरणे आद्यादिभ्य उपसंख्यानम्'।

Compare—स्मरत: and वर्षंत for स्मरेच and वर्षेन in "दृष्ट: शब्द: स्मरतो वर्षतो वा" । अनसूया is always matter of-fact. She reasons, shows the impropriety of leaving her guest so abruptly. Note the steps of her reasoning (See Tika).*

राजा (ग्रहीतुमिच्छन् निगृह्यात्मानम् । आत्मगतम्)—अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्ति: । अहं हि—

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसर: ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्त: ॥ २५ ॥ 26

KING—(Intending to catch hold of her and having checked himself—Aside)—Ah ! the mere inclination of the mind of a lover works exactly like the corresponding effort. About to follow the hermit's daughter impulsively, but with my progress stopped by decorum, though not moving from my seat, I am indeed like one come back after having gone.

प्रियंवदा ( शकुन्तलां निरुध्य )—हला ण दे जुत्तं गन्तुं [ हला न ते युक्तं गन्तुम् ] ।

PRIYAMVADA—(Having checked Sakuntala)—Darling you should not go

शकुन्तला ( सभ्रूभेदम् )—किं णिमित्तं [किं निमित्तम्] ।

SAKUNTALA—(With a frown )—What for ?

प्रियंवदा—रुक्खसेअणे दुवे धारेसि मे । एहि दाव अत्ताणं मोआवेहि तदो गमिस्ससि [ वृक्षसेचने द्वे धारयसि मे । एहि तावदात्मानं मोचय, ततो गमिष्यसि ] । (बलादेनां निवर्तयति) ।

PRIYAMVADA—You owe me two waterings of trees. Come do release yourself, then you shall go. (Stops her by force).

---

* Adopted by Prof. Gajendragadkar.

राजेति। (गृहीतुं शकुन्तलां निरोद्धुम् 'इच्छन्' अभिलषन् 'आत्मानं निगृह्य' निवार्य्य गृहणेच्छां नियम्य इत्यर्थ आह) 'अहो' आश्चर्ये 'कामिजनानां सकामानां 'मनोवृत्तिः' मनसो व्यापारः 'चेष्टाया' देहव्यापारस्य 'प्रतिरूपिका' तुल्यधर्मिणी। कामिनां देहव्यापारेण यथा आयासः मनोव्यापारमात्रेणापि तथैव ["चेष्टाप्रतिरूपिका" (रा॰, वि॰, य॰)—"चेष्टानुरूपिणी" (त॰ व्या॰)]।

अन्विति। अन्वयः—मुनितनयां सहसा अनुयास्यन् विनयेन पुनः वारितप्रसरः अहं स्थानात् अनुच्चलन् अपि गत्वा प्रतिनिवृत्त इव हि। व्याख्या—'मुनेः' कण्वस्य 'तनयां कन्यां शकुन्तलां सहसा' अतर्कितम् 'अनुयास्यन्' अनुगन्तुमुद्यतः विनयेन पुनः' दमेन तु 'वारितः' निरुद्धः 'प्रसरः' प्रवृत्तिरित्यर्थः, यस्य तथाविधः, संरुद्धचेष्टः 'अहं स्थानात्' आसनात् अनुच्चलन् 'अपि' अनुत्तिष्ठन् अपि 'गत्वा' गमनव्यापारं निर्वर्त्त्य 'प्रतिनिवृत्तः' कृतप्रत्यागमनव्यापारः 'इव हि'। गमनस्य इच्छामात्रममून्मे मनसि। तन्मात्रकेऽपि चेष्टा अपि मया कृता इत्येव मे मतिरस्ति।

प्रियमिति। ('निरुध्य आत्मानं पुरोऽवस्थाप्य गमनात् वारयित्वा)।

शकुन्तलेति। ('भ्रुवोः भेदः भङ्गः। तेन सह)। सहभ्रूभेदम् वा।

प्रियंवदेति। 'द्वे' द्विरावृत्ते 'वृक्षयोः सेचने' सेचनकर्मणी 'मे' मह्यं ("धारेरुत्तमर्णः" इति सम्प्रदानत्वात् चतुर्थी) 'धारयसि'। त्वत्कृते अहं द्वौ वृक्षकौ सिक्तवती। तन्मूल्यं ते ऋणमस्ति। एहि' आगच्छ 'आत्मानं तावत् मोचय ऋणमुक्तं कुरुष्व, ततः' तदनन्तरं गमिष्यसि'। मूल्यं वा देहि, मदर्थे वा द्वौ वृक्षकौ सिञ्च, ततः गच्छ इति भावः। एनां शकुन्तलां 'बलात्' तरसा (हेतौ पञ्चमी। बलं प्रयुज्य निवर्त्तयति इति ल्यब्लोपे वा) 'निवर्त्तयति निवृत्तां करोति।

## NOTES

1. (a) चेष्टाप्रति &c.—प्रतिबिम्बितं रूपमस्याम् अस्या वा इति प्रतिरूपा the exact reflection. बहु—। सैव इति प्रतिरूपा + कन् स्वार्थे = प्रतिरूपिका a reflection. See Tika—। (b) कामिजन &c.—कामः अस्ति अतिशयेन एषाम् इति काम + इनि् अतिशायने = कामिनः those that have intense desire, मनसो वृत्तिः inclination of the mind, i e a mental effort, कामिनो जनाः। कर्मधा—Here चेष्टा is physical effort. Hence the meaning

is—So ardent is the inclination, that an effort done mentally seems like a physical effort. It is a general principle which the king supports by an example ( See अनुयास्यन् &c. )*

Reading—चेष्टाप्रतिरूपिणी is ambiguous. It may mean (1) corresponding to चेष्टा, or (2) like चेष्टा। Like चेष्टा meets our case. It is a simpler expression. Not a bad reading on the whole. *

3. अनुयास्यन &c—When he saw Sakuntala leaving he very thoughtlessly ( सहसा ) wanted to follow her. The very next moment his good sense prevailed and he desisted. What was thoughtless here? Of course the wish to follow, not the check put on the wish. Hence the proper construction is सहसा अनुयास्यन् not सहसा वारितप्रसरः। He did not leave his seat. There was no physical effort to follow. Yet he felt as if he had actually followed and come back.* The feeling was due to the intensity of the wish. The wish and the effort produce like effects (चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः)। The figure is अर्थान्तरन्यास, the verse going to establish ( साधन ) the general principle in अहो &c above. The metre is आर्या।

4. इन्ता &c—गन्तुम् is गमनम् the तुम् being भावे in such cases. "अव्ययकृतो भावे" इति भाष्यम्।

5 किं निमित्तम्—"What for", i. e. 'How so." "How is it improper ( न युक्तम् ) to leave."

6. मोचय—मुच means to 'release'. Here, however the meaning is to become free.' अनेकार्थत्वाद्धातूनाम्। Hence it is अकर्मक। Thus आत्मा मुचतु—let your person become free – gives त्वम् आत्मानं मोचय with णिच the अणिकर्त्ता having become कर्म by the rule 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ।" Contrast the wicked move of the naughty प्रियंवदा with the plain appeal of the simple अनसूया।*

**राजा - भद्रे, वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये। तथा ह्यस्याः—**

---

* Adopted by Prof. Gajendragadkar.

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्
अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥२९॥

तदहमेनामनृणां करोमि। ( अङ्गुलीयं दातुमिच्छति। उभे नाममुद्राक्षराणि अनुवाच्य परस्परमवलोकयतः )।

KING—O gentle one, I see this maiden fatigued even from (her own share of) watering the trees. For through the lifting of the pitcher, her arms, even now, have the shoulders drooping and the palms excessively red; even now, her face have formed drops of perspiration-water that obstruct the Sirisha flowers in her ears; and the knot constantly unloosening, her locks, restrained with one hand, are dishevelled. I will then free her of debt. ( Offers his ring. The two stare at each other on reading the name on the seal ).

राजेति—'भद्रे' हे साधुवृत्ते प्रियंवदे 'अत्रभवतीं शकुन्तलां वृक्षसेचनात् एव' स्वेषां वृक्षाणां सेचनादेव 'परिश्रान्तां गुरुखेदां 'लक्षये' पश्यामि [चौरादिकस्य लक्षयतेः लट् ]। 'तथाहि' पश्यतु भवती।

स्रस्तेति। अन्वयः—घटोत्क्षेपणात् अस्याः बाहू स्रस्तांसौ अतिमात्रलोहिततलौ, प्रमाणाधिकः श्वासः अद्यापि स्तनवेपथुं जनयति, वदने कर्णशिरीषरोधि घर्माम्भसां जालकं बद्धम्, बन्धे स्रंसिनि मूर्धजाश्च एकहस्तयमिताः पर्याकुलाः। व्याख्या—'घटस्य' सेचनकलशस्य 'उत्क्षेपणात्' ऊर्ध्वं वहनात् [ हेतौ पञ्चमी ]। 'अस्या बाहू स्रस्तौ अवनतौ अंसौ' स्कन्धबन्धौ ययोः तथाभूतौ, 'अतिमात्र'' प्रकृतेरधिकं 'लोहितं' रक्तं 'तलं'' करतलं ययोः तथाभूतौ च। 'प्रमाणात्' स्वभावात्: 'अधिकः श्वासः' गुरुश्वसनम् 'अद्यापि' इदानीमपि 'स्तनयोः वेपथुं'' कम्पं 'जनयति' करोति। प्रकृत्या नतौ अंसौ श्रमात् प्रकामविनतौ जातौ, लोहिते तले अतिमात्रं लोहिते, श्वासोऽपि गुरुः। तत्र नियमितः दानीमपि विश्रान्ता। अपि च 'वदने' मुखे 'कर्णयोः' दत्तं शिरीषं 'रोद्धुं'' स्थिरीकर्तुं

-शीलं यस्य तथाविधं घर्माम्भसां स्वेदजलानां 'जालकं' बिन्दुसमूहरूपं 'बद्ध' समुदितम्, वर्म्ये केशवर्म्ये 'म सिनि' पुन: पुनर्गलति सति [ "वहुलमाभीक्ष्ण्ये" इति पौन:पुन्ये बाहुलकात् णिनि: ] 'मूर्द्धजाश्च केशा अपि 'एकेन हस्तेन यमिता:' बन्धनं नीता: सन्त: पर्य्याकुला: विकीर्णा: [ "बद्ध" ( त-, न्या-, म- )— "स्रस्त" ( रा-, वि- ) ]।

तदिति। 'तत' तस्मात्, सर्वथा एषा भूयो वृक्षसेचनानर्हा अत: अहं सेचन-मूल्यं दत्त्वा 'एना' तं अधमर्णाम् 'अविद्यमानम् ऋणम्' यस्या तथाविधाम् ऋणमुक्ता 'करोमि'।

[ अङ्गुलीयम अङ्गुलीयकं 'दातुमिच्छति'। अस्य च अङ्गुल्या उन्मोचनकाले 'नाममुद्राया:' तत्र मुद्रितस्य नाम्न: 'अक्षराणि' वर्णान् 'अनुवाच्य' पठित्वा 'परा परां' प्रियंवदा अनसूयाम, अनसूया च प्रियंवदाम्, इत्यर्थ: [ द्वितम। असमासवद्भाव:। पूर्वस्य सुप सु: ] 'अवलोकयत:' पश्यत:। तत्र राज्ञो दुष्यन्तस्य नाम उत्कीर्णं दृष्ट्वा द्वे अपि सख्यौ विस्मिते, किमेतत् इति अन्योऽन्यमुखावलोकन कुरुत:। अथवा उभे इति शकुन्तलाप्रियंवदे ]।

NOTES

1. (a) भद्रे—O gentle one A happy epithet at the moment because she roughly handles Sakuntala.* (b) अतभवतीम्—Here अत takes द्वितीयार्थे तल् because it qualifies भवतीम्। This is allowed by the rule "इतराभ्योऽपि दृश्यन्ते"। सहसुपेतिसमास., वा कर्मधा— [?]

2. (a) स्रस्तांसौ—A slight droop of the shoulders is a point of beauty in females Compare the word प्रकाम in "प्रकामविनतांसौ" Act. III. infra. (b) अतिमात्र etc.—अतिगता मात्रा यस्मिन् तत अति-मात्रम excessive वह—। अतिमात्रं लोहितम् excessively red सहसुपेति समास:। A certain amount of redness of the palms is considered a सुलक्षण। See Tika. (c) घटोत्क्षेपणात—उत्क्षेपण is ऊर्द्धप्रेरण। This is necessary. Without an upward jerk the tops cannot be watered. (d) कर्णशिरीषरोधि—कर्णस्य शिरीषं कर्णशिरीषम्, the शिरीष in

* Adopted by Prof. Gajendragadkar.

the ears are used as कर्णभूषण। शाकपार्थिवादि। Compare "अवतंसयन्ति दयमाना: प्रमदा: शिरीषकुसुमानि"—Prelude. "कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेशरम्"—Act. VI. Infra &c. कर्णशिरीष + रुध + णिनि ताच्छ्रील्ये कर्त्तरि। रोधन is obstruction. The flowers stick (रोध) on the face owing to the perspiration and no longer oscilate. She was profusely perspiring. Qual. जालकम्। (e) घर्माम्भसाम्—घर्मस्य अम्भांसि or घर्मजानि अम्भांसि, तेषाम्॥ (f) एकहस्त &c.—यम् + णिच् + क्त कर्मणि = यमित: restrained एक: हस्त: एकहस्त:। "पूर्वकालैक—" इति कर्मधा—। Then इतत्—She used one hand only, the other was engaged with the pitcher Note that the king is now too far interested in Sakuntala to check his effusion. Pred to मूर्द्धजा:।

3. Reading—स्रस्तम् in स्रस्त कर्णशिरीष &c. means slipped down. This does not seem to suit the context. जालक (समूह) seems to suggest the formation of separate drops, and does not agree with the running down of perspiration.

4. (a) नाममुद्रा &c. मुद्र + अ भावे = मुद्रा engraving. नाम्नो मुद्रा engraving of the name, i. e. the name engraved. भावानयने द्रव्यानयनम्। तस्या अक्षराणि॥ (b) अनु + वच् + णिच् ल्यप् = अनुवाच्य having read. (c) परस्परम्—Each stares at the other. Hence there is व्यतिहार reciprocity. This gives द्वित्व by the Varttika "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्"। We have now परां पराम् अवलोकयत:। We do not get समासवद्भाव in परां पराम् owing to बहुलग्रहण। 'बहुलग्रहणात् अन्यपरयोर्न समासवत्" ; Next "असमासवद्भावे पूर्वपदस्थस्य सुप. सुर्वक्तव्य:"। Hence पराम् पराम् अवलोकयत:। Next the टाप् disappears बाहुलकात् leaving परम् परम् = पर:परम = परस्परम् because of निपातन in the कस्कादि list or the sutra 'अपरस्परा: क्रियासातत्ये"। Lastly the final विभक्ति is optionally changed into आम by the Varttika "स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्य:"। Hence परस्पराम् or परस्परम्। For the disappearance of टाप्। compare "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" — compare "द्वन्द्वे टाब्भाव: क्वौचे पादभिक्षरज: स्मृतः। समासे सोरलुक् चेति सिद्धं बाहुलकात् स्मृतम्"॥ The टाप् may be dropped at any stage stage after the duplication.

राजा—अलमस्मानन्यथा सम्भाव्य। राज्ञः प्रतिग्रहोऽयम्।

KING—Stop thinking otherwise of me. It is a gift from the king.

प्रियंवदा—तेण हि ण अरिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं। अज्जस्स वअणेण अरिणा दाणिं एसा [ तेन हि नार्हत्येतत् अङ्गुलीयकम् अङ्गुलीवियोगम्। आर्यस्य वचनेन अनृणा इदानीमेषा ]। ( किञ्चिद्विहस्य ) हला सउन्दले मोइदासि अणुअम्पिणा अज्जेण अहवा महाराएण। गच्छ दाणिं [ हला शकुन्तले, मोचितासि अनुकम्पिना आर्येण अथवा महाराजेन। गच्छ इदानीम् ]।

PRIYAMVADA—Then certainly it does not deserve parting from the finger. She is now free of debt by the word of your honour. (Laughing slightly) Dear Sakuntala, you are released by this kind sir or by the great king. You may go now

शकुन्तला ( आत्मगतम् )—जइ अत्तणो पहविस्सं [ यदि आत्मनः प्रभविष्यामि ]। ( प्रकाशम् ) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा [ का त्वं विस्रष्टव्यस्य रोद्धव्यस्य वा ]।

SAKUNTALA [Aside]—If I can control myself. (Aloud) who art thou for one to be discharged or detained ?

राजेति। 'अस्मान्' माम् 'अन्यथा' अन्यप्रकारेण, यथा मया परस्वयो दत्तः तद्विपरीतभावेन, 'सम्भाव्य' अनुमाय 'अलम्'। मा माम् असत्यवादिनं मन्यथाम्। 'राज्ञः' सकाशात् 'अयं प्रतिग्रहः' एतल्लब्धम्। केन लब्धम् इत्यत्र सन्देहः। 'राज्ञः सकाशात् अयं प्रतिग्रहो मे" इति प्रियंवदां बोधयति। वस्तुतस्तु "राज्ञः सकाशात् अयं प्रतिग्रहो भवत्याः" इति आह। अन्यथा असत्यवादी स्यादेव॥ ["प्रतिग्रहोऽयम्" ( त- न्या- ) "प्रतिग्रहोऽयमिति राजपुरुषं मामवगच्छथ" ( म- )—"प्रतिग्रहोऽयमिति राजपुरुषं मामवगच्छत" ( रा-, वि- ) ]॥

प्रियंवदेति। तेन हि' निमित्तेन, तथा सति इत्यर्थः, यदि राज्ञा तुभ्यं दत्तं तदा तु 'एतत् अङ्गुलीयकम्' अङ्गुल्या वियोजनं 'न अर्हति। राज्ञा द' यस्मात् रच, तदिदत् भवत एव अङ्गुल्यां तिष्ठतु। 'इदानीम् एवा' शकुन्तला अङ्गुलीयकदानं विनापि 'आर्यस्य वचनेन [इतौ करणे वा तृतीया] अनृणा-ऋणमुक्ता। राज्ञो वचन-भङ्गीं बुद्धा, राजा एवायम् इति ज्ञात्वा, राजानंप्रति इमां व ोक्तमाह प्रियवदा— अहमेनामनृणां करोमि" इति यत् आर्यस्य वचनं, राजाज्ञा हि सा, तेनेयम् ऋणमुक्ता, किमङ्गुलीयकेण इति भाव.। [इत्यं गूढस्य राजभावस्य प्रकाशात् 'किञ्चित्' ईषत् 'विहस्य' राजसन्निधानसंयता अनुच्चैर्हसित्वा' शकुन्तलां प्रत्याह] 'अनुकम्पिना त्वयि सदयेन 'आर्येण वा महाराजेन' ऋणात् मोचिता असि'। अनुकम्पिना इति साभिप्रायं वचः गूढमव्यङ्गम्। अनुरक्तोऽय त्वयि, एनं परित्यज्य यदि गन्तुं शक्नोषि 'गच्छ इदानीम्'।

शकुन्तलेति। गमिष्यामि 'यदि आत्मनः स्वस्य 'प्रभविष्यामि' प्रभुर्भविष्यामि। आत्मा मे अधुना परवशो जातः तत् कथमय मया अन्यत्र नीयते ? ['प्रकाशं स्पष्टम्, उच्चैः इत्यर्थः, आह] यो हि जनो 'विसृष्टव्यः' विसृष्टुं योग्यः यो वा 'रोद्धव्यः' रोद्धुमर्हः तदुभयस्यसम्बन्धे त्व' का इति काकुः। न कापि इत्यर्थः। तद्वचनात् कश्चित् स्थास्यति वा गच्छति वा इति मा मन्यस्व।

NOTES

1. Reading.—राज्ञः प्रतिग्रहोऽयम्—It is a gift from the king. The sentence is purposely left unfinished. Gift to whom ? Fill up the ellipsis to suit facts, or at your option, to serve as a feint. Thus "From the king to Priyamvada" means "Iam the king I give it to you" which is the truth. Or thus "From the king to me" meaning "I got it from the king" which is a feint. Now if we add "इति राजपुरुषं मामवगच्छत" with a कर्मधा—in राजपुरुष instead of the usual षष्ठीतत्—, we gain nothing, but the whole thing loses its refinement and becomes a broad and clumsy feint,

2. (a) आर्यस्य वचनेन &c.—The king perhaps succeed in duping Anasuya, but Priyamvada was too clever to be taken

that away. The sly girl r-torts "भाग्यस्य वचनं न भनृणा"—The king's command has freed her ! (See Tika). Then she laughs (विहस्य)। The laugh is significant. It is Greek meeting Greek. The laugh says 'No ! I am not to be caught so easily." Here laugh is not loud (किञ्चित्) because she now feels the restraint of royal presence * (b) अनुकम्पिना = साधु अनुकम्पते दयते इति अनु + कम्प + णिनि कर्त्तरि साधुकारिणि। तेन। The king is so thoroughly kind (साधुकारिणि णिनिः) towards you that he relieves you of the debt. This sort of kindness has its reason. The king loves you. Thus the speech is a thurst to both the king and Sakuntala. (c) गच्छ इदानीम्—Go now, i. e the moment before you were anxious to go, go then if you can, now that in a manner he has openly avowed his love for you.

3. यदि etc —I would go if I could. The place, has now become too dear to leave.

4 का त्वम् etc —You are nobody to discharge or detain. Don't you think I would go because you want me to go I leave or stay as I wish. She feigns perverseness to excuse her stay विसर्जयस्य and रोद्धव्यस्य qualify जनस्य understood Or with अविवक्षायां कर्म and भावे तव्य, they mean विसर्जनम् and रोधनम्।

राजा—( शकुन्तलां विलोक्य आत्मगतम् )—किं नु खलु यथा वयमस्याम् एवमियमप्यस्मान् प्रति स्यात्। अथवा लब्धावकाशा मे प्रार्थना। कुतः ?

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे।
कामं न तिष्ठति मदाननसम्मुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥२७॥

Adopted by Prof. Gajendragadkar.

KING—(Watching Sakuntala, aside)—Could it possibly be that she is disposed towards me in the same way as I am towards her ? Or my prayer has found scope. (Do you ask) Why ?—Though she mingles not her speech with my words, she listens attentively when I am speaking ; true, she does not stay looking at my face, but her eye is never engaged long with other objects.

राजेति । [ 'शकुन्तलां विलोक्य' निपुणं निरूप्य तस्या भावोदयमिव मत्वा 'आत्मगतं स्वं प्रति आह ] । 'यथा' यद्वत्, खलु वयमस्यां शकुन्तलायां वर्त्तामहे 'एव' तद्वत 'इयमपि' शकुन्तला अस्मान् प्रति स्यात न किम' । अनुरागोऽयं द्वयोरपि आवयोः उत केवलं ममैव इति वितर्कः ॥ निर्णयति—'अथवा' पक्षान्तरे 'मे' मम प्रार्थना' प्रणयः लब्धः प्राप्तः 'अवकाश.' अन्तरः यथा तादृशी एव । 'कुतः' एवं ब्रवीमि चेत शृणु—

वाचमिति । अन्वयः—इयं यद्यपि मद्वचोभिः वाचं न मिश्रयति, मयि भाषमाणे अवहिता कर्णं ददाति । कामं मदाननसम्मुखी न तिष्ठति, भवती दृष्टिस्तु भूयिष्टम् अन्यविषया न । व्याख्या—'इदम' एषा शकुन्तला 'यद्यपि यदि तु 'मम वचोभिः' वचनैः सह [इति सहार्थे तृया] 'वाचम्' आत्मनो वचन 'न मिश्रयति' न योजयति, मया सह न संलपति इत्यर्थः तथापि 'मयि भाषमाणे' वदति लपति सति ["यस्य च भावेन भावलक्षणम्" इति भावे सप्तमी ] 'अवहिता' दत्तावधाना सती 'कर्णं ददाति' शृणोति । 'कामम्' एतदप्यनुमन्ये | "अकामानुमतौ कामम्" इत्यमरः ] यत 'मदाननस्य' मम मुखस्य सम्मुखी अनुकूला 'न तिष्ठति' न वर्त्तते, सम्मुखी भूत्वा एव निवर्त्तते इत्यर्थः 'भवती दृष्टिस्तु' नयनं पुनः 'भूयिष्ठं' बाहुल्येन 'अन्यविषया' इतरसंक्रान्ता 'न' । मां न सम्भाषते, किन्तु मद्वचने सादरा दृष्टिः मयि पतिता एव संक्रियते सत्यं, किन्तु अन्यत्रापि न तिष्ठति, मयि एव भूय. पतति । तन्मन्ये इयम मयि अनुरक्ता इति भावः ॥ ["सम्मुखीयं" ( त- व्या- )—"सम्मुखीना" (रा- वि-)—"सम्मुखी सा" ( म- ) ] ॥

## NOTES

1. (a) **किं नु etc.**—किं प्रश्ने, नु वितर्के, खलु वाक्यालङ्कारे । "नु वितर्कापमानयोः" इत्यादिमेदी । "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः । (b)

वयम्—Plural or singular b the rule "अस्मदो द्वयोश्च" (e) अवकाश— scope अन्तर। My suit has found scope, i.e. there are signs of reciprocation of feeling ; I may therefore presevere.* (d) प्र + अर्थि युच् भावे = प्रार्थना suit.

2. वाचम् &c —He enumerates the signs he notices. (a) मिश्रं करोति इति मिश्र + णिच् + लट् ति मिश्रयति mixes. She does not mix her speech with mine, i.e. she does not hold conversation with me. This discourages and accounts for the doubt किं नु खलु &c. (b) अव + धा + क्त कर्मणि स्त्रियाम् अवहिता attentive. कर्णं ददाति &c. is encouraging and justifies hope (लब्धावकाशा &c ) (c) मङ्गतं प्राप्त' मुखं यया सा समुखी she who has approached the face i e has faced "स्वाङ्गाच्चोपसर्जनात—" इति ङीष्। सम्मुखा is an alternative form. (d) कामम &c —He admits here she does not face him for any appreciable time. This, he admits ( कामम् ), looks like a rebuff and raises doubts. But (तु) there is a set-off against it viz, she does not remain long with her eyes turned away from him.* (e) अन्य: मद्व्यतिरिक्त: कश्चिन पदार्थ: विषयो यस्या· सा अन्यविषया, etc.

3. (a) Reading—अभिमुखम् towards. She turns her ear towards me when I am speaking—does not express the idea as well as अवहिता कर्णं ददाति। (b) समसुखीना suppresses the nominative altogether which is not desirable. The choice lies between सम्मुखीयम and समसुखोमा। I prefer the former because the reference being to an object (शकुन्तला) which is before the speaker it is better spoken of with इदम्-शब्द। तद् is used for things out of sight. Compare—"इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम्। अदमस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥"

नेपथ्ये—भो भोस्तपस्विनः, सन्निहितास्तपोवनसत्त्वरक्षायै भवत। प्रत्यासन्नः किल मृगयाविहारो पार्थिवो दुष्यन्तः।
तुरगखुरहतस्तथाहि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु।

---

* Adopted by Prof. Gajendragadkar.

पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु ॥२८॥

अपि च—

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥२९॥

(सर्वे कर्णं दत्त्वा किञ्चिदिव सम्भ्रान्ताः ) ।

IN THE DRESSING ROOM—O ye ascetics, be close by for the protection of the animals of the forest of penance. King Dushyanta is indeed at hand enjoying a hunt. For dust having the colour of the setting sun, struck up by the hoofs of his horses, are like a host of locusts settling on the tress of the hermitage to the boughs of which are attached bark garments wet with water. (Moreover, an elephant scared at the sight of cars, having one tusk stuck on to the shoulder of a tree that has been struck with a violent blow, provided with a noose by clinging coils of creepers dragged with his feet, having dispersed herds of deer, is entering the holy forest as if an embodied obstruction of our penance. (Listening, all are slightly startled).)

नेपथ्ये इति । नेपथ्ये' वेशरचनास्थाने, रङ्गमञ्चात बाह्यः, एषा वाक् उद्गता—'तपोवनसत्त्वानाम्' आश्रममृगाणाम् 'रक्षायै, परित्राणाय 'सन्निहिताः' समीपस्था यूयं 'भवत'। 'मृगयया मृगान् विध्यन् 'विहरति' परिचरति इति 'मृगयाविहारी' आखेटशायी 'पार्थिवो' राजा 'दुष्यन्तः' 'प्रत्यासन्नः अन्तिकचारी 'किल' समागत एव।

तुरेति। अन्वयः—तथाहि तुरगखुरहतः परिणतारुणप्रकाशः रेणुःशलभसमूह इव विटपविषक्तजलार्द्रवल्कलेषु आश्रमद्रुमेषु पतति। व्याख्या—'तथाहि' राज्ञः अत्यासन्नत्वात् हि 'तुरगाणाम्' अश्वानां 'खुरैः हतः' अतएव उत्थापितः परिणतस्य सान्ध्यस्य अरुणस्य सूर्यस्य 'प्रकाशः' इव प्रकाशो' दीप्तिर्यस्य तथाविधः सान्ध्यरविसदृशः आरक्तः

इत्यर्थः; 'रेणुः' धूलिः 'शलभानां' 'समूहः' राशिः 'इव विटपेषु' शाखासु 'विषक्तानि आसक्तानि जलार्द्राणि वारिसिक्तानि वल्कलानि' येषां तथाविधेषु 'आश्रमद्रुमेषु' तपोवनतरुषु 'पतति', यावत् धूलिभिर्न दूष्यन्ते, तावदपसार्यन्तां वल्कलानि इत्यर्थः ।

तीव्रेति । अन्वय.—स्यन्दनालोकभीत., तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः, पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः भिन्नसारङ्गयूथः गजः नः तपसो मूर्तो विघ्न इव, धर्मारण्य प्रविशति । व्याख्या—'स्यन्दनानां' रथानाम् 'आलोकेन' दर्शनेन 'भीतः' अदृष्टपूर्वत्वात् त्रस्तः 'तीव्रेण' गुरुणा 'आघातेन' प्रहारेण 'प्रतिहतः' निराकृतो यः 'तरुः' वृक्षः तस्य 'स्कन्धे लग्नः एको दन्तो' यस्य तथाविध· दन्तेन विद्ध भग्नं तरु दन्तेन कर्षन्नेव इत्यर्थः । 'पादेन आकृष्टाः' या 'व्रततयः' मार्गप्राप्ताः लताः तासां यानि 'वलयानि' मण्डलानि, तेषाम् 'आसङ्गेन' संसर्गेण 'सञ्जातपाशः' प्राप्तवन्धन-रज्जुः, पादेन लताजालं वहन् पाशबद्ध इव प्रतीयमान इत्यर्थः । 'भिन्नानि' विभक्तानि विद्रावितानि 'सारङ्गाणां मृगाणां यूथानि' येन तथाविधः 'गजः' वनहस्ती 'नः' अस्माकं 'तपसो मूर्तो' मूर्तिमान 'विघ्न इव' धृतदेह इव धर्माचरणप्रत्यूहः 'धर्मारण्यं' तपोवनं 'प्रविशति' ॥ पश्यत भो वनगजोऽयम् अदृष्टपूर्वान् रथान् दृष्ट्वा महता हि भयेन न दक्षिणतो नापि वामतः किन्तु समरेखमेव धावति, मार्गे यत् च पतितं तत् सर्वं मर्दयित्वा चलितः । अत्र दन्ताघातपातितं वृक्षं दन्तेनैव वहन् तत्र दलितानां लतागुल्मानां पादलग्नानि वलयानि पादेनैव कर्षन् अन्यत्र च हरिणयूथेषु सहसा पतितः तानि विद्रावयन् तैस्तैः विघ्नैः पदे पदे व्याहन्यमानगमनः नातिवेगमित एव आयाति । तत् त्यजत धर्मकर्माणि झटिति मार्गमस्मै दत्त्वा आत्मत्राणं रचत इति भावः ॥ ["तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः" (म), "तीव्राघातादभिमुखतरुःस्कन्धभग्नैकदन्तः" [तन्या], "तीव्राघातप्रतिहततरुः स्कन्धलग्नैकदन्त." [रा-वि] ॥ "पादाकृष्ट" (रा·, वि·, म· )—"प्रौढाकृष्ट" ( त-, न्या- ) ॥ "सङ्गमञ्जात" ( रा-, वि-, म- ) —"सञ्जनाज्जात" ( त-, न्या· ) । [ सर्वाः कर्णं दत्त्वा श्रुत्वा किञ्चिदिव ईषत न तु वलवत 'सम्भ्रान्ताः' वत्साः ] ।

## NOTES

1. (a) तपोवन &c.—तपसो वनम् तपोवनम् । अश्वघासादिवत् तादर्थ्ये

षष्ठीसमासः। Or तपःसाधनं वनम्। शाकपार्थिवादि। तत्र सत्वाः or सत्वानि the animals in the hermitage. तेषां रक्षा protection of the animals &c. तस्यै। तादर्थ्ये चतुर्थी। (b) किल is here निश्चये। प्रति + आ + सद् + क्त कर्त्तरि = प्रत्यासन्नः at hand. प्रत्यासन्नः किल he is surely very near. (c) मृग अन्वेषणे + णिच् स्वार्थे + श भावे निपातनात् = मृगया hunting. This is by the varttika 'परिचर्या परिसर्या मृगया अटाट्यानामुपसंख्यानम्'। तथा विहरतीति मृगया + वि + हृ + णिनि ताच्छील्ये कर्त्तरि wandering in quest of game. In the next sloka the speaker gives the reason for his statement.

2. (a) तुरग etc.—तुरेण वेगेन गच्छन्तीति तुर + गम + ड कर्त्तरि = तुरगाः horses. तेषां खुराः तुरगखुराः। तैः हतः struck up by the horses' hoofs. हतः struck, i. e. struck and thus raised. (b) विटप &c —वि + सञ्ज + क्त कर्त्तरि = विषक्तानि attached. "उपसर्गात सुनोति—" इत्यत्र सञ्जेर्ग्रहणात षत्वम्। This is a सकर्मक use of सञ्ज। Compare—धरम् आसक्त, चापम् आसज्यकण्ठे &c. विटपः शाखा। "विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः" इति विश्वः। विटपेषु विषक्तानि विटपविषक्तानि attached to the boughs. जलेन आर्द्राणि wet with water, विटपविषक्तानि जलार्द्राणि वल्कलानि येषु येषां वा। विपद्यत— । After bath the bark garments were spread out on the branches of trees to dry. (c) परि + नम + क्त कर्त्तरि = परिणतः mature. प्रकाशते अनेन इति प्र—काश + घञ करणे = प्रकाशः lustre. परिणतः अरुणः the mature sun, i. e. the evening sun, the setting sun. तस्य प्रकाशः the glow of the settin sun. स इव प्रकाशो यस्य, बहु—by the Varttika "सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च वक्तव्यः"।

3. Remark—This sloka only explains why the speaker thinks the king must be close by and hunting. He is hunting (मृगयाविहारी)because dust is being raised by the horses rushing about after the game. He is not very far (प्रत्यासन्नः) because the dust is invading the hermitage.

4. अपि च—The speaker next explains why he apprehends danger from the royal hunt.

5. (a) तीव्राघात &c.—आ + हन + घञ् भावे = आघात a blow. तीव्रः

---

* **Adopted by Prof. Gajendragadkar.**

आघातः a violent blow. कर्मधा— । तेन प्रतिहतः struck back with a violent blow इतत् । (The blow was not intentional It was a mad rush through fear, and he simply ran against the tree), तादृशः तरुः a tree struck back &c. कर्मधा— । तस्य स्कन्धः the trunk of a tree &c. तस्मिन् लग्नः lodged into the trunk &c. [Note the word लग्नः । The tusk got stuck ( लग्नः ), not that he butted against the tree. The act was unintentional ] तादृशः एको दन्तो यस्य । He had no time to think of extricating his tusk. Such was his terror. (b) पादाकृष्ट &c.—आ + सञ्ज + घञ् भावे—आसङ्ग adhesion, clinging पादेन or पादैः आकृष्टा dragged with his feet, इतत— तादृश्यः व्रततयः creepers dragged &c, कर्मधा— । तासां वलयानि coils of creepers etc. तेषामासङ्गः clinging of coils etc i. e आसक्तानि वलयानि the clinging coils—भावानयनं द्रव्यानयनम् । तेन सङ्घातः । तादृशः पाशो यस्य । This too indicates haste. Away he rushed from the seat of danger without stopping to clear his feet of the encumbrances. With the tree to his tusk and the mass of creepers to his feet, he was being hampered in his movement, but his first thought was to put a good distance between himself and the hunters.

6 (a) मूर्त —मूर्छ + क्त कर्तरि embodied. (b) विहन्यते अनेन इति वि + हन + घञर्थे करणे क—विघ्नः obstruction. (c) सारं शबलम् अङ्गमेषाम् इति सार + अङ्ग = सारङ्गाः like शक + अन्धु = शकन्धुः । A kind of spotted deer. तेषां यूथानि herds of spotted deer, भिन्नानि सारङ्गयूथानि येन । These epithets complete the picture of havoc, and indicate what may be expected if he gets into the penance forest. Trees reared with tender care, shrubs and creepers so assiduously looked after, the pet animals that are like children unto us— are all in danger. (d) धर्मार्थमरण्यम्, धर्मस्य अरण्यं, धर्मसाधममरण्यं वा धर्मारण्यम् । **Here he is entering our sacred forest. Be quick there is time yet, for he cannot move fast with his encumbrances.**

**7. Reading—** **अभिमुख and अय in the first line instead of**

प्रतिहत and लग्न do not shew the fright and consequent haste which are so necessary here. In Raghava's reading, स्कंधलग्नैक-दन्त: is obscure. पादाकृष्ट is better than प्रौढाकृष्ट because it plainly states where the creepers have stuck, and how easily they could have been removed and yet were not removed through fright and haste. It is difficult to choose between संगमच्छात and सच्छनाच्छात। The former perhaps improves the flow of the style and better preserves the uniformity by making a single compound of each पाद in the first.

राजा—( आत्मगतम् )—अहो धिक् पौरा अस्मदन्वेषिण-स्तपोवनमुपरुन्धन्ति। भवतु प्रतिगमिष्यामिस्तावत्।

KING—( Aside)—O fie, the citizens searching for me are disturbing this forest of panance. Well I must go back.

सख्यौ—अज्ज, इमिणा आरण्णवुत्तन्तेण पज्जाउलम्ह। अणु-जाणाहि णो उडअगमणस्स [ आर्य, अनेन आरण्यकवृत्तान्तेन पर्याकुला: स्म:। अनुजानीहि न: उटजगमनाय ]।

THE FRIEND—Noble sir, we are greatly disturbed by this news of the wild elephant. Permit us to return to the cottage.

राजा—(ससंभ्रमम्)—गच्छन्तु भवत्य:। वयमप्याश्रमपीडा यथा न भविष्यति तथा प्रयतिष्यामहे। ( सर्वे उत्तिष्ठन्ति )।

KING (Hurriedly)—Go noble ones, I too shall arrange that there be no disturbance of the hermitage. ( They all get up).

सख्यौ—अज्ज, असम्भाविदादिहिसक्कारा भूओवि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं [ आर्य, असम्भावितातिथिसत्कारा भूयोपि प्रेक्षणनिमित्तं लज्जामहे आर्यं विज्ञापयितुम् ]

THE FRIENDS—Nob'ɜ sir, not having rendered the rites of hospitality, we are ashamed to request your honour to see us again.

राजेति। 'अहो अस्मान्' माम् 'अन्विष्यन्ति विचिन्वन्ति ये तथाविधाः पौराः नागरिकाः 'तपोवनम् उपरुन्धन्ति' पीडयन्ति एतत् 'धिक्' गर्हामहे। भवतु प्रतिगमिष्यामः, प्रत्यावृत्ता 'भविष्यामस्तावत्'।

सख्याविति। 'आरण्यकस्य' वनगजस्य 'वृत्तान्तेन वार्त्तया करणेन 'पर्य्याकुलाः' सन्त्रस्ताः 'स्मः'। 'नः' अस्मान् 'उटजे' पर्णशालायां 'गमनाय अनुजानीहि' अनुमन्यस्व।

राजेति। [ उद्विग्नत्वात् 'सम्भ्रमेण' त्वरया 'सह' यथा तथा आह ] 'वयमपि' अहञ्च 'आश्रमस्य पीडा' तपोवनोपरोधो 'यथा न भविष्यति तथा प्रयतिष्यामहे' अहं प्रयत्नवान् भविष्यामि। इत्यहमपि गमनार्थम उद्विग्न एव। [ "ससम्भ्रमम्" ( रा-, त- )—"असम्भ्रमम्" ( वि- ) ] ॥

सख्याविति। 'असम्भाविते' अकृतः 'अतिथि' आगन्तुकस्य ते सत्कारः पूजा याभिः तथाविधा वयम् 'आर्य्य' भवन्त 'भूयोऽपि प्रेक्षणनिमित्त दर्शनाथ 'विज्ञापयितुम्' अभ्यर्थयितुं 'लज्जामहे' लज्जिता भवामः। अतिथिर्भवान् न च पूजितः, तत् कथं ब्रूमः पुनरपि अत्रागच्छतु इति। यन्नैतद्दारतया चम्यते भवता, तदागम्यतां भूयोऽपि इति भावः [ "सत्काराः" ( वि- ) ]—"सत्कारम् ( रा-, त-, न्या- स- ) ] ॥

## NOTES

1. (a) आरण्यक &c.—रणे साधु इति रण + यत = रण्यम suitable for battle, i.e. an open space. न रण्यम् अरण्यम् a forest, नञ्तत्—। तत्र हृष्ट इति, अरण्य + वुञ् = आरण्यकः a wild elephant. वुञ् is available in the sense by the Varttika "पथ्याध्यायन्यायविहारमनुष्यहस्तिषु इति वक्तव्यम्"। Hence आरण्यको हस्ती, आरण्यको मनुष्यः etc ; but आरण्यः पशुः not आरण्यकः पशुः ॥ (b) उटज etc.—उटजे गमनम् उटजगमनम्। सहसुपेति समासः। तस्मै। तादर्थ्ये ४र्थी।

2. ससम्भ्रमम्—सम्भ्रम haste त्वरा or संवेग। He was in haste to go back. Compare.—"भवतु प्रतिगमिष्यामस्तावत्" above. But he was waiting impatiently that the suggestion to separate may come

from the maidens. The impatience may be read between the lines in the present speech also. It is owing to these indications of impatience that I have rendered it "hurriedly" otherwise the temptation is great to say ससम्भ्रमं सादरम्। "सम्भ्रमः साध्वसेऽपि स्यात् स वेगादरयोरपि" इति विश्वः।

3. Reading—असम्भ्रमम्—without being moved—does not commend itself.

4. उत्तिष्ठन्ति—"उदोऽनूर्ध्वकर्मणि" bars the आत्मनेपद here because 'to rise' (उत्तिष्ठन्ति) implies ऊर्ध्वकर्म upward action.

5. (a) असम्भावित etc.—सम्यक् भावितः सम्भावित इति सम्+भू+णिच+क्त कर्मणि=सम्भावितः rendered. न सम्भावितः। नञ् तत्—। असम्भावितः अतिथिसत्कारः याभिः those that have not rendered the rites of hospitality, बहु—। This gives the reason why they feel delicacy to ask him to come again. (b) प्रेक्षणं दर्शनं निमित्तं कारणं यस्मिन् that in which the motive is to see तत् यथा तथा। Qualifies विज्ञापयितुम् (c) भूयोऽपि प्रेक्षणनिमित्तं विज्ञापयितुम् to ask for another interview. विज्ञापयितुम्—वि+ज्ञा+णिच्+तुमुन् भावे to pray. अव्ययकृतो भावे इति भावे तुमुन्। विज्ञापयितुं विज्ञापनं लज्जामहे इत्यन्वयः। The सप्तमी disappears because विज्ञपयितुम् is अव्यय। The rule "न लोकाव्ययनिष्ठाखलर्थतृनाम्" prohibits षष्ठी in the अनुक्तकर्म in the case of an अव्ययकृत्।

6. Reading.—"सत्कारम्" makes the compound qualify आर्यम्। Our reading emphasies the lapse of duty on the part of the maidens and the admission coming from the maidens themselves adds polish to the speech and imparts to it the forces of an almost irresistable appeal for another visit.*

**राजा—मा मैवम्। दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि।**

**KING—No, you must not say so, I am rewarded even by the sight of you.**

**शकुन्तला—अनसूए, अहिणअकुससूईए परिक्खदं मे चलणं**

**Adopted by Prof. Gajendragadkar.**

चलणं, कुरवअसाहापरिलग्गं च वक्कलं। दाव परिपालेध मं जाव णं मोआवेमि [अनसूये, अभिनवकुशसूच्या परिक्षतं मे चरणं कुरवकशाखापरिलग्नं च वल्कलम्, तावत् परिपालयतं मां यावदेतत् मोचयामि ]। (राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता )।

SAKUNTALA—Anasuya, my foot is pricked by a young Kusa shoot, and my bark-garment is caught in a Kuravaka-branch. Do then wait for me until I release it. (Gazing at the king, delaying with pretexts, proceeds to go out with the friends).

राजेति। 'एवम्' इत्थम्, अपूजितत्वात् पुनर्दर्शनाय विज्ञापयितुं लज्जयेत्यर्थः इत्याकारं 'मा' ब्रूत मा ब्रूत। सम्भ्रमे द्विरुक्तम्। 'भवतीनां' साधुशीलानाम्, असुलभदर्शनानामित्यर्थः 'दर्शनेनैव' [ किमुत सम्भाषणेन इत्येवकारार्थः ] 'पुरस्कृतोऽस्मि' सत्कृतोऽस्मि। पुण्यदर्शनानां दर्शनमेव सत्कारः, मया तु सम्भाषणमपि लब्धम्। तत् कथमकृतः सत्कार इति भावः।

शकुन्तलेति। 'अभिनवा' नूतना या 'कुशसूचिः' कुशाग्रं तया, दर्भाङ्कुरेण मे चरणम्' [ चरणशब्दो द्विलिङ्गोऽपि पुंसैव भूरि प्रयुक्तः ] 'परिक्षतं' गाढं विद्धम् 'वल्कलञ्च कुरवकस्य' कण्टकबहुलस्य पुष्पवृक्षविशेषस्य 'शाखासु परिलग्नं' दृढं सक्तम्। गाढवेधात् दृढमङ्गाच्च मोचनेविलम्बो भविष्यति। तत् 'यावत्' यत्कालम् 'एतत्' चरणं वल्कलञ्च 'मोचयामि', कुशकण्टकात् कुरवकशाखायाश्च इत्यर्थः, तावत्' तत्कालं 'मां' परिपालयत प्रतीक्षेथाम्॥ [ राघवेण अपठितमेतत् ]॥ ( इति 'व्याजेन' छलेन 'सह', छलपूर्वकं 'विलम्ब्य'। राजानं पुनरपि द्रष्टुंछल एष उद्भावित इत्यर्थः 'निष्क्रान्ता' रङ्गमञ्चात् बहिर्यातुं प्रवृत्ता [ आदिकर्मणि क्तः ] )।

## NOTES

1. पुरस्कृतः—पुरस् + कृ + क्त + कर्मणि Literally—Placed in front. Hence—Honoured.

2. अनसूये &c.—(a) कुशस्य सूचि: a shoot of Kusa grass, अभिनव new and therefore short. The shorter the stronger they are and more likely to hurt the feet. (b) In परिक्षत and परिलग्न the परि is intensive. The thorn has gone deep in, the garment has stuck firm—All this is a ruse to tarry a little longer. पारयामि is to wait for. Here the appeal is to अनसूया because she knows the quick-witted प्रियंवदा will meet her with some sharp retort,

3. सव्याजम्—वि + अज गतिक्षेपणयो: + घञ् करणे = व्याज: Lit—That which diverts attention. Hence छल pretence अपदेश ।। "व्याज: आख्यापदेशयो:" इति कोष: । तेन सह । वह—Qualifies विलम्ब्य not निष्क्रान्ता ।

4. Reading.—Raghava omits this passage. But the poet refers to the incident in Act II—'मिथ: प्रस्थाने···शाखासु वल्कलमसक्तमपि द्रुमाणाम ।* कुरुवक occurs in several editions. But कुरवक- is not wrong and seems to be the poet's favourite spelling. Compare the यमक in "मधुलिहां मधुदानविशारदा: कुरवका रवकारणतां ययु:" —Raghu. IX. 26.

राजा—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयामि । न खलु शक्नोमि शकुन्तलाव्यापारात् आत्मानं निवर्त्तयितुम् । मम हि—

गच्छति पुर: शरीरं धावति पश्चादसंस्थितं चेत:
चीनांशुकमिव केतो: प्रतिवातं नीयमानस्य ।। ३० ।।

( निष्क्रान्ता: सर्वे ) ।

**KING—I have become less anxious to go back to town. I will meet my followers and encamp them not far from the penance forest. I cannot indeed bring back myself from occupying about Sakuntala. Mine indeed—Forward goes the body backward rushes the restless mind like the China-Silk of a banner which is carried against wind [Exeunt all].**

प्रथमोऽङ्क:—The First Act.

---

* **Adopted by Prof. Gajendragadkar.**

राजेति। 'नगरे गमनं' प्रत्यावर्त्तनं तत् 'प्रति' [ प्रतीति कर्मप्रवचनीययोगे द्वितीया] "मन्द" मृदु 'औत्सुक्यम्' उत्कण्ठा यस्य तथाविधः अधुना संवृत्तः 'अस्मि'। शकुन्तलादर्शनेन नगरगमनं न इच्छामि। 'अनुयात्रिकान्' 'अनुगामिनः 'समेत्य' सम्प्राप्य 'तपोवनस्य नातिदूरे' न अतिदूरे, अनतिदूरे [ नञर्थेन नशब्देन सहसुपेति समासः ] 'निवेशयामि' संस्थापयामि। आश्रमपीडा मा भूत् इति अनतिदूरे एव सेनानिवेशः कर्त्तव्यः तत् कथं नातिदूरे इत्याह—'शकुन्तलायां' शकुन्तलाविषये 'यो व्यापारः' प्रवर्त्तनं 'प्रवृत्तिः' तस्मात् आत्मानं निवर्त्तयितुं, निवृत्तं कर्त्तुं न शक्नोमि खलु। अतः तपोवनस्य अतिदूरे न गच्छामि॥ ["नातिदूरे" ( रा·, म· )—"अतिदूरे" ( त·, न्या· )—"नातिदूरेण" ( वि· )॥ "शकुन्तलाव्यापारात्" ( रा·, वि·, म· ) "शकुन्तलादर्शनव्यापारात्" ( त·, न्या· ) ]॥

गच्छतीति। अन्वयः—प्रतिवातं नीयमानस्य केतोरिव मम हि शरीरं पुरो गच्छति, चीनांशुकमिव असंस्थितं चेतः पश्चात् धावति। व्याख्या—'प्रतिवातं वायोः प्रतिकूलं 'नीयमानस्य' उह्यमानस्य न तु स्वयं गच्छतः [केतुपक्षे अचेतनत्वात्, राजपक्षे औत्सुक्याभावात्] केतोरिव ध्वजस्येव' 'मम हि' मम तावत् "शरीरं" [केतुपक्षे ध्वजदण्डः, राजपक्षे वपुः ] 'पुरः' अग्रे 'गच्छति' मन्दं मन्दं चलति 'चीनांशुकं चीनदेशोद्भवं ध्वजवसनम् 'इव असंस्थितम्' अस्थिरं चञ्चलम् [चीनांशुकपक्षे लाघवेन हेतुना वायुना अभिभूतत्वात् चेतःपक्षे शकुन्तलाव्यापारेण अभिभूतत्वात् ] 'चेतः' चित्तं 'पश्चात् धावति' जवेन याति [सर्त्तेः वेगितायां गतौ धावादेशः]। कर्त्ता वायुरिमं नयति न स्वइच्छितो यामि। तेनाहं ध्वज इव। शकुन्तला च वातसंहतिरिव। शरीरं मे ध्वजदण्ड इव, चेतश्च ध्वजवसनमिव। शकुन्तलारूपाया वातसंहतेः प्रतिकूलमहं कर्त्तव्यतया नीयमानः। देहो मे ध्वजदण्ड इव मन्दं पुरो याति, चेतस्तु अस्थिरं सत् ध्वजवसनमिव पश्चात् धावति। अत्र इवशब्दो द्विः पाठ्यः॥ [ "असंस्थित" ( त·, वि·, न्या· )—"असंस्तुत" ( रा·; म· ) ]॥

[ 'सर्वे' अभिनेतारो जनाः निष्क्रान्ताः, रङ्गमञ्चात् वहिर्गताः। तदानीमपि सखीभ्यां शकुन्तला वहिर्गता। इतः पूर्वं गन्तुमारब्धा हि सा। व्याजविलम्बोऽपि जातः। अधुना च सर्वे अपि, राजा सख्यौ शकुन्तला च इत्यर्थः निष्क्रान्ताः ]॥

1. (a) अनुयायिकान्—अनु पश्चात् याया गमनम् अनुयाया। सा अस्ति एषाम् इति ठन्—इति वाचस्पतिः। Followers. तान॥ (b) नातिदूरे अनुयायिका निविशन्ते gives with णिच्—नातिदूरे अनुयायिकान् निवेशयामि। अकर्मकत्वात् अणिकर्त्तुः कर्मसंज्ञा। The क्रिया here makes नातिदूरे a सत्त्ववचन word, i. e. it refers to some पदार्थ। Hence अधिकरणे सप्तमी॥ (c) तपोवनस्य may be explained as शेषे or "दूरान्तिकार्थैः षष्ठी अन्यतरस्याम्" इति दूरार्थक नातिदूरशब्दयोगात् षष्ठी। पक्षे पञ्चमी॥ (d) आत्मानम् इति अणिकर्त्तुः कर्मसंज्ञा। (e) सम् + आ + इ ल्यप् = समेत्य।

2. धावति = सृ + लट् तिप् becomes धौ + लट् तिप् when the root means to move fast. सम् + स्था + क्त कर्त्तरि = संस्थितम् steady, न संस्थितम् unsteady. गच्छति शरीरम् the body moves slowly forward, धावति चेतः the mind rushes back. Note the contrast, one moves slow, the other goes quick. Such turning hack of the minds is described by Kalidasa with a different simile, cp. "एषा मनो मे प्रसभं शरीरात् पितुः पदं मध्यममुत्पतन्ती सुरांगना कर्षति खण्डिताग्रात्सूत्रं मृणालादिव राजहंसी॥"—Vikra. केतु is banner (ध्वज) which includes the staff and the flag. चीनदेशजम् अंशुकं वस्त्रं चीनांशुकम्।

[N. B.—Note China and India's probable trade-relation during our poet's time].

3. Reading—Raghava has असंस्तुतम् which he explains शरीरेण अपरिचितम् which has become a stranger to the body. It is difficult to apply the meaning here.

# द्वितीयोऽङ्कः।

(ततः प्रविशति विषण्णो विदूषकः)

विदूषकः (निःश्वस्य)—भो दिट्ठं। एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णोम्हि [भो दिष्टम्। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि] अअं मिओ, अअं वराहो, अअं सद्दूलोत्ति मज्झण्हे वि गिम्हविरलपाअवच्छायासु

वणराइस्सु आहिण्डीअदि अडवीदो अडवी [ अयं मृगः, अयं वराहः, अयं शार्दूलः, इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिषु आहिण्ड्यते अटवीतः अटवी ]। पत्तसङ्करकसाआइं कडुआइं गिरिणईजलाइं पीअन्ति [पत्रसङ्करकषायाणि कटुकानि गिरिनदीजलानि पीयन्ते ]। अणिअदवेलं सूल्लमंसभूइट्ठो आहारो अण्हीअदि [अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते ]। तुरगाणुधावणकण्डिदसन्धिणो रत्तिम्मि मे णिकामं सयिदव्वं णत्थि [ तुरगानुधावनकण्डितसन्धेः रात्रावपि मे निकामं शयितव्यं नास्ति ]। तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वनग्गहणकोलाहलेण पडिवोधिदोम्हि [ ततो महति एव प्रत्यूषे दास्याःपुत्रैः शकुनिलुब्धकैः वनग्रहणकोलाहलेन प्रतिवोधितोऽस्मि। ] एत्तएण दाणिं विपीड़ा न णिक्कमदि [ इयता इदानीमपि पीड़ा न निष्क्रामति ]। तदो गण्डस्स उवरि पिण्डओ संवुत्तो [ ततो गण्डस्य उपरि पिण्डकः संवृत्तः ]। हिओ किल अह्मेसु ओहीणेसु तत्तहोदो मिआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला मम अधण्णदाए दंसिदा [ ह्यः किल अस्मासु अवहीनेषु तत्रभवतो मृगानुसारेण आश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला मम अधन्यतया दर्शिता ]। संपदं णअरगमणस्स मणं कथं वि ण करेदि [ साम्प्रतं नगरगमनस्य मनः कथमपि न करोति)]। एव्वं चिन्तअन्तस्स मे पहादा अच्छिसु रअणी [एवमेव चिन्तयतः मे प्रभाता अक्ष्णोः रजनी ]। का गदी। जाव णं किदाचारपरिकम्मं पेक्खामि [ का गतिः। यावदेनं कृताचारपरिकर्माणं प्रेक्षे ] ( परिक्रम्य-

वलोक्य च )*एसो वाणासणहत्थाहिः अवणीहिं वनपुप्फमाला-धारिणीहिं पड़िविदो इदो एव्व आअच्छदि . पिअवअस्सो [ एष दासासनहस्ताभिर्यवनीभिः वनपुष्पमालाधारिणीभि: परिवृतः इत एव आगच्छतिप्रियवयस्यः]। होदु अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं, जइ एव्वं वि णाम विस्समं लहेअं [भवतु अङ्गभङ्गविकल इव भूत्वा स्थास्यामि, यदि एवमपि नाम विश्रमं लभेय ]। ( दण्डकाष्ठमवलम्ब्य स्थितः )।

(Then enters Vidushaka in a drooping mood) VIDUSHAKA (*S*ighing)—O my luck ! I am distressed by the frendship of this chase-loving king. "Here is a stag," "There goes a boar," 'Yonder escapes a tiger,'—thus we have to rush, even in mid-day, from thicket to thicket in rows of forests where as it is summer the shade of the trees is scanty. Waters of mountain streams, brown through the admixture of leaves and bitter, have to be drunk. Meals, mostly of spitted meat have to be eaten at irregular hours. With the joints, bruised by gallo-ing on horse-back, there is not much lying down for me even at night. Then even at the earliest dawn I am aroused by the din of surrounding the forest by the sons of slaves—the birdcatchers. My trouble does not cease with even so much. Boil has now formed on the abscess. Only yesterday while we lagged behind, Sakuntala, the hermit's daughter, was by my cursedness shown to his Highness as he entered the site of the hermitage in pursuit of a stag. Now on no account does he turn his mind towards going back to the town. Even as I was thinking thus, night passed and dawn came to my eyes. Can't help ! I must see him when he has finished

his usual morning duties. (Going round the stage and looking about). Here my dear friend comes this very way surrounded by Yavana women who have bows in their hands and are wearing garlands of wild flowers. Well, I will stay looking as if powerless through palsy of limbs, if even thus I may get rest. (Stands leaning on his staff).

तत इति। ('विदूषकः' इति राज्ञो नर्मसहायः विकृतवेशो विकलाङ्गो ब्राह्मणविशेषः' विषण्णः' खिन्न इव लक्ष्यमाणः 'प्रविशति')।

विदूषक इति। 'भो दिष्टम्' अहो मे भागधेयम्। अाँ मनः अदृष्टस्य गर्हणमेतत् ["दिष्टं दैवं भागधेयम्" इत्यमरः]। 'मृगयाशीलस्य' मृगयारतस्य 'एतस्य राज्ञो' दृप्यन्तस्य 'वयस्यभावेन' सखित्वेन ["वयस्यः स्निग्धः सवयाः" इत्यमरः] 'निर्विण्णः' खिन्नः 'अस्मि' ["निर्विण्णमनोपसर्गाभ्याम्" इति णत्वम्]। "ग्रीष्मेण" आतपेन 'विरला' मन्दा 'पादपच्छाया' यासु तथाविधासु 'वनराजिषु 'काननश्रेणिषु अस्माभिः अयं मृगः' एष हरिणो धावति 'अयं वराहः' इतो याति शूकरः एषः अयं शार्दूलः एष व्याघ्रः पलायते 'इति' एवम्प्रकारेण मध्याह्ने अपि' कठोरतमतामुपगतेऽपि दारुणतरे दिनमध्ये 'अटवीत' एकाम् अटवीं गुल्मं विहाय [ल्यब्लोपे कर्मणि पञ्चमी] 'अटवी' अन्या गुल्मः' आहिण्ड्यते' अनुधाव्यते। इत्येवं विहारे खेदकारणम्। 'पत्राणां गलितपर्णानां 'सङ्करेण' मिश्रणेन 'कषायाणि' आरक्तानि ["कषायो रसभेदे स्यात्" इत्युपक्रम्य "सुरभौ लोहिते त्रिषु" इति मेदिनी] 'कटुकानि' तीव्ररसानि गिरिनदीनां प्रस्रवणानां 'जलानि पीयन्ते'। इति पानीये खेदकारणम्। शूल्य "शूलपक्व' यत् 'मांसं तेन' भूयिष्ठः बहुलः 'आहारः' ओदनः 'अनियता वेला समयः यस्मिन् कर्मणि तत् यथा तथा 'भुज्यते'। अरुचिकरो गुरुपाकश्च ओदनः सोऽपि पुनरसमये, इति आहारे खेदस्थानम्। 'तुरगेण' अश्वेन यत् अनुधावनं मृगानुसरणं तेन 'कण्डिताः' कुण्ठिताः सन्धयः' यस्य तथाविधस्य मे रात्रावपि निकामं यथेष्टं 'शयितव्यं' नास्ति शय्यासेवनं न भवति। 'ततो रजन्यामतथैव यामे यदा स्वल्पं सुप्तं तदा दास्याःपुत्रैः' निन्दितजन्मभिः ["पुत्रेऽन्यतरस्याम्" इति कुत्सायां मलुक्] एभिः शकुनिलुब्धकैः' पक्षिव्याधैः 'महति एव प्रत्यूषे वनग्रहणाय वनवेष्टनाय यः कोलाहलः' आरावः तेन प्रतिबोधितोऽस्मि यथा विहारे तथा पाने च आहारे च

तथैव पुनर्मे शयने खेदः—अहोमि दूरदृष्टम्। 'इदानीम्' इति वाक्यालङ्कारे 'इयता अपि' एतावता च मे पीड़ा न निष्क्रामति' न क्लेशस्य अवसानम्। 'ततो गण्डस्य' स्फोटस्य 'उपरि पिण्डः' स्वल्पः स्फोटः 'संवृत्तः' जातः [ एषा लौकिकोक्तिः ]। तदेव दर्शयति—'ह्यः' पूर्वस्मिन् दिने 'किल अस्मासु अवहीनेषु' पश्चात् स्थितेषु मृगस्य' अनुसारः अनुसरणं तेन मृगमनुसृत्य इत्यर्थः आश्रमपदं तपोवनभूमिं प्रविष्टस्य तत्रभवतो राज्ञो दुष्यन्तस्य, प्रविष्टाय तत्रभवते इत्यर्थः ( चतुर्थीस्थाने षष्ठी ) तापस-कन्यका शकुन्तला मम अधन्यतया' दुरदृष्टेन 'दर्शिता'। मन्ये ममैव दग्धभाग्य राजानं तत्रवाहयित्वा शकुन्तलामस्मै दर्शयामास। 'साम्प्रतम्' अधुना शकुन्तलां दृष्ट्वा इत्यर्थः 'कथमपि' केनापि प्रकारेण 'नगरगमनस्य मनो न करोति,' सर्वथा नगरगमनं परिहर्तुमिच्छति। 'एवमेव' इत्याकारेणैव चिन्तयतः' दुर्भाग्यं पर्य्यालोचयतो 'मे अक्ष्णोः' अनिमीलितयोः लोचनयोः' अनिमीलती लोचने अनादृत्य ("षष्ठी च अनादरे" इति चकारात सप्तमी ) 'रजनी प्रभाता'। 'का गतिः' क उपायः। सर्वमेतत् सहनीयम्। यद्यपि ईदृशमनिशं खिद्यमानः अद्य च पुनर्जागत एव रात्रिर्याता, तथापि किं करिष्ये ? 'यावत् एनं राजानं 'कृतम्' अनुष्ठितम् 'आचारप्राप्त' यथाचारं कुलाचारोक्तं 'परिकर्म' सज्जा यद्वा कृतम् आचारात् प्रातःकृत्यं परिकर्म च येन तादृशं 'प्रेक्षे' द्रक्ष्यामि [यावद्योगे भविष्यति लट्] परिकर्मणि समाप्ते गत्वा तस्मै आत्मानं निवेदयामि इत्यर्थः। ( 'परिक्रम्य' रङ्गमञ्चं परितो गत्वा 'अवलोक्य' अग्रतो दृष्ट्वा च) एष 'प्रियो'मे'वयस्यः' मित्रं, राजा इत्यर्थः 'वनपुष्पाणां माला धारयन्ति' या ताभिः 'बाणासन' धनुः 'हस्ते' यासां ताभिः 'यवनीभिः' यवनरमणीभिः' परिवृतः' 'वेष्टितः' सन् 'इत एव' अस्यामेव दिशि 'आगच्छति'। अयं हि मृगयां प्रति चलित एव लक्ष्यते, मामपि मन्ये अन्विष्यन् आगच्छति इत्यर्थः। भवतु अङ्गानां भङ्गेन विकलो' जन्न इव 'भूत्वा स्थास्यामि, यदि एवमपि नाम विश्रमं' विश्रान्तिम् ("नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति घञि वृद्धिनिषेधः ) 'लभेय'। ( 'दण्डस्य' यष्टेः 'काष्ठम् अवलम्ब्य' तदाश्रित्य 'स्थितः' )। ["एवमेव चिन्तयतो मे प्रभाताक्ष्णोः रजनी" ( त-, न्या- )—'अद्यापि तस्य तामेव चिन्तयतः अक्ष्णोः प्रभातमासीत्' ( रा-, वि-, म- )॥ "कृताचारपरिकर्माणं" (म)—"कृताचारपरिक्रम" (रा-, वि-)—कृतदारपरिग्रह" ( ता-, न्या- ) ]॥

## NOTES

1. Summary—अथ प्रभातायां रात्रौ तामेव मुनिकन्यकां ध्यायता निरुत्साहेन राज्ञा मृगया प्रतिषिद्धा। ततो विदूषकेण सह इत्थमभूत तस्य शकुन्तलागतो मन्त्र :—

राजा। माधव्य, रमणीयैव किल सा।

माधव्यः। एवं चेत् राजग्राह्यं हि तत्। झटिति गृह्यते ?

राजा। दूरे पिता प्रदाता, कथं झटिति गृह्यते ?

माध। अस्ति तवाप्युपायः। ब्रूहि कीदृशी सा त्वयि।

राजा। ननु सानुरागा।

माध। तर्हि गान्धर्वोऽनुष्ठीयताम्।

एवं संवदमानयोस्तयोः कण्वशिष्याभ्यामागत्य यागविघ्नः विज्ञाप्य राक्षसवधार्थं राजा आहूतः। ततः सपदि सहर्षे राजनि सज्जे नगरात् राजमातुर्दूतः प्राप्तः। तस्मात् पुत्रकल्यार्थं तूर्णं नगरगमनं प्रति मातादेशं श्रुत्वा सम्भ्रान्तो राजा माधव्यमात्मनः प्रतिनिधीकृत्य ससैन्यं नगरं प्रेषयामास। तच्चवञ्चयन्नाह सखे ऋषिगौरवात्तपोवनं यामि मुनिसुतायां तु न प्रणयः। सोऽपि मूढस्तदेव तथा मेने। ततः स्वस्थो राजा भूयोऽप्याश्रमं ययौ।

2. ततः &c.—The jester enters with a dejected look. He is a Brahamana—the kings's companion—"विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः।" He should excite laughter by his deformities, speech and attire. He is powerfully timid. Here he bemoans his luck by "अहो दिट्ठम्"!

3. (a) दिट्ठम्—Raghava renders it दृष्टम्। "भोद्दिट्ठम्" is then a query. Have you seen ? दिट्ठम् is surely better. (b) मृगयाशीलसा—मृग अन्वेषणे + श भावेस्त्रियां निपातनात् मृगया hunting, chase. तां शीलयति इति मृगया + शील + णिच् + ण कर्त्तरि addicted to chase तस्य। (c) वयस्यभावेन—वयस्य Friend. तस्य भावः Friendship. तेन। इत्थं तृतीया। (d) निर + विद + क्त कर्त्तरि = निर्विण्णः disgusted. तत्वम्। (e) एतस्य &c.—The king won't let me leave his side for a moment, he is

so fond of me But how can I, a cripple, keep pace with him when he is rushing at a break neck speed after the quarry. All relish for life is gone out of me. O Luck!

4. अगं मृगः etc.—(a) From मध्यम् अह्नः—The middle of the day =we expect अह्नर्मध्यम् because the rule for एकदेशिसमास mentions पूर्व, अपर, अधर उत्तर only, not मध्य also. But पाणिनि himself refers to सायाह्न—The end of the day—in the rule 'संख्या-वि-सायपूर्वस्या अह्नस्य अहन् अन्यतरस्यां ङौ' । Hence the inference is—"सर्वोऽपि एकदेशः अह्ना समस्यते"—all parts are compounded with अहन् in an एकदेशिसमास । Some go even further and say सर्वोऽप्येकदेशः कालेन समस्यते । The समास being thus allowed we get पूर्वनिपात of मध्य giving मध्य+अहन् । Then with समासान्त टच् the rule "अह्नोऽह्न एतेभ्यः" directs अह्न to be substituted after an एकदेश । Hence मध्याह्न । Next by the rule "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" this ought to be neuter because अहन् is neuter. But the rule "रात्राह्नाहाः पुंसि" interferes and we get मध्याह्नः । तस्मिन् । (b) ग्रीष्म etc.—ग्रीष्म Heat आतपः, or Summer निदाघः । ग्रीष्मेण विरला ग्रीष्मविरला scanty because of summer. सह्सुपेति समासः । पादैः पिबति इति पाद्+पा+क कर्तरि=पादपः a tree, जातावेकवचनम् । पादपस्य छाया पादपच्छाया the shade of a tree. ग्रीष्मविरला पादपच्छाया यासु । Or पादपानां छाया पादपच्छायम् । Neuter by the rule 'छाया बाहुल्ये' । ग्रीष्मविरलं पादपच्छायं यासु । Most trees shed their leaves towards the end of winter and do not get back their full foliage before the rains. Hence the shade is poor in summer * (c) वनराजिषु—वनानां राजयः rows of forests. तासु । (d) आ+हिण्ड गतौ+लट् ते कर्मणि (हिण्डते जिहिण्डे, आहिण्डिष्ट) । (e) आहार, विहार, शयन these are the main headings on the physical side under which the pleasures of life may be arranged. The Jester here shows how wretched his life has now become so far as विहार is concerned.*

5. (a) पत्र &c.—सम् together+कॄ+अप् भावे सङ्करः mixture, पत्राणां सङ्करः admixture of leaves. तेन कषायाणि । सह्सुपेति समासः । (b) गिरि etc.—गिरौ नद्यः or गिरिसम्भवा नद्यः गिरिनद्यः or गिरिणद्यः

* Adopted by Prof. Gajendragadkar.

mountain streams. The ण is optional by the Varttika 'गिरिनद्यादीनामुपसंख्यानम्'।

6. (a) अनियत etc — नि + यम + क्त + कर्मणि = नियता restricted. i.e. fixed. न नियता not fixed, i. e. irregular. नञ् तत्—। (b) शूले संस्कृतम् इति शूल + यत = शूल्यम् roasted on spits. शूल्यं मांसम् spitted meat कर्मधा—। तेन भूयिष्ठ इतत्—। (c) आहार is a wide term including पान and भोजन। Here he first speaks of पान—The water we drink is brown and bitter. Next भोजन is described—We have to eat half-roasted tough meat, and even that not in time! It seems more natural to render अश्यते by अद्यते, but all commentators have भुज्यते।*

7. (a) तरग etc. – अनु + सृ वेगगमने + ल्युट् भावे = अनु + धौ + ल्युट् – अनुधावनम pursuit; तुर त्वरित गच्छतीति तुर + गम + ड कर्तरि = तरगः a horse. तेन अनुधावनम galloping on horse back इतत्—। This may be to keep company with the king or independently. तेन कण्डिता: dislocated by galloping etc. कडि भेदने चुरादौ परस्मैपदी। [b] नि + कम + घञ् कर्मणि = निकामम as much as desired, i e enough क्लीवत्वमभिधानात् इति वाचस्पति। तत यथा तथा। Qualifies शयितव्यम। [c] My joints ache at night as if broken and I do not get sufficient sleep to refresh myself.

8, (a) तत: etc.—प्रत्युषति दहति इति प्रति + उष क कर्तरि = प्रत्युषः dawn. (b) दास्या पुत्र.—It is a compound—अलुक् समास। दासीपुत्र: is also possible. It does not mean that their mothers were actually slaves but used merely as an abuse (c) शकुनि etc.— शकुनि Bird. 'शकुनि. पुंसि विहग" इति मेदिनी। तेषु लुब्ध: a bird catcher स एव इति स्वार्थे क:। Or लुब्ध एव लुब्धक: hunter. शकुनिषु or शकुनानां लुब्धक:। तै। अनुक्ते प्रयोजके कर्तरि इया। This is a contemptuous reference to the beaters to the camp. The beaters' contingent is furnished by a class of people who are professional. hunters. This sort of war is quite congenial to them and they are the best qualified for it They hunt with bow and

* Adopted by Prof. Gajendragadkar.

arrow and a stick of tough bamboo. They kill birds and small game such as the hare, the rabbit etc. The meat they eat, and the feather and skin have a market value for them. Thus in a sense they are greedy and the jester rails at their greed calling them लुब्धक which primarily means 'greedy'. He says—With all their greed the sneak fellows avoid the tiger whose skin fetches a good price also the elephant whose tusks are alwayg highly prized. The wretches go at the poor bird ( शकुनि ) that has no fight in him. They are शकुनिलुब्धक mere birdcatchers. The contempt introducted by दास्याःपुत्र being thus substained in शकुनलुब्धक the sentence very happily becomes a droll exhibition of the jester's characteristic vanity—fancy such a despicable lot disturbing the slumber of the mighty biggame hunter Madhvya whose powers at chase even the king prizes !

N B —From certain southern manuscripts Prof. Gajendragadkar has unearthed the reading मृगयालुब्धक which he prefers to शकुनिलुब्धक। मृगयालुब्धक entirely misses the point of the jester's lament in this line. (d) वन etc—वनान्त पर्यन्तम् surrounding of the forests तस्यकोलाहलः। तेन। करणे इया। Prof. Gajendragadkar takes this as going against the reading शकुनिलुब्धक because he thinks the कोलाहल would scare away the birds and the hunters would fail to shoot down any of them. The fact however is just the reverse A large number of birds, particularly those that are most prized for the table—birds of the partridge class— cannot be shot at unless they are first raised from the thickets. Towards this end the hunters shout, throw stones and send in dogs. The birds are then killed while on the wing. (e) शयन is here taken up in two stages—the mere lying down and the sleep. Cp. "शयित सा"—K. V. It is painful to lie down ( कण्टकित-सन्धि). No sleep before the morning hours, but then the disturbance is awful. Thus his lot is miserable.

9. (a) पीड़ा—पीड + अ भावे trouble. (b) निष्क्रामति—निस् + क्रम + लटति। Goes out, i e. leaves. The disease has got hold of me. (c) The पीड़ा is वनवास and मृगया। It ceases by going back to town. But this has become almost out of the question now.* The reason follows.

10. (a) ह्य. etc.—ह्यस् is an अव्यय meaning पूर्वस्मिन् दिने। (b) अस्मासु—भावे सप्तमी। (c) अवहीनेषु—अव + हा त्यागे परस्मैपदी + क्त कर्मणि = अवहीना: left behind तैः। (d) तापस etc—तप: अस्यास्तीति तपस + अण् मत्वर्थे। कन्या एव कन्यका not usually कन्यिका। Just as तारा gives तारका not तारिका। Or कन्यिका also like इभ्यिका। तापसस्य कन्यका। (e) अधन्यतया—धनं लब्धा इति धन + यत् = धन्य blessed. Then धन्यता blessedness. अधन्यता cursedness. तया। अनुक्ते कर्त्तरि तृतीया। (f) नगरगमनस्य—चतुर्थ्यर्थे षष्ठी। Hence he does not want to go back to town, my troubles will not therefore cease.*

11. अत्रणो:—शेषे षष्ठी। अत्रणो: सम्बन्धे प्रमाता। Or अनादरे सप्तमी as in the Tika

12. (a) यावत् is अवधारणे। (b कृताचार &c —परिकर्म is अङ्गसंस्कार decoration, स्नानोद्वर्त्तनादि। आचारप्राप्त परिकर्म आचारपरिकर्म customary decorations. शाकपार्थिवादि। कृतम् आचारपरिकर्म येन।

13. (a) बाणासन &c —बाणा अस्यन्ते अनेन इति बाण + अस + ल्युट् करणे = बाणासनम् bow. तत् हस्ते यासां ताभि:। बहु—। See "प्रहरणार्थेभ्य:—"; हस्त is of गड्वादि too; hence the परनिपात। (b) वनपुष्प &c.—वनजानि पुष्पाणि wild flowers. शाकपार्थिवादि। तेषां माला। तां धारयन्तीति वनपुष्पमाला + धृ + णिच् + णिनि कर्त्तरि, स्त्रियाम्। ताभि:। Qual. यवनीभि:।

14 (a) अङ्ग etc.—विगता कला यस्य स विकल: deficient, hence powerless. अङ्गानां भङ्ग: failure of the limbs. तेन विकल: powerless through the failure of the limbs. (b) लभेय—लभ + ईयासुट्। प्रार्थनायां लिङ्।

15. Reading (a) इष्टम् for दिष्टम् ignores the drift of the Jester's speech. He is cursing his luck,* मम अधन्यतया' confirms this. (b) यद्यपि तस्य et. does not fit in with का गति:, because का गति:, shows he is still lamenting his own misfortune.

* Adopted by Prof. Gajendragadkar.

एवमेव etc. gives the cause for lament. Usually he takes a wink before the hunters commence shouting ; but last night owing to these distracting thoughts even that wink was denied him. Hence the lement का गतः etc Prof. Gajendragadkar prefers to read अद्यापि तस्य etc. because he thinks—(i) "अद्यापि तस्य" etc. logically follows "साम्प्रत…न करोति" । (ii) एवमेव चिन्तयतः…is self-contradictory because he enjoyed some sleep.

With reference to (i) we observe that साम्प्रत…न करोति is the fact that vitally affects the jester After having mentioned that it is superfluous—almost irrelevant—to add अद्यापि तस्य etc.

Besides how could the jester know that the king had no sleep ( अद्यापि तस्य &c ) ? He did not stay the whole night with the king On the contrary 'कृताचार ··प्रेक्षे'' "भवतु अङ्गभङ्गविकलः", in fact the entire conversrtion that follows, goes to show that the two had parted at night and were going to meet for the first time in the day then.

Regarding (ii) the self-contradiction is quite immaterial. People often say when sleep is disturbed.—'O I could not sleep at all last night,' meaning thereby not that there was absolutely no sleep, but that there was not enough of it. If this statement of the Vidushaka regarding himself is not to be tolerated, his testimony to the king s sleeplessness becomes still more intolerable. (c) कृतद्वार etc. seems absurd.

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा )। राजा ( आत्मगतम् )—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

( स्मितं कृत्वा ) एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते ।

(Then enters the king with attendants as described) KING (Aside)—True, my darling is not easily obtainable yet my mind is comforted by observing her gestures of love. Mutual solicitations give pleasure, even when love has not yet gained its object. (Smiling) Thus is eluded the suitor who has judged by his own wishes the working of the mind of his beloved person.

[ 'यथा' यद्वत् निर्दिष्टः तथैव 'परिवारो' यस्य, यवनीपरिवृतः इत्यर्थः ]

राजेति। अन्वयः—प्रिया सुलभा न कामम्, तु मनः तद्भावदर्शनाश्वासि। मनसिजे अकृतार्थेऽपि उभयप्रार्थना रतिं कुरुते। व्याख्या—'प्रिया' शकुन्तला 'सुलभा न' सुखप्राप्या न, सुदुर्लभा इत्यर्थः, 'कामम्' इत्येतत् अभ्युपगमार्थे। तर्हि त्यज्यतां तत्प्रार्थना इति चेत् न—'तु' किन्तु प्रियायाः सुदुर्लभत्वेऽपि मनः' चेतो मे तस्याः' शकुन्तलाया भावदर्शनेन अनुरागचिह्नं दृष्ट्वा आश्वासि' आश्वस्तं भवति। सुदुर्लभा प्रिया इति निराशस्य चित्तस्य शकुन्तलाया भावदर्शनात् किञ्चिदिव दुःखोपशमो भवति इति भावः। आश्चर्यं यत् दुर्लभा इति ज्ञात्वापि सुखं लभते इति हेतुमाह—मनसिजे कामे अकृतार्थेऽपि असिद्धेऽपि प्रार्थिते अलब्धेऽपि इत्यर्थः उभयोः' नायकनायिकयोः प्रार्थना' परस्पराभिलाषः रतिं कुरुते' जनयति। यथा अहमस्मिन् तथा अयमपि जनो मयि इति ज्ञानात् सुखम्। अतएव दुर्लभा शकुन्तला इति जानतोऽपि मम मयि तस्या अनुरागदर्शनात् प्रीतिर्भवति इति भावः॥ [ "दर्शनाश्वासि" ( स०, व्या०, म० ) "दर्शनायासि" ( रा०, वि० ) ]॥

[ स्मितं कृत्वा' ईषत् हसित्वा उत्कृष्टपात्रत्वात् 'स्मित'पदोल्लेखः] स्मितकारणमाह—'आत्मनः' स्वस्य अभिप्रायेण' चित्तवृत्त्या 'सम्भावित' निरूपिता इष्टजनस्य प्रीतिपात्रस्य 'चित्तवृत्तिः' येन तादृशः यथा अहमस्मिन् तथा अयं जनोऽपिमयि इति मन्यमानः प्रार्थयिता' प्रणयी विडम्ब्यते' वञ्चनां लभते। शकुन्तलायाश्चेष्टितानि कन्दर्पकृतानि इति कोऽत्र निर्णयः? प्रणयवान् अहं न केवलं तानि कामकृतानि मन्ये अपितु मद्विषयाणि ततश्च मे आश्वासोऽपि, इत्यहो विडम्बना—इति स्मितम्।

## NOTES

1. यथानिर्दिष्ट &c—परिव्रियते अनेन इति परि+वृ+णिच्+अच् करणे

=परिवार or परीवार: attendents etc. "उपसर्गस्य घञि अमनुष्ये बहुलम्" इति अमनुष्ये दीर्घविकल्प: ॥ यथा निर्दिष्ट: यथानिर्दिष्ट as described. सुप्सुपेति समास: । तादृश: परिवारो यस्य तद्वहु ।

2. (a) प्रिया न सुलभा—She is प्रिय yet not सुलभ । This should cause anguish and despair. But it does not. The reason follows—(b) मनस्तु &c.—तस्या भाव: । तस्य दर्शनम् । तेन साधु आश्वसिति इति तद्भावदर्शन + आ + श्वस + णिनि कर्त्तरि । Mind derives comfort on seeing her indications of love. I admit there is ground for anguish and despair, but lo! I derive comfort by merely watching her. (c) अकृतार्थे—कृत: अर्थ: यस्य येन वा कृतार्थ: having the object accomplished, बहु—न कृतार्थ: । (d) मनसिजे—मनसि जात: इति मनस् + जन + ड कर्त्तरि भूते = मनसिज: love; also मनोज: । तस्मिन् । (e) उभयप्रार्थना—प्र + अर्थि + युच भावे = प्रार्थना solicitation. उभयो: प्रार्थना । उभ becomes उभय when compounded. वृत्तिविषये उभशब्दस्य नित्यमयच् प्रत्ययो भवति । उभ is dual and विशेष्यलिङ्ग but उभय is usually singular and neuter. (f) The second half of the sloka supports the first half. Hence we have अर्थान्तरन्यास of the kind सामान्येन विशेष समर्थनम् । See under "आ परितोषाद्विदुषाम्" etc. Prelude. (g) Compare—"परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयो:"—मालविकाग्निमित्रम् ।*

3. Reading. With the reading दर्शनायासि explain तद्भावदर्शनाय आयस्यति इति तद्भावदर्शनायासि tries to watch her gestures of love. The second half offers the reason. Because उभयप्रार्थना रतिं कुरुते therefore तद्भावदर्शनायासि । From this it does not by any means follow that "तद्भाव" necessarily exists. There is merely the watching for indications; that is all. On the other hand तद्भावदर्शनाश्वासि implies two things—(1) the assumption that तद्भाव really exists; (2) hopes cherished in consequence. If then the assumption is false, the situation becomes ludicrous, and justifies the smile and also the remark that follows.* I therefore prefer आश्वासि ।

* Adopted by Prof.

4. (a) आत्माभिप्राय &c.—अभि + प्रीञ् तर्पणे + भावे घञ् = अभि wish आशय: । Or अभिमुखं प्रकर्षेण अयते अनेनइति अभि + प्र + अय गतौ + घञ् करणे । सम् + भू + णिच् + क्त कर्मणि = सम्भाविता assumed प्रकल्पिता । आत्मन: अभिप्राय:, ६तत्— । इष्ट:जन: the desired person, i.e. the beloved. कर्मधा— । चित्तस्य वृत्ति: the operation of the mind ; इष्टजनस्य चित्तवृत्ति: । सम्भाविता इष्टजनचित्तवृत्तिर्येन बहु— । आत्माभिप्रायेण सम्भाविता इष्टजनचित्तवृत्ति: । ३तत् । Or आत्माभिप्रायेण सम्भाविता, ३तत्— । तथाकृता इष्टजनचित्तवृत्तिर्येन । बहु— । (b) The compound is an unusually long one for Kalidasa. But this is the reading of all the Recensions. The gist is—"I am comforted by the thought that Sakuntala loves me. What a delusion ! Where is the proof o her love ? I judge her feeling by my own. (Or—I assume that her feelings towards me are as I wish them to be.) Is not this ridiculous ?" This makes him smile.* Compare 'न हि स्वाभिप्रायेण मे दर्शनम्'—Act. III.

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो कामी स्वतां पश्यति ॥२॥

The soft glance that she cast even when directing her eyes elsewhere ; the slow dalliance like steps that she took through the weight of her hips, the annoyed manner in which the friend was addressed when opposed saying—"Do not go" —all that forsooth, relates to me ! Ah ! How a lover fancies he sees his own !

विदूषकः ( तथास्थित एव )—भो वअस्स ण मे हत्थपाआ पसरन्दि वाआमेत्तएण जआवीअसि—जअदु जअदु भवं [ भो वयस्य, न मे हस्तपादं प्रसरति । वाङ्मात्रेण जाप्यसे—जयतु जयतु भवान् ] ।

---

* Adopted by Prof. Gajendragadkar.

VIDUSHAKA (Remaining as described)—O Friend, my hands and feet do not move. You are being greeted with words only—Be thou victorious.

स्निग्धमिति । अन्वय :—अन्यतोऽपि नयने प्रेरयन्त्या तया स्निग्धं वीक्षितम् (इति) यत्, नितम्बयोः गुरुतया विलासादिव मन्दं यातं ( इति ) च यत्, मा गा इत्युपरुद्धया सा सखी सासूयम् उक्ता (इति) अपि यत, तत् सर्वं मत्परायणं किल । अहो कामी स्वतां पश्यति । व्याख्या—विजृम्भमाणैव प्रपञ्चयति । 'अन्यतोऽपि' अन्तः अन्यस्मिन् अपि वस्तुनि 'नयने' प्रेरयन्त्या' पातयन्त्या 'तया' शकुन्तलया 'स्निग्धं मुग्धं वीक्षितं दृष्टम् इति 'यत्' प्रकृत्या स्निग्धं तस्य यत् वीक्षणम् इत्यर्थः—'नितम्बयोः गुरुतया' दुर्वहत्वात् इत्यर्थः [हेतौ ३या] 'विलासादिव' भावव्यञ्जकचेष्टया इव [ हेतौ, ल्यब्लोपे वा ५मी ] 'मन्दं' धीरं 'यातं' चलितम् इति च यत्', 'मा गाः' मा याहि अस्मात् स्थानात् 'इति' अनेन प्रकारेण 'उपरुद्धया' निवारितया शकुन्तलया 'सा सखी' प्रियंवदा 'सासूयं' सकोपम् 'उक्ता' "किं निमित्तम्" इति दोषाविष्कारपूर्वकं कथिता, इति 'अपि यत्, 'तत् सर्वं मत्परायणं किल, मदाश्रितं' मामेव विषयीकृत्य कृतम्, इति न श्रद्दधे इत्यलीकं वा [ किल इत्यरुचौ । "वार्तायामरुचौ किल' इत्यमरः । अलीके च किल ] 'अहो' आश्चर्यं 'कामी' कामोपहतचित्तो जनः 'स्वताम्' आत्मीयतां स्वविषयाम् ["स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः ] 'पश्यति' । स्निग्धवीक्षणं मन्दगमनञ्च स्वभावः । सख्यामपि प्रतिकूलाचरणात् परुषभाषणम् । अत्र कुत्रापि नाहं कारणम् । अहन्तु मन्ये मत्कृते एव एतत् सर्वम् । धिक् स्वार्थचिन्तां कामिनाम् ॥ [ "प्रेरयन्त्या" (त-, न्य-, म- )—प्रेषयन्त्या" ( रा-, वि-) ॥ "कामी स्वतां" ( रा-, वि-, म- )—"कामः स्वतां" ( त-, न्य- ) ] ॥

विदूषेति । [ 'तथा' तद्वत् दण्डकाष्ठमवलम्ब्य 'स्थित एव' ] हस्तौ च पादौ च "हस्तपादं" करचरणम् [प्राण्यङ्गत्वात् एकवचनं नपुंसकता च] 'न प्रसरति' न कर्मणि प्रवर्तते । भवन्तं दृष्ट्वा आचारप्राप्तम् उपसर्पणं दण्डवत्प्रणामञ्च आशीर्वचनं मया कर्तुं न शक्यते । अतो 'वाङ्मात्रेण' वचसा एव' जाप्यसे' । अयं भावः-जयतु जयतु भवान्' श्रोतुं कथ्यताम् [ भवानस्य कर्ता जयिः ] ।

## NOTES

1. (a) स्निग्धम्—स्निह + क्त कर्त्तरि वर्त्तमाने soft. Qualifies वीचणक्रिया। स्निग्धवीक्षित was natural to her. It seems to be the same as मुग्ध-विलोकित referred to in "कृत इव मुग्धविलोकितोपदेशः"—Infra. (d) अन्यतः—अन्यस्यां दिशि or अन्यस्मिन् वस्तुनि इति अन्य+ङि (७मी)+तसि स्वार्थे। Compare इतः in "प्रयुक्तमपास्त्रमितः वृथा स्यात्"। अव्यय—अधि ७मी। (c) प्रेरयन्त्या—प्र+ईर+णिच्+शतृ स्त्रियाम्=प्रेरयन्ती casting. तया। There is little to choose between the reading प्रेरयन्त्या and प्रेषयन्त्या। (d) सासूयम्—असूञ+यक् कण्ड्वादि अ भावे स्त्रियाम्=असूया spite; "परदोषाविष्करणोसूया"। तया सह। Qualifies उक्ता। मा गा etc. refers to Priyamvada's "हला न ते युक्तं गन्तुम्"—and Sakuntala's "का त्वं विसृष्टव्यस्य रोद्धव्यस्य वा"—Act. I. (e) गाः—"माङि लुङ्" इति भविष्यति लुङ्। "इणो गा लुङि" इति गादेशः। "न माङ्योगे" इति अडागमनिषेधः (f) किल—This is sarcastic अरुचि। All these refer to me indeed! That is to say these have nothing to do with me (g) मत् etc. —अयते अनेन अस्मिन् वा इति अय+ल्युट करणे अधिकरणे वा—अयनम् track, पन्थाः resort आश्रयः। परं प्रधानम् एकम् इत्यर्थः अयनं परायणम् (?) the sole subject. कर्मधा—। अहं परायणं यस्य of which I am the subject. (h) कामी स्वतां पश्यति is a parapharase of—आत्माभिप्राय-सम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता।*

2. (a) वागेव इति वाङ्मात्रम् speech only, मयूरव्यंसकादि। नित्यसमासः। तेन। 'मात्रं कार्त्स्न्येऽवधारणे"। Here अवधारणे। (b) जाप्यसे—जि+णिच्+लट् से कर्मणि। जि becomes जा when णिच् follows by "क्रीङ्-जीनां णौ', जि here does not mean "to conquer." It means "to prosper" उत्कर्षप्राप्ति and is अकर्मक। "जयतिर्याभिभवयोरार्द्येऽर्थेऽस्याव-कर्मकः उत्कर्षप्राप्तिरार्थोऽर्थः द्वितीयेऽर्थे सकर्मकः॥"

**राजा—कुतोऽयं गात्रोपघातः ?**

KING—Whence is this palsy of limbs ?

**विदूषकः—कुदो किल सअं अच्छी आउलीकरिअ अस्सु-**

---

* Adopted by Prof. Gajendragadkar.

कारणं पुच्छेसि [ कुतः किल स्वयमक्षि आकुलीकृत्य अश्रुकारणं पृच्छसि ] ।

VIDUSHAKA—Why indeed do you ask the reason for tears after having troubled the eye yourself ?

राजा—न खल्ववगच्छामि ।

KING—Surely, I do not understand.

विदूषकः—भो वअस्स जं वेदसो कुज्जलीलं विडम्बेदि तं किं अत्तणो पहावेण णं णईवेअस्स [भो वयस्य, यत् वेतसः कुब्जलीलां विडम्बयति तत् किमात्मनः प्रभावेण ननु नदीवेगस्य ] ।

VIDUSHAKA—O friend, is it through its own power or the force of the current, that the cane imitates the gait of the humpback.

राजेति । 'अय' गात्राणाम् 'उपघातः' स्तम्भः 'कुतः' कस्मात् प्राप्तः ।

विदूषेति । 'स्वयम्' आत्मना 'अक्षि' कस्यापि जनस्य चक्षुः 'आकुलीकृत्य' अङ्गुल्यादिना जलाविलं कृत्वा 'अश्रुणः कारणं' हेतुं किल पृच्छसि कस्मात् पृच्छसि ? अयं ते प्रश्नो न मे रोचते [ किल इत्यरुचौ ] ।

राजेति । 'न अवगच्छामि' न बुध्यते मया ।

विदूषेति । 'वेतसः' जललताभेदः 'कुब्जस्य, गुप्तपृष्ठस्य जनस्य लीलां' चेष्टां 'विडम्बयति' अनुकरोति 'यत् तत् किम् आत्मनः' वेतसस्यैव 'प्रभावेण' महिम्ना 'ननु' उत 'नदीवेगस्य' स्रोतसः ? आक्षेपे ननु । अत्र पञ्चमीकं प्रस्तुत्य तदाक्षेपको द्वितीयः प्रस्तुतः [ "नन्वाक्षेपे परिप्रश्ने" इति हैमः ॥ "ननु" ( रा-, वि-, म- )—"अथवा" ( त-, ना- ) ] ॥

1. गात्रोप &c.—उपहननम् इति उप + हन + घञ भावे उपघातः powerlessness. See Tika. In this sense वाचस्पति quotes 'तथात्वश्चेदिन्द्रियाणामुपघाते कथं स्मृतिः ।"

2. कुतः किल etc.—The point is—You are the cause of all this trouble and yet you ask what ails me ! This is queer.*

* Adopted by Prof. Gajendragadkar.

3. भो वयस्य &c.—(a) वैतस &c. refers to the water cane. The force of the current bends it and its movoments are hence like those of a hump-back; वैतसी वृत्ति is proverbial for 'yielding to force' ; cp. "आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम्"—Raghu IV. (b) प्रभावेण—भवनम् भावः । घञ् भावे । प्रकृष्टो भावः प्रादितत—। तेन। Hence Bhattoji makes ण optional by the rule "प्रातिपदिकान्तनुम्विभक्तिषु च"। The न is विभक्तिस्थ ; thus प्रभावेन or प्रभावेण । But the Vrittikara allows only प्रभावेन । (c) Reading—ननु implies आक्षेप disapproval. Two alternatives are suggested. आत्मनः and नदीवेगस्य, with disapproval of the former. It is not a mere question with an indication of the answer wanted ; something like—"Are you the master here or I" put by the owner of a house to an intruder,* अथवा would make it a simple question. Hence I prefer ननु ।

राजा—नदीवेगस्तत्र कारणम् ।

KING—There the river current is the cause.

विदूषकः—मम वि भवं [ ममापि भवान् ] ।

VIDUSHAKA—And of me thyself.

राजा—कथमिव ।

KING—How so.

विदूषकः—एव्वं राअकज्जाणि उज्झिअ एआरिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं, जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखोहिअसंधिबंधाणं मम गत्ताणं अणीसोम्हि संवुत्तो । ता पसीदु मे एक्काहम्मि दाव विस्समीअदु [ एवं राजकार्य्याणि उज्झित्वा एतादृशे आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यं यत् सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां मम गात्राणाम् अनीशोऽस्मि संवृत्तः । तत् प्रसीद मे, एकाहमपि तावत् विश्रम्यताम् ] ।

---

* Adopted by Prof. Gajendragadkar.

VIDHUSHAKA—Having left your royal duties you have to live so much as a forester in a wild tract like this, that really I have become powerless over my limbs, the ligatures of the joint of which have become thoroughly shaken by every day chasing beasts of prey. So favour me, do rest but a day.

राजेति। 'तव' तस्मिन् कुञ्जलीलाविडम्बने 'नदीवेग:' स्रोत: 'कारणम्' [कारणमिति नित्यं क्लीवे]।

विदूषकेति। 'मम अपि' सम्बन्धे भवान्' कारणम्।

राजेति। कथमिव' अहं कारणम्?

विदूषकेति। प्रत्यहं प्रकृतिभि: मेलनादीनि राज्ञ: कार्य्याणि तानि 'उज्झित्वा' त्यक्त्वा 'त्वया एतादृशे भयावहे 'आकुले' शङ्कुलाशून्ये 'प्रदेशे एवम्' ईदृशं 'वनचरवृत्तिना भवितव्यं'' वनचरेण इव वर्त्तितव्यम् वन्यवृत्तिस्ते ईदृशी सञ्जाता इत्यर्थ: 'यत् सत्य' प्रत्यहं' प्रतिदिनं 'श्वापदानां'व्यालमृगानां'समुत्सारणै: विद्रावणै: संक्षोभिता:'सञ्चालिता: 'सन्धिबन्धा: प्रत्यङ्गग्रन्थय: येषां तादृशानां मम गात्राणाम् अनीश:' अप्रभु: संवृत्तोऽस्मि' गात्रसञ्चालने नाहं समर्थ:। 'तत्' तस्मात् 'मे' मम सम्बन्धे 'प्रसीद' प्रसन्नो भव, 'एकम्' एकमात्रम् 'अह: अपि' एकम् दिनम् [ "राजाह:सखिभ्यष्टच्" इति टच्। अत्यन्तसंयोगे द्वितीया।] 'विश्रम्यतां' मृगयाया विरम्य विश्रान्तिर्लभ्यतां भवता। तेन ममापि विश्रम: स्यात् [ "यत् प्रसीद मे एकाहमपि तावत् विश्रम्यताम्" (त-, व्या-)— "तत् प्रसादयिष्यामि विसृष्टुं माम् एकाहमपि तावत् विश्रमितुम्" (रा, वि-, म-) ]।

NOTES

1. कथमिव—इव is वाक्यालङ्कारे।

2. (a) कुल is समूह। आहतानि कुलानि अस्मिन् आकुल: a place where all sorts of things are huddled together. तादृश: प्रदेश: a wild tract. तस्मिन्। (b) वने चरतीति वन+चर+ट कर्त्तरि = वनचर: or वनेचर:। तस्य वृत्ति: ; सैव वृत्तिर्यस्य तेन। बहु –। (c) Several editions have a stop after भवितव्यम्, and begin the next line with यत् सत्यम्। Construe You have to lead the life of a forester. Really I have become &c. यत् is idiomatic—वाक्यालङ्कारे। Or यत्सत्यम् is a compound अव्यय meaning Really. (d) अहनि अहनि = प्रत्यहम् daily. वीप्सार्थे अव्ययीभाव:।

टच् समासान्तः। प्रत्यहं is also allowable by the rule "तृतीयासप्तम्योर्बहुलम्"। Again an अव्ययीभाव ending with अन्, if the last word is neuter, takes टच् optionally. Hence प्रत्यहः is another form. (e) श्वापद &c.—शुनः पदानि the feet of a dog. श्व becomes श्वा by the varttika "शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु"। श्वापदानि इव पदानि एषां श्वापदाः having feet like those of a dog, i.e. having nails instead of hoops. Hence beasts of prey. सम्+उद्+सृ+णिच्+ल्युट् भावे समुत्सारणानि starting from their lair, See Tika. तैः। Plural shows this has to be done several times in the day. (f) संक्षोभित etc.—सम्+क्षुभ+णिच्+क्त कर्मणि=संक्षोभिता thoroughly shaken. सन्धीनां बन्धाः ligatures of the joints. Now See Tika.

3. (a) ईष्टे इति ईश+अच् (कर्त्तरि) or क कर्त्तरि=ईशः lord. न ईशः। (b) एकम् अहः इति एकाहः one day. टच् समासान्तः (see Tika)। 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्। तम्। "अह्नोऽह्न एतेभ्यः" इति अह्नादेशे प्राप्ते "उत्तमैकाभ्याञ्च" इति प्रतिषेधः। वि+श्रम+लोट ताम् भावे=विश्रम्यताम्।

4. Reading—तत् प्रसादयिष्यामि &c. is diffuse and less elegant than तत् प्रसीद। Beside the latter is more polite.*

राजा—(स्वगतम्)—अयं चैवमाह। ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः। कुतः—

न नमयितुमधिज्यमस्मि शक्तो धनुरिदमाहितसायकं मृगेषु।
सहवसतिमुपेत्य यैः प्रियाया कृत इव मुग्धविलोकितोपदेशः॥३॥

KING (Aside)—This man speaks thus ; mine too the heart thinking of the daughter of Kasyapa, is declined towards hunting. (Do you ask) Why ? This bow, strung and with the arrow set, I am not able to bend at the deer by whom instruction in guileless look was, as it were, given after having obtained the companionship of my darling.

राजेति। 'अयं' विदूषकः 'च एवं मृगयावैक्लव्यं विज्ञापयन् 'आह' भाषते। 'ममापि चेतः' चित्तं 'काश्यपस्य' कण्वस्य 'सुतां' शकुन्तलाम् 'अनुस्मृत्य' ध्यायत् मृगयायां

* Adopted by Prof. Gajendragadkar.

विषये 'विमुखं' जातम्। 'कुतः' इति चेत् शृणु—नेति। अन्वयः—अधिज्यम् आहितसायकम् इदं धनुः मृगेषु नमयितुं न शक्नोमि, यैः प्रियायाः सहवसतिम् उपेत्य मुग्धविलोकितोपदेशः कृत इव। व्याख्या—'अधिगता ज्या' मौर्वी येन तादृशम्, आरोपितमौर्वीकम् 'आहितः' संयोजितः 'सायकः' बाणः यस्मिन् तत् इदं मदीयं 'धनुः मृगेषु' हरिणेषु 'नमयितुम्' आकृष्टुं 'न शक्तः' समर्थः 'अस्मि' भवामि। किम्भूतेषु मृगेषु एतस्तसामर्थ्यम् इत्याह—'यैः मृगैः प्रियायाः' कान्तायाः शकुन्तलायाः 'सहवसतिं सहवासम् 'उपेत्य' लब्ध्वा सहवासरूपं दानं गृहीत्वा 'मुग्धानि' मधुरसरलानि यानि विलोकितानि' आलोकनानि [नपुंसके भावे क्तः] तेषु 'उपदेशः शिक्षा 'कृत इव' मुग्धविलोकनशिक्षारूपं प्रतिदानं दत्तमिव। ये प्रियाया उपदेष्टारः तेषु कथं बाणः पात्यताम्। [''अस्मि शक्तः'' (रा-, वि-, म-) – ''उत्सहिष्ये'' (त-, न्या-) ॥ ''मुग्धविलोकितोपदेशः'' ( रा-, वि-, म- ) —''लोचनकान्तिसंविभागः'' ( त-, न्या- ) ] ॥

## NOTES

1. विक्लव is विह्वल। Compare 'वैक्लव्यं मम तावदीदृशम्''—Act. IV.

2. [a] नम + णिच् + तुमुन् भावे नमयितुम् or नामयितुम्। Comp. ''अप्रयत्नोन्नमितानमत्फणैः.''—Magha I. 13 ( which see ). [ b ] सह एकत्र वसतिः सहवसतिः co-lodging. सहसुपेति समासः। ताम्। [c] इण् गतौ is प्राप्त्यर्थक here. उप + इ + ल्यप् = उपेत्य having received [d] प्रियायाः is better taken as पञ्चम्यन्त। [e] मुग्ध &c.—मुग्धानि विलोकितानि। कर्मधा—। तेषु उपदेशः सुप् सुपा। The idea in the second half is—they received ( उपेत्य ) the privilege of colodging [ सहवसतिम् ] from my darling [ प्रियायाः—५मी ] and in the return gave her ( कृत इव ) lessons as to how to look in a charmingly guileless way ( मुग्धविलोकितोपदेशः )।* Comp. ''ता राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु। व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि'' ॥—Kumara.

3, Reading—(a) उत्सहिष्ये in the future refers to what will happen when meeting a stag. (b) लोचनकान्तिसंविभागः share

* Adopted by Prof. Gajendragadkar.

in the beauty of eye. She shared lodging with them, they shared beauty of eves with her. (c) The idea is—The deer by the beauty of his eyes will remind me of the eyes of my darling and I shall not have the heart (उत्सहिष्ये) to shoot at them ( नमयितुं धनुः )। It is difficult to choose between the two sets of readings.

विदूषकः ( राज्ञो मुखं विलोक्य )—अत्तभवं किं वि हिअए करिअ मन्तेदि । अरण्णे मए रुदिअं आसि [ अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितम् आसीत् ] ।

VIDUSHAKA—[Watching the king's face ]—Your honour has got something in your mind and is muttering. I did the crying in a wilderness.

राजा—( सस्मितम् )—किमन्यत् अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

KING—[With a smile]—What else ? I stay in [today] because the words of a friend are not to be disobeyed by me.

विदूषकः—चिरंजीअ [ चिरं जीव ] । ( गन्तुमिच्छति ) ।

VIDUSHAKA—May thou live long ! Wants to go,

राजा—वयस्य तिष्ठ । सावशेषं मे वचः ।

KING—Stay, friend. My say is not over yet.

विदूषकः—आणवेदु भवं [ आज्ञापयतु भवान् ] ।

VIDUSHAKA—Let your honour command.

विदूषकेति । 'अत्रभवान्' पूज्यो [इति प्राग्व्याख्यातम् ], किमपि' वस्तु 'हृदये कृत्वा' मनसि धात्वा 'मन्त्रयते' जल्पति । एतत् 'मया अरण्ये रुदितम्' मम अरण्ये रोदनम् 'आसीत्' अरण्ये रोदनमिव निष्फलं मे वचो जातम [ "अरण्ये रुदितम्" इति लोकोक्तिः ] अन्यासक्तेन भवता यदुक्तं न श्रुतमेव । [ "अरण्ये मया रुदितमासीत्" ( रा॰, वि॰, म॰ )—"अरण्ये खलु मया रुदितम्" ( त॰, व्या ) ] ॥

राजेति। 'अन्यत्' अपरं किं मन्वये ? 'सुहृदो भवतो 'वाक्यं' मे 'अनतिक्रमणीयम् अलङ्घ्यम् 'इति' हेतोः 'स्थितोऽस्मि' मृगयागमनात् विरतोऽस्मि।

राजेति। अवशिष्यते इति 'अवशेषः' अवशिष्टं वस्तु। तेन सह सावशेषम्' असमाप्तम्। 'मे' वचः सावशेषम् उक्तादन्यत् अनुक्तमप्यस्ति तच्च शृणु इति भावः।

विदूषेति। अवहितोऽस्मि 'भवान् आज्ञापयतु' आदिश्यतां यत् श्रोतव्यं मया।

NOTES

1. (a) अरण्ये &c.—मया has अनुक्ते कर्त्तरि तृतीया। षष्ठी is barred by "न लोकाव्ययनिष्ठाखलर्थतृनाम्"। "अरण्ये रुदितम्"—weeping in a wilderness—does no good ; because no one listens, so relief cannot be expected. Hence the phrase has become proverbial for anything (not necessarily weeping) done in vain.* The construction is peculiar. अरण्ये मया रुदितम् इति यत् तदासीत्—It was as if I wept in a wilderness. Or मया कृतं रुदितम् अरण्ये आसीत् —my weeping was done in a wilderness. [c] The other reading "अरण्ये खलु &c" is more direct and simpler in construction.

2. सावशेषम्—अवशिष्यते इति अव+शिष+घञ् कर्मणि = अवशेष residue. तेन सह। वहु—। Also सहावशेषम्। With residue. i. e. unfinished.

**राजा—विश्रान्तेन भवता ममाप्येकस्मिन् अनायासे कर्म्मणि सहायेन भवितव्यम्।**

KING—When rested, you will have to help me too in a matter requiring no exertion.

**विदूषकः—किं मोदअखज्जिआए तेण हि अअं सुगहीदो जणो [ किं मोदकखादिकायाम्। तेन हि अयं सुगृहीतो जनः ]।**

VIDUSHAKA—Is it in eating sweet-meats ? Then indeed this has been well-chosen.

**राजा—यत्र वक्ष्यामि। कः कोऽत्र भोः।**

King—In what I will tell you. Hallow ! Who is here ?

( प्रविश्य ) दौवारिकः (प्रणम्य)—आणवेदु भट्टा [आज्ञापयतु भर्त्ता ] ।

(Entering) WARDER (bowing)—Let Sire command.

राजेति । 'विश्रान्तेन विनीतश्रमेण 'भवता ममापि एकस्मिन्' कस्मिंश्चित् 'अविद्यमान:' आयासः यस्मिन् तथाविधे सुकरे 'कर्मणि' सह अयते गच्छति इति 'सहायः' सचिवः तेन 'भवितव्यम्' ॥ यथा अहमधुना श्रमापनयकर्मणि ते सहायो भूतः तथा त्वमपि कस्मिंश्चित् कर्मणि मम सहायो भूयाः, तव ते क्लेशो न भविष्यति इत्यर्थः ।

विदूषकेति । 'मोदकानां लड्डुकानां 'खादनं' भक्षणं तदाख्या क्रीड़ा 'मोदकखादिका [ क्रीड़ायां ण्वुल्स्त्रियाम्] तस्यां 'किं' सहायमिच्छसि ? 'तेन हि' तदा "तु अयं मद्रूपो जनः सुग्टहीतः' सुष्ठु चिन्तितः । "अनायासे कर्मणि" इति भवता उच्यते, किन्तु क्रीडां विना सर्वत्र क्लेशः । क्रीडास्वपि लड्डुकभक्षणम् अतीव सुकरम यदि तव सहायमिच्छसि, मत्तो योग्यतरः सहायो न लब्धव्यः इति भावः ।

राजेति । 'यत्र' यस्मिन् कर्मणि अहं 'वक्ष्यामि' तत्र त्वं सहायो भूयाः 'कः' अत्र आस्ते 'भो कः' अत्र द्वारि तिष्ठति ? इति दौवारिकम् आह्वयति [ वाक्यभिन्नत्वे वीप्साभावान्न कस्कादिः ] ।

विश्येति । आह्वानं श्रुत्वा 'प्रविश्य द्वारि नियुक्तः दौवारिकः [ "तत्र नियुक्तः" इति ठक् ] प्रणम्य अभिवाद्य आह—'भर्त्ता' स्वामी 'आज्ञापयतु' आदिशतु पाल्यते मया ।

NOTES

1. (a) विश्रान्तेन—श्रम + क्त भावे = श्रान्तम् fatigue श्रमः । विगतं श्रान्तं यस्य तेन बहु— । Or वि + श्रम + क्त कर्त्तरि = विश्रान्तः rested. तेन । (b) अपि—समुच्चये । I have helped you, do you too help me. (c) अनायासे—आ + यस + घञ् भावे = आयासः toil प्रयत्नः । Now See Tika. (d) सहायेन—सह अयते गच्छति इति सह + अय + अच्कर्त्तरि—सहायः a helper.

2. (a) मोदक &c.—मोदयति इति मुद + णिच् ण्वुल् कर्त्तरि = मोदकः a kind of sweet meat. "मोदकः खाद्यभेदेऽस्त्री" इति मेदिनी । Bhanuj

has मौदयति in the आत्मनेपद। मोदका: खाद्यन्ते यस्यां क्रीडायाम् इति मोदक + खाद + ण्वु = अधिकरणे संज्ञायाम् = मोदकखादिका eating of sweet meats, तस्याम्। This is a peace of pleasantry. The king says अनायासे कर्मणि। The jester takes कर्म in the sense of क्रिया and mentions the name ( संज्ञा ) for the occasion ; or possibly it was current as a संज्ञा like अभ्रूषखादिका ,आचोषखादिका given in the Vritti, under the rule "संज्ञायाम्" Pan. 3. 3. 139.

3. क: कोऽत्र &c—We do not get कस्कोऽत्र because this is not a case of वीप्सा। We have two different sentences with two क्रिया understood. Thus क: आस्ते ? क: अत्र आस्ते ?

4. द्वारि नियुक्त इति द्वार + ठक = दौवार + ठक = दौवारिक by the rule "द्वारादीनाञ्च" i.e. when a तद्धित dropping ञ, ण, or क follows ऐ comes before य and औ before व of words of the द्वारादि class.

5. भर्ता – This is the way menials have to address the king "राजा स्वामीतिदेवेति भृत्यैर्भट्टेति चाधमै:"—Sahityadarpana.

6. आज्ञापयत्—आ + ज्ञा णिच + लोट त ॥ This in क्त gives आज्ञापित whereas ज्ञप of the चुरादि class gives आज्ञप्त: or आज्ञपित।

राजा—रैवतक, सेनापतिस्तावदाहूयताम्।

KING—Raivataka, let the Commander-in-chief moned.

दौवारिक:—तह [ तथा ]। ( निष्क्रम्य सेनापतिना सह पुन: प्रविश्य ) एसो अणुणवअणुक्कण्ठो इदो दिण्णदिट्ठी एव्व भट्टा चिट्ठइ। उपसप्पदु अज्जो [ एष आज्ञावचनोत्कण्ठ इतो दत्तदृष्टिरेव भर्त्ता तिष्ठति। उपसर्पतु आर्य्य: ]।

WARDER—(I do) as your majesty commands [Going out and coming back with the Commander-in-chief], Here, Sire is waiting, even with his eyes directed this way, eager to speak out the order. Let your honour approach,

* Adopted by Prof. Gajendragadkar.

सेनापतिः ( राजानमवलोक्य )—दृष्टदोषापि स्वामिनि मृगया केवलं गुणायैव संवृत्ता। तथाहि देवः—

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु क्लेशलेशैरभिन्नम्।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥४॥

( उपेत्य ) जयतु स्वामी। गृहीतश्वापदमरण्यम् किमन्यत्रावस्थीयते।

COMMANDER-IN-CHIEF ( Looking at the king )—Hunting though of known defects, has, in our lord, worked for good only. For like a hill-roaming elephant, sire shows, a frame which is the very essence of vigour, tightened in the forepart by incessant drawing of the bow-string, tolerent of the rays of the sun untouched by the slightest trace of fatigue, though reduced in bulk yet through hugeness not noticeable as such. (Approaching) Let our lord prosper. The forest has its beasts of prey tracked. Why does Sire stay away ?

राजेति। 'रैवतक' इति दौवारिकनाम। 'सेनापतिः' सेनानायकः तावत् 'आहूयताम्' आहूय इह आनीयताम्। ( आङ्पूर्वात् ह्वयतेः कर्मणि लोट् )।

दौवेति। 'निष्क्रम्य' रङ्गमध्यात् बहिर्गत्वा।

एष इति। 'एषभर्त्ता' स्वामी 'आज्ञायाः' आदेशस्य 'वचनम्' उच्चारणं तस्मिन् 'उत्कण्ठः' उद्ग्रीवः 'इतः' अस्यां दिशि 'दत्ता दृष्टिः' येन तादृश 'एव तिष्ठति' आस्ते 'आर्यः' भवान् 'उपसर्पतु' भर्त्तुः समीपस्थो भवतु।

सेनेति। 'मृगया' आखेटः 'दृष्टा' लक्षिताः 'दोषाः' क्रूरतादयः यस्यां तादृशी 'अपि स्वामिनि' भर्त्तरि दुष्मन्ते 'केवलं गुणाय' प्रकर्षाय 'एव संवृत्ता' जाता। मृगयाऽऽलोचनात् यथा देहोत्कर्षादयो गुणा आयान्ति तथा क्रौर्यादयो दोषा अपि। स्वामिन

गुणा एव जाता न तु ते दोषाः ["गुणायव" (त-, न्या·)—"गुण एव" (रा-, वि-, म-)] तानेव गुणान् आह 'तथाहि' इति ।

अनेति । अन्वयः—गिरिचरः नागः इव देवः, अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं, रविकिरणसहिष्णु, क्लेशलेशैः अभिन्नम् अपचितमपि व्यायतत्वात् अलक्ष्यं, प्राणसारं गात्रं बिभर्त्ति । व्याख्या—गिरौ' पर्वते चरति विचरतीति गिरिचरः ["चरेष्टः" इति टः] पर्वतविहारी नाग इव' गज इव देवः' स्वामी अनवरतं' निरन्तरं धनुर्ज्यायाः' धनुःसंयुक्तस्य गुणस्य आस्फालनेन' आकर्षणेन क्रूरः' कठिनः पूर्वकायो यस्य तादृशम् रविकिरण'' सौरकरसहिष्णु सहनशीलम् [ "न लोक—" इति कारकषष्ठीनिषेधः ] क्लेशस्य श्रमखेदस्य लेशैः गन्धेनापि अभिन्नम् असंपृष्टम् अपचितं कर्कशविहारात् एभिर्दिनैः क्षीणम् अपि व्यायतत्वात् विशालत्वात् अलक्ष्यं क्षीणत्वेन अप्रतीयमानं प्राणस्य' बलस्य' [ "प्राणोऽनिलेबले" इति हैमः ] सारं स्थिरांशमिव [ "सारो बले स्थिरांशे च" इत्यमरः ] गात्रं शरीरं बिभर्त्ति धारयति ॥ [ क्रूरपूर्वम्" ( रा- वि- म- )—"क्रूरकर्मा" (त- न्या-) ॥ 'सहिष्णु' (रा- वि- म-)—सहिष्णुः" (त- न्या-) ॥ "क्लेश" ( म )—खेद" ( रा- त- वि- न्य- ) ॥ अभिन्नम्" (रा- वि- म-)—"अभिन्नः" ( त. न्या ) ॥ उपेत्येति । 'उपेत्य' समीपं गत्वा आह—स्वामीजयतु जयेन युज्यताम् । गृहीता·' निरूपिताः श्वापदा' व्यालमृगा यस्मिन् तथाविधं जातम् अरण्यम् । कुत्र कश्चित् व्याघ्रः अस्ति कुत्र वा वृकः इति सर्वमस्माभिः परिज्ञातम् । तत् अन्यत्र वनम् अनवगाहमानः अत्रैव देशे 'किं' किमर्थम् अवस्थीयते' देवेन ? झटिति तत्र तान् व्यापादयतु स्वामी ।

## NOTES

1. (a) आज्ञा &c.—ब्रू or वच + ल्युट भावे = वचनम् speaking. uttering. आज्ञायाः वचनम् uttering the command. उन्नतः कण्ठः यस्य उत्कण्ठः Lit. With the neck uplifted ; but this indicates anxiety. Hence उत्कण्ठः means anxious, eager. (b) इतः—इदम् + ङि (ओ) + सार्वे तस् this way.

2. (a) दृष्टदोषा—Which is known to produce evil effects, (not that दृष्ट does not exist). (b) स्वामिनि—The general is a servant (भृत्य); but he is a high officer ; hence he addresses the

king as स्वामिन्! Contrast भर्त्ता तिष्ठति of the दौवारिक। केवलम्—Alone, i.e. the exclusion of दोष। (d) गुणाय—गुणम् आधातुं संवृत्ता—गुणाय संवृत्ता, "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति कर्मणि चतुर्थी। (e) देव:—Compare "राजा स्वामीति देवेतिभृत्यैर्भर्त्तेति चाधमैः।

3. Reading.—इष्ट in इष्टदोषा and केवलम् go against the reading गुण: for गुणाय। If the former were intended, the poet would have probably said दोषोऽपि स्वामिनि मृगया गुण एव संवृत्ता। Besides मृगया स्वामिनि गुण: conveys no meaning. Because in the first place मृगया is not a गुण, at least the poet cannot call it a गुण having described it as इष्टदोषा; that which is इष्टदोषा, i. e. prossess or imparts दोष cannot be itself a गुण। इष्टगुणा may be allowed but not गुण एव। Secondly, मृगया cannot reside in स्वामिनि because it is not a गुण; the epithet इष्टदोषा gives it a धर्म and makes it धर्मिन्, i.e. a द्रव्य।

4. (a) अनवरत=etc.—अव+रम+क्त कर्त्तरि=अवरतम् ceased, न अवरतम् नञ्तत्—। धनुःस्थिता ज्या धनुर्ज्या string attached to the bow शाकपार्थिवादि। Separate mention of धनुस् is necessary here, because pulling the ज्या alone is no exercise. Prof. Gajendragadker objects that by parity of reasoning ज्याशब्देनैव दूरतः in Act III, should have been धनुर्ज्याशब्देनैव दूरतः। Not at all. The mention of शब्द implies that the ज्या is attached to the धनुस् because the ज्या alone has no शब्द। Hence separate mention of धनुस् is unnecessary. But the ज्या attached to the धनुस् (धनुःस्थिता) works as an excellent chest expander, तस्या आस्फालनम् the drawing of the string attached to the bow. अनवरतं यथा तथा धनुर्ज्यास्फालनम् Incessant drawing of etc. सहसुपेति समासः। With आस्फालनक्रूर compare आस्फालनकर्कश in "ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः:"—Kumara. तेन क्रूरपूर्वम्। इतत्—। क्रूरकर्मा or क्रूरपूर्वः implies censure, and is therefore rejected (b) रविकिरण सहिष्णु। सहसुपेति समासः। Vamana however takes these under "गमिगाम्यादि" and makes द्वितीया तत्—compounds with them. N. B.—षष्ठी समास as रविकिरणस्य सहिष्णु may also be got here.

(c) क्लेशशं:—Almost all editions read स्वेद for क्लेश। But the most valued of the benefits obtained from active exercise is श्रमजय—power to bear fatigue. If we omit क्लेश there is nothing in the sloka to refer to this; कालिदास refers elsewhere to श्रमजय as a गुण deriveable to मृगया। Thus "परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिंगितबोधनम्। श्रमजयात् प्रगुणाञ्च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ।" Raghu IX. This is a reason for retaining क्लेशशं:। There are also reasons to reject खेदलेशं:। In the first place absence of sweat (खेद) is almost a disease. Secondly कालिदास frequently refers to perspiration being allayed by the breeze after a hunt Thus—"तस्य कर्कशविहारसम्भवं खेदमाननविलग्नजालकम्। आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः॥"* etc. (n) व्यायतत्वात्—वि + आ—यम + क्त कर्मणि = व्यायतः vast, विशेषेण आयतः इत्यर्थः। तस्य भावस्तस्मात्। इति पञ्चमी। A slight reduction in a huge body is not noticed. Hence, व्यायतत्वात् (through hugeness) अलक्ष्यम् not noticeable. (e) अलक्ष्यम्—लक्ष + णिच + यत् कर्मणि लक्ष्यम् noticeable. न लक्ष्यम् not noticeable, i. e. that which cannot be noticed as reduced. (f) प्राणसारम् = Raghava explains प्राणो बलमेव सारः स्थिरांशो यत्र तत् with vigour alone left.

5. गृहीत etc.—The General here feigns keenness—The beasts are tracked already. Sire is wasting precious time. Later, it would be too late for good sport!* For श्वापद see श्वापदसमुत्सारणं:—Ante. pp, 207.

**राजा—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन।**

KING—I am rendered feeble in my ardour by Madhavya who denounces hunting here.

**सेनापतिः (जनान्तिकम्)—सखे स्थिरप्रतिबन्धो भव। अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये। (प्रकाशम्) प्रलपत्वेष वैधेयः। ननु प्रभुरेव निदर्शनम्।**

---

* Adopted by Prof. Gajendragadkar.

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥५॥

GENERAL (Aside)—Be of firm opposition my friend, I will but follow the bent of sire's mind. (Aloud) The fool is raving. Why, your majesty himself is the proof. The body becomes light and fit for exertion, with the waist thin from reduction of fat. The minds of animal, as disturbed in fright and anger, are noticed too. That indeed is the excellence of archers that arrows succeed in a moving mark. Verily, they falsely call chase a dissipation. Whence is such pleasure ?

राजेति। मृगयाम् अपवदितुम् निन्दितुं शीलमस्य भीरुत्वात् इति मृगयापवादी आखेटनिन्दकः, तेन माधव्येन तन्नाम्ना विदूषकेन 'मन्दः' हीनः उत्साहः' आग्रहो यस्य तथाविधः आस्थाहीनः कृतोऽस्मि' अतोऽब्रवीत्।

सेनेति। ('जनान्तिकम्' राज्ञा अश्रुतं यथा तथा माधव्यं प्रति आह) 'स्थिरः' अचलः 'प्रतिबन्धः' बाधा यस्य तादृशो 'भव'। 'चित्तस्य' चेतसो 'वृत्ति' व्यापारं छन्दमित्यर्थः 'अनुवर्तिष्ये' अनुसरिष्यामि। यदहं मृगयां स्तोष्यामि तत् स्वामिनस्तुष्टये, न हि स्वमतेन। तत् त्वं दृढं बाधस्व येन भर्ता मद्वच न करोत्येव। 'एष वैधेयः' मूर्खो माधव्यः 'प्रलपति' असम्बद्धं भाषते। अस्य उक्तं न सङ्गतम्। तत्र प्रमाणं किं ब्रूमः 'ननु प्रभुः स्वामी भवान् 'एव निदर्शनं' दृष्टान्तः। भवन्तं दृष्ट्वा एव ज्ञायते माधव्योक्तम् उन्मत्तप्रलापमात्रम्। ["प्रतिबन्धो" (रा-, वि, म-)—"प्रतिरोधो" (त-, न्या-)॥ "प्रलपत्येष" (त-, न्या-, म-) = "प्रलपत्वे" (र-, वि-)॥ "वैधेयः" (त-, न्या, वि-, म-) "वैधवेयः" (रा-)]॥ मेद इति। अन्वयः—वपुः मेदश्छेदकृशोदरं लघु उत्थानयोग्यं भवति। भयक्रोधयोः सत्त्वानां विकृतिमत् चित्तमपि लक्ष्यते। चले लक्ष्ये इषवः सिध्यन्ति (इति) यत् धन्विनाम् स च उत्कर्षः। मृगयां मिथ्या एव व्यसनं वदन्ति। ईदृक् विनोदः कुतः। व्याख्या—'वपुः' शरीरं

'मेदसो' वसायाः छेदेन' निरासेन 'कृशोदरं तनुमध्यं' दर्शनीयमित्यर्थः। अपि च 'लघु' उत्पतनक्षमं सत् उत्थानयोग्यम्' आयाससमर्थं 'भवति' तेन समरेषु अवसादं न भजते। 'भये क्रोधे' च 'सत्त्वानां प्राणिनां 'विकृतिमत् चित्तं' मनः 'लक्ष्यते' दृश्यते, एष भीतस्य बहिराकारः एष क्रुद्धस्य इति ज्ञायते, तेन च शत्रुसमागमे भीतोऽयं क्रुद्धो वा इति ज्ञात्वा कर्तव्यमाचरितुं शक्यते। 'चले' धावति 'लक्ष्ये शरव्ये 'इषवः' शराः सिध्यन्ति 'प्रसीदन्ति' चलदपि लक्ष्यं पातयन्ति इति, यत् 'धन्विनां' धनुर्धराणाम् (धन्वशब्दोऽप्यस्ति धनुःपर्य्यायः) 'स च' स एव (विधेयप्राधान्यात् पुंल्लिङ्गता) 'उत्कर्षः' नैपुण्यम्। तच्च नैपुण्यं मृगयाया लभ्यम्। यस्या एते गुणाः तां 'मृगयां मिथ्या' अकारणम् 'एव व्यसनं' दोषं 'वदन्ति पण्डिता' उदाहरन्ति ('मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः।" इति मनुः)। 'ईदृक्' एवं विधः 'विनोदः' प्रमोदः 'कुतः' कस्मात् अन्यस्मात् लभ्यते। प्रमोदः शिक्षा च युगपदेव मृगयाया भवति नान्यतः कुतोऽपि। तस्मादस्य निन्दावादोऽयमुपेक्ष्य एव॥

## NOTES

1. (a) सखे etc.—You oppose, I will honour! We can see now what to think of his keenness in the preceeding page (b) प्रतिज्ञा for प्रतिबन्ध seems unsuitable.

2. (a) वैधेयः—वि+धा+यत् कर्मणि=विधेयम् that which has to be enjoyed विधातव्यम् शास्त्रविधिः। तस्य अयम् (आधिकारी) इति विधेय+अण्=वैधेयः one who has yet to learn what the Sastras say or perhaps better, one who goes by the Sastras alone without reference to practical experience. When such a man takes to delivering lectures we must call it 'raving' (प्रलपति)। (b) ननु is आक्षेपे—in refutation of Vidushaka. Your majesty furnishes the best answer by your splendid physical development due to मृगया।*

3. (a) मेदश्छेद etc.—कृशम् उदरं यस्मिन् वपु—। मेदसःछेदः मेदश्छेदः, इतत्। तेन कृशोदरम्। इतत्—(b) लघु—Raghava says—मेदश्छेदकृशोदरं,

Adopted by Prof. Gajendragadkar

भतो लघु। But मेदश्छेद is the हेतु of लघुत्व and कृशोदरत्व as well. It seems better not to speak of कृशोदरत्व as हेतु of लघुत्व after having distinctly mentioned मेदश्छेद Say मेदश्छेदलघु or कृशोदरलघु but not both. I have therefore explained differently in the Tika. (c) उत्थानयोग्यम्—उद् + स्था + ल्युट् भावे = उत्थानम् exertion उद्योगः। तस्य योग्यम।

4 (a) धन्विनाम्—धन्व and धन्वन् both mean धनुस् bow. Hence धन्वम एषाम'स्ति, or धन्व एषामस्ति इति धन्व or धन्वन + इनि मत्वर्थे— धान्विनः archers तेषाम्। "धन्वा तु मरुदेशे ना क्लीवे चापे स्थलेऽपि च" इति मेदिनी। Ordinarily इनि is not avilable after धन्वन् and the गणकार cites it under the व्रीह्यादि class, so as to take इनि optionally by the rule "व्रीह्यादिभ्यश्च"। Panini s व्रीह्यादि is described by the गणकार as बलादि। There as an example of धन्विन् he quotes this very line from Sakuntala, thus—"धन्वी यथा—उत्कर्ष स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले"— Ganaratnamahodadhi Verse 425. (b) व्यसनम् —व्यस्यते कर्त्तव्यात् अन्यत्र नीयते अनेन इति वि + अस + ल्युट करणे।

**विदूषकः ( सरोषम् )— अवेहि रे उच्छाहहेतुअ। अत्तभवं पकिदिं आवण्णो! तुमं दाव अड़वीदो अड़वीं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्सवि मुहे पड़िस्ससि [ अपेहि रे उत्साहहेतुक। अत्रभवान् प्रकृतिमापन्नः। त्वं तावत् अटवीतः अटवीमाहिण्डमानः नरनासिकालोलुपस्य जीर्णर्क्षस्य कस्यापि मुखे पतिष्यसि ]।**

VIDUSHAKA—(Angrily)—Avanut! You tempter. His Highness has returned to his senses. You rushing from thicket to thicket, will surely fall into the mouth of some old bear fond of the human nose.

विदूषकेति। ( 'रोषेण' कोपेन सह भाह ) 'रे उत्साहस्य' उद्यमस्य 'हेतुः' कारणम् ( कुत्सिते कन् ), 'अपेहि' दूरे भव। 'अत्रभवान्' माननीयः राजा 'प्रकृति' स्वभावम् 'आपन्नः' प्राप्तः। त्वयेव उत्साहितः अयं मृगया यातु, अधुना तु प्रकृतिस्थः

तद्‌रूपसर। मन्ये 'त्वं तावत् अटवीत:' गुल्मात् 'अटवीं' गुल्मम् आविश्यमान:' आश्रमान: नराणां नासिकायां नरनासिकाभक्षी 'लोलुपस्य' सस्य हस्य 'कस्यापि जीर्ण-र्क्षस्य' इह्रभल्लूकस्य 'मुखे पतिष्यसि' तेन व्यापादयिष्यसे। ["अपेहि रे उत्साहहेतुक" (त-, न्या-, म- )। राघवविद्यासागरौ एतत् न पटत: ]।

NOTES

1. (a) उत्साह &c.—कुत्सित उत्साहहेतु: इति उत्साहहेत + कन् or क। (b) नरनासिका etc.—गर्हितं लुम्पति इति लुप् + यङ + अच् कर्त्तरि भावगर्हायाम् =लोलुप: greedy. (c जीर्ण: ऋक्ष: जीर्णर्क्ष: or जीर्णऋक्ष:, तस्य। Beasts of prey take to man-eating when they get old जीर्ण: or otherwise unable to hunt. Probably the bear considers the human nose as delicacy. "भल्लूका मनुष्याना नासिका ग्रहन्ति"—Dasakumara quoted by Monier Williams.

राजा—भद्र सेनापते, आश्रमसन्निकर्षे स्थिता: स्म:। अतस्ते वचो नाभिनन्दामि। अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षति: पल्वले
विश्रामं लभतामिदञ्च शिथिलज्यावन्धमस्मद्धनु:॥ ६॥

KING—Good General. we are staying near a hermitage. So I do not endorse your remark. To-day, then let the buffaloes plunge into the waters of pools tossed up repeatedly with their horns ; let the deer-tribe practise ruminations in herds formed under shades ; let the digging up of bulbs be quietly done by rows of boars in shallow lakes ; and let this bow of ours enjoy rest with grip of the string loose.

राजेति। 'भद्र' सौम्य 'सेनापते आश्रमस्य सन्निकर्षे समीपे 'स्थिता: स्म:' तिष्ठाम: 'अतो' हेतो: 'ते वचनं न अभिनन्दामि' न आद्रिये॥ ["सन्निकर्षे" ( त-, न्या- )—"सन्निकृष्टे" ( रा-, वि- )—"सन्निकृष्ट" ( म- ) ]॥ गाहन्तामिति। अन्वय:—

महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं गाहन्ताम्। मृगकुलं छायाबद्धकदम्बकं रोमन्थमभ्यस्यतु। वराहततिभिः विस्रब्धं पल्वले मुस्ताक्षतिः क्रियताम्। इदम् अस्मद्धनुश्च शिथिलज्याबन्धं (सत्) विश्रामं लभताम्। व्याख्या—'महिषा निपानस्य उपकूपजलाशयस्य 'सलिलं' जलं शृङ्गैः विषाणैः 'मुहुः' वारं वारं 'ताडितम्' उच्छलितं यथा तथा 'गाहन्तां' विशन्तु, त्रासाभावात् स्वच्छन्दं जले मज्जन्तु। मृगकुलं' हरिणयूथम् अनुद्वेजित छायायां बद्धकदम्बकं' रचितसंघ सत् 'रोमन्थ' चर्वितचर्वणम् 'अभ्यस्यतु' अनुशीलयतु॥ 'वराहाणां' शूकराणां 'ततिभिः' श्रेणिभिः' विस्रब्धम् असम्भ्रमं यथा तथा 'पल्वले' क्षुद्रसरसि [जातावेकवचनम] 'मुस्तानां' घासमूलानां 'क्षतिः' उत्खननं 'क्रियतां' विधीयताम्। 'इदम्' एतत् 'अस्माकं धनुश्च शिथिलः' अदृढः 'ज्याबन्धः' मौर्वीबन्धनं यस्मिन् तथाभूत सत 'विश्राम' व्यापारविरतिम [घान्तात् पचाद्यच्। व्यवस्थितविभाषाश्रयणम्न वृद्धिः] 'लभतां प्राप्नोतु, निर्व्यापारं तिष्ठतु इत्यर्थः॥ ["विस्रब्ध" (रा-, वि-, म-)—"विस्रब्धैः" (त-, न्या-)॥ "तति" (वि- म-) —"पति" रा-, ता-, न्या-)]॥

NOTES

1. (a) सेनापते—This address pays the General a compliment You being the सेनापति—the leader of the forces—this ardour suits you very well, but there are other considerations. We are near a hermitage and must not think of disturbing the ascetics by our shouting and yelling &c (b) With the reading सन्निकृष्टे explain सन्निकृष्टे देशे।

2 (a) निपान &c.—निपीयते अस्मिन् इति नि+पा+ल्युट् अधिकरणे= निपानम् a pool. "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः। Here उपकूपजलाशय—a trough near a well—does not apply. Such a trough is not possible in the wilderness. It is better taken as any piece of shallow water. (b) शृङ्गैर्मुहुस्ताडितम is an adverbial phrase qualifying गाहन्ताम। See Tika. Raghava takes it as qualifying निपानसलिलम (c) छाया etc.—कदम्ब means समूह। "वृन्दे कदम्बं नीपे ना"। कदम्बमिव कदम्बकम्। कन् स्वार्थे। बद्धं कदम्बकं येन। बद—! कुल and कदम्ब mean apparently the same. To avoid tautology let बद्धकदम्बकम् refer to formation of groups in different places and कुल

to the whole herd, a single कुल producing different Kadambakas. (d) रोमन्थम्—रोगं मथ्नातीति रोग + मन्थ + अण् कर्त्तरि The cure for disease. पृषोदरादि। The rumination is supposed to do good to the cattle. (e) अभ्यस्यतु—अभि + अस् ( दिवादि ) + लोट्‌तु let them do it over and over again. (f) These two lines indicate absence of disturbance, hence, ease and confidence On this point मृगः and अभ्यस्यतु are suggestive.* (g) वराहपङ्क्तिभिः for वराहततिभिः has the weighty support of Bhoja and Vamana, It is supposed to imply that only the tuskers पङ्क्ति were deemed worth hunting for * (h) विश्रामम्—विश्रामयति इति वि + श्रम + णिच् अच् कर्त्तरि = विश्रामः that which relieves fatigue, i. e. rest तम्। Here in simply वि + श्रम + घञ् the sutra 'नोदात्तोपदेशस्य मान्तस्यानाचमेः" will bar वृद्धि। In श्रम + णिच् the rule "मितां ह्रस्वः" does not stand in the way for under this rule ह मकार has the remark "केचिदत्र 'वा' इत्यनुवर्त्तयन्ति। सा च व्यवस्थितविभाषा। तेन उत्क्रामयति संक्रामयति इत्यादिवसादि सिद्धं भवति"। Mallinatha takes advantage of this to defend "विश्रामय' "विश्रामयन्" &c. Haradatta however is opposed to it. Or say श्रम एव श्रामः fatigue प्रज्ञादि अण्। विगतः श्रामो यस्मिन् तम्। विश्रामम् is Bhoja's reading Vamana has विश्रान्तिम्। (i) ज्याया बन्धः। इतम्। See Tika.

3. Remark—The metre is शार्दूलविक्रीडितम्। See under ग्रीवाभङ्गाः &c. Act I. The figure is स्वभावोक्ति। See under ग्रीवाभङ्ग &c Act. I. The काव्यप्रकाश condemns the third line on the score of प्रक्रमभङ्ग। The commentator thereon remarks—"अत्र गाहन्तामिति कर्त्तृकारकवाचकतिङ्, प्रक्रमे क्रियतामिति कर्मकारकवाचकता"।

सेनापतिः—यत् प्रभविष्णवे रोचते।

GENERAL—As master pleases.

राजा—तेन हि निवर्त्तय पूर्वगतान् वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः। पश्य—

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ॥७॥

* Adopted by Prof. Gajendragadkar.

KING—Well, then recall the forest surrounders that have gone before. My soldiers have to be so warned that they do not disturb the forest of penance. Know that in ascetics with whom quiet is predominant, there is hidden energy whose essence is burning. Like sun-gems pleasant to touch, they emit it through aggression of other energies.

सेनापतिः—यदाज्ञापयति स्वामी।

GENERAL—As Sire commands.

सेनेति। 'प्रभविष्णवे' प्रभवणशीलाय स्वामिने ['रुच्यर्थानां प्रीयमाणः' इति चतुर्थी सम्प्रदाने] 'यत् रोचते' तदेव भवतु। अद्यविश्राम एवास्तु।

राजेति। 'तेन हि' 'पूर्वं' गतान् प्रस्थितान् 'वनग्राहिणो वनवेष्टकान् 'निवर्त्य प्रत्याहर॥ 'मे सैनिकाः यथा तपोवनं न उपरुन्धन्ति पीडयन्ति 'तथा निषेद्धव्याः' निवारयितव्याः। 'पश्य' जानीहि—शमेति। अन्वयः—शमप्रधानेषु तपोधनेषु दाहात्मकं तेजो गूढम् अस्ति हि। स्पर्शानुकूलाः सूर्यकान्ता इव अन्यतेजोऽभिभवात् तत् [ते] वमन्ति। व्याख्या—'शमः' शान्तिः प्राधान्येन 'सेवाः' येषां तेषु 'तपोधनेषु' मुनिषु 'दाहः' दहनम् 'आत्मा' स्वभावो यस्य तथाविधं 'तेजः' ज्योतिः अग्निरित्यर्थः 'गूढं' गुप्तम्' अस्ति हि अस्त्येव। 'स्पर्शस्य' करपरामर्शस्य अनुकूलाः' क्षमा करग्राह्याः 'सूर्यकान्ताः' मणिभेदाः 'इव अन्यस्मात् तेजसः' ज्योतिषः यः 'अभिभवः' तिरस्कारः तस्मात् हेतोः 'तत्' तेजः ते 'वमन्ति' आविष्कुर्वन्ति [गौण्या वृत्त्या ग्राम्यतापरिहारः]। ["तेन" (रा-, वि-, म-) "अपि" (त-, न्या,)॥ 'तदन्य" (रा- वि-, म-)—"ते ह्यन्य" (त-, न्या-)॥ "वमन्ति" (रा-, वि, म-) 'दहन्ति" (त-, न्या-)]॥

## NOTES

1 प्रभविष्णवे—प्र + भू + इष्णुच् ताच्छील्ये कर्त्तरि = प्रभविष्णु the lord. The usage is वैदिक। तस्मै। "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदाने चतुर्थी। This is artfully worded. He is overjoyed but assumes the air of chagrin. Oh, how should I like to go out! But what can my poor self do when प्रभु orders to stay in !!* Cp. "विनियोगप्रसादो हि किङ्कराः प्रभविष्णुषु"—K. VI.

2. (a) पूर्वं गताः पूर्वगता gone first. सहसुपेति समासः। तान्। गतपूर्वान्

---

* Adopted by Prof. Gajendragadkar.

is also allowable as ज्ञापित by the rule "भूतपूर्वे चरट्"। (b) वन-ग्राहिणः—वनं गृह्णन्तु: शीलमेषाम् इति वन + ग्रह + णिनि कर्तरि ताच्छील्ये—वनग्राहिणः। तान्।

3. (a) अनुगताः कूलम् अनुकूलाः favourable, प्रादितत्—। स्पर्शानुकूलाः tolerating handling ; c. f, 'स्पर्शक्षमं रत्नम्—Act I. (b) अन्यतेजः &c. —अभि + भू + अप् + भावे = अभिभवः affront, अन्यत् तेजः or अन्यस्य तेजः कर्मधा—or ६तत्। तस्मात् or तेन अभिभवः। Affront from energy of others सहसुपेति समासः or ६तत्। तस्मात्। हेतौ पञ्चमी। Or अभिभवं प्राप्यवमन्ति इति "ल्यब्लोपे" कर्मणि पञ्चमी। [c] वमन्ति—वम् + लट् अन्ति literally to vomit. Here in the secondary sense गौणवृत्ति to exhibit. It is ग्राम्य in the मुख्य sense but not so in the गौण। दण्डिन् says "निष्ठ्यूतोद्गीर्णं वान्तादि गौणवृत्तिव्यपाश्रयम् अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते।"

4. Remark—Here the king points out to the General the risks he runs if he does not check his men ( सैनिक )। The ascetics appear to be harmless creatures (शमप्रधान)। But your men must not take liberties with them for they know how to burn. There is fire in them ( तेजः अस्ति ) only it is hidden ( गूढं हि )। Molest them they will show the fire. Look at the sunglass. You can handle it. But let sun's heat [ अन्यतेजस् ] oppress it and it burns all that approach it. Cp "न तेजस्तेजस्वी प्रसृतमपरेषां विषहते। सहि हि तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः" &c. in Uttara. So do go and call back your men. This is a dodge to send the General away because the king wants to be alone with the jester.*

विदूषकः—धंसदु दे उच्छाहवुत्तन्तो [ ध्वंसतां ते उत्साहवृत्तान्तः ]। ( निष्क्रान्तः सेनापतिः )।

VIDUSHAKA—Your account of ardour be damned. [ Exit General ].

राजा—( परिजनं विलोक्य )—अपनयन्तु भवत्यो मृगयावेषम्। रैवतक, त्वमपि स्वं नियोगम् अशून्यं कुरु।

* Adopted by Prof. Gajendragadkar.

KING—(Looking at his attendents)--Go and put off your hunting dress. Raivataka, you too see that your post is not vacated.

परिजनः—जं देश्रो आणवेदु [ यत् देवः आज्ञापयति ] ! ( निष्क्रान्तः ) ।

Attendant—As your resplendant self commands (Exit).

विदूषकः—किदं भअदा णिम्मच्छिअं । सम्पदं इमस्सिं पादवच्छायाविरइदविदाणसणाहे सिलाअले उवविसदु भवं याव अहंम्पि सुहासीणो होमि [ कृतं भवता निर्मक्षिकम् । साम्प्रतम् अस्मिन् पादपच्छायाविरचितवितानसनाथे शिलातले उपविशतु भवान् यावदहमपि सुखासीनो भवामि ]

VIDUSHAKA—Even the flies have been driven off by you. Now do you sit down on that stone slab, furnished with a canopy, made by the shade of the yonder tree, so that I too may become seated comfortably.

विदूषेति । 'ते उत्साहस्य' राज्ञः प्रीतसाहसस्य 'हताल्त.' वार्ता 'ध्वंसतां' नश्यतु । नातः परमेन प्रीतसाहय ॥ ["ध्वंसतां" ( म- )—ध्वंसितः ( रा- ) ] ॥

राजेति । ['परिजनं यवनीगण "विलोक्य' दृष्ट्वा, यवनीनां मृगयावेषम् आत्मना आह] 'भवत्यः मृगयायाः वेषं' सज्जां 'अपनयन्तु' परिहरन्तु । एतेन यवनीनाम् अपवाहनम् । 'रैवतक' इति दौवारिकसम्बोधनम् 'त्वमपि स्वम्' आत्मनो 'नियोगम् अधिकारद्वारामित्यर्थः [ अधिकपञ्चेव अन्य ] 'अशून्य' स्वोपस्थित्या पूर्ण' कुरु' द्वारि एव तिष्ठ इत्यर्थः ।

विदूषेति । 'भवता' मक्षिकाणामपि अभावः 'निर्मक्षिकम्' [अभावार्थेऽव्ययीभावः] 'कृतम्' । परिजनान् अपसार्य आवयोः सम्बन्धे निर्जनः कृतोऽयं देशः । साम्प्रतम्' अधुना 'अस्मिन् पादपच्छायया विरचितं' यत 'वितानम्' उल्लोचः, चन्द्रातपः [ "स्त्री वितानमुल्लोचे" इति त्रिकाण्डशेषः ] तेन 'सनाथे' युक्ते 'शिलातले' पाषाणपृष्ठे भवान्

'उपविशतु'। उपविष्टे भवति 'तावत् अहमपि सुखम् आसीनो भवामि' कश्चिदमभि: श्रान्तमशक्त: उपवेशनसुखमनुभवामि इत्यर्थ: [''पादपच्छायाविरचितविताननाथे शिलातले'' ( ता-, न्य-, न- )—''पादपच्छायायां विरचितलताविताननाथे शोयायाम् आसने'' ( रा-, वि- ) ]।

NOTES

1. (a) उत्साहहेतुवृत्तान्त:—वृत्तान्त: वार्ता account or प्रवृत्ति: news. ''वार्ता प्रवृत्तिर्वृत्तान्त.''। The jester refers to the news ''गृहीतश्वापदमरण्यम्'' with which the General entered. The news is tempting to a hunter - it is an उत्साहहेतुवृत्तान्त। May such newscease to come ( अश्रुतम् )।* (b) अश्रुत will refer to the past. The Jester does not care for the past, he wants no such news in future

2. परिजन:—जन has जातावेकवचनम्। परिगतो जन: परिजन: attendants. It means attendants at the chase i. e. the Yavana women.

3 (a) नियोगम्—नियुज्यते अस्मिन् इति नि + युज् + घञ् अधिकरणे = नियोग: appointment. post, i e. the door. (b) अशून्यम—न शून्य not vacant. तम्।

4. (a) निर्मक्षिकम—The jester notices how the king sends away the General, the attendents, the warder. He expects some confidential talk, and remarks ''कृत भवता निर्मक्षिकम i. e. now tell me what you have got to say, there is none to overhear. (b) पादप &c.—वितन्यते इति वि + तन + घञ् कर्मणि = वितानम् a canopy. नाथेन सह सनाथम् furnished with a master. Hence secondarily ''taken care of'' ''looked after,'' well furnished'' &c. पादैन पिबति इति पाद + पा + क कर्त्तरि = पादप: a tree, so called because it drinks ( पिबति ) sap from the earth with its roots ( पादैन )। पादपस्य छाया पादपच्छाया। We do not say पादपानाम् because that will give पादपच्छायम् in the neuter by the rule 'छाया

* Adopted by Prof. Gajendragadkar.

बाहुल्ये"। तथा विरचितम्। इतत् -। तादृश वितानम्। कर्मधा—। तेन सनाथम। इतम्। तस्मिन्। Here the jester points to a particular stone-slab under the shade of tree which by completely shutting out the sun very well serves the purpose of canopy spread over the slab. Prof Gajendragadkar justly objects to this reading saying that—"The shade is cast on the gronnd while the canopy is overhead." The objection cannot be met unless we suppose that by छाया we mean by लक्षणा that which cause छाया i. e foliage This is hardly satisfactory. The fact is all the readings available here are objectionable. The time was early morning so the reference to पादपच्छाया is unintelligi· ble. Besides there are other serious objections against the other readings. The suspicion is irresistible that originally the plain अस्मिन् शिलातले was the text but subsequenty quali-fying epithets to शिलातलं were interpolated

5. (a) यावत indicates dependence. My sitting depends upon your sitting. The गणकार says यावत is used in senses other than those mentioned [ अन्यत्रापि दृश्यते ] These have to be gathered from usage [b] सुखासीन:— आस + शानच् = आसीन: seated सुखेन आसीन: indicates ease when sitting down. We require ease while seated. Prefer सुखमासीन:। सहसुपेति समास:।

राजा—गच्छाग्रत:।

KING—Go in front.

विदूषक:—एदु भवं [ एतु भवान् ]। (उभौ परिक्रम्य उपविष्टौ)।

VIDUSHAKA—Come your Majesty. [The two go round the stage and sit dcwn ].

राजा—माधव्य, अनवाप्तचक्षु:फलोऽसि येन त्वया दर्शनीयं न दृष्टम्।

KING—Madhavya you are one that has not reaped the

benefit of his eyes as what is worth- has not been seen by you.

**विदूषकः—नं भवं अग्गदो मे वट्टइ [ननु भवान् अग्रतो मे वर्त्तते ]।**

VIDUSHAKA—Why Your Honour stays before me.

राजेति—'अग्रतो गच्छ

विदूषेति। 'एतु माम् अनुसृत्य आगच्छतु ।

राजेति। 'अनवाप्तम्' अलब्धं 'चक्षुषाः फलं' द्रष्टव्यादर्शनं येन तथाभूतः असि। 'येन' यस्मात् ( 'येन' इति हेतौ अव्ययम् ) 'त्वया दर्शनीयं द्रष्टव्यं वस्तु 'न दृष्टम्' यद्वा 'येन त्वया दर्शनीयं न दृष्टं स त्वम् अनवाप्तचक्षुःफलोऽसि इत्यन्वयः। अस्मिन् पक्षे येन इति त्वया इत्यनेन समानाधिकरणम्। उत्तरवाक्यगतत्वेन उपादानात् तच्छब्दोपादनं नापेक्षते। यदि द्रष्टव्यं न ? तदा किं फलं ते चक्षुषा इति भावः।

विदूषक इति। राजोक्तिम् असहमान आह 'ननु' दर्शनीयानाम् अग्रणीः 'भवान्' मे 'अग्रतः' सम्मुखे 'वर्त्तते' तत् किं वृथा आत्थ न दृष्टं मया इति ?

## NOTES

1. अनवाप्त &c—अव+आप+क्त कर्मणि अवाप्तम् obtained. चष्टे इति चक्ष+उसि [ष्णौ] कर्त्तरि=चक्षुः that which declares—Eye. न अवाप्तम् अनवाप्तम्। अनवाप्तं चक्षुःफलं येन। बहु—। Or—अवाप्त चक्षुःफलं येन। बहु—। न अवाप्तचक्षुफलः। We do not get—चक्षुषफलः because the विसर्गः in चक्षुः is प्रत्ययस्थ । [ "चक्षेः शिच्च" इति शित्त्वात् उसिरिति सार्वधातुकम्। तेन न ख्याञ् ]।

2. ननु—Implies आक्षेप। How can you say 1 have not seen what is worth seeing ? Even now your majesty stays before me and When on earth is there a better looking person ?"

**राजा—सर्वः कान्तमात्मीयं पश्यति। अहं तु ताम् आश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि**

---

* Adopted by Prof. Gajendragadkar.

KING—Every one sees his own as beautiful. But I speak referring to Sakuntla the very ornament of this hermitage.

विदूषकः (स्वगतम)— होदु से अवसरं ण दाइस्सं [भवतु अस्मै अवसरं न दास्यामि ]। ( प्रकाशम् ) भो वअस्स्, दे तावसकण्णआ अब्भत्थणीया दिस्सति [ भो वयस्य, ते तापस-कन्यका अभ्यर्थनीया दृश्यते ]।

VIDUSAKA [ Aside ]—Well I will not give him scope. [Aloud] Well friend it seems a hermit's daughter has to be wooed by you !

राजेति। 'सर्वः' आत्मीय स्वजन 'कान्तं' मनोहरं 'पश्यति'। अत खलु त्वं मामेव दर्शनीय मन्यसे। 'अहं तु ताम् आश्रमस्य' अस्य तपोवनस्य 'ललामभूतां' भूषणस्वरूपाम् [ "त्रिषु धामनि भूषायां ललामेति बुधैर्मतम्" इत्यनेकार्थकोषः ] शकुन्तलाम् अधिकृत्य लक्षीकृत्य 'ब्रवीमि'। वृथा ते चक्षुः यतः सैव त्वया न दृष्टा।

विदूषक इति। 'स्वगतम्' आत्मगतम्। 'भवतु' अयं तावत् एवं ब्रवीतु किन्तु अहम् 'अस्मै अवसरम्' अभिलाषस्य प्रसरं न दास्यामि'। अभिलाषं विनिन्द्य एनं शकुन्तलाव्यापारात् निवर्त्तयिष्यामि। 'प्रकाशम् उच्चैराह—'भो वयस्य' चत्रियस्य सतः 'ते' तव 'तापसकन्यका' तापसी ब्राह्मणकुमारी 'अभ्यर्थनीया' प्रार्थनीयः' दृश्यते प्रतिभाति। किमेतत् अनार्य्य

## NOTES

1. आश्रम् &c.—भूत is सम like (तुल्य)। "भूत क्ष्मादौ ··प्राप्ते वित्ते समे सत्ये" इत्यादि मेदिनी। ललाम or ललामन् is ornament. ललामेन or ललाम्ना समा ललामभूता। Those who hold that भूत means सम only when it is an उत्तरपद have to take it as नित्यसमास। For details here see under शरीरभूता in Act VI.

2. [a] भवतु— An अव्यय indicating a sudden thought. A resolution made there and then. [b] अवसरत्यस्मिन् इति अव+सृ+अ अधिकरणे सञ्ज्ञायाम्=अवसरः an opportunity. [c] The jester here makes up his mind (भवतु) to thwart the king. अवसरं न दास्यामि— I will not encourage him.

3. तापसकन्यका — कन्या एव इति कन्यका or कन्यका। तपः अस्यास्तीति तापसः ascetic. अण् मत्वर्थे। तस्य कन्यका। Mark the impropriety. Being a क्षत्रिय you wish to marry a Brahmana girl. The regulator of आचार you are going to violate आचार।*

राजा—सखे, न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते।

(सुरयुवतिसम्भवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव नवमल्लिकाकुसुमम्॥८॥)

KING—Friend, the mind of Puru's descendants does not lean towards that which should be avoided like a Navamallika flower loosened and fallen on an Arka tree that hermit's daughter is really born of a celestial nymph but found when abondoned.

विदूषकः (विहस्य)—जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीए अहिलासो भवे, तह इत्थिआरअणपरिभोइणो भवदो इअं अब्भत्थणा [यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्याम् अभिलाषो भवेत् तथा स्त्रीरत्नपरिभोगिणो भवत इयमभ्यर्थना]।

VIDUSHAKA (Laughing)—Just as of some one troubled with dates there might be a desire for tamarind, so is this longing of Your Honour that enjoys the very gem of women.

राजेति। 'पौरवाणां' पुरुवंशीयानाम् आर्याणां 'मनः परिहर्तव्ये' वस्तुनि अवैधे विषये न प्रवर्तते'। यदि शकुन्तला सवर्णैः परिहार्या परिहर्तव्या स्यात् मम प्रवृत्तिस्तत्र न स्यात्।

सुरेति। अन्वयः—शिथिलम् अर्कस्योपरि च्युतं नवमल्लिकाकुसुममिव उज्झिताधिगतं सुरयुवतिसम्भवं किल तत् मुनेरपत्यम्। व्याख्या—'शिथिलं' वृन्तात् भ्रष्टम् अर्कस्य (आकन्दगाछ इति भाषा) उपरि च्युतं' पतितं 'नवमल्लिकायाः कुसुममिव' पुष्पमिव

* Adopted by Prof. Gajendragadkar.

भादौ 'उज्झितं मात्रा त्यक्तं' पश्चात् 'अधिगतं मुनिना प्राप्तं' 'सुरयुवतिः' अप्सरा मेनका 'सम्भवं' कारणं यस्याः 'किल' तादृशमेव' तत् मदभिलषितं 'मुनेः' कण्वस्य 'अपत्यं' कन्या शकुन्तला । अप्सरः सम्भवा इयं कथं परिहार्य्या ।

विदूषक इति । राज्ञोक्तौ अनादरप्रकाशार्थं 'विहस्य' ईषद्धसित्वा आह 'यथा' यद्वत् 'पिण्डखर्ज्जूरैः' अतिमधुरैः खर्ज्जूरभेदैः उद्वेजितस्य' पीडितस्य जाताकचेः 'कस्यापि' जनस्य 'तिन्तिण्याम्' अम्लरसायां चिञ्चायाम 'अभिलाषो भवेत्' जातः स्यात् [ सम्भावनायां लिङ् ] तथा तद्वत् 'स्त्रीरत्नानि'-परमस्त्रीः 'परिभोक्तु' शीलं यस्य तस्य भवत इयम् एषा तपस्विकन्याप्रणयविषयिणी 'अभ्यर्थना प्रार्थना । आस्तां तावद-परिहार्य्या एव शकुन्तला । किन्तु यानि रमणीरत्नानि तु अन्तःपुरे सन्ति तेषामयत: तुच्छा च वनवासिनी । तत् त्वज्यतामियमाकाङ्क्षा इति भाव. । [ 'स्त्री' ( त-, वि-) —'अन्तःपुरस्त्री—' ( त- न्या- न )॥ परिभोगिनः' ( त न्या )—' परिभाविनः' ( रा- वि )॥

NOTES

1 (a) सुरयुवति &c —युवन्+ति स्त्रियाम् = युवति a young woman. सुराणां युवतिः a heavenly maiden i e. an अप्सरस्; referring to मेनका । (b) किल—वार्त्तायाम or अवधारणे । (c) अपत्यम—न पतन्ति पितरः अनेन इति नञ् + पत + यत करणे बाहुलकात that which prevents the ancestors from going to hell i e. progeny. (d) तत्—That i.e. the one of which I am speaking. Here यच्छब्द is not necessary. प्रकान्तार्थत्वात यच्छब्दोपादन नापेक्षते । (e) उज्झित &c.—Abandoned (by the mother and found by the sage), 'पूर्वकालैक—'' इति कर्मधा— । The mention of सुर and also a descent from a higher to a lower region suggests the high pedigree of the girl. The match will therefore give an exalted rank to the race of पुरु । Again सुरयुवति shows that even if the father were a Brahmana, the girl would be marriageable because "असवर्णेष-सम्भवा" । Hence the jester's attack fails from the social as well as the moral point of view.

2. Remark—Note how the gender changes with the objects compared. Thus (i) सुरयुवति and नवमल्लिका both in the feminine ;

this is necessary in speaking of the mother (ii) मुनि and अर्क both masculine and represent the father. (iii) अपत्य and कुसुमम् both in the neuter ; this is proper because the progeny being undefined as son or daughter it should be represented by a general name ( अपत्य ) । Again the circumstances are similar too—(iv) सुरयुवति is high, मुनि is low ; so also नवमल्लिका is high and अर्क is a low shrub.—(Akanda). (v) उज्झित by the higher one and अधिगत by the lower, so also शिथिल from the higher one and च्युत on the lower.

2 (a) N B —Navamallika, Sirisha (Act I—ante) and Patala flowers are Kalidasa's favourites in all his works.

3. (a) The jester now attacks from another side. He ridicules the king's taste (b) विहस्य—It is the laugh of ridicule. (c) उद् + विज + णिच् + क्त कर्मणि = उद्वेजित: troubled. पिण्डखर्जूर is very sweet ; too much sweet things produces disgust and causes loss of appetite. Then chutni of tarmarind is welcome (तिन्तिडीकामभिलाष:) । But then that is for a moment only. Then chutni is not eaten for its own sake, but only to whet the appetite for the sweets. Such seems to be the case with you now* (d) स्त्रीरत्न &c —"जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते"। स्त्रीणां रत्नानि स्त्रीरत्नानि the best of the female sex. No निर्द्धारण ; no prohibition of षष्ठीसमास because निर्द्धारण takes place only when three things are mentioned, viz. (i) the whole, (ii) the part, (iii) the special property that separates the part from the whole. These do not occur here. स्त्रीरत्न + परि + भुज + णिनि कर्त्तरि ताच्छील्ये = स्त्रीरत्नपरिभोगी (णिनौ बाहुलकात् भोगार्थे कुत्वम्) ; or परि + भुज + घञ् = परिभोग: । स्त्रीरत्नस्य परिभोग: । स अस्ति यस्य इति मत्वर्थीय इनि: one who habitually enjoys the company of the best of the female creation. तस्य ! (e) The jesters' point is—The incomparable beauties in your harem are the sweets, You have had too much of them. To improve your appetite for them you desire this tarmarind or the her·

---

* Adopted by Prof. Gajendragadkar.

mit's daughter for a change. I understand you! you will soon renounce her and go back to the beauties of the harem with greater ardour. Now, think if that would be either honourable on your part, or just with regard to this simple maiden of the forest.

4. Readings—(a) अन्तःपुरस्त्रीरत्न is more definite, but स्त्रीरत्न alone too leaves no doubt as to who are meant. (b) परिभाविन् one who despises, does not suit the context.

राजा—न तावदेनां पश्यसि येनैवमवादीः ।

KING—You are not indeed looking at her, hence you have said so.

विदूषकः—तं क्खु रमणिज्जं जं भवदो वि विम्हअं उप्पादेदि [ तत् खलु रमणीयं यत् भवतोऽपि विस्मयमुत्पादयति ] ।

VIDUSHAKA—That must be charming indeed which excites even your admiration.

राजा—वयस्य, किं बहुना—

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥८॥

KING—Friend, what use saying much? (Considering the Creator's power and her person, she seems to me a second creation of a gem of a woman, endowed with life by the Creator after delineation in a picture, Or perhaps mentally with an assemblage of the beautiful.)

राजेति । 'एनां शकुन्तलां तावत् न पश्यसि येन हेतुना 'एवम् अवादीः' उक्तवानसि [अद्यतने भूते लुङ्] । न हि सा तथा यतो वर्तते अतएव एवम् उच्यते त्वया ।

* Adopted by Prof. Gajendragadkar.

विदूषक इति। निपुणोऽसि वयस्य। यतो यत् भवान् अपि तस्या रूपेण विस्मितः तत् मन्ये सुन्दरी किल सा—इत्यर्थः।

राजेति। 'बहुना' उक्तेन किं' स्यात् संक्षेपतोऽत्र ब्रवीमि—

चित्रे इति। अन्वयः—धातुर्विभुत्वं तस्या वपुश्च अनुचिन्त्य (स्थितस्य) मे, सा विधिना चित्रे निवेश्य परिकल्पितसत्त्वयोगा, मनसा नु रूपोच्चयेन कृता, अपरा स्त्रीरत्नसृष्टिः प्रतिभाति। व्याख्या—'धातुः' स्रष्टुः 'विभुत्व'निर्माणसामर्थ्यं 'तस्याः' शकुन्तलाया 'वपुश्च' अनुपमं शरीरञ्च 'अनुचिन्त्य' ध्यात्वा स्थितस्य 'मे' मम सम्बन्धे 'सा' शकुन्तला 'विधिना' स्रष्ट्रा प्रथमं 'चित्रे निवेश्य' आलिख्य पश्चात् 'परिकल्पितः' साधितः 'सत्त्वेन' प्राणवायुना 'योगो' यस्याः तादृशी 'मनसा नु' किं वा तूलिकादिभिः कठोरता स्यादङ्गेषु इति भयात् वाह्यं करणं विहाय अन्तःकरणेन 'रूपाणां त्रिलोकसौन्दर्याणाम् 'उच्चयेन' एकत्र संग्रहेण 'कृता' निर्मिता 'अपरा द्वितीया, 'स्त्रीरत्नस्य सृष्टिः निर्मितिः 'प्रतिभाति' अवभासते ॥ पुरा सुन्दोपसुन्दवधार्थं विधात्रा स्त्रीरत्नमेकं सृष्टम् इति श्रूयते। इयं हि शकुन्तला द्वितीया स्त्रीरत्नसृष्टिः। निर्माणकुशलस्य विधेर्निर्मितम् चित्रम्। परन्तु सोऽपि मन्ये प्रथमं महता यत्नेन आलिख्य, पश्चात् प्राणप्रतिष्ठामकरोत्। अथवा एतदपि नालमीदृशस्य सौकुमार्यस्य तत् किं चन्द्राल्लावण्य, प्रवालादधरकान्तिम् इत्यादि क्रमेण रूपाणि मनस्येव यथास्थानं निवेश्य स मनसा एव तां निर्ममे। [ "चित्रे" (रा-, वि-, म-)—"चित्ते (त-, न्या) ॥ "सत्वयोगा" ( रा-, वि , म- —"सत्वयोगात्" ( म- )—"सर्वयोगान् ( त-, न्या- ) ॥ "मनसा विधिना कृता नु" ( रा-, वि-, म- )—"रचिता (घटिता) मनसा कृता नु" ( भो )—"विधिना विहिता कृशाङ्गी" ( त-, न्या- ) ] ॥

## NOTES

1. न तावत् &c.—The idiom is peculiar. The prior act दर्शन, is in the वर्त्तमानकाल while the subsequent act, वदन, is भूते। We would say न पश्यसि येन वदसि or न अद्राक्षीः येन अवादीः; or again अद्राक्षीः येन वदसि। Language has changed since the days of अश्वघोष who lived about a hundred or more years after कालिदास (See Introduction) shows trace of this idiom. Thus he says यदा गच्छति तदा अभवत in "यदा बहिर्गच्छति पार्थिवात्मजस्तदाभवद्द्वारमपावृतं स्वयम्" – Buddha charita. VIII—46.*

---

* Adopted by Prof. Gajendragadkar.

5. तत खलु—The jester is now completely disarmed. The king's calm and straight-forward reply has non-plussed him. He sees his error in comparing Sakuntala to the tamarind which the king wants merely as a change, and admits her to be as lovely as, or lovelier than the beauties of the harem. Note the force of खलु and अपि । रमणीय खलु, and not a mere change—रमणीयत्वादेव प्रार्थ्यते । Why say so without seeing her ? Because भवतोऽपि विस्मयम्—it has excited the wonder of even a connoisseur like thyself *

3. (a) परिकल्पित &c,—सत्व is प्राण life. "सत्वं गुणे पिशाचादौ—चित्ते प्राणेषु" इति विश्वः । तस्य or तेन योग: connection with life i.e. infusion of life परिकल्पितः सत्वयोगो यस्याः unto whom the infusion of life has been achieved.* बहु— । (b) रूपोच्चयेन - उद् + चि + अच् भावे उच्चय: culling, gleaning सग्रह: । रूपोच्चय: सौन्दर्यसंग्रह:, i.e. उच्चितानि रूपाणि । भावानयने द्रव्यानयनम् । (c) नु—Indicates विकल्प alternative. "नु पृच्छायां विकल्पे च" इति कोष. । Two alternatives are suggested—[i] She is a painting, done with super natural skill and then enlivened ; [ii] She is a collection of all beautiful things in nature. Note the तृतीया in रूपोच्चयेन, मनसा विधिना । The first refers to the material for the work उपादान, the second to the implement ( करण ) । These two have करणे तृतीया । The third is the agent and has अनुक्ते कर्त्तरि तृतीया । (d) स्त्रीरत्नसृष्टि:—स्त्रीणां रत्नं श्रेष्ठं स्त्रीरत्नम (See above). तस्य सृष्टि: । [e] अपरा—Another i. e. a second. The first स्त्रीरत्नसृष्टि took place long ago ; this is the second. For a similar use of अपर compare "आविर्भूतमपां मध्ये पारिजातमिवापरम्"—Raghu. Allusion is to the creation of तिलोत्तमा । She too was made with रूपोच्चय । The object was to make the brothers सुन्द and उपसुन्द—two invincible demons—quarrel over her. Compare—"निर्ममे योषितं दिव्यां चिन्तयित्वा पुनः पुनः ॥ त्रिषु लोकेषु यत्किञ्चिद्भूतं स्थावरजङ्गमम् । समानयद्दर्शनीयं तत्तद्यत्र विश्ववित् ॥···प्रयत्नेन महता निर्मिता विश्वकर्मणा । त्रिषु लोकेषु नारीणां रूपेणा-

---

* Adopted by Prof. Gajendragadkar.

प्रतिमाभवत् ॥···तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः ॥···गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे। प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनम् ॥—Mahabharata; such was her loveliness, that Siva put forth four heads and Indra a thousand eyes to have a good look at her. Compare—"द्रष्टुकामस्य चात्यर्थं गतया पार्श्वतस्तया। अन्यदञ्चितपक्ष्माच्चं दक्षिणं निःसृतं मुखम् पृष्ठतः परिवर्त्तन्त्या पश्चिमं निःसृतं मुखम् ॥ गतया चोत्तरं पार्श्वमुत्तरं मुखम् ॥ महेन्द्रस्यापि नेत्राणां पृष्ठतः पार्श्वतोऽग्रतः ॥ रक्तान्तानां विशालानां सहस्रं सर्वतोऽभवत् ॥—Mahabharata. Cp. Kalidasa's description of Urvasi's beauty—"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रोनुकान्तिप्रदः शृङ्गारैकरसः स्वयन्नु मदनो मासोनु पुष्पाकरः। वेदाभ्यासजड़ः कथ नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूप पुराणो मुनिः" ॥

4. Reading—The sloka is knotty one; No two commentators agree in their explanation. Raghava's construction is—( शकुन्तला ) विधिना चित्रे निवेश्य परिकल्पितसत्त्वयोगा नु। रूपोच्चयेन मनसा कृता नु। धातुर्विभुत्वं तस्या वपुश्च अनुचिन्त्य सा स्त्रीरत्नसृष्टिः मे अपरा प्रतिभाति। अपरा जगत्स्त्रीरत्नसृष्टिविलक्षणा। Vidyasagara construes—( शकुन्तला ) विधिना चित्रे निवेश्य परिकल्पितसत्वयोगा। नु रूपोच्चयेन मनसा कृता। धातुर्विभुत्व तस्या वपुश्च अनुचिन्त्य मे सा अपरा स्त्रीरत्नसृष्टिः प्रतिभाति। अपरा—जगद्विलक्षणा। Our explanation (see Tika) give this sense—Thinking of her loveliness I cannot conceive how it was possible for विधि to create her. But when I remember that विधि is omnipotent. I fancy that like celebrated स्त्रीरत्न, created for the destruction of सुन्द and उपसुन्द, we have here another स्त्रीरत्नसृष्टि in Sakuntala, but this time, for greater perfection, if possible, it is ब्रह्मन् himself, and not his menial विश्वकर्मन् that did the work. Even he had to draw a picture first and then infuse life into it; or perhaps, for such delicate work, he found his hands too coarse and did it all with his mind though the materials employed, were the same as previously used by विश्वकर्मन् viz. the assemblage of all that beautiful in the universe.* The result has been a lovelier production than तिलोत्तमा herself. Note the two

* Adopted by Prof. Gajendragadkar.

ways how he explains the additional loveliness. First—Implements are the same (hands), the mode of work is different (चित्रे निवेश्य &c) Second = Material the same (रूपोच्चय), the Implemenets are different (mind and hand). Of course there is this additional common difference that in one case that servant (विश्वकर्मन्) works, in the other the master (धातृ) himself. Prof. Gajendragadkar while adopting my explanation, notes a defect viz. तिलोत्तमा was not the creation of विधि but of विश्वकर्मन्। This is immaterial. Even though shaped by विश्वकर्मन् she was none the less the creation of विधि whose agent विश्वकर्मन् was in the matter. Thus—"ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा। मुहूर्तमिव सञ्चिन्त्य.. विश्वकर्माणमाह्वयत्।··· व्यादिदेश पितामह·। सृज्यतां प्रार्थनीयेका प्रमदेति महातपाः।"—Mahabharata.

5. Reading—If my interpretation is accepted, the reason for adopting my readings are obvious, वसन्ततिलका is the metre.

विदूषकः- जइ एव्वं पच्चादेसो दाणिं रूववदीणं [ यदि एवं प्रत्यादेश इदानीं रूपवतीनाम् ]।

VIDUSHAKA—If so, now comes a dethronement of all beauties.

राजा– इदञ्च मे मनसि वर्त्तते।

अनाघ्रातं पुष्पं किसलयमलूनंकररुहैर्
अनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥१०॥

KING—That is just what is in my mind. [Or—This too is in my mind]. Her faultless beauty is a flower not yet smelt, a tender leaf not yet plucked with the nails, a gem not yet bored, as if the very fruit of merits not yet divided. I know

not whom the Ordainer will approach as the enjoyer in the matter.

विदूषक इति। 'यदि एवम्' ईदृशी एव शकुन्तला तर्हि इदानीं 'रूपवतीनां' लक्ष्मीगौरीप्रभृतीनां 'प्रत्यादेशः' निराकृतिर्जाता। सर्वा रूपवत्यः अनया निराकृताः। एका शकुन्तला एव रूपवती जगति, नान्या काचित्।

राजेति। 'इदञ्च' एतत्त् 'मे मनसि वर्त्तते'। रूपवत्यो निराकृता इत्येवाहं मन्ये। यद्वा—'इदञ्च' एतदपि वक्ष्यमाणं 'मे मनसि वर्त्तते'। अस्मिन् पक्षे वक्ष्यमाणश्लोकस्थ चरणत्रयम् एतद्वाक्यस्य विषयः। अथवा 'मे च' ममापि इत्यादि।

अनाघ्रातमिति। अन्वयः—अनघं तद्रूपम् अनाघ्रातं पुष्पम्, कररुहैरलूनं किसलयम्, अनाविद्धं रत्नम् अनास्वादितरसं नवं मधु, अखण्डं पुण्यानाञ्च फलमिव। विधिः इह कं भोक्तारं समुपस्थास्यति न जाने। व्याख्या—'अनघम्' अपापम् अदोषमित्यर्थः [ "पापव्यसनयोरघम्" इत्यनेकार्थकोषः ] 'तस्याः' शकुन्तलायाः 'रूपम् अनाघ्रातं' अकृतगन्धोपभोगं 'पुष्पं' कुसुमम्। कररुहैः' नखैः 'अलूनम्' अच्छिन्नं, मसृणत्वेन अनुपभुक्तं 'किसलयं' नवपल्लवम्। 'अनाविद्धम्' अच्छिद्रं भूषणत्वेन अनुपभुक्तं रत्नं मणिः। अनास्वादितः अनुपभुक्तः 'रसो' माधुर्यं यस्य तत् तादृशं 'नवं' नूतनं 'मधु'। किं बहुना, 'अखण्डं' भक्षणार्थं कर्त्तर्या अविभक्तं 'पुण्यानाञ्च' सुकृतराशीनामिव 'फलमिव' मन्ये [ इत्युत्प्रेक्षा। पूर्वत्र तु पुष्पादित्वेन रूपणात् रूपकम् ]। 'विधिः' विधाता 'इह' शकुन्तलारूपविषये 'कं' जनं 'भोगभाजं समुपस्थास्यति' "एहि भोः, अत्र त्वं भोक्ता" इति कस्य समीपवर्त्ती भविष्यति [उपसर्गवशात् सकर्मकत्वम्। उपेन व्यवधानात् "समवप्रविभ्यः स्थः" इत्यात्मनेपदमत्र न ] 'न जाने'। धन्यः स यः अस्य रूपस्य भोक्ता—इत्याकाङ्क्षातिशयाविष्करणम्।

## NOTES

1. प्रति + आ + दिश + घञ् भावे = प्रत्यादेशः supplanting. Or प्रत्यादिश्यते अनेन इति प्रति + आ + दिश + घञ् करणे = प्रत्यादेशः that with which supplanted. He means to say—All well-known beauties are now put to shade by शकुन्तला।

2. (a) आ + घ्रा + क्त कर्मणि = आघ्रातम् smelt, न आघ्रातम् not smelt. Flower is enjoyed by smelling, Her beauty is a flower

unenjoyed. (b) लू + क्त कर्मणि—लूनम् plucked. न लूनम् not plucked. Tender twigs are enjoyed by plucking and wearing in the ears. Her beauty is a tender twig unenjoyed. (c) करे रोहन्ति इति कर + रुह + क कर्त्तरि = कररुहा: nails. आ + व्यध् + क्त कर्मणि = आविद्धम् pierced. अनाविद्धम् not pierced. Gems are bored and strung into necklaces &c. This is enjoying of gems. Her beauty is gem unenjoyed (d) आ + स्वद + णिच् + क्त कर्मणि—आस्वादित· tasted. तादृशो रसो यस्य: whose flavour is tasted, न आस्वादितरसम् Honey is enjoyed by tasting. Her beauty is fresh honey unenjoyed.

2 (a) खण्ड is "part". "खण्डोऽस्त्री शकले" इति विश्व.। अकृत: खण्ड: यस्य अखण्डम् undivided, uncut वहु—। फल is enjoyed (eaten after cutting it up). Her beauty is as if the very fruit of merits but it is yet unenjoyed. Others explain अखण्ड as समग्र complete. न खण्डम् अखण्डम् not part, i e. whole (b) अविद्यमानम् अघमस्मिन् अनघम् faultless, (c) इह—In this matter, i. e. in तद्रूप her beeuty. (d) जाने—ज्ञा + लट् ए। "अनुपसर्गात् ज्ञ:" इति कर्त्रभिप्राये क्रियाफले आत्मनेपदम्।

Reading—Both किसलय and किशलय are correct, but the former is Kalidasa's favourate. Comp. the यमक in "किसलयै: सलयैरिव पाणिभि:"—Raghu. There is a pun in the word फल in the third line. फल means 'consequence' and also 'fruit'. The sense is—अनाघ्रातं पुष्पम् does not fall to the lot of one without luck. It is a पुण्यफल। gain करवहैरलूनं किसलयम् is another पुण्यफल। Soo too is अनाविद्ध रत्नम् a third पुण्यफल। Yet a fourth पुण्यफल is अनास्वादितरस मधु। By enjoying the beauty of Sakuntala this fourfold पुण्यफल is enjoyed. But this is not all Her beauty is as it were फल of all sorts of पुण्य। Whatever is enjoyable in the universe, is enjoyed by enjoying her beauty. Lucky indeed is the man whom विधि will invite to enjoy it.*

4. The metre is शिखरिणी (see यदालोके &c. Act I). We

* Adopted by Prof. Gajendragadkar.

have रूपक in the first two lines ( see चालेरित &c. Act. I ) and उत्प्रेक्षा in the third (see कृष्णसारे Act I) ].

विदूषक:—तेन हि लहु परित्ताअदु णं भवं । मा कस्सवि तवस्सिणो इङ्गुदोतेल्लचिक्कणसीसस्स हत्थे पडिस्सदि [ तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन: इङ्गुदो-तैलचिक्कणशीर्षस्य हस्ते पतिष्यति ] । you fall

VIDUSHAKA—Then you must rescue her quick. It must not be that she falls into the hands of some ascetic, with his head shining with Ingudi-oil.

राजा—परवती खलु तत्रभवती ! न च सन्निहितोऽत्र गुरुजन: ।

KING—But she has a master and her superior is not at hand here.

विदूषक इति । तेन हि यद्येवं तदा 'भवान् एनां' शकुन्तलां 'लघु' झटिति 'परित्रायतां' रक्षतु । कुतोऽस्या भयमित्याह—'इङ्गुदोतैलेन चिक्कणं' मसृणं 'शीर्षं' मस्तकं यस्य तादृशस्य, अत्यन्तत: शकुन्तलाया: अयोग्यस्य इत्यर्थ:, कस्यापि तपस्विन: 'हस्ते' मा 'पतिष्यति' तेन ऊढा तद्भोग्या भविष्यति [ "हस्ते पतनम्" इति लौकिकोक्ति: ] इति 'सा' मा भूत् ॥ [ "तैलचिक्कण" ( त-, न्या-, म- ) "तैलमिश्रचिक्कण" ( रा-, वि- ) ] ।

राजेति । 'तत्रभवती' शकुन्तला 'पर:' अन्य: अस्ति अस्या: प्रभुत्वेन इति 'परवती' पराधीना 'खलु' । 'गुरुजन:' येन सा परवती स: 'च अत्र' अस्मिन् तपोवने 'न सन्निहित:' न उपस्थित: । अतो लघु परित्राणं न सम्भवति ।

NOTES

1. तेन हि etc.—The last line of the king's speech raises before the jester the picture of an ascetic marrying Sakuntala. He thinks that would be a calamity, and urges the king, to rescue her from such a fate.* In 'तैलमिश्रचिक्कण' मिश्र is superfluous.

* Adopted by Prof. Gajendragadkar.

2. परवती &c.—The king points out that nothing can be done in a hurry. She is not her own master. Her father has to be approached but he is away. Who knows that by the time the sage comes back, some ascetic will not woo and win her; or that some one is not even now negotiating her marriage with the sage where he is now. Indeed this is the problem in the solution of which the king wants the help of the jester ( विश्रान्तेन भवता मह्यं भवितव्यम्—Ante).

विदूषकः—अथ भवन्तम् अन्तरेण कीदसो से दिट्ठिराओ [ अथ भवन्तम् अन्तरेण कीदृशः अस्या दृष्टिरागः ] ?

VIDUSHAKA—Well, what was the expression of her eyes towards your honour ?

राजा—निसर्गादेव अप्रगल्भस्तपस्विकन्याजनः । तथापि तु—

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥११॥

KING—A hermit's daughter is indeed naturally un-obtrusive. Yet she gazed at me, but I facing her the glance was withdrawn, she smiled but as if the smile arose from some other cause. Hence her love, with its course stopped by decorum, was neither revealed nor concealed.

विदूषकेति । 'अथ' पक्षान्तरे' गुरुजनस्य असन्निधानपक्षे पृच्छामि 'भवन्तमन्तरेण' भवन्तं प्रति [ "अन्तरान्तरेणयुक्ते" इति द्वितीया ] अस्या शकुन्तलायाः 'दृष्टिरागः' नेत्रप्रीतिः 'कीदृशः' [ "अथ" ( त-, न्या-, म )—"अव" ( रा- वि- ) ॥ 'भवन्तमन्तरेण" ( रा-, वि-, म- ) "तवोपरि" ( त- न्या- ) ] ॥

राजेति । 'तपस्विकन्यारूपो जनः निसर्गात्' प्रकृत्या [हेतौ पञ्चमी] 'एव अप्रगल्भः' अप्रौढगूढभावः । 'तथापि तु' अप्रगल्भत्वेऽपि ।

अभीति । अन्वयः—मयि अभिमुखे संहृतं तया ईक्षितम् । अन्यनिमित्तकृतोदयं तया हसितम् । अतो मदनो विनयवारितवृत्तिः न विवृतः न च संवृतः । व्याख्या—मयि

अभिमुखे' तस्यां दत्तनेत्रे सति 'संहृत' परावर्त्तितं यथा 'तथा 'तया' शकुन्तलया 'ईक्षित' दृष्टम् [ भावे क्तः ]। 'अन्यस्मात्' मद्भिन्नात्' निमित्तात् कारणात् 'उदय:' आविर्भावो यस्य हासस्य, तत् यथा तथा तया 'हसितं' हास: कृत: [ भावे क्तः ]। अत: मदन:' कन्दर्प: 'विनयेन' सुशिक्षया 'वारिता' निरुद्धा 'वृत्ति:' प्रसरो यस्य तथाविध: सन् 'न विवृत:' प्रकाशित: 'न च । ' गोपित:। 'मयि ईक्षित' मत्सम्मुखं हसितञ्च, तेन मनो सा अनुरक्ता। किन्तु ईक्षणं संहृत हासश्च निमित्तान्तरात् इति तु उदासीनेति प्रतीयते। एवं सति न जाने "कीदृशोऽस्या दृष्टिराग:" इति भाव:। [ "ईक्षितम्' ( त-, वि-, न्या, म- )—"ईक्षणम्" ( रा- )॥ "कृतोदयम्"—( रा-, वि-, म- ( "कथोदयम्" ( त, न्य )]॥

NOTES

1. अथ—An अव्यय। Suggests an alternative ( विकल्प )। अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरारम्भप्रश्नकार्त्स्न्यसमुच्चये॥" इति मेदिनी। First, tell me if she likes you or not. If you are liked ( विकल्प ), a solution is possible, even though the father be absent. (b) अन्तरेण—Towards, with reference to. An अव्यय। Compare = "देवीं वसुमतीमन्तरेण महदुपालम्भनं गतोऽस्मि"—Act. V (c) दृष्टिराग:—रज्यते अनेन इति रञ्ज + घञ् करणे = राग: colour, i e expression, पश्यन्त्यनया इति दृश + क्तिन् करणे = दृष्टि:। तस्या राग· the expression of her eyes. (d) With the reading अत for अथ, take अत as द्वितीयार्थे तल्। अत्रभवन्तम् towards your honour.

2. (a निसर्गात्—नितरां सृज्यते इति नि + सृज् + घञ् कर्मणि = निसर्ग nature. तस्मात्। (b) प्रगल्भते इति प्र + गल्भ + अच् कर्त्तरि = प्रगल्भ: forward, outspoken. न प्रगल्भ:।

3. ( a) अभिगतं मुखमस्य अभिमुख:, बहु—तस्मिन्। मयि = भावे ७मी। b) अन्यत् निमित्तम् some other cause. कर्मधा—। तेन कृत:। ३तत्। तादृश उदयो यस्य, तत् यथा तथा। (c) विनय······वि + नी + अच् भावे = विनय: discipline. वृ + णिच् + क्त कर्मणि = वारिता checked. विनयेन वारिता checked by decorum. तादृशी वृत्तिर्यस्य। (b) The sense is—I may say she betrayed love, because she glanced at me But then she withdrew the glance when I faced her

which is not encouraging. Again her smile may raise hopes, but fortunately it did not refer to anything of mine. So I can say neither that she loves me, not that she does not. The metre is द्रुतविलम्बित।

विदूषकः—ण क्खु दिट्ठमेत्तस्स तुह अङ्कं आरोहदि [ न खलु दृष्टमात्रस्य तव अङ्कम् आरोहति ]।

VIDUSHAKA—Indeed she cannot sit on your lap, just as you are seen. [Or—She does not sit on your lap just as you are seen ? ]

राजा—मिथः प्रस्थाने पुनः शालीनतयापि कामम् आविष्कृतो भावस्तत्रभवत्या। तथाहि—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कमसक्तमपि द्रुमाणाम् ॥१२॥

KING—But when parting from each other, emotion was clearly betrayed by her ladyship even through bashfulness. Thus having gone only a few steps the slim one stopped without occasion saying her foot was pricked by a Kusa shoot and stood with her face, turned back releasing her bark garment though not caught in the branches of trees.

विदूषेति। प्रथमदर्शने एतदेव पर्य्याप्तम्। दृष्टः एव दृष्टमात्रम् [ नित्यसमासो—मयूरव्यंसकादिः ] तस्य दृष्टस्यैव 'तव' न तु सम्यक् सम्भावितस्य 'न खलु अङ्कमारोहति। यद्वा—परिहासोक्तमेतत्। दृष्टमात्रमस्य तव अङ्कं' न खलु 'आरोहति' ? इति काकुः। दर्शनमात्रमेव अङ्कमारोहतु इतीव ते अभिलाषः प्रतिभाति।

राजेति। 'मिथः' अन्योन्यं 'प्रस्थाने पुनः गमनकालेतु [ पुनर् इति भेदे ] 'तत्रभवत्या' शकुन्तलया' 'शालीनतयापि' लज्जया अपि लज्जा तया यत् कृतं तेनापि हेतुना 'कामम्' अत्यर्थं 'भावः' अनुरागः 'आविष्कृतः' स्फुटीकृतः। 'तथाहि'—

दर्भेति। अन्वयः—तन्वी कतिचिदेव पदानि गत्वा अकाण्डे दर्भाङ्कुरेण चरणः क्षतः इति स्थिता, द्रुमाणांशाखासु असक्तमपि वल्कलं विमोचयन्ती विवृत्तवदना च आसीत्। व्याख्या –'तन्वी' कृशाङ्गी शकुन्तला 'कतिचिदेव' न तु बहूनि 'पदानि गत्वा अकाण्डे' अनवसरे ["काण्डश्चावसरे बाणे" इति धरणिः] मिथ्यैव इत्यर्थः 'दर्भस्य' कुशस्य 'अङ्कुरेण' सूच्या 'चरणः क्षतः' पादो विद्धः 'इति' एवमुक्त्वा 'स्थिता' निश्चला आसीत्। 'द्रुमाणां' वृक्षाणां 'शाखासु असक्तमपि' अपरिलग्नमपि 'वल्कलं' लग्नमिव विमोचयन्ती' शाखामुक्तं कुर्वती सती विवृतं' पराङ्मुखं मदभिमुखमिति यावत् वदनं मुखं यस्या तथाविधा च आसीत्' जाता॥ भूयोऽपि मां द्रष्टुमिच्छन्ती लज्जया सखीभ्यां स्वेच्छामनावेद्य यत् व्याजमाचरितवती तेनापि च भाव आविष्कृत इति भावः॥

## NOTES

1. (a) दृष्टमात्रस्य—"मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः। Hence अवधारणे। दृष्टमात्रम् is then neuter by the rule "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः"। But कालिदास has elsewhere विद्धमात्र in the sense विद्ध एव in the masculine. We avoid मात्रच् स्वार्थे because 'वत्वन्तात् स्वार्थे—" restricts it to words ending in वत् only, such as यावत्, तावत् &c. (b) खलु—Implies अवधारण or प्रश्न। If अवधारण, explain—No woman sits on the lap of one who is but seen only once. If प्रश्न then the remark is sarcastic—Oh ! She does not sit on your lap as soon as your are seen ! Is that makes you doubt her love ?

2. मिथः &c.—(a) Here the king refers to more positive indications of love. (b) पुनः—Shows the difference (भेद)। The previous indications were vague, but (पुनर्) these are more decisive. (c) शालीनतया—शालाप्रवेशनम् अर्हति इति शालाप्रवेशन + खञ् = शाला + खञ् = शालीनम् in the neuter. The उत्तरपद (प्रवेशन) disappears by निपातन in the rule "शालीनकौपीने अधृष्टाकार्ययोः"—शालीन and कौपिन are irregularly obtained in the sense अधृष्ट and अकार्य respectively. "अधृष्टः अप्रगल्भः (shy)···खञ् प्रत्यय उत्तरपदलोपश्च निपात्यते"—Vrittikara. Hence literally, शालीन means one who deserves to keep inside his room, i.e. one who does not know

the ways of the world—Bashful. तस्यभाव: आलीनता। We take it in the neuter, because if we derive first आलीना in the feminine we shall not have पुंवद्भाव with तल्प्रत्यय। (d) अपि—गर्हायाम्। The force is—Through bashfulness she could not disclose her wish to her friends. The ruse she adopted was through bashfulness. Even thus she betrayed herself.

3. (a) अकाण्डे—न काण्ड: अकाण्ड: no occasion. तस्मिन्। (b) स्थिता—स्था + क्त कर्त्तरि stopped. (c) कति—किम् + डति। चित् is an अव्यय having here the sense of अपि। कतिचित् = कति अपि, i.e. an indefinite few (d) The metre is वसन्ततिलका।

विदूषक:—तेन हि गहीदपाहेओ होहि। किदं तुए उववणं तवोवणत्ति पेक्खामि [ तेन गृहीतपाथेयो भव। कृतं त्वया उपवनं तपोवनमिति प्रेक्षे ]।

VIDUSHAKA—Well then be provided with provender. I see then the penance-grove has been turned by you into a pleasure grove.

राजा—सखे, तपस्विभि: कैश्चित् परिज्ञातोऽस्मि। चिन्तय तावत् केनापदेशेन पुनराश्रमपदं गच्छाम:।

KING—Friend I have been recognised by some of the ascetics, think then with what pretext I may again visit the hermitage.

विदूषक:—को अवरो अवदेसो तुम्हाणं राआणं [ क: अपर: अपदेशो युष्माकं राज्ञाम् ]। णीवारच्छट्टभाअं अम्हाणं उवहरन्तु त्ति [ नीवारषष्टभागम् अस्माकम् उपहरन्तु इति ]।

VIDUSHAKA—What other pretext for you, kings? Be it this 'Let the anchorites bring our sixth part of the wild grains."

गहीदेति। तेन हि' यद्येवं तार्हि' गृहीतं' सञ्चितं पाथेयं' मन्त: पथि साधु यस्य तेन तादृशो भव'। अकुलत्वादपात् यथात् तथा न निवर्त्ति'तव्यं' किन्तु ततप्रति-

गन्तव्यमेव। तत् पथि वर्त्तनयोग्यं पाथेयं गृहाण। आश्रमं याहि इत्यर्थः। त्वया तपोवनम् उपवनं प्रमोदवनं कृतम् इति अहं मन्ये। यतस्त्वं तपस्वीयसे त्वया नु तव चित्त प्रेम अहो निपुणता ते इत्यभिप्रायः।

राजेति। परिज्ञातो' राजाहमिति विदितः। 'चिन्तय तावत्' विचिन्त्य ब्रूहि केन अपदेशेन' व्याजेन पुनः भूयोऽपि आश्रमपदं गच्छामः'। पूर्वं वैखानसेन निमन्त्रितोऽहं गतः अधुना पुनः केन यामि इति प्रश्नः। ["पुनराश्रमपदं गच्छामः" ( त-, न्या- म- ) "सकृदपि आश्रमे वसामः" ( रा-, वि- ) ]॥

विदूषेति। राज्ञां युष्माकम् अपरः' अन्यः 'कः अपदेशः' व्याजः। 'अस्माक' राज्ञां प्राप्यं निवारस्य षष्ठभागम् उपहरन्तु' मत्सकाशमानयन्तु तापस इति कृत्वा विशतु भवान्।

## NOTES

1. (a) गृहीतपाथेयः—पथि साधु इति पथिन् + ढञ् = पथेयम् provender, stores for the journey. Collect stores for the journey. This is the solution of the king's problem 'The sage is away. That does not matter. She loves you. Go then to the hermitage, stay there for sometime [ गृहीतपाथेयो भव ] until she becomes yours by the गान्धर्व form of marriage which does not require consent of the parents."

2. (a) The king likes the idea. The difficulty is to find some pretext to go there a second time. (b) तावत्—अवधारणे। Emphasises चिन्तय। (c) अपदिश्यते वध्यते अनेन इति अप + दिश + घञ् करणे = अपदेशः a pretext. तेन। तृतीया करणे। (d) आश्रमपदम्—आश्राम्यति अस्मिन् इति आ + श्रम + घञ् अधिकरणे आश्रमः hermitage, तस्य पदम् the site of the hermitage. (e) This is the difficulty. An ordinary individual may come and go out unnoticed. The case of kings is different. They know me here. If I go I must have some excuse to explain my visit.

3. (a) नीवार etc.—नितरां व्रियन्ते इति नि + वृ + घञ् कर्मणि = नीवाराः wild grains, नि is lengthened by the rule,—"उपसर्गस्य घञि अमनुष्ये

बहुलम्—The final of an उपसर्ग is irregularity lengthened when घञ् follows and the compound does not refer to a human being

राजा—मूर्ख, अन्यमेव भागधेयमेते तपस्विनो निर्वपन्ति यो रत्नराशीनपि विहाय अभिनन्द्यते। पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम्।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥१३॥

KING—Fool, quite a different kind of rent these ascetics pay which is prized foregoing even heaps of jewels. Behold—Of kings the wealth which arises from the castes is perishable. The foresters give us the sixth part of their penance which is indeed imperishable.

नेपथ्ये — हन्त सिद्धार्थौ स्वः।

( In the Tiring room )—Ha! We have gained our object.

राजेति। भाग एव इति 'भागधेयः' [स्वार्थे धेयप्रत्ययः]। एते तपस्विनः 'अन्यमेव' प्राकृतदेयात् भिन्नमेव भागधेयं' करम् [ 'भागधेयः करो बलिः" इत्यमरः ] निर्वपन्ति' ददाति यो' भागधेयः ( उत्तरवाक्यस्थितत्वादत्र यच्छब्दस्तच्छब्दोपादानं मापेक्षते ) रत्नानां' मणीनां राशीन् अपि' समूहान् अपि विहाय' परित्यज्य अभिनन्द्यते बहुमन्यते। कुतोऽयमुत्कर्ष इति चेत् 'पश्य'—

यदिति। अन्वयः—नृपाणां वर्णेभ्यो यत् धनम् उत्तिष्ठति तत् क्षयि। आरण्यका नः अक्षय्यं हि तपःषड्भागं ददति। व्याख्या – नृपाणां' राज्ञां वर्णेभ्यो' ब्राह्मणादिभ्यः यत् धनं' कररूपं वित्तम् उत्तिष्ठति' आदीयते ( उदोऽनूर्द्ध्वकर्मणि" इत्यत्र ईहा-ग्रहणात् अत्र च ईहाया अभावात् नात्मनेपदम् ) तत् क्षयि' विनाशि। आरण्यकाः' तपस्विनः नः' अस्मभ्यम् अक्षय्यं हि' हेतुमक्षयमेव ["क्षय्यजय्यौ शक्यार्थे" निपात्यते ] तपसः षट्' षष्ठो भागः तपःषड्भागः' [ अत्र षट्शब्दस्य षष्ठार्थत्वात् न संख्यात्वम्, "वृत्तिविषये सख्याशब्दस्य क्वचित् पूरणार्थत्वमिष्यते" इति नियमात्। तेन "दिक्संख्ये संज्ञायाम्" इति नियमो न प्रवर्तते। ततः समासः ] तं 'ददति' [ ददातेः शतृः अन्ति ]। [ तद्धनम्" ( क॰ आ॰ )—तत् फलम्" ( रा॰ वि, म॰ )।

नैपथ्ये इति—'द्वन्द्व' इवे । सिद्धः' सम्पन्नः अर्थः' प्रयोजनं ययोः तथाविधौ स्वः भवावः । राजदर्शनार्थं चलितौ मृगयां गतो न वा इति सन्दिहानौ न यातः इति श्रुत्वा हृष्टौ तापसौ एवम् ऊचतुः ।*

NOTES

1. निर्वपन्ति – निर् + वप + लट् अन्ति give [ वपति—ते, उवाप—ऊपे अप्सासि—ते, अवाप्सीत् ] ।

2. (a) उत्तिष्ठति—Accrues उत्पद्यते । उद् + स्था takes आत्मनेपद when it does not mean to 'get up', the rule being—उदोऽनूर्ध्वक-र्मणि । Here 'to get up' is not the meaning yet we do not get आत्मनेपद ; because, for the आत्मनेपद, the Varttika "ईहायामिति वक्तव्यम्" requires the meaning to be 'to make an effort.' (b) वर्णेभ्यः —From the four वर्ण class as distinguished from the forester ( आरण्यक ) । अपादाने पञ्चमी । (c) चयि—चीयते इति चि + इनि ताच्छील्ये कर्तरि । (d) तपःषड् &c.—षट् here means षष्ठ, the sixth by the maxim 'सङ्ख्याशब्दस्य—' etc. see Tika. Hence it is not a सङ्ख्या and the rule "दिक्सङ्ख्ये संज्ञायाम् does not apply. Thus षट् भागः षड्भागः कर्मधा । तपसः षड्भागः । तम् । (e) अक्षय्यम् चेतुमशक्यम् इति क्षि + यत् कर्मणि क्षय्यम् by निपातन in the rule "क्षय्यजय्यौ शक्यार्थे" । The usual form is क्षेयम् in the sense क्षेतुमर्हम् । [f] आरण्यकाः—अरण्ये भवा इति अरण्य + वुञ् by the rule "अरण्यान्मनुष्ये" । Nom to ददति ।

3. Remark—उत्तिष्ठति is usually used with reference to income as in ग्रामात् शतमुत्तिष्ठति । It is customary to speak of income as धन not as फल । Hence, prefer the reading धनम् to फलम् ।

राजा ( कर्णं दत्त्वा )—अये धीरप्रशान्तस्वरैस्तपस्विभिर्भवि-तव्यम् ।

KING—Ha ! By their deep and calm voice they are bound to be ascetics.

( प्रविश्य ) दौवारिकः—जेदु जेदु भट्टा । एदे दुवे इ-सि

* Adopted by Prof. Gajendragadkar

कुमारओ पडिहारभूमिं उवट्ठिदा [ जयतु जयतु भर्त्ता। एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमिम् उपस्थितौ ]

(Entering) WARDER—Be victorious, Sire, be victorious. (Or—Prosper, let Sire prosper). Here, two hermit youths have approached the ground at the door.

राजा—तेन हि अविलम्बितं प्रवेशय तौ।

KING—Then let them enter without delay.

दौवारिकः—एसो पवेसेमि [ एष प्रवेशयामि ] ( निष्क्रम्य ऋषिकुमारकाभ्यां सह प्रविश्य ) इदो इदो भअन्तो [ इत इतो भवन्तौ ]।

WARDER—Here, I am letting them in. (Going out and reentering with the hermit youths) This way, Sirs, this way.

राजेति। ('कर्णं दत्त्वा' श्रुत्वा, आह )'धीरा' गम्भीराः 'प्रशान्ताः' स्थिराश्च ये स्वराः कण्ठध्वनयः तैः उपलक्षितैः [ "इत्थम्भूतलक्षणे" इति तृतीया ] तपस्विभिर्भवितव्यम्। यथा धीराः प्रशान्ताश्च कण्ठस्वराः श्रूयन्ते, तथा मन्ये तापसा आगता इति भावः।

जयत्विति। ऋषि आमू कुमारकौ चेति ऋषिकुमारकौ तापसयुवानौ 'प्रतिहारस्य' द्वारस्य 'भूमि' देशम् उपस्थितौ' प्राप्तौ आगतौ इत्यर्थः।

तेनेति। 'तेन हि' ततः 'तौ' 'अविलम्बित' झटिति यथा तथा 'प्रवेशय'। इत इति। हे 'भवन्तौ इत इतः' अस्यां दिशि उपसर्पतम् अत्र राजा आस्ते।

NOTES

1. धीर &c.—धीर is deep. Compare 'प्रमथ्यमानार्णवधीरनादिनीम्"। धीरप्रशान्तस्वरैस्तपस्वी is like जटाभिस्तापसः। Such voice, like matted locks indicates तपस्वी। Hence इत्थम्भूतलक्षणे तृतीया।

2. प्रतिहार &c.—प्रतिक्रियन्ते राजसकाशं नीयन्ते जना अस्मात् इति प्रति + हृ + घञ् अपादाने = प्रतिहारः the gate तस्य भूमिः।

3. अविलम्बितम्—विलम्बितं विलम्बः। भावे क्तः। अविद्यमानं विलम्बितं यस्मिन् कर्मणि तत् यथा तथा। बहु—।

4. एषः—Implies instant execution.

(उभौ राजानं विलोकयतः)। प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः। अथवा उपपन्नमेतदस्मिन् ऋषिभ्यो नातिभिन्ने राजनि। कुतः—

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥१४॥

(The two look at the king) FIRST HERMIT—Oh! The attractiveness of his person though resplendent! Or, this is befitting in this one that does not differ much from the sages. (Do you ask) how? By him too residence is taken up in an Asrama which is open to all for enjoyment. He too gleans penance every day through his engagement in protection. Perfect control of self and surroundings as he has, his too the holy appellation Muni—only preceded by the word Rajan—sung by a couple of bards, constantly reaches the heaven.

अहो इति। 'अहो' आश्चर्यं अव्ययम्। 'दीप्तिमतोऽपि' तेजसा भासुरस्यापि अस्य 'वपुषः' 'विश्वसनीयता' विश्वासयोग्यता। अस्य भासुरमपि वपुः विश्वासमुत्पादयति भयं नैव जनयति इत्यर्थः। 'अथवा' नैतदाश्चर्यम्। 'उपपन्नं' युक्तमेव 'एतदस्मिन् ऋषिभ्यः' कण्वादिभ्यः [अन्यार्थभिन्नशब्दयोगात् पञ्चमी] 'नातिभिन्ने' अनतिभिन्ने ऋषिकल्पे [नञर्थेन नशब्देन "सुपसुपा" इति समासः] 'राजनि' दुष्यन्ते। ["एतदस्मिन्" (त-, न्या-, म-)—"एतत्" (रा-, वि-)॥ "ऋषिभ्यो नातिभिन्ने" (रा-, वि-)—"ऋषिकल्पे" (त-, न्य-, म-)]॥

अध्येति। अन्वयः—अमुनापि सर्वभोग्ये आश्रमे वसतिः अध्याक्रान्ता। रक्षायोगात् अयमपि प्रत्यहं तपः सञ्चिनोति। वशिनः अस्यापि केवलं राजपूर्वः पुण्यः मुनिरिति शब्दः चारणद्वन्द्वगीतः मुहुः द्यां स्पृशति। व्याख्या—'अमुना' राज्ञा 'अपि' ऋषिणा इव 'सर्वैः भोग्ये' व्यवहर्त्तव्ये 'आश्रमे' गृहस्थाश्रमे, ऋषिपक्षे तपोवने, 'वसतिः' वेश्म

गृहम् [ "वसती रात्रिवेश्मनोः" इत्यमरः ] 'अध्याक्रान्ता' अधिकृता। 'रक्षायां' प्रजापालने 'योगात्' व्यापारात् 'अयमपि' ऋषिः इव 'प्रत्यहं तपः' सुकृतं 'सञ्चिनोति' अर्जयति 'वशिनः' लोकेशस्य आत्मेशस्य च 'अस्यापि' ऋषि इव 'केवलं राजन्' इति शब्दः 'पूर्वो' यस्मात् तादृशः 'पुण्यः' पवित्रः 'मुनिरिति शब्दः' आख्या 'चारणयोः' वैतालिकयोः, देवगायनयोर्वा 'द्वन्द्वेन' युग्मेन 'गीतः' सन् 'मुहुः' वारं वारं 'द्यां' स्वर्गं 'स्पृशति' अधिरोहति। ऋषिरिवायमाश्रमवासी तपश्चरणशील. भेदस्तु अयं राजपूर्वको ऋषिः राजर्षि इत्येतावदेव। अतोऽहं ब्रवीमि 'ऋषिभयो नातिभिन्ने राजनि' इति।

## NOTES

1. (a) उपपन्नम् &c —Sages are of august appearance , yet they can be approached with confidence. The king does not differ much from a sage Hence like that of sages his appearance too is confidence-creating though august. The next sloka explains how he does not differ much from a ऋषि *

2. (a) अध्याक्रान्ता &c.—This is the first point of resemblance with a sage, viz. the king has an आश्रम which is the resort of all. (b) रक्षायोगात &c.—Sages practice तपस। So does this king by his self sacrifice in offering protection to his subject. (c) He too is वशिन् like a sage. The sage is वशिन् because he is जितेन्द्रिय। This king is doubly वशिन् because he is जितेन्द्रिय and also holds kingdoms under subjugation. "वशः परवशे विषु" इति कोषः। He is therefore entitled to be called a मुनि like the sages for,"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते"। (d) With these three points of agreement and only one difference ( केवलं राजपूर्वः ) he is truly ऋषिभ्यो नातिभिन्नः। (e) द्वन्द्व—द्वि is duplicated and by निपातन becomes द्वन्द्व। 'पूर्वपदस्य च अम्भावो निपात्यते। उत्तरपदस्य च अत्वम्"—Bhashya. Neuter by usage ; लौकिक लोकात् "अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसंख्यानम्"। Bards always (अत्यन्त) appear two together सहचरित before kings. Hence they are अत्यन्तसहचरित। Also they are लोकविज्ञात।

* Adopted by Prof. Gajendragadkar.

द्वितीयः—गौतम, अयं स बलभित्सखो दुष्यन्तः ?

SECOND H—Gautama, is this Dushyanta, the friend of Balabhit Indra ?

प्रथमः— अथ किम् ?

FIRST H—Who else (Yes).

द्वितीयः—तेन हि,

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुरा बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥१२॥

SECOND H—Well, then it is no wonder that this person with arms long like the bar of the city-gate, alone guards the entire earth that has the ocean for its blue boundary, and that the gods, having rooted enmity with the demons expect victory in battles from his strung-bow as much as from the thunder-bolt of puruhata Indra. (Or—from his strung bow notwithstanding that there is the thunder-bolt of Puruhuta).

गौतमेति । हे 'गौतम' किम् अयं सः प्रसिद्धः 'बलभिदः' इन्द्रस्य 'सखा' ["राजाहःसखिभ्यष्टच्" इति टच्] दुष्यन्तः इति काकुः ।

अथेति । अथ किम् इति स्वीकारोक्तिः । स एव इत्यर्थः ।

तेनेति । अन्वयः—तेन हि नगरपरिघप्रांशुबाहुः अयमेकः उदधिश्यामसीमां कृत्स्नां धरित्रीं भुनक्ति, दैत्यैः बद्धवैराः हि सुराः समितिषु अस्य अधिज्ये धनुषि पौरुहूते वज्रे च विजयमाशंसन्ते, [इति] यत् एतत् न चित्रम् । यद्वा—सुरा समितिषु पौरुहूते वज्रे [सति] अस्य अधिज्ये धनुषि विजयमाशंसन्ते च [इति] यत् एतत् न चित्रम् । व्याख्या—'तेन हि' यदि साक्षादिव पिनाकी अयमेव दुष्यन्तः तदा 'नगरपरिघः' पुरार्गला इव 'प्रांशू' दीर्घौ बाहू भुजौ यस्य सः [अत्र विशेषणद्वारेव हेतूपन्यासः] 'अयम् एकः' एकाकी 'उदधिः' सागर एव श्यामा' नीला 'सीमा' यस्य ताम्

[ "डाबुभाभ्यामन्यतरस्याम्" इति डाप्। उपसर्जनह्रस्वः। ततष्टाप् ] 'कृतवां' समर्थां 'धरित्रीं' भुवं 'भुनक्ति' पालयति, 'दैत्यैः' असुरैः सह 'बद्धं' दृढं 'वैरं' विरोधः येषां तथाविधा 'हि सुराः' देवाः। यतो बद्धवैरास्तत इत्यर्थः [ हि हेतौ च ] 'समितिषु' युद्धेषु दानवयुद्धेषु 'अस्य' दुष्यन्तस्य 'अधिज्ये' दत्तगुणे 'धनुषि' पुरुहूतस्य इन्द्रस्य इदं 'पौरुहूतम्' ऐन्द्रम्। तस्मिन् 'वज्रे च विजयम्' अरिपराभवम् 'आशंसन्ति' सम्भावयन्ति विजयाशंसां स्थापयन्ति इत्यर्थः इति "यत एतत् न चित्रं" न आश्चर्यम्। यद्वा—'सुराः समितिषु पौरुहूते वज्रे सति वज्रमनादृत्य ["षष्ठी चानादरे" इति अनादरे भावलक्षणे सप्तमी] 'अस्य अधिज्ये धनुषि विजयमाशंसन्ति च' [अयं भुनक्ति सुरा आशंसन्ति च इति समुच्चये चकारः ] इत्यादि प्राग्वत् ॥ सति एवंविधे देवोत्कर्षे सर्वमेतत् सम्भवति इति भावः ॥ ["समितिषु सुराः" [ त-, त्या-, वि-' म- ]—"सुरयुवतयः" [ रा ] ॥ 'बद्धवैरा" [ रा-, वि- ] "सक्तवैराः ( त-, त्या, म- ) ] ॥

NOTES

1. बलभित् &c.—बलं तदाख्यमसुरं भिनत्ति दारयति वज्रेण तं निहन्ति इति बल + भिद् + क्विप् = बलभित् ; the slayer of demon बल। A proper name of Indra.

2. अथ किम्—This is a compound अव्यय indicating assent अभ्युपगम्।

3. (a) उदधि &c —By the rule "उदकस्योदः संज्ञायाम्," उदक becomes उद when leading in a compound which is a संज्ञा। Hence उदकानि धीयन्ते अस्मिन् इति उदक + धा + कि अधिकरणे संज्ञायाम् = उदधिः the sea. सीमन् + डाप् स्त्रियाम् = सीमा boundary. श्यामा सीमा श्यामसीमा blue boundary. कर्मधा—। उदधिः श्यामसीमा यस्या ताम्। (b) धरित्रीम्—धरति इति धृ + इत्र कर्त्तरि + ङीष् स्त्रियाम् ( गौरादि ) the earth (c) नगर &c.—परिहन्यते अनेन इति परि + हन + अप् करणे = परिघः the bar of city gates. "परिघोऽस्त्री योगभेदे परिघातेऽर्गलेऽपि च" इति हेमः। हन becomes घ by the rule "परौ घः"। नगरस्य परिघः। स इव प्रांशु long and stout like the bar of the city-gate उपमानकर्मधा। तादृशौ बाहू यस्य। This gives the reason why it is not strange that this person lords it over the whole earth and is invited to succour the gods. With such powerful arms all this is expected of

him. (d) भुनक्ति—guards. "भुजोऽनवने"—भुज will have आत्मनेपद except when meaning to guard' 'to protect' (अवन)। Here the meaning is 'to guard' hence भुनक्ति not भुङ्क्ते। Compare "बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्" in the sense 'to enjoy'. (e) आशंसन्ते—They expect. In this sense शंस is always preceded by आ and is आत्मनेपदी। "आशंसता बाणगतिं वृषाङ्के" has शंस with a different root आ + शंस, which means to tell' and is परस्मैपदी। (f) समितिषु—सम्भूय यन्ति आसु इति सम् + इ + क्तिन् अधिकरणे = समितयः battles.

4. Reading—I have constructed the sloka differently from the commentators. According to the usual construction the second half gives the reason for the first half It is no wonder that his person &c. because the gods expect &c. But then what purpose is to be served by तेन हि ? In that तेन हि makes what has gone before the reason for what follows. Thus if this (अयम्) be the man, then indeed ( तेन हि ) it is no wonder &c. Evidently the super-human physical development of the king has deeply impressed the speaker, and in wonder, he exclaims—O ! What arms ! Everything is possible in the happy possessor of these I have offered two constructions in place of the usual one—See Tika. The second seems better. It makes the king's bow superior to even Indra's thunderbolt. With धनुषि विजयमाशंसन्ते, compare 'निदधे विजयाशंसां चापे सीताञ्च लक्ष्मणे'—Raghu.

5. Reading. [a] समितिषु सुराः seems better than सुरयुवतयः because it is more natural to speak of the males of one country सुराः as in enmity with the males दैत्याः of another country—सुराः दैत्यैर्बद्धवैराः is perfectly natural. सुरयुवतयो दैत्यस्त्रीभिर्बद्धवैराः may be tolerated some how, but सुरयुवतयो दैत्यैर्बद्धवैराः is as absured as सुरा दैत्यस्त्रीभिर्बद्धवैराः। वैराचरण is not a feminine characteristic at all.*

(b) बद्धवैराः gives the same meaning, but seems to sin against

* Adopted by Prof. Gajendragadkar.

the style. आशंसन्ते समितिषु सुराः सक्तवैरा makes the alliteration with the sibilants a little overdone, and spoils the वैदर्भीरीति which prevails in the sloka.

उभौ ( उपगम्य )—विजयस्व राजन् ।

BOTH H. (Having approached)—Be though victorious, O king.

राजा ( आसनात् उत्थाय )—अभिवादये भवन्तौ ।

KING (Rising from his seat)—I salute both of you.

उभौ—स्वस्ति भवते । ( फलानि उपहरतः ) ।

BOTH H.—Blessing to thee (They offer fruits).

राजा—( सप्रणामं परिगृह्य )—आज्ञामिच्छामि ।

KING (Receiving with a bow)—I solicit commands.

उभाविति । 'उप' समीपे गत्वा 'उपगम्य' । विजयस्वेति ["विपराभ्यां जेः" इत्यात्मनेपदम् ] । अभीति । 'भवन्तौ अभिवादये' नमामि ।

स्वस्तीति । भवते स्वस्ति मङ्गलं भवतु [ "नमः स्वस्ति—" इति चतुर्थी ] ।

फलेति । रिक्तहस्तेन राजदर्शनं निषिद्धम् इति फलानि गृहीत्वा आगतौ तानि राज्ञे 'उपहरतः' प्रयच्छतः ।

राजेति । [ 'प्रणामेन' प्रणत्या सह 'परिगृह्य' फलानि स्वीकृत्य आह ] ॥

त । 'आज्ञा' 'निर्देशं' श्रोतुम् 'इच्छामि' इति कृत्वा भवन्तौ तोषयामि नूनम् [ "आज्ञामिच्छामि" ( वि-, म- )— 'आज्ञापयितुमिच्छामि" ( रा- ) ] ॥

NOTES

1. विजयस्व—No enemy is referred to. It is better taken as अकर्मक in the sense—Do you prosper'.

2. अभिवादये—The merit accuring from salutation goes to the agent. Hence "णिचश्च" इति कर्त्रभिप्राये क्रियाफले आत्मनेपदम् ।

3. फलानि उपहरतः—Kings have to be approached with some sort of present. "रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम्" । Compare—

* Adopted by Prof. Gajendragadkar.

"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्"—Raghu. "सोपायनोपस्थितलोकपालम्"
—Bhatti. &c.

4. आज्ञापयितुमिच्छामि for आज्ञामिच्छामि is unnecessarily round-about, the king is impatient to serve. This is natural with him and has nothing to do with his love affair.

उभौ—विदितो भवान् आश्रमसदामिहस्थः, तेन भवन्तं प्रार्थयन्ते—

BOTH—You are known to the dwellers of the hermitage as being here, so they request you—

राजा—किमाज्ञापयन्ति ?

KING—What do they command ?

उभौ—तत्रभवतः कण्वस्य महर्षेरसान्निध्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

BOTH—That owing to the absence of his holiness the sage Kànva, Rakshasas are causing obstruction to our sacrifices. So for a few nights, let the hermitage be graced by you, accompanied by your charioteer.

राजा—अनुगृहीतोऽस्मि ।

KING—I am favoured.

विदूषकः (अपवार्य्य)—एसा दाणिं अणुऊला दे अब्भत्थणा [ एषा इदानीमनुकूला ते अभ्यर्थना ] ।

VIDUSHAKA—(Aside)—Now the request is favourable to you.

विदित इति । इह तिष्ठतीति 'इहस्थः' अत्र स्थितः 'भवान्' आश्रमे सीदन्ति इति 'आश्रमसदः' तपोवनवासिनः ( "सत्सूद्विष—" इति क्विप् ) तेषां 'विदितः' ज्ञातः वर्त्तमाने क्तः "क्तस्य च वर्त्तमाने", इति अनुक्ते कर्त्तरि षष्ठी ] । भवान् अत्र स्थितः इति ज्ञातवन्तः इत्यर्थः । 'तेन' हेतुना 'ते भवन्तं' प्रार्थयन्ते'—

तवेति। 'तवभवतो' मान्यस्य 'सन्दर्शः कण्वस्य' सन्निधिरेव साम्निध्यं 'समीपस्थितिः।' 'असान्निध्यात्' दूरावस्थानात् ( हेतौ पञ्चमी ) 'रक्षांसि नः इष्टेः यागस्य विघ्नम् उत्पाद-यन्ति' जनयन्ति। 'तत्' तस्मात् 'कतिपयाः' काः अपि अनिर्दिष्टसंख्याः (कतिपयशब्दः अनिर्दिष्टसंख्यार्थे अव्युत्पन्नं प्रातिपदिकम्) 'रात्रीः' (अत्यन्तसंयोगे द्वितीया) 'सारथिद्वितीयेन' सारथिसहायेन 'भवता आश्रमः' कण्वस्य अनुपस्थितौ अधुना 'असनाथः' अनाथः भवदुपस्थित्या 'सनाथः' क्रियताम् 'इति प्रार्थयन्ते'।

विदूषकेति। 'अपवार्य' अन्यैः अश्रुतम उच्चार्य आह।

एषेति। 'एषा अभ्यर्थना' तपोवनवासिनां प्रार्थना। 'इदानीम्' अस्मिन् अवसरे ते 'अनुकूला' सपक्षा, आश्रमप्रवेशदायिनी [ "एषा इदानीं ते अनुकूला अभ्यर्थना" ( रा-, वि-, मा- )—"एष इदानीं भवतोऽनुकूलो गलहस्तः" ( त-, न्य- ) ]।

## NOTES

1. प्रार्थयन्ते—The nominative is आश्रमसदः which is got from आश्रमसदाम by विभक्तिविपरिणाम। It is याच्यार्थ hence द्विकर्मक, one कर्म being भवन्तम् and the other इति further down. This इति refers to the whole of तवभवत· ·क्रियतामाश्रमः।

2 किमाज्ञापयन्ति—This is an interruption. The word प्रार्थयन्ते (they solicit) the king considers too high to come to him from the Munis, and he hastily puts in what he considers, the correct word आज्ञापयन्ति (they command).

3. (a) असान्निध्यात्—सम् + नि + धा + कि भावे = सन्निधिः ; presence. सन्निधिरेव इति सन्निधि + ष्यञ् स्वार्थे = सान्निध्यम्। न सान्निध्यम्। नञ् तत्। तस्मात्। (b) रक्षांसि—Rakshasas. This also takes a स्वार्थिकप्रत्यय, viz. अण् giving राक्षस in the masculine. सान्निध्य and राक्षस are instances of a स्वार्थिकप्रत्यय changing the gender of the stem—in the first from masculine ( सन्निधिः ) to neuter, and in the second from neuter ( रक्षांसि ) to masculine. क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यति-वर्तन्ते (c) यज + क्तिन् करणे भावे वा = इष्टिः sacrifice. विहन्यते अनेन इति वि + हन + क करणे अन्यर्थे = विघ्नः obstruction (d) कति &c —The वाचस्पत्य derives कतिपय from कति with अयच् and the augment पुक्। But the rule "प्रथमचरमतयाल्पार्धकतिपयनेमाश्च" seems to be against this.

There तय stands for अयच् i. e. अयच् प्रत्ययान्त words. So तय includes कतिपय if कतिपय is अयच् प्रत्ययान्त, and then कतिपय needs no separate mention in the sutra. The separate mention of कतिपय shows therefore that कतिपय is not अयच् प्रत्ययान्त at all. Besides, there is no rule to attach अयच् to कति or to have पुक् either. The word is better taken as a primitive (अव्युत्पन्नप्रातिपदिक)। Again, from the presence of बहु and गण in the rule "बहुगणवतुडति संख्या" commentators argue that other words that remotely refer to संख्या such as भूरि, कतिपय. &c. are not to be taken as संख्या। "अनियतसंख्यावाचिनां चेत् संख्याकार्यं स्यात् तर्हि बहुगणयोरेव"—Jnanendra Bhiskshu. "भूर्यादीनां निवृत्त्यर्थं संख्यासंज्ञा विधीयते"—Vrittikara. "कतिपयशब्दो न संख्या"—Ibid. Hence कतिपया रात्रय: समाहृता इति कतिपयरात्रि + अच् समासान्त = कतिपयरात्र: in the masculine by the rule 'रात्राह्नाहा: पुंसि"। "संख्यापूर्वं रात्रं क्लीबम्" does not apply because कतिपय is not a संख्या as already remarked. For the same reason the समासान्त affix अच् has to be attached by योगविभाग from the rule "अच प्रत्यन्ववपूर्वात् सामलोम्न:" and not by "अह:सर्वैकदेशसंख्यातपुण्याच्च रात्रे:।* Prof. Gajendragadkar adopts these details except he refers कतिपया रात्रय: यस्मिन् स कतिपयरात्र: काल:—a बहुव्रीहि compound. This is objectionable, रात्रि is the most dreaded time for the appearance of ghosts &c. Comp. "सायन्तने सवनकर्मणि" (Act III). Hence the compound should have रात्रि prominent in it. Prof. G's बहुव्रीहि takes away its prominence from रात्रि।

The reason for Prof. G s preference is that he thinks कतिपया: रात्रय: समाहृता: must make a द्विगु of कतिपया; and रात्रय: whereas कतिपय: not being a संख्या, a द्विगु is not available here.

In answer it may be pointed out that the idea of a समाहार is not restricted to a द्विगु। Witness समाहार in the द्वन्द्व compound संज्ञकोकिलम्। In a तत्पुरुष the rule 'तद्धितार्थोत्तरपदसमाहारे च" does not mean संख्या एव समस्यते समाहारे but संख्या समस्यतेसमाहारे एव। Thus the right of कतिपय to lead, with समाहार implied, is not

* 'Adopted by Prof. Gajendragadkar.

affected. My exposition makes a कर्मधा—(not a द्विगु) of कतिपयाः and रात्रयः। The idea being a collective one ( समाहार ) we have singular. "अन्यत्रापि च दृश्यते—दीर्घरात्रः समरात्रः अरात्रः। तदेतत् सर्वं योगविभागं कृत्वा साधयन्ति"—Vrittikara (e) सारथि &c.—सारथिना द्वितीयः or सारथिर्द्वितीयो यस्य तेन।

4 अनुकूला—अनुगता कूलम् towards the shore, i e. favourable. The metaphor is derived from navigation. The wind is favour-(प्रतिकूल) if away from it.* The moment before, you were after an excuse to enter the hermitage Now, here you are! They request you to come!*

5. Reading—"अनुकूलो गलहस्तः" is proverbial (लौकिकोक्तिः)। When one is dragged or turned out by the neck provided such dragging or turning out is to one's advantage (i e. when a thief is turned out instead of being made over to the police), the turning out becomes to him अनुकूला गलहस्तः (Here a task is so to the king, he is dragged to do some work. It is welcome to him and is no task but by transference of epithets, an अनुकूलो गलहस्तः। The plesantry suits very well the character of the king's smile, however (See राजा स्मितं कृत्वा below) points to pleasantry and favours the reading अनुकूलो गलहस्तः।

राजा—( स्मितं कृत्वा )—रैवतक, मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति।

KING—(Smiling)—Raivataka, let the charioteer be ordered this, using my words—"Bring me the car with the bow."

दौवारिकः—जं देवो आणवेदि [ यत् देव आज्ञापयति ]। ( निष्क्रान्तः )।

WARDER—As Sire commands (Exit)

* **Adopted by Prof. Gajendragadkar.**

उभौ ( सहर्षम् )—

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥१६॥

BOTH (With joy)—This is extremely proper in you, the imitator of your ancestors. The descendants of Puru are indeed ordained to the sacrifice "Absence-of-danger-of-the distressed."

राजा ( सप्रणामम् )—गच्छतां पुरो भवन्तौ । अहमपि अनुपदम् आगत एव ।

KING (With a bow)—Go first yourself. I am coming too following you closely.

राजेति । 'रैवतक' इति दौवारिकनाम । बाणासनेन' धनुषा 'सह रथम् उपस्थापय' समीपमानय 'इति' एतत् 'मद्वचनात्' मद्वचनंमदाज्ञाम् अवलम्ब्य (ल्यप लोपे कर्मणि पञ्चमी ) 'सारथिः उच्यताम्' ।

अन्विति । अन्वयः—पूर्वेषाम् अनुकारिणि त्वयि इदं युक्तरूपम् । पौरवाः आपन्नाभयसत्रेषु दीक्षिताः खलु । व्याख्या— पूर्वेषां प्राचीनानां पौरवाणाम् अनुकारिणि' अनुवर्त्तिणि तच्चरितचारिणि इत्यर्थः त्वयि इदम्' तापसवचनकरणं युक्तरूपम्' अतिशयेन युक्तम् (प्रशंसायां रूपप् प्रत्ययः)। कुत इत्याह—'पौरवाः' तवैव पूर्वे राजानः 'आपन्नानां विपन्नानां भीतानामिति यावत् यत् 'अभय' भयाभावः तदेव 'सत्राणि' यागाः तेषु दीक्षिताः खलु' धृतव्रता एव । आरण्यकानाम् ऋषीणामिव पौरवाणां राजर्षीनामपि अवश्यकर्त्तव्यं सत्रमस्ति, 'आपन्नाभयम्' इति तस्य सत्रस्यनाम । तेन हि भीतानां भयमपगच्छति । तत् पौरवस्य यत् अस्माकं भयनिरासार्थं यतते सुसदृश' त एतत् ।

गच्छतामिति । 'भवन्तौ पुरो गच्छतां' पूर्वम् आश्रमे प्रतिनिवर्त्तताम् । 'अहमपि अनुपदम्' अन्वक् भवताम् अनुगामी भूत्वा ( "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्" इत्यमरः ) 'आगतः एव' आश्रमं प्राप्त एव अविलम्बितं गच्छामि इत्यर्थः ।

## NOTES

1. (a) साधु अनुकरोति इति अनु + कृ + णिनि साधुकारिणि कर्त्तरि =

अनुकारी one who follows well. तस्मिन्। (b) इदम्—This i e. readiness in succouring the distressed. (c) आपन्न &c.—आ + पद + क्त कर्त्तरि = आपन्नाः the distressed. भयस्य अभावः अभयम्—Absence of danger, अव्ययी—। तस्य सत्राणि sacrifices for the absence of danger Now see Tika. तेषु।

2. (a) पूर्वस्मिन् काले इति पूर्व + ङि (७मी) + असि स्वार्थे = पुरस् First. पूर्व is changed into पुर् by the rule "पूर्वाधरावराणाम् असि पुर अध् अवश्चैषाम्॥ (d) अनुपदम्—पदस्य पश्चात् after your foot-steps. अव्ययी—। Amara makes this mean a follower. But Kalidasa often uses it in the general sense पश्चात् subsequent. Thus "अमोघाः प्रतिगृह्णन्ता-मर्घ्यानुपदमाशिषः" = Raghu. For this purpose, derive अनुगतं पदम् अनुपदम्। प्रादितत्—। This gives us a विशेष्यलिङ्ग word and not an अव्यय like the former.

उभौ—विजयस्व। ( निष्क्रान्तौ )

BOTH—Be thou victorious (Exeunt).

राजा—माधव्य, अप्यस्ति शकुन्तलादर्शने कुतूहलम्।

KING—Madhavya, is there any curiosity to see Sakuntala ?

विदूषकः—पढ़मं सपरिवाहं आसि। दाणिं रक्खसवुत्तन्तेन विन्दूवि ण अवसेसिदो [ प्रथमं सपरिवाहम् आसीत्। इदानीं राक्षसवृत्तान्तेन विन्दुः अपि न अवशेषितः ]।

VIDUSHAKA—At first it was to overflowing. Not even a drop is now felt at the news of the Rakshasas.

राजा—मा भैषीः। ननु मत्समीपे वर्त्तिष्यसे।

KING—Fear not, you will indeed be near me.

विदूषकः—एस रक्खसादो रक्खिदोम्हि [ एष राक्षसाद्रक्षितोऽस्मि ]।

VIDUSHAKA—Here, I am saved from the Rakshasas.

प्रथममिति। 'प्रथमम्' इतः पूर्वं मे कुतूहलं 'परिवाहेन' परितो निर्गमनेन 'सह'

यत् मामकम् 'आसीत्' मदीये शरीरे कुतूहलं न माति स्म किन्तु परितः प्रवहतमिवासीत। 'इदानीम्' अधुना 'राक्षसानां वृत्तान्तेन' कथया 'बिन्दुरपि' कुतूहलस्य अणुः अपि न' अवशेषितः न स्थितः।

मेति। 'मा भैषीः' भयं मा गमः ("माङि लुङ्" इति भीधातोः भविष्यति लुङ्)। 'ननु' इत्यसहने आक्षेपे इत्यर्थः। 'मत्समीपे' मम पार्श्वे 'वर्तिष्यसे' स्थास्यसि तत् कुतस्ते भयम्।

एष इति। 'एष' इति अविलम्बितसूचनम्। 'राक्षसात्' (जातावेकवचनम्। भयहेतोरपादाने पञ्चमी) 'रक्षितोऽस्मि'। यदि त्वत्समीपे तत् रक्षित एवाहं का भीतिः।

NOTES

1. (a) अपि—This implies प्रश्न question. "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः। (b) कुतूहलम्—Curiosity. "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्'—Darpana. It gives कौतूहलम् with अण् स्वार्थे।

2. (a) परितो वहनम् इति परि + वह + घञ् भावे = परिवाहः or परीवाहः overflow. तेन सह यथा तथा। Adverb (b) राक्षस &c.—अनुक्ते कर्तरि तृतीया। Thus राक्षसवृत्तान्तः बिन्दुम् अवशेषितवान् = राक्षसवृत्तान्तेन बिन्दु अवशेषितः। (c) अवशेषितः—अव + शिष चुरादि + क्त कर्मणि is left. (d) The metaphor is from the case of liquid overflowing from a reservoir Overflow is always of what is in excess, and hence it stops soon leaving the vessel full But now the news of Rakshasas being about has let the whole out, not a drop is left !*

3. वर्तिष्यसे—वृत + लृट स्यसे। Optionally वर्त्स्यसि in the परस्मैपद। "वृद्भ्यः स्यसनोः" इति परस्मैपदविकल्पः स्ये सनि च परतः। In the परस्मैपद we have no इट by the prohibition 'न वृद्भ्यश्चतुर्भ्यः'।

(प्रविश्य) दौवारिकः—सज्जो रधो भट्टिणो विजयप्पत्थाणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो [ सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते। एष पुनर्नगराद्देवीनाम् आज्ञप्तिहरः करभक आगतः ]।

WARDER (Entering)—The car, ready, is biding Sire's start

---

* Adopted by Prof. Gajendragadkar.

for victory, but here is Karabhaka come from the town bearing the queen's orders.

राजा ( सादरम् )—किमम्बाभिः प्रेषितः ?

KING—(Eagerly) Sent by mother ?

दौवारिकः—अह इं [ अथ किम् ]।

WARDER – Just so.

राजा—ननु प्रवेश्यताम् ।

KING—Well, let him in

दौवारिकः—तह ( तथा )। ( निष्क्रम्य करभकेण सह प्रविश्य ) एसो भट्टा, उवसप्प [ एष भर्ता उपसर्प ]।

WARDER—As Sire commands. (Going out and reentering with Karabhaka) Here is Sire. Approach.

सज्ज इति। रथः सज्जः गमनाय सज्जितः सन् 'भर्तुः' स्वामिनस्ते 'विजयाय' राक्षसजयाय 'प्रस्थानम्' अपेक्षते। 'एष पुनः अयं तु देवीनां' राजमातुः ( गौरवे बहुवचनम् ) 'आज्ञप्तिम्' आदेशं 'हरति' वहति इति 'आज्ञप्तिहरः' ("हरतेरनुद्यमनेऽच्" इति अच् प्रत्ययः) 'करभकः' तन्नामकः भृत्यः 'नगरात् आगतः' अत्र प्राप्तः।

राजेति। ( 'आदरेण' औत्सुक्येन सह आह ) 'अम्बाभिः' मात्रा ( गौरवे बहुवचनम् )।

नन्विति। 'ननु' सम्भ्रमे। प्रवेश्यताम्' कथं विलम्बः क्रियते।

एष इति। 'उपसर्प' समीपं गच्छ ?

NOTES

1. सज्जः—सज्जति सज्जते वा इति सज्ज + अच् कर्तरि = सज्जः ready. (b) पुनः Indicates भेद, i.e. a hitch. The car is ready for the hermitage, (but पुनः) you cannot start without attending to what the queen-mother commands. (c) आज्ञप्ति &c.—आ + ज्ञा + णिच् + क्तिन् भावे = आज्ञप्तिः command आज्ञा। तां हरति इति आज्ञप्ति + हृ + अच् कर्तरि = आज्ञप्तिहरः messenger.

2. ननु प्रवेश्यताम्—ननु implies सम्भ्रम। The speech is a censure to the gate-keeper. He should have ushered him in at once without waiting for orders. "ननु प्रश्ने परक्षतावधिकारे च सम्भ्रमे" इति मेदिनी। प्रवेश्यताम् with the णिच् emphasises the censure. ननु प्रविशतु would give स्वातन्त्र्य to करभक and thus censures him. Why does he not come in? ननु प्रवेश्यताम्—Why are you (कर्ता) not letting him in? प्र + विश + णिच् + लोट ताम कर्मणि।

करभकः—जेदु भट्टा। देवी आणवेदि, आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उववासो हुविस्सदि। तहिं दीहाउणा अवस्सं अम्हे सम्भावइदव्वत्ति [ जयतु जयतु भर्ता। देवी आज्ञापयति आगामिनि चतुर्थदिवसे पुत्रपिण्ड-पालनो नाम उपवासो भविष्यति। तत्र दीर्घायुषा अवश्यं वयं सम्भावयितव्या इति ]।

KARABHAKA—Be victorious Sire, be victorious. The queen-mother says—On the coming fourthday, the fast named Putrapinda palana" comes off. At that I have to be honoured by thee the long-lived one, without fail.

राजा—इतस्तपस्विकार्यम् इतो गुरुजनाज्ञा। इयमपरान्तिक्रमणीयम्। किमत्र प्रतिविधेयम्।

KING—On the one hand is the work of the ascetics, the command of revered mother on the other. Both are unavoidable. What has to be done now?

विदूषकः—तिसङ्कु विअ अन्तरा चिट्ठ [ त्रिशङ्कुरिव अन्तरा तिष्ठ ]।

VIDUSHAKA—Stay mid-way like Trisanku.

जयतिति। 'आगामिनि चतुर्थ दिवसे पुत्रपिण्ड' पालयति' चर्म न इति 'पुत्रपिण्ड-

* Adopted by Prof. Gajendragadkar.

-पारणो नाम' ["करणाधिकरणयोश्च" इति करणे ल्युट् ] 'उपवासो भविष्यति'। तत्र तस्मिन् उपवासे 'दीर्घायुषा' आयुष्मता भवता 'अवश्यं वयं सम्भावयितव्याः' स्वोपस्थित्या सम्मानयितव्याः—'इति देवी राजमाता 'आज्ञापयति' आदिशति ["पुत्रपिण्डपालनो नाम" ( त-, न्या-, म- )—'प्रयुक्तपारणो मे" [ रा-, वि- ] ॥

इत इति। 'इतः' एकतः 'तपस्विनां कार्यम्' इष्टविघ्ननिवारणम्, 'इतः' अन्यतः 'गुरुजनस्य' मातुः 'आज्ञा'। 'द्वयमपि अनतिक्रमणीयम्' अनुल्लङ्घनीयम्। अपि च एकस्य करणे अन्यत् अकृतं स्यात्। 'अत्र' अस्मिन् आकुले विषये 'प्रतिविधेयं' प्रतिविधानत्वेन अनुष्ठेयं 'किम्'। किं कृत्वा सङ्कटमिदं तरेयम्।

त्रिशङ्कुरिति। यथा इतः पूर्वं त्रिशङ्कुर्नाम राजा "अधोयाहि" इति इन्द्रेणोक्तः "ऊर्ध्वं गच्छ" इति विश्वामित्रेण च भाषितः नाधो न च ऊर्ध्वं गत्वा मध्ये स्थितः, तथा त्वमपि 'अन्तरा' मध्ये एव 'तिष्ठ'। तपोवनं मा याहि, मा च नगरम् इत्यर्थः। [ अन्तरा" [ त-, न्य ]—"अन्तराले" [ रा-, वि ] ॥

## NOTES

1. (a) आज्ञापयति—आ + ज्ञा + णिच् + लट् ति commands. Note that ज्ञप of the चुरादि class would give आज्ञपयति like अज्ञापति above. Then again we should have आज्ञापति with ज्ञा + णिच्। (b) पुत्र &c.—पुत्रस्य पिण्डम् the son's pinda (sacrificial cake) Now see Tika. पिण्डपालन् is the opposite of पिण्डलोप। पिण्डलोप occurs when progeny fails. Thus पिण्डपालन is a vow which secures progeny. Dushyanta's mother fasts with a view to secure progeny to him. This suggests that Dushyanta was childless, a fact which will play an important part later on.*

2. Reading.—The reading प्रयुक्तपारणः or प्रवृत्तपारणः speaks of the commencement of the breakfast, and assumes that the commencement of the fast itself is known to the king. But the king could not possibly know of it, because the break-fast was to commence four days. Besides the other reading sounds perfectly natural in the case of a childless man. More

---

* Adopted by Prof. Gajendragadkar.

over पुत्र plays a prominent part in this vow as is evident from "तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति"—Infra. All these considerations point to पुत्रपिण्डपालन as the more likely reading.

3. त्रिशङ्कु &c.—A prince of the solar dynasty. He requested Vasishtha to perform for him a sacrifice that will carry him to heaven in his mortal body. Vasishtha refused. He then referred to Vasishtha's son who cursed him to become a Chandala. Viswamitra then undertook the sacrifice but the gods declined to take part in it. Nothing daunted, the mighty sage, by the force of his own asceticism, caused Trisanku to go up. But Indra declined to make room in the heaven for a Chandala and hurled the king downhead foremost. Urged thus by two opposing forces, the king went neither up nor down but rested midway (अन्तरा) in the starry region as a constellation. Vidushaka says this in jest.

राजा— सत्यमाकुलीभूतोऽस्मि —

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

(विचिन्त्य) सखे, त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवान् इतः प्रतिनिवृत्य, तपस्विकार्य्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति ।

KING—I am really perplexed. The places of the two duties being different, my mind is divided into two, like the current of a stream struck against a rock in front. (Reflecting) Friend, you have been accepted by my mother as a son. So having returned and reported me as engaged with the affairs of the ascetics, it behoves you to do the duties of a son for Her Highness.

सत्यमिति । 'सत्य' तत्त्वतः 'समाकुलः' स्थिरः 'आकुलः' अस्थिरः 'भूतोऽस्मि' जातोऽस्मि । [ अभूततद्भावे च्वि ] ।

कृत्ययोरिति। अन्वयः—कृत्ययोः भिन्नदेशत्वात् मे मनः, पुरः शैले प्रतिहतं स्रोतोवहः स्रोतो यथा, द्वैधीभवति। व्याख्या—कृत्य' कार्य्यम् ["विभाषा कृवृषोः" इति क्यप्]। 'कृत्ययोः कार्य्ययोः दृष्टविघ्ननिवारणमातृसम्भाषणरूपयोः भिन्नौ देशौ' ययोः तत्त्वात्, भिन्नस्थाने कर्त्तव्यत्वात् [हेतौ पञ्चमी] 'मे मनः' चेतः 'पुरः' अग्रतः 'शैले' पर्वते 'प्रतिहतं प्राप्ताघातं' 'स्रोतः' प्रवाहं 'वहति' या सा 'स्रोतोवह्' नदी ["क्विप् च" इति क्विप्] तस्या 'स्रोतो यथा' प्रवाह इव। द्विविभागविशिष्टं द्वैधं [अधिकरणविचाले धमुञ्। स्वार्थे अः। ततो मत्वर्थीयोऽच्]। अद्वैधं द्वैधं सम्पद्यमानं भवति "द्वैधीभवति" द्विधाविभक्तस्य भावं धत्ते ["शैले" (रा-, वि-)—"शैलैः (त-, व्या, म-)]॥

विचिन्त्येति। 'विचिन्त्य' ध्यात्वा, कर्त्तव्यमवधार्य्य इत्यर्थः आह—"पुत्र' इति पुत्र-रूपेण 'प्रतिगृहीतः' स्वीकृतः। 'अतः' अस्मात् कारणात्। 'भवान् इतः' अस्मात् स्थानात् 'प्रतिनिवृत्य' नगरं गत्वा 'तपस्विनां कार्य्ये व्यग्र' व्यासक्तं 'मामक'मनः [स्वार्थे अण्] यस्य तथाविधं 'माम् आवेद्य' मामवं विज्ञाप्य 'तत्रभवतीनां' मातुः [गौरवे बहु-वचनम्] 'पुत्रस्य कार्य्यं' कृत्यम् 'अनुष्ठातुं कर्तुम् 'अर्हति' योग्यो भवति। पुत्र-स्थानीयस्त्वं सम्प्रति पुत्रकृत्यं कुरु।

NOTES

1. (a) द्वैधी &c.—द्वयोः स्थानयोः स्थितिः द्विधा: इति: द्वि + धमुञ् = द्वैधम् which is मान्त and अव्यय। द्वैधम् एव इति द्वैधम् + अ स्वार्थे = द्वैधम् in the neuter and अकारान्त। This means 'division into two." द्वैधम् अस्ति अस्य इति द्वैध + अच् मत्वर्थे = द्वैधम् having two divisions. Or द्वि + धमुञ् = द्वैधम् divided into two द्व्यधिकरणकं वस्तु। तदेव इति द्वैधम् + अ स्वार्थे = द्वैधम् &c. as before. (b) The comparsion is of (i) मे and स्रोतोवहः, (ii) मनः and पुरः प्रतिहतं शैले स्रोतः। In both the cases (मनस् and स्रोतस्), the result is द्वैधीभवनम्। This result is due to कृत्ययोर्भिन्न-देशत्वम् in both cases. When applying to स्रोतस् we take कृत्य to mean क्रिया, i.e. प्रवहण flowing, and note that this (प्रवहण) takes in different places (भिन्नदेश) by the two sides of the rock.

2. Reading—शैलैः: refers to several rocks. But then the stream is divided into more than two parts. शैले is better.





3. तपस्वि &c.—तपस्विनां कार्यम्। तस्मिन् व्यग्रम्। ... ।
... ... यस्य तम्। बटु—।

विदूषकः—ण क्खु मं रक्खोभीरुअं गणेसि [ न खलु मां रक्षोभीरुकं गणयसि ]।

VIDUSHAKA—Verily you do not take me as afraid of Rakshasas ?

राजा—( सस्मितम् )—कथमेतद्भवति सम्भाव्यते।

KING [With a smile]—How is this to be thought of thee ?

विदूषकः—जह राआणुएण गन्तव्वं तह गच्छामि [ यथा राजानुजेन गन्तव्यं तथा गच्छामि ]।

VIDUSHAKA—I go in the style a younger brother of the king has to go.

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकांस्त्वयैव सह प्रस्थापयामि।

KING—I am in fact sending back all followers with thee as the disturbance of the hermitage has to be avoided.

विदूषकः—तेन हि जुवराओम्हि दाणिं संवुत्तो [ तेन हि युवराजोऽस्मि इदानीं संवृत्तः ]।

VIDUSHAKA—Then indeed I am now become the Youngprince.

नेति। 'न खलु' (खलु प्रश्ने) 'मां रक्षोभ्यः भीरुः' भयशीलः 'रक्षोभीरुः'। स एव रक्षोभीरुकः' [स्वार्थे कः] तथाविधं गणयसि' सम्भावयसि।

कथमिति। 'भवति' भवद्विषये एतत्' रक्षोभीरुत्वेन गणनं कथं सम्भाव्यते' युज्यते चिन्त्यते वा, न कथमपि। इति परिहासोक्तिः।

यथेति। राज्ञः अनुजः' कनीयान् भ्राता तेन यथा येन विधिना गन्तव्यं' गन्तुमुचितं तथा गच्छामि ( भविष्यत्सामीप्ये लट् )। [ गच्छामि" ( रा-, चि- ) —"गमिष्यामि" ( म- ) ]॥

नन्विति। ननु तपोवनस्य उपरोधः पीडा परिहरणीयः वर्जनीयः 'इति',

ईतीः 'सर्वान् अनुयात्रिकान्' अनुयात्रिकः 'त्वमा एव सह प्रस्थापयामि' प्रेरयामि। अनुचरैः तस्य त्वं राजानुज इव गच्छसि इति किं वक्तव्यम् ?

तेनेति। 'तेन हि' इदानीम् अधुना अनेन सत्कारेण 'युवराजः' कुमारः संवृत्तोऽस्मि।

## NOTES

1. रक्षोभीरुकम्—See Tika, The कन् may also be bad कुत्सिते। Thus कुत्सितो रक्षोभीरुः रक्षोभीरुकः।

2. राजानुजेन—अनु पश्चात् जात इति अनु + जन + ड कर्त्तरि = अनुजः a younger brother, राज्ञः अनुजः। अनुक्ते कर्त्तरि तृतीया।

3. (a) ननु--Implies अनुज्ञा assent. The jester wants to go with a retinue suitable to his position as the younger brother of a reigning prince. The king notifies assent saying that all attendants go with him 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। (b) अनुयात्रिकान्—Followers See Act I आगन्तुकः कर्मसखा।

4 युवराज —युवा राजा the young prince "राजाहःसखिभ्यष्टच्" इति टच्।

राजा (स्वगतम्)—अपलोऽयं बटुः। कदाचित् अस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्। भवतु एनमेवं वक्ष्ये - (विदूषकं हस्ते गृहीत्वा प्रकाशम्)— वयस्य, ऋषिगौरवादाश्रमं गच्छामि। न खलु सत्यमेव तापसकन्यायां ममाभिलाषः। पश्य—

क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः।
परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः॥ १८॥

KING (Aside)—This is a babbler. He might some time relate my desire to the ladies of the inner appartments, Well I will tell him this. (Taking Vidushaka by the hand—Aloud) Friend I go to the hermitage out of regard for the sage. Mine indeed is not really the desire in the hermit-girl. Friend, think where we are and where the person grown with fawns to whom love is unknown Let not the word uttered in jest be taken as the very truth.

विदूषकः—अह इं ( अथ किम् )। ( निष्क्रान्ताः सर्वे )।

VIDUSHAKA—Certainly, (Exeunt All)

## द्वितीयोऽङ्कः। (SECOND ACT)

चपल इति। 'अयं बटुः' माणवकः 'चपलः' वाचालः। 'कदाचित्' कदापि अस्माकं प्रार्थनां' शकुन्तलाभिलाषम्' 'अन्तःपुरेभ्यः' 'अन्तपुरःस्थिताभ्यो देवीभ्यः [तात्स्थ्यात् ताच्छब्द्याम्। सम्प्रदाने चतुर्थी] 'कथयेत्' वदेत् [ सम्भावनायां लिङ् ]। 'भवतु एवम्' ईदृशम् 'एनं' विदूषकं 'वक्ष्ये' कथयिष्यामि ! एवमुक्त्वा एनं वक्ष्यामि। 'वयस्य ऋषीणां यत् गौरवं' महिमा तस्मात् हेतोः अहम् 'आश्रमं गच्छामि। न खलु सत्यमेव मम तापसकन्यायाम् 'अभिलाषो वर्त्तते'।

क्वेति। अन्वयः—सखे वयं क्व, मृगशावैः समम् एधितः परोक्षमन्मथो जनः क्व —पश्य। परिहासविजल्पितं वचः परमार्थेन न गृह्यताम्। व्याख्या—सखे' वयस्य माधव्य 'वयं' राजचक्रवर्त्तिनः 'क्व' कुत्र वर्त्तामहे, 'मृगशावैः' हरिणशिशुभिः 'समं' सह 'एधितः' प्रवृद्धः 'परोक्षः" अतीन्द्रियः 'मन्मथः कामो यस्य तथाविधः अविदितमदनवेदनो 'जनः' शकुन्तलारूपा व्यक्तिः क्व' कुत्र वर्त्तते 'पश्य' निपुणं विभावय [ दर्शनमत्र ज्ञानमात्रम् ]। आवयोर्महदन्तरं कुतः प्रणयः इति द्वौ क्वशब्दौ सूचयतः। यद्येवं किमिदं जल्पितं इत्याह—'परिहासेन' कौतुकेन 'विजल्पितं विवि॰ 'वचः परमार्थेन' सत्येन सत्यरूपेण 'न गृह्यतां' न निर्णीयताम्। ['समभेधितः" [रा-, वि-, म]—"सह वर्द्धितः" [त-, न्य- ]। "विजल्पित" [रा-, वि-, म-]—"विकल्पित" (त-, न्य ) ]॥

## NOTES

1. बटः—Literally it is a Brahman boy. Compare "बटुपरिषदं पुण्यश्रीकः श्रियेव समाजयत्"—Uttara. The jester is thus referred to perhaps owing to his childishness. Sometimes it implies निन्दा as in "निवार्य्यताम् आलि किमप्ययं बटुः", "किं वे बटुरित्यधिक्षिपसि" &c.—

2. (a) **ऋषिगौरवात्—ऋषिषु गौरवम् ऋषिगौरवम् regard for the sages. Or—The majesty of the sages (See Tika). तस्मात्। हेतौ पञ्चमी (b) खलु and एव both imply अवधारण। The first emphasises न and the second सत्यम्।**

3. (a) वयम्—Applies to kings in general. (b) परोक्ष &c.—मननम् इति मन+क्विप् भावे=मत् conciousness. मथतीति मथ+अच् कर्त्तरि मथ: the destroyer, मतो मथ: मन्मथ: the destroyer of conscicusness. A propername of Cupid. शेषषष्ठ्या समास: । This is Bhanuji's derivation. अक्षि means generally any इन्द्रिय । "इन्द्रियविषये सर्वमिन्द्रियमक्षिशब्दो वक्ति" इति कैयट: । Hence परत्वम् अक्ष्णाम इति पर+अक्षि+टच् (समासान्त)—परोक्षम् transcending the senses. अव्ययी— । परोक्षम् अस्ति अस्य इति परोक्ष+अच् मत्वर्थे=परोक्ष: that which transcends the senses. Two points have to be noted here. First the टच् (अ) in समास: is according to some by the गणसूत्र "प्रतिपरसमनुभ्योऽक्ष्ण:" । Others consider पर as an interpolation here and attach अच् by the rule "अक्ष्णोऽदर्शनात्" । Secondly पराक्ष is the form expected Instead, we have परोक्ष by निपातन in the rule "परोक्षे लिट्" । The भाष्य says "परोभाव: परस्याक्षे लिटि इष्यताम् । उत्व वा दे॰ परादक्ष्ण: सिद्धं वास्मान्निपातनात ॥" Thus (i) पर+अक्ष=परो+अक्ष=परोक्ष, or (ii पर+अक्ष=पर+उक्ष=परोक्ष, or again (iii) पर+अक्ष=परोक्ष by निपातन । (c) मृग &c.—मृगाणां शावा: young stags. तै: । समिति सहार्थयोगे तृतीया । (d) परिहास &c.—परिहसनम् इति परि+हस+घञ् भावे=परिहास: jest विरुद्ध जल्पित विजल्पितम् preversely uttered प्रटितत— । परिहासेन विजल्पितम uttered perversely in jest (e) परमार्थेन—परम, अर्थ: Lit the highest thing, i e. truth. तेन । अभेदे करणे तृतीया । [परमार्थ and वचन are indentified]. Or परमेण मुख्येन अर्थेन अभिप्रायेन in its literal sense. (f) The sense is—Kings are used to the blandishments of beauties, trained in all the arts of fascination ; by constant association with these beauties they have acquired peculiar tastes. It is impossible that an artless woman of the wild can please a king, My talk about Sakuntala is a huge joke. Do not be misled by it *

4. Reading—विकल्पितम् means विरुद्ध-कल्पितम् stated otherwise i. e. falsely represented, which is equally good.

Adopted by Prof. Gajendragadkar

## तृतीयोऽङ्कः ।

विष्कम्भकः

( ततः प्रविशति कुशानादाय यजमानशिष्यः ) । शिष्यः—अहो महानुभावः पार्थिवो दुष्यन्तः । प्रविष्टमात्र एव आश्रमं तत्रभवति निरुपद्रवाणि नः कर्माणि संवृत्तानि ।

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नानपोहति ॥१॥

यावदिमान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्यः उपहरामि । ( परिक्रम्यावलोक्य च । आकाशे )—प्रियंवदे कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते । (श्रुतिमभिनीय) किं ब्रवीषि, आतपलङ्घनाद्बलवदस्वस्था शकुन्तला तस्याः शरीरनिर्वापनाय इति । प्रियंवदे यत्नादुपचर्यताम् । सा हि तत्रभवतः कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकम् अस्यै गौतमीहस्ते विसर्जयिष्यामि । ( निष्क्रांतः ) ।

[Then enters a pupil of the sacrificer with Kusa grass]

PUPIL—O, of great majesty is king Dushyanta ! Our rites became free from obstacles even when His Highness but entered the hermitage. What to say of aiming the arrow ! Verily he removes obstacles with even the twang of the bow-string from afar, as if with a growl of the bow. I will take these Kusa to the sacrificers for strewing them round the altar. [Going round, looking about and addressing in the air]. Priyamvada, for whom are being carried this Usira-Unguent and the lotus-leaves with stalks ? (Acting the hearing of the answer).

Do you say that Sakuntala is greatly indisposed through a heat-attack (sun-stroke ?), and these are for soothing her body ? Priyamvada, let her be nursed carefully. She is indeed the life of his Worship the Superior. I too will deliver for her, evil-averting sacrificial water into the hands of Gautami (Exit).

## विष्कम्भकः (PRELUDE)

तत इति – ('कुशान् आदाय' गृहीत्वा 'यजमानस्य' कण्वाश्रमवासिनः कस्यचित् ऋत्विजः 'शिष्यः' छात्रः 'प्रविशति' )।

अहो इति। 'अहो आश्चर्यम्। 'पार्थिवो' राजा 'दुष्यन्तो महान् अनुभावः' प्रभावो यस्य तादृशः। 'तत्रभवति' मान्ये तस्मिन् 'आश्रमे प्रविष्टमात्रे एव' यदैव प्रविष्टः स तदैव, 'नः कर्माणि' क्रियाः 'निर्गता उपद्रवा उपप्लवा विघ्ना येषां तथाविधानि 'संवृत्तानि' [ जातानि ('महानुभावः पार्थिवो'' ( रा०, वि० ]— 'महाप्रभाव राजा'' —(त०, न्या०, म०)॥ ''प्रविष्टमात्रे'' ( रा०, वि० ]॥— येन प्रविष्टमात्रे (त० न्या०, म )॥ ''संवृत्तानि'' ( त०, न्या म० )—''प्रवृत्तानि भवन्ति'' [ रा०, वि, )।

केति। अन्वयः—बाणसन्धाने का कथा। स हि दूरतः ज्याशब्देनैव धनुषः हुङ्कारेणेव विघ्नानपोहति। व्याख्या—किमयमुपप्लवाभावो बाणेन कृतः? नेत्याह— 'बाणस्य सन्धाने' धनुषि योजने का कथा'। तस्य कथैव नास्ति। 'स हि' नृपः' दूरात् 'ज्यायाः' धनुर्गुणस्य शब्देनैव तन्मात्रेणापि, 'धनुषः हुङ्कारेण' कृत्वा इव' (इत्युत्प्रेक्षा), विघ्नान् इष्टविघातकान् 'अपोहति' निराकरोति (धनुषि रुद्रधर्मारोपः। हुङ्कारशस्त्रा हि रुद्राः। ज्याघोषेण राक्षसाः पलायिताः अन्य नायं ज्याशब्दः किन्तु रुद्ररूपं तस्य धनुरेव हुङ्कारेण विघ्नान् निरास )।

यावदिति। 'इमान्' संगृहीतान् 'दर्भान्' कुशान् वेद्याः' यज्ञवेदिकायाः 'स्तरणार्थं परितः पातनाय' 'ऋत्विग्भ्यः यजमानेभ्यः। ( 'ऋत्विग्दधृक्—'' इति क्विन् निपातितः। सम्प्रदाने ४र्थी)। 'उपहरामि' नयामि। नीत्वा तेभ्यो ददामि।

परीति। ('परिक्रम्य' रङ्गमञ्चं परितो गत्वा अवलोक्य 'आकाशे' अवलोक्य आह। रङ्गादिभिः स्थितं पात्रं स बोध्य यत् कथ्यते तत् 'आकाशे' ]। 'इदम् उशीरस्य' वीर-

—आस्वादनस्य 'अनुलेपनं' देहचर्चा 'मृणालवन्ति' मृणालसहितानि 'नलिनीपत्राणि' पद्मपत्राणि 'च अस्य' अर्थे नीयन्ते इति' अवचनम् 'अभिनीय' रूपयित्वा। प्रतिवचनम् अश्रुतमपि श्रुतमिव नाटयित्वा। [ श्रुतिमभिनीय" ( त-, वि- न्या- म- —"आकर्ण्य" ( रा- ) ]॥

किमिति। 'आतपेन सूर्य्येण ग्रीष्मेण वा 'लङ्घनात्' अभिभवात् शकुन्तला 'बलवत्' अत्यर्थम् 'अस्वस्था' अप्रकृतिस्था, कातरा इति यावत् जाता, 'तस्याः' शकुन्तलायाः 'शरीरस्य निर्वापणाय' तापविनोदाय एतत् सर्वम् 'इति ब्रवीषि किम्'? 'यत्नात्' यत्नमालम्ब्य ( ल्यब्लोपे पञ्चमी ) 'उपचर्य्यतां' सेव्यतां सा। सा हि शकुन्तला 'तत्रभवतः' मान्यस्य 'कुलपतेः' अन्नपानादिदानेन मुनिकुलेश्वरस्य कण्वस्य उच्छ्वसितः" निःश्वासवायुः, प्राणभूता—विधेयविशेषणमेतत्। अतएव चिन्तनीया सा। अहमपि तावत् वैतानिकं याज्ञिकं 'शान्त्युदकम्' आपच्छान्तिजलं गौतमीहस्ते अस्यै शकुन्तलायै 'विसर्जयिष्यामि' प्रेषयिष्यामि' ["प्रियंवदे यत्नादुपचर्यताम्" (त-, न्या-, म-) 'तर्हि त्वरितं गम्यताम्" ( रा-, वि- )॥ "सा हि तत्रभवतः" (त-, न्या-म-)—"सन्निभा खलु भगवतः कण्वस्य" ( टी- 'व ) ]॥

( विष्कम्भक इति। यत्र स्वयं तत्कमपि कथायाः अंशद्वयं योजयति तत् विष्कम्भक इति कथ्यते। "वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः"॥ )

## NOTES

1. Summary—तत्र प्रतिदिनं राजनि रक्षितरि मुनिभिः कर्मानुष्ठीयते। वर्द्धते च राज्ञः शकुन्तलायाश्च सन्तापः। एकदा समाप्ते माध्यन्दिने कर्मणि खिन्नेन राज्ञा मालिनीतीरे विहरता वेतसगृहे विरहतप्ता शकुन्तला सखीभ्यां परिचर्यमाणा अदृश्यत। ताभ्यामर्थितया तदानीमनुरागस्तया विवृतः। श्रुत्वा राजा सहसैवमुपसृत्य आत्मा निवेदितः। एवं विदिते परस्परानुरागे गान्धर्वेण विधिना परिणयः संवृत्तः। एतस्मिन्नन्तरे शकुन्तलायाः कुशलं जिज्ञासमाना तत्र वृद्धा तापसी गौतमी प्राप्ता। सा शकुन्तलां विटपान्तरिते राजनि उटजं निनाय। ततः सान्ध्ये होमः प्रवृत्ते विघ्नार्थसमागता राक्षसाः। राजापि तानभ्यवे प्रगतः।

2. [a] महानुभाव:—अनुगतो भाव इति अनुभाव: majesty. प्रादितत्—। We cannot say अनु + भू + घञ् भावे = अनुभाव: because by the rule "श्रिणीभुवोऽनुपसर्गे" घञ् has to be attached to भू only when no उपसर्ग precedes. Or अनुभावयति इति अनु + भू + णिच् + अच् कर्तरि = अनुभाव: । [b] प्रविष्टमात्रे &c—मात्र is अवधारणे । In this sense it is always neuter 'मात्रं कार्त्स्न्येऽवधारणे" । प्रविष्ट एव प्रविष्टमात्रम् । तस्मिन् ॥ Here the अवधारण is with regard to प्रवेश—he has but entered and done nothing else. एव implies अवधारण regarding to time—. —Even at the time of enty, not a moment later But Kalidasa very often has मात्र in such cases in the विशेष्यलिङ्ग । Thus 'स विद्धमात्र: किल'—The present may be a similar case.* We may also attach मात्रच् in the sense of प्रमाण in defence of such cuses. Thus प्रविष्ट इत्येतत् प्रमाणमस्य इति प्रविष्ट + मात्रच् = प्रविष्टमात्र· one of whom we can say nothing beyond the fact that he has entered ( प्रविष्ट ) । Practically this amounts to अवधारण । Hence the meaning is unchanged; or मात्रा = measure. प्रविष्ट इति मात्रा यस्य, बहु—। (c) निरस्ता उपप्लवा येषां ते निरुपप्लवा: [ बहु— ] । Also see Tika

3. [a] का कथा &c —What shall I say about his aiming his arrow ? That his arrow will remove obstructors need not be stated, it is self-evident. . The reason follows. [b] दूरात —दूरात from distance, दूरे स्थित्वा इति "ल्यब्लोपे—" अधिकरणे पञ्चमी । This is not अपादान पञ्चमी । Hence the तस is attached by the Varttika 'आद्यादिभ्य उपसंख्यानम" । [c] हुङ्कारणम इति हुम् + कृ + घञ् भावे = हुङ्कार a growl हुम is अनुकरण and गतिसंज्ञक by the rule 'अनुकरणञ्चानितिपरम्" । तेन । The Rudras growl [ हुङ्कार ] and dispel enemies. So does his bow. (d) अपोहति—अप + उह or ऊह + लट् ति removes. The परस्मैपद of ऊह is optional by the Varttika "उपसर्गादस्यत्यूह्योर्वा वचनम्" । Cp "सुखेदु:खान्यपोहति" uttar.

4. **Remark—The meter is श्लोक । The first line gives the conclusion. His arrows thoroughly extirpate obstructors. The reason is—Because even the twang of his bow scares**

* **Adopted by Prof. Gajendragadkar.**

them away; such being the effect of the twang you may imagine the efficacy of the arrows. Hence the figure is अर्थान्तरन्यास। There is also उपमा or उत्प्रेक्षा in इङ्गारैरिव।

5. (a) यावत्—अवधारणे। (b) वेदि &c.—समन्तात् तरणम् इति सम्+स्तॄ+ल्युट् भावे = संस्तरणम् strewing. वेद्याः संस्तरणम्। तस्मै यथा तथा। "अर्थेन नित्यसमासः—" इति ४र्थी तत्—of the नित्यसमास class. Qualifies उपहरामि। क्रियाविशेषणत्वात् क्लीवत्वम्। For strewing of Kusa grass round the altar, compare "अमी वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।—Act. IV.

6. (a) आकाशे···किं ब्रवीषि—Only one actor is present. He imagines he sees some in the distance shouts out a questions, then feigns he hears the reply though no answer is really given. In such cases the question is introduced by the stage-direction आकाशे and the actors pronounce the reply saying. किं—ब्रवीषि &c—"किं ब्रवीष्येवमित्यादि पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्" (b) अस्वस्था—स्वे आत्मनि तिष्ठति इति स्व+स्था+क कर्तरि = स्वस्था at ease, न स्वस्था। (c) शरीर &c.—निर्+वा often means 'to soothe' 'to comfort' with कालिदास। Compare "अये लब्धं नेत्रनिर्वाणम्"—Infra. "निर्वाप्य प्रियसन्देशैः सीतामक्षवधोद्यतः—Raghu. &c. निर्+वा—णिच्+ल्युट् भावे = निर्वापणम् soothing. शरीरस्य निर्वापणम् तस्मै। तादर्थ्ये चतुर्थी। (d) उच्छ्वसितम्—उद्+श्वस+क्त भावे Lit the breoth, here—Life; cp. "त्वमेव तयोः एकमात्रमुच्छ्वसितम्"—Kadam.

7. (a) वैतानिकम्—वितन्यते इति वि+तन+घञ् कर्मणि = वितानः; a sacrifice यज्ञः। "वितानो यज्ञ उल्लोचे विस्तारे पुन्नपुंसकम्" इति मेदिनी। विताने भवम् इति वितान+ठञ् अध्यात्मादि। (b) शान्त्युदकम् शम+क्तिन् भावे = शान्तिः relief शान्त्यर्थमुदकम्। शाकपार्थिवादि। (c) अर्घ्य "कर्मणा यमभिप्रैति—" इति सम्प्रदाने ४र्थी। (d) गौतमीहस्ते—It is the आधार of विसर्जन। See next. (e) विसर्जयिष्यामि—The णिच् here is स्वार्थे as in "रामो राज्यमकारयत्", "प्राङ्वायकान् भूमिपतेरयोध्या व्यसर्जयन्नाश्विषमन्तुखाः"—Bhatti &c. Also सृज sometimes means merely 'to place'. Compare "विसृजाम्यहं दुःखानि" "हिमालयपार्श्वेषु सृजत् इत्यम्".

---

* Adopted by Prof. Gajendragadkar.

&c.—This is the sense here. Hence कौतकीदृश is the आधार।
(f) Remark—This prepares us for the interruption to the interview of दुष्यन्त and शकुन्तला as described towards the end of Act. III "चक्रवाकवधुके &c. Act III.*

1. विष्कम्भयति इति विष्कम्भः पचाद्यच्। स एव विष्कम्भकः। It is a short statement showing the connection of events acted, past and future. It is of two kinds शुद्ध and सङ्कीर्ण—शुद्ध when acted by one or two मध्यम actors, and सङ्कीर्ण if both मध्यम and नीच are employed 'मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णः नीचमध्यमगोचरः॥ This is a शुद्धविष्कम्भः।

## तृतीयोऽङ्कः

(ततः प्रविशति कामयानावस्थो राजा)। राजा (निःश्वस्य)—

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
अलमस्मि ततो हृदयं तथापि नेदं निवर्त्तयितुम्॥ २॥

(Then enters the king in the state of one, in love). KING (Sighing)—I know the power of penance. That the girl has a master, is also known to me. Yet I am not able to withdraw this heart from her.

ततः इति। कामयते इति शानचि आगमशास्त्रमनित्यमिति मुकि अकृते 'कामयानः' आतमदनः इत्यर्थः ("कामयानशब्दः सिद्धोऽनादिश्चेत्" इति वामनः)। तस्य अवस्था कामयानावस्था। सा इव अवस्था यस्य तथाविधः, चीणः पाण्डुराकृतिः इत्यर्थः

* Adopted by Prof. Gajendragadkar.

("सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च वक्तव्यः" इति बहुव्रीहिः) राजा 'प्रविशति' ['कामयान' (रा- टीका, वि-) "समदन" (त-, व्या-, म-,)] ॥

,, जाने इति अन्वयः—तपसो वीर्यं जाने। सा बाला परवती इति मे विदितम्। तथापि इदं हृदयं ततो निवर्त्तयितुम् अलं न अस्मि। व्याख्या—'तपसो वीर्यं तपोबलं जाने' तपोबलेन माम् अपराधिनं दग्धुं समर्थो मुनिः इति मे ज्ञातम्। तत् मुनिम् अप्रसाद्य शकुन्तलापरिणयः असम्भवः। सा बाला शकुन्तला 'परवती' परतन्त्रा, पित्राज्ञावर्त्तिनी 'इति' एतदपि 'मे विदितम्'। अतो मामवेक्षापि विधिना नियमसन्निहिते पितरि दुराशा। तेन हि सम्प्रति शकुन्तलाभ्यात् वस्तुनो मनो निवर्त्तय पितुरागमनं प्रतीक्षस्व इति चेत् न—'तथापि' एवं सम्प्रति अस्य लाभे असम्भवेऽपि 'इदं' हृदयम्' एतन्मे चित्तं ततः शकुन्तलाभ्यात् वस्तुनः (वारणार्थानामीप्सितः इति अपादाने पञ्चमी) निवर्त्तयितुं वारयितुम् अलं समर्थो न अस्मि न भवामि। अवशं मनः अलभ्ये प्राणसंशये प्रवर्त्तते किं करोमि। ["अलसस्मि" इत्यादि (रा· वि·)—"न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम्" (त-, व्या- म-)॥ अतः परं तर्कवागीशव्यायपञ्चाननपादानाम्—"भगवन् मन्मथ कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् (स्मृत्वा)—

> तथापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।
> त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः॥

अपि च" इति।]

NOTES

1. कामयान &c.—कम+णिङ्+शानच् कर्त्तरि=कामयानः which is a वैदिक form. कामयान, चिन्तयान, &c., frequently occur in the रामायण and महाभारत। In भाषा the form expected is कामयमान by the rule "आने मुक्"। Raghava's efforts to defend कामयान in भाषा are amusing. He says 'यदा कामस्य याने उद्गमने आरोहणे वा या अवस्था अभिलाषाख्या: सा यस्य सः."। Vamana has the right solution. See Tika.

2. (a) जाने—'अनुपसर्गात् ज्ञः' इति कर्त्रभिप्रायेक्रियाफले आत्मनेपदम्। (b) मे—कर्त्तरि षष्ठी। See next. (c) विदितम्—विद+क्त कर्मणि कर्त्तमाने। Hence by the rule "क्तस्य च वर्त्तमाने" we have षष्ठी in मे the अनुक्तकर्त्ता। (d) निवर्त्तयितुम्—We have तुमुन् without क्रियार्थक्रिया

owing to अलम् by the rule "पर्य्याप्तिवचनेष्वलमर्थेषु"। (e) The verse discloses the king's diffidence in spite of the resolution made in consultation with the jester.

2. Readings (a) न च निभृतं &c. places the कर्त्ता with हृदय। In the first half the कर्त्ता is with अहम्। Logically this is defective. "I knows (अहं जाने) yet heart persists" is not as direct as "I know yet I persist." When the final result is the same "A knows yet he persists' seems better than "A knows yet B persists." (b) अद्यापि &c.—is childish, If मन्मथ is उष्ण because he is भस्मावशेषः and so there is fire in him he must be उष्ण to all and not to the मद्विध' only. If anything, he should feel less उष्ण to कामिन् who is already उष्ण himself with love.

( मदनबाधां निरूप्य ) भगवन् कुसुमायुध त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः। कुतः—

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्-
द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्-
त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥१॥

( Acting love-sickness ) O mighty god with weapons of flowers by thee and by the moon both seemingly reliable the whole host of love-sick people is being deceived. For your having flowery arrows and the moon's having cold rays both these seem untrue for people like me. The moon casts fire with its rays that have frost (Or—are cool) within and you too are making your arrows of flower of adamantine strength.

मदनेति। ('मदनेन' कन्दर्पेण 'बाधां' बाधनं कन्दर्पकृतां पीडां 'निरूप्य' अभिनीय आह) 'भगवन् कुसुमायुध' पुष्पधन्वन् कुसुमेषो च [''अरविन्दमशोकञ्च चूतञ्च नवमल्लिका नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥''] 'त्वया चन्द्रमसा' चन्द्रेण

[illegible] ( [illegible] कोमल[illegible] प्रहरन् [illegible] [illegible] ) 'कामिजनानां कामिनां 'सार्थः' ,समूहः 'अतिसन्धीयते' वञ्च्यते नैव त्वं मृदु प्रहरसि, नाप्यसौ चन्द्रः शीतरश्मिः कामिषु ।

तवेति । अन्वयः—तव कुसुमशरत्वम् इन्दोः शीतरश्मित्वम्, द्वयं इदं मद्विधेषु अयथार्थं दृश्यते । इन्दुः हिमगर्भैः मयूखैः अग्निं विसृजति त्वमपि कुसुमबाणान् वज्रसारी-करोषि । व्याख्या—तव कुसुमानि कोमलानि पुष्पाणि 'शरा' बाणा यस्य तस्य भावः तत्त्वम् । 'इन्दोः' चन्द्रस्य 'शीता' हिमाः 'रश्मयः' किरणा यस्य तस्य भावः तत्त्वम् । 'इदं' द्वयं द्वावयववस्तु 'मम' इव 'विधा' प्रकारो येषां तेषु कामिषु इत्यर्थः' अयथा न अर्थस्य अभिधेयस्य अननुरूपम् असदृशं दृश्यते अनुमीयते' । कारणमाह—'इन्दुः हिमं गर्भः' आन्तरो भागो येषां तैः 'मयूखैः' किरणैः ( करणे ३या ) 'अग्निं विसृजति' विकिरति त्वमपि कुसुमबाणान् पुष्पशरान् अवज्रसारान् वज्रसारान् करोषि । न हि कुसुमस्य मर्मभेदिता हिमस्य वा दाहकता अस्ति, तत् पुष्पशरस्त्वं शीतरश्मिश्चन्द्र इति वञ्चना नः कामिनाम् । ("मदनबाधा निरूप्य" इत्यत आरभ्य "परिक्रम्य" इत्यतः प्राक् पर्यन्त प्रक्षिप्तमिव भाति । मध्याह्ने इन्दुकिरणस्यतीक्ष्णतावर्णनं नातीव रमणीयम् ॥

## NOTES

1. (a) कुसुमायुध—आयुध्यते अनेन इति आ + युध + क करणे घञर्थे = आयुधम् weapons [includes bow and arrow], कुसुमम् आयुधमस्य । तस्य बुद्धौ । (b) अतिसन्धीयते—अति + सम् + धा + लट् ते कर्मणि । अति + सम् + धा means to cheat.' Compare "परातिसन्धानमधीयते यैः । "किं पुनरिमामतिसन्धाय लभ्यते" Act. V.

2. (a) अयथार्थम्—अर्थस्य अभिधेयस्य योग्य यथार्थम् agreeing with the sense. अव्ययी । न यथार्थम् (b) विसृजति । This is connected with मद्विधेषु in the first half. In मद्विधेषु अग्निं विसृजति the सप्तमी is औपश्लेषिके आधारे । But मद्विधेषु अयथार्थम् and मद्विधेषु वज्रसारीकरोषि have विषये सप्तमी । (c) वज्र &c.—वज्रस्य सारः वज्रसारः । स इव सारो येषां वज्रसाराः having the strength of the thunder-bolt. अवज्रसारान् वज्रसारान् करोषि इति वज्रसार + च्वि + कृ + लट् सि । A Calcutta Editor finds गतितत् here but this is wrong—the समास being prohibited by "उपपदद्गमतिङ्" । It is merely placed before करोषि by the rule

सखेदमिति। ('खेदेन' आर्त्ता 'सह' यथा तथा 'सखेदम्' आत्मानम् खिन्नमिव दर्शयित्वा इत्यर्थः)—क्रतेति। 'कर्म्मणि' यागकर्म्मणि संस्थिते निष्पन्ने सति 'सदस्यैः' सभास्थैः तापसैः 'अनुज्ञातः' सुसम्पन्नो यागः, विश्राम्यतु भवान् इति कृतानुमतिः 'खिन्न' प्रापतखेदम् 'आत्मानं क नु खलु विनोदयामि' विनोदं कारयामि ["तत्करोति तदाचष्टे" इति णिच। ततो हेतुमण्णिच् ]। 'न च प्रियायाः' शकुन्तलाया यत् दर्शनं तस्मात्' 'अन्यत्' तद्भिन्नं किञ्चित् 'शरणम्' अस्ति। तद्दर्शनादेव यदि विनोदः स्यात् नान्यतः [ "खिन्नमात्मानम्" (त, न्या॰ )—'श्रमक्लान्तम्" ( रा॰ वि॰ म॰ )। "न च प्रियादर्शनात्" (ब॰, न्या॰ ) – "किं नु खलु मे प्रियादर्शनात्" (रा॰, वि॰ म )] ॥

NOTES

1. (a) मकरकेतुः—मकरस्य प्रतिकृतिः इति मकर + कन् = मकरः the figure of a मकर which is a sea-monster. The कन् disappears in the case of a ध्वज by the Karika 'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः देवपथादिषु ॥' स केतुः ध्वजो यस्य। (b) Remark—We have very careless writing from मदनबाधां निवपा to प्रहरतीति। The निर्णयसागर Press edition of Raghava Bhatta omits the verse अनिशमपि &c. Vidyasagara does the same. The whole passage is so glaringly defective that it is difficult to accept it as from Kalidasa. I notice some defects below—(i) विश्वसनीय as applied to चन्द्रमस् is not a happy epithet. When we say so and so is विश्वसनीय (reliable), we imply that outward appearance is suspicious, but in fact he may be trusted. In the case of कुसुमायुध, the mention of आयुध is apt to create distrust, so विश्वसनीय is all right. But चन्द्रमस् has the derivative meaning the delightful time-keeper,—चन्दति आह्लादयति इति चन्द्रः। मिमीते कालम् इति माः। चन्द्रश्चासौ माश्च। In his case विश्वसनीय is meaningless. (ii) कामिजन and कामिसार्थ equally express the meaning of कामिजनसार्थ which is therefore unnecessarily cumbrous. (iii) Having directly mentioned कुसुमायुध and चन्द्रमस्, subsequent reference should be by सर्वनाम except to avoid ambiguity. Now in the verse, while कुसुमायुध is refered to by 'सः', the name इन्दु is used for चन्द्रमस्

It would have been better to say नवकुसुमशरत्वं तव शीतद्युतित्वम् &c. (iv) मद्विधेषु for मयि is a kind of अप्रस्तुतप्रशंसा by no means pleasing. (v) The first half of the verse तव कुसुम &c. is only a repetition of त्वया चन्द्रमसा च &c. above. विसृजति हिमगर्भैः &c. immediately after कृतः is more direct and would have served the purpose quite well The writer seems to be in want of materials to complete the verse and is obliged to repeat. (vi) In the first half and in the preceding prose the order is त्वम्, चन्द्रमस्; but in the second half, this is, for no good reason reversed, and we have इन्दु, त्वम् । (vii) It was mid day at the time, and the reference to the unbearableness of moon light is a queer अप्रस्तुतप्रशंसा to say the least of it. (viii) काम is addressed directly, in the second person on the preceding page; but the verse अनिशमपि &c. puts him unaccountably in the third person. (ix) The इति in प्रहरतीति is superfluous. The meaning is more easily expressed without it. (x) The verse means—I welcome Kama's blow if he strikes with reference to Sakuntala. The writer of this seems to be a superficial observer If the object of the king's love were less endowed by nature than Sakuntala even then she would have pleased him as Sakuntala pleases now. Compare the poet's remark "सर्वः कान्तमात्मीयं पश्यति"—Act. II (xi) अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् (See Ante) shows that the uppermost thought in the king's mind at the time is to search for Sakuntala. Hence क नु खलु संस्थिते कर्मणि &c. naturally follows after निवर्तयितुम् । The passage मदनबाधां निवेद्य—प्रहरतीति is thus an interruption. But there is nothing here to interrupt the thought.

2. Reading.—The reading श्रमक्लान्तम् does not suit the context. There was no occasion to become श्रमक्लान्त । Besides if he was really श्रमक्लान्त, there were plenty of shades available, and he would not have been at a loss for a suitable place and exclaimed क नु खलु &c. I prefer खिन्नम् । He was evidently खिन्न for the poet remarks सखेदं परिक्रम्य ।

( सूर्यमवलोक्य ) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति। तत्रैव तावद् गच्छामि। ( परिक्रम्यावलोक्य च ) अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि। कुतः—

सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः॥ ५॥

(Looking at the sun) Usually Sakuntala passes this period of fierce sun with her friends on the banks of the Malini, where there are groves of creepers. There indeed I go. (Going round and looking) I guess the fine figured damsel has not long passed by this row of young trees. Why do I say so? The cases in the stalks whence flowers have been plucked by her, do not yet close up, and those mutilated (Or – cuts in the) young shoots appear wet with milky juice.

सूर्येति। (वेलानिर्णयार्थं 'सूर्यम् अवलोक्य' दृष्ट्वा) 'शकुन्तला प्रायेण' बाहुल्येन (मध्याह्ने इत्यर्थः) न तु नियतमेव 'लतानां वलयानि' वेष्टनानि लतावेष्टितस्थानानि सन्ति येषु तेषु 'मालिनीतीरेषु मालिनीनद्यास्तटेषु सखीजनेन प्रियंवदया अनसूयया च 'सह इमाम् उग्रः' कठोरः 'आतपो' रविः, रविकर इत्यर्थः यस्यां तथाविधां 'वेलां' समयं 'गमयति' अतिवाहयति।

अनयेति। 'सुतनुः' अनवद्याङ्गी शकुन्तला अनया बालपादपानां वीथ्या श्रेण्या, वीथिर्वीथिरिति वर्त्मना इत्यर्थः 'अचिरम्' अधुना एव 'गता इति तर्कयामि' मन्ये। 'कुतः' एवं ब्रवीमि इति चेत्—

सम्मीलन्तीति। अन्वयः—तया अवचितपुष्पाः बन्धनकोषाः न तावत् सम्मीलन्ति। अमी किसलयच्छेदाश्च क्षीरस्निग्धा दृश्यन्ते। व्याख्या—'तया' शकुन्तलया 'अवचितानि' लूनानि गृहीतानि 'पुष्पाणि' येषां येभ्यो वा तथाविधाः 'बन्धनकोषाः' वृन्तकोषाः 'न तावत् सम्मीलन्ति' सम्मीलिता भवन्ति न। 'अमी' दृश्यमानाः। छिद्यन्ते एषु इति छेदाः छेदनस्थानानि [ अधिकरणे घञ् ]। 'किसलयानां छेदाः' छिन्ना

किसलया वा ति 'च वीथेषु' च्छेदमानां न तैव दृश्यन्ते 'स्निग्धाः' आर्द्रा 'इत्यन्ये' व्याचक्षते । [ राघवो विद्यासागरपादाश्च "परिक्रम्यावलोक्य" इत्यतः "किसलयच्छेदाः" इति यावत् न पठन्ति ] ॥

NOTES

1. (a) मालिनी &c.—तीरेषु तटदेशेषु, plural with reference to different sites. तत्तद्देशानां बहुत्वाद्बहुवचनम् । (b) सखीजना – सखीरूपो जनः सखीजनः । शाकपार्थिवादित्वात् । तेन सह वर्त्तमाना etc. बहु— ।

2. (a) बाल &c.—वीथी is पङ्क्ति a line, or वर्त्म a road "वीथी वर्त्मनि पङ्क्तौ च" इति हेमः । In first sense बालपादपङ्क्ति means बालपादपपङ्क्तिशोभितं वर्त्म by लक्षणा । When वीथी is वर्त्मन, say बालपादपशोभिता वीथी, शाकपार्थिवादि । तथा । तृतीया करणे । Both वीथि and वीथी are seen. (b) अचिरम्—न चिरम् not long. It is a काल and used as कर्म of गमनक्रिया । "देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" ।

3. (a) तावत्—साकल्ये । The cases will first close up then dry in the sun. They have not even closed yet. Hence the flower must have been just now ( अचिर ) plucked. (b) तथाविधा &c.—Sakuntala was too ill to attend to these things herself. The king thought she did these, because he did not know she was ill.

4. Remark – These signs guide the king. I think the passage ought to appear though Raghava omits it.

(परिक्रम्य संस्पर्शं रूपयित्वा) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।

अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ६ ॥

( परिक्रम्यावलोक्य च ) अस्मिन् वेतसपरिक्षिप्ते लतामण्डपे सन्निहितया शकुन्तलया भवितव्यम् । तथाहि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।

द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ७ ॥

(Acting as if touched by the breeze). Ah! this spot is pleasant with its fine breeze. Here by the love stricken limbs can be closely embraced the lotus-scented breeze, the carrier of spray from the ripples of the Malini, (Going round and looking about) Sakuntala is bound to be near in this bower of creepers enclosed by canes. For at its entrance, where there is pale sand, is seen a fresh line of foot prints, raised outwards in front and pressed down behind through the weight of the hips.

परिक्रम्येति । परिक्रम्य संस्पर्शं वातसंस्पर्शं 'रूपयित्वा' आकारेण अभिनीय । अहो इति । 'अहो' हर्षे । प्रकृष्टेन वातेन सुभगः' हृद्यः 'अयम् उद्देशः' वनविभागः ।

शक्यमिति । अन्वयः—अत्र अनङ्गतप्तैः अङ्गैः अरविन्दसुरभिः मालिनीतरङ्गाणां कणवाही पवनः अविरलम् आलिङ्गितुं शक्यम् । व्याख्या—अत्र प्रदेशे 'अनङ्गेन' कामेन 'तप्तैः' पीडितैः प्राप्तकामकृततापैः 'अङ्गैः' गात्रैः [अनुक्ते कर्त्तरि तृतीया] 'अरविन्दैः' कमलैः 'सुरभिः' पद्मगन्धिः प्राप्तसौरभः मालिन्याः तरङ्गाणां वीचीनां 'कण-वाही' शीकरवाही, सुशीतत्वात् सर्वाङ्गतर्पण इत्यर्थः 'पवनः' वातः, 'अविरलं' गाढं' यथा तथा 'आलिङ्गितुम्' आश्लेष्टुं 'शक्यम्' । मदनकृते अङ्गदाहे सुरभिशीतवातसेवनं हितम् । तच्च इहैव सम्भवति इति भावः । ["शकिसहोश्च" इति कर्मणि यत् । एतत् शक्यम् एतद्शक्यम्, इति प्रथमं सामान्यतो लिङ्गवचनयोः अविवक्षया एव वस्तुविभागः । ततः शक्येषु पवनस्य अन्तर्भावः न हि साक्षात्कृतः शक्यपवनयोर्विशेष्यविशेषण-भावः । तेन "शक्यं पवनः" इत्यदोषम् । 'शक्यमिति रूपं विलिङ्गवचनस्यापि कर्मा-भिधायां सामान्योपक्रमात्" इति वामनः ] । ["शक्यम्" ( रा-, वि-, म- )—"शक्य" ( त-, व्या- ) । "अविरलम्" (रा-, वि-, म- ) ।—"निर्दयम्" ( त-, व्या- ) ] ।

अस्मिन्निति । 'अस्मिन् वेतसैः परिक्षिप्ते वेष्टिते 'लतामण्डपे' लतागृहे 'सन्नि-हितया' समीपस्थया शकुन्तलया' भवितव्यम् । अनुमानकारणमाह 'तथाहि'—

अभीति । अन्वयः—पाण्डुसिकते अस्य द्वारे पुरस्तात् अभ्युन्नता, जघनगौरवात् पश्चात् अवगाढा, अभिनवा पदपङ्क्तिः दृश्यते । व्याख्या—'पाण्डवः पाण्डुवर्णाः 'सिकताः' बालुकाः यस्मिन् तादृशे [सिकताशब्दः स्त्रियां बहुत्वं प्रायेण, क्वचित् एकत्वे-ऽपि ] 'अस्य' लतामण्डपस्य द्वारे पुरस्तात्' पुरोभागे, अङ्गुलीषु, निर्भरतः अङ्गुष्ठयोः

व्याख्या: 'अभ्युन्नता' उदग्रा निमुद्रा 'जघनस्य' नितम्बस्य 'गौरवाद्' गुरुत्वात्' 'पश्चात्' गुल्फयो: 'अवगाढा' गभीरं गाढा, न तु केवलं गाढा 'अभिनवा' सद्य:कृता 'पद-पङ्क्ति: दृश्यते' एव वरस्त्रोलक्षणलक्षितत्वात्।

## NOTES

1. अकाम्—With अकं पवन: compare युक्तम् अभिलाष:—Infra. सामान्योपक्रमात् नपुंसकम् as in विदित in विदितभक्ति—Ante. Vamara's विलिङ्गवचन means विरुद्धलिङ्ग (different in gender) and विरुद्धवचन (different in number). For विरुद्धलिङ्ग compare अकार घृत् in "अकाराघा-तेन अमतामादिभिरपि घृत् प्रतिहन्तुम्"—Bhashya. विरुद्धवचन is seen in अकां शालिमतादीनि in "अकाराघातेन शालिमतादीन्यपि व्रतयितुम्"—Bhashya. अकार करा: has both विरुद्धलिङ्ग and विरुद्धवचन in "अकामोषधिपतेर्नवोदया: —कैस मयनखसम्पटै: करा:" - Kumara.

2. वेतस &c —परि + क्षिप means to surronnd.' Compare परिक्षेप in the sense of a moat in "महार्णवपरिक्षेपं लङ्काया: परिखालघुम्" —Raghu.

3. अभ्युन्नता—This is सुनयक। Compare "अभ्युन्नताङ्गुष्ठनखप्रभाभि: etc.—Kumara.

4. पाण्डुसिकते—For a singular use of "सिकता" compare 'एका च सिकता तैलदाने असमर्था"—Bhashya.

यावद्विटपान्तरेण अवलोकयामि। (परिक्रम्य तथा कृत्वा सहर्षम्) अये लब्धं नेत्रनिर्वाणम्! एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु श्रोष्याम्यासां विस्रम्भकथितानि। (विलोकयन् स्थित:)।

I will look through some opening in the branches. (Going round and doing the same—Joyfully)—Ah! The comfort of my eyes is found. There, the dearest of my wishes, lying on a stone slab with a converlet of flowers is being waited upon by her two friends. Well, I shall hear their confidential utterances. [Stands gazing].

पविशेति। 'विटपानां' शाखानाम् 'अन्तरेण' अवकाशेन ['अन्तरमवकाशा-वधिपरिधानान्तर्द्धिभेदतादर्थ्ये' ]" इत्यमरः। 'अवलोकयामि' अत्र शकुन्तला अस्ति न वा इति पश्यामि [ यावदर्थयोगे भविष्यति लट् ]।

प्रविश्येति। तथा कृत्वा' विटपान्तरेण दृष्ट्वा, शकुन्तला अत्रास्ते इति ज्ञात्वा 'सहर्षम् आह।

अये इति। 'अये' हर्षे। 'नेत्रयोः सन्तापयोः' लोचनयोः 'निर्वाणं' निर्वृतिप्रदं सुखकरं वस्तु "लब्धम्"। तदेव स्फुटं कथयति—'कुसुमानाम् आस्तरणं' तेन सह कुसुमास्तरणम् इत्यर्थः 'शिलापट्टं' प्रस्तरमलं ' अधिशयाना' प्रस्तरतले शयिता। ["अधिशीङ्स्थासां कर्म" इत्याधारस्य कर्मत्वम् ] 'मे मनोरथानां मनोरथेषु वा प्रियतमा प्रियतमो मनोरथः शकुन्तलारूपः पदार्थः, सखीभ्याम् उपास्यते' सेव्यते, उपचर्यते इति यावत्। ["उपास्यते" (त-, न्या-)—अन्वास्यते" ( रा-, वि-, म- ) ]॥

भवत्विति। 'भवतु आसां विश्वासेन 'कथितानि' भाषितानि [नपुंसके भावे क्तः] विश्रब्धसंलापान् 'श्रोष्यामि'।

NOTES

1. (a) नेत्रनिर्वाणम्—निर्+वा+ल्युट्, भावे निर्वाणम् निर्वृतिः; compare "निर्वाणं निर्वृतौ मोक्षे" इति विश्वप्रकाशः। (b) मनोरथ etc.—मनः रथो यस्मिन् यस्य वा तदारूढत्वात् मनोरथः wish. Next line—। No निर्धारण, hence the prohibition "न निर्धारणे" does not apply. (c) शिलापट्टम्—पट्ट is पीठ a slab, a seat आसन। पट्टः स्यादपि आसनम्—इत्यर्णवकोषः।

Reading—Both उपास्यते and अन्वास्यते imply सेवा nursing शुश्रूषा। "उपासनं शुश्रूषायां च हिंसने" इति विश्वः। "अन्वासनं तूपवेशे सेवायामनुशोचने" इति हैमः। Either will do.

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला )

सख्यौ ( उपवीज्य सस्नेहम् )—हला सउन्दले, अवि सुहा-अदि दे णलिणीपत्तवादो [ हला शकुन्तले, अपि सुखायते ते नलिनीपत्रवातः ]।

(Then enter with her two friends, Sakuntala engaged as described). FRIENDS [Tenderly, after having fanned her]—Dear Sakuntala does the breeze of the lotus-leaves appear refreshing to you ?

शकुन्तला—किं वीजयन्ति मं सहीओ [ किं वीजयतो मां सख्यौ ] ( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः ) ।

SAKUNTALA—Are you fanning me friends ? (The friends acting sorrow stare at each other).

राजा—बलवदस्वस्थशरीरा शकुन्तला दृश्यते। तत् किमयमातपदोषः स्यात् उत यथा मे मनसि वर्त्तते।

KING—Sakuntala seems to be greatly distressed bodily. Now, is this the bad effect of the heat, or as it is in my mind ?

ततः इति। व्याख्यातं प्राक्।

सख्यौ इति। 'उपवीज्य' समीपे वीजयित्वा स्नेहेन सह आहतुः।

हलेति। हला शकुन्तले, अपि प्रश्ने, नलिनीपत्राणां कमलानां वातः' तत्-सम्पर्कात् शीतो वायुः ते' तव सम्बन्धे सुखायते' सुखमिव आचरति किम् [ "कर्त्तुः क्यङ् सलोपश्च" इति क्यङ् ]।

किमिति। हे 'सख्यौ मां वीजयतः नलिनीपत्रवातेन उपचरतः किम् ? मया तु व्यजनं नानुभूयते। तापाधिक्यात् अनवधानम्।

सख्यौ इति। 'विषादं' खेदं' नाटयित्वा' अभिनीय परस्परम्' अन्योन्यम् अवलोकयतः' अहो ईदृशी अस्याः समवस्था यत् वीजनमनया नानुभूयते इति खेदः।

बलेति। 'शकुन्तला बलवत्' अत्यर्थम् अस्वस्थशरीरं यस्याः तथाविधा दृश्यते' तत् तर्हि किमयम् आतपस्य' ग्रीष्मस्य' दोषः स्यात्' ग्रीष्मकृतम-स्वास्थ्यम् उत अथवा 'यथा मे मनसि वर्त्तते' यथा अहं तर्कयामि। ग्रीष्मकृतः कामकृतो वा इति वितर्कः।

## NOTES

1. ( a) उपवीज्य—उप + वीज + णिच् स्वार्थे ल्यप्। Panini does not recognise this root. (b) सुखायते—Raghava reads [ सुखं सुखयति'

करोति। तनूकरोतीति चिन्त्य ]। Prof. Gajendragadkar condemns सुखायते, saying 'it means 'experiences pleasure, according to 'सुखादिभ्यः कर्तृवेदनायाम्' पा 3. 1. 18. But this rule has no application here. The rule wants सुख to be कर्म। In सुखयते here we have सुख as कर्तृ and उपमान। Hence the correct rule is "कर्तुः क्यङ् सलोपश्च" P, 3. 1. 11.); सुखायते. thus derived means 'acts like something pleasant' not 'experiences pleasure.'

2 परम प्रहम् &c.—See Act. 1 Ante.

3. उत मया—The king suspects love sickness, but he does not forget that the effect of heat is very much like it. This raises the doubt ' Is it love or the heat" Presently he rejects the second ( अथवा कृतं सन्देहेन etc )।

( साभिलाषं निर्वर्ण्य ) अथवा कृतं सन्देहेन ।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं

प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।

समस्तापः कामं मनसिजनिदाघप्रसरयोर्

न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ८ ॥

(Gazing wistfully) Or away with doubt. How indescribably charming is this my darling's distressed frame with the Usira, applied to the breasts and the single bracelet of lotus shoot quite loose. Granted, the distress of love and of the advance of summer is the same with young women, but the transgression of heat is not so charming.

( 'साभिलाषं निर्वर्ण्य' सस्पृहं विलोक्य विचिन्त्य' धात्वा समाधत्ते ) 'अथवा' पक्षान्तरे सन्देहेन' संशयेन कृतम् अलम् [ कृतमिति व्यर्थार्थे अव्ययम्। "साभिलाषं निर्वर्ण्य" ( रा-, त-, न्या-, न- )—विचिन्त्य (वि- )॥

स्तनेति। अन्वयः—प्रियायाः साबाधं स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयम् इदं वपुः किमपि कमनीयम्। युवतिषु मनसिजनिदाघप्रसरयोः तापः समं कामम्, ग्रीष्मस्य अपराद्धं तु एवं सुभगं न। व्याख्या—प्रियायाः' शकुन्तलायाः 'साबाधं' पीडया सह

वर्त्तमानम्, अतएव स्तनयोः न्यस्तम्' अर्पितम् 'उशीरं' वीरणमूलानुलेपो यस्मिन्' तथोक्तं 'प्रशिथिलम्' अतिशय 'मृणालस्य' बिसस्य 'एकम्' एव 'वलय'कङ्कणं यस्मिन्' तत् तथोक्तम् 'दृश्यमानं 'वपुः' शरीरं 'किमपि' अनिर्वचनीयं यथातथा 'कमनीयं' मनोहरम्। 'युवतिषु' विषये 'मनसिजस्य' मनोभवस्य कामस्य ("तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक्) 'निदाघप्रसरस्य' ग्रीष्माधिक्यस्य च 'तापः' ज्वालः समः 'कामं' तुल्यः इत्यभ्युपगम्यते। 'ग्रीष्मस्य' निदाघस्य 'अपराद्धम्' अपराधः (नपुंसके भावे क्तः) न ग्रीष्मकृतः अतिक्रमः पुनः एवम् ईदृशं सुभगं सुन्दरं न'। कामतापात् कमनीयताविशेषात् शकुन्तलायाः कामज एवायं तापः न निदाघजः। तदाह "अथवा कृतं सन्देहेन"। ["प्रशिथिल" (स. व्या. म.)—"प्रशिथिलितं" (रा., वि.)॥ "किमपि कमनीयं" (रा., वि.)—"तदपि कमनीयं" (स., व्या., म.)]॥

NOTES

1. (a) सन्देहेन कृतम् = सन्देहेन अलम्। Hence गम्यमानसाधनक्रियां प्रति करणत्वात् तृतीया। कृतमित्यव्ययमलमर्थे।

2. (a) प्रशिथिल etc.—एकं वलयम्। कर्मधा—। मृणालस्य एकवलयम्। प्रशिथिलं मृणालैकवलयं यस्मिन्। बहु—(d) साबाधम्—आबाधनम् इति आ + बाध + अ भावे = आबाधा distress, तया सह। बहु—। (c) किमपि—A compound अव्यय expressing indescribability. Adverb qualifying कमनीयम्। (d) कमनीयम्—कम + अनीयर् कर्म्मणि। Also कामनीयम्। (e) निदाघ etc.—नितरां दह्यते अस्मिन् इति नि + दह + घञ् अधिकरणे = निदाघ summer. The rule, 'न्यङ्क्वादीनाञ्च'' directs घ to the substituted for ह when निदाघ is a name of summer. प्र + सृ + अप् भावे = प्रसरः advance, मनसि जातः इति मनस् + जन + ड कर्त्तरि भूते = मनसिज like सरसिजः (Apte). मनसिजश्च निदाघप्रसरश्च, तयोः। (f) सुभगम्—The सुभगता is not due to the उशीरलेप on the breasts and the loose bracelet on the wrist, but to some thing altogether indescribable. (g) Remark—The suffering is equal from heat and love. But the latter adds charm to the person, hence serves to distinguish its action from that of the former. The additional loveliness of Sakuntala leaves no doubt [कृतं सन्देहेन] that she is love-sick, Compare—'शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते', Infra.

3, Reading—(a) शिथिलित implies the bracelet was previously tight. But bracelets are worn loose. प्रशिथिल agrees with this. What was loose is more so (प्र) now. (b) तदपि कमनीयम as Monier-Williams has it after the Bengali Recensions implies that she appears lovely in spite of her distress, i. e. though her loveliness has suffered, she is still attractive.*

This seems inconsistent with the fourth line which supposes that the pangs of love enhance the attractiveness.

प्रियंवदा (जनान्तिकम्)—अणुसूये, तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला। किं णु क्खु से तण्णिमित्तो अअं आतङ्को भवे [अनसूये, तस्य राजर्षेः प्रथमदर्शनात् आरभ्य पर्युत्सुका इव शकुन्तला। किं नु खलु अस्यास्तन्निमित्तः अयमातङ्को भवेत्]।

PRIYAMVADA (Aside)—Anasuya, Sakuntala has been as though anxious (absent-minded, care-worn ?) since that first sight of that royal sage. Is it possible that this her aliment is due to him ?

अनसूया—सहि मम वि एरिसो आसङ्का हिअअस्स। होदु पुच्छिस्सं दाव णं [सखि ममापि ईदृशी आशङ्का हृदयस्य। भवतु प्रक्ष्यामि तावदेनाम्]। (प्रकाशम्) सहि पुच्छिदव्वासि किम्पि। बलिअं क्खु दे सन्दावो [सखि, प्रष्टव्यासि किमपि। बलीयान् खलु ते सन्तापः]।

ANASUYA—Friend, such is my mind's suspicion too. Well, I will ask her. (Aloud) Friend, you have to be questioned about something. Your distress is indeed great.

* Adopted by Prof. Gajendragadkar.

चमेति। 'राजर्षेः' दुष्यन्तस्य प्रथमं दर्शनं समारभ्य ततः आरभ्य पर्युत्सुका इव' उत्कण्ठिता इव शकुन्तला' लक्ष्यते। किं नु खलु' अपि वा ( वितर्कगर्भः प्रश्नः ) अस्या अयमातङ्कः' एषा पीडा स' राजर्षिर्नैव निमित्त" कारणं यस्य तद्विधो भवेत्'। दुष्यन्तार्थे इयं क्लिश्यते किम् ?

अनसूयेति। एतदपि प्रियंवदां प्रति जनान्तिकमेव। 'ईदृशी आशङ्का हृदयस्य' हृदयमिदम् आशङ्कते (कृद्योगात् कर्त्तरि षष्ठी)। दुष्यन्तस्यार्थे अस्यास्तापः इत्यहमपि मन्ये। 'किमपि' वस्तु प्रष्टव्या 'असि' त्वामहं किमपि प्रष्टुमिच्छामि ( प्रच्छेर्द्विकर्मकत्वात् अप्रधानकर्मणि तव्यः)। 'बलीयान्' प्रबलः खलु ते सन्तापः'। गुर्वी ते वेदना अतः पृच्छामि किञ्चित्।

1. (a) प्रष्टव्यासि &c.—त्वामहं किमपि पृच्छेयम becomes त्वं मया किम च प्रष्टव्या the अप्रधानकर्म becoming उक्त by the maxim 'ण्यादेः प्रधानं दुहादेरप्रधानं"। (b) खलु—This may also be taken as हेतौ। I wish to speak to you, because (खलु)—you are suffering much.

शकुन्तला (पूर्वार्द्धेन शयनादुत्थाय)—हला कि वत्तुकामासि [ हला किं वक्तुकामासि ]।

SAKUNTALA (Rising from the bed with her upper half)—what do you want to ask, dear ?

अनसूया—हला सउन्दले, अणब्भन्तरा क्खु अम्हे मअणगदस्स वुत्तन्तस्स। किन्दु जादिसो इतिहासणिवन्धेसु कामअमाणाणं अवत्था सुणीअदि तादिसी दे पेक्खामि। कहेहि किंणिमित्तं दे सन्दावो [ हला शकुन्तले, अनभ्यन्तराः खलु वयं मदनगतस्य वृत्तान्तस्य। किन्तु यादृशी इतिहासनिबन्धेषु कामयमानानाम् अवस्था श्रूयते तादृशीं ते प्रेक्षे। कथय किंनिमित्तं ते सन्तापः ]। विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ( विकारं खलु परमार्थतः अज्ञात्वा अनारम्भः प्रतिकारस्य )।

ANASUYA—Dear Sakuntala we are indeed inexperienced in matters concerning love. But yours I see is the same condition as is heard of lovers in historical composition. Tell us to what your distress is due. Without having known the disturbing action in its character, counteraction cannot indeed be begun.

शकुन्तलेति (पूर्वार्द्धेन' पूर्वकायेन शयनात्' शिलाशय्यायाः उत्थाय') ("शयनादुत्थाय" (रा, त, न्या-, म-)—'पुष्पशय्यामदना' (वि-)॥

इच्छेति। वक्तुं कामः' अभिलाषो यस्याः तादृशी असि' वक्तुमिच्छसि ("लुम्पेदवश्यमः कृत्ये तुङ्कामनसोरपि" इति तुमो मलोपः)।

इह्वेति। वय मदनं कामं गतस्य प्राप्तस्य कामसम्बन्धिनः इत्यर्थः वृत्तान्तस्य वार्त्तायाः न अभ्यन्तरा न तत्त्वज्ञाः। अज्ञातमदनवृत्तान्ता वयम्। स्वयं न कामयमानाः वयं, नापि दृष्टः कामयमानः कश्चित् जनोऽस्माभिः; 'इतिहासनिबन्धेषु' ये निबन्धाः प्रबन्धाः तेषु कामयमानानां कामिनां यादृशी अवस्था श्रूयते तादृशीं ते प्रेक्षे। नानुभूता न च दृष्टा किन्तु श्रुता। किं निमित्तं कस्मिन् निमित्ते ('निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्—इति प्रथमा)। [("अनभ्यन्तराः खलु वयं मदनगतस्य" (रा-, वि-, म-)—अनभ्यन्तरा वयं ते मनोगतस्य (त-, न्या-.)]॥

विकारेति। परमः अर्थः परमार्थः तत्त्वम्। तत्त्वतः स्वरूपतः। विक्रियते अन्यथापाद्यते अनेन इति विकारः विकृतिकारणम् 'अज्ञात्वा प्रतिकारस्य' प्रतिक्रियायाः 'अनारम्भः खलु' अननुष्ठानमेव प्राप्नोति अज्ञाते रोगे किमौषधम् इत्यर्थः।

## NOTES

1. वक्तुकामा = See वक्तुकामः, Act I

2. (a) अनभ्यन्तरा &c. = अभिगता अन्तरम् अभ्यन्तराः: included. न अभ्यन्तराः: not included = बाह्याः: outside. The sense is—We are outside the pale of love matters. We have no experience of these things direct or indirect. By 'we (वयम्), she means all ascetic girls.

3. Reading—The Bengali reading too is good. We do not know ( [illegible] वयम् ) what is in your mind ( ते मनोगतम् )।

4. (a) परमार्थतः has [illegible] तसिप्रत्ययः as in आदितः and [illegible]तः in '[illegible]'—Bhashya.

राजा—अनसूयामप्यनुगतो मदीयस्तर्कः। ( न हि स्वाभिप्रायेण मे दर्शनम्।

KING—My suspicion has haunted Anasuya also. Verily, I do not view it after my own mind.

शकुन्तला ( आत्मगतम् )—बलवं क्खु मे अहिणिवेसो। दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं [ बलवान् खलु मे अभिनिवेशः। इदानीमपि सहसा एतयोर्न शक्नोमि निवेदयितुम्।

SAKUNTALA—(Aside)—Great is my anxiety (to conceal). Even now I cannot forthwith reveal to them.

प्रियंवदा—सहि सुट्ठु एसा भणादि—किं अत्तणो आतङ्कं उवेक्खसि। अणुदिवसं क्खु परिहीअसि अङ्गेहिं केवलं लावण्णमई छाया तुमं ण मुञ्चदि [ सखि सुष्ठु एषा भणति—किमात्मन आतङ्कमुपेक्षसे। अनुदिवसं खलु परिहीयसे अङ्गैः। केवलं लावण्यमयी छाया न मुञ्चति। ]

PRIYAMVADA—Friend, she says rightly; why do you neglect your trouble? Even every day you are being thinned in the limbs. Only the glimmer of loveliness does not leave thee-

अनसूयेति। मदीयस्तर्कः सन्देहः—अपि कामजा पीडा अस्याः—इत्येवं रूपः अनसूयामपि अनुगतः प्राप्तः। अनसूयाया अपि अयमेव सन्देहो जातः। 'मे' मम दर्शनम् अनुमानं स्वस्य आत्मनः अभिप्रायः अभिलाषः तेन तदनुसारेण 'न हि' नैव। एवं—आत्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते इति यत् प्राक् मया उक्तं तदसत्यम्। अन्यथा कथमनसूया अपि तथैव मन्यते?

बलवानिति। मे अभिनिवेशः यत्नः बलवान् खलु अस्ति हि मे गोपनेच्छा [illegible]। इदानीमपि अधुना एवं सनिर्बन्धं पृष्टा अपि एतयोः ( [illegible] ) सहसा अचिन्तितमेव निवेदयितुं न शक्नोमि।

शक्नोमि । सखि शकुन्तले यथा अनसूया ब्रूते तथा भवति मायम । आत्मनः आतङ्कं व्याधिं किमुपेक्षसे कथमन्यजानासि । ('किं' व्याधिमुपेक्षितः') । खलु प्रतिदिनमेव अङ्गैः कपोलादिभिः परिहीयसे क्षीणा भवसि । व्याधिना अंगानि तु मुञ्चन्ति । केवलं लावण्यमयी कान्तिपूर्वा छाया कान्तिः त्वां न मुञ्चति । ( सखि मुह्यसे' ( वि )—'सखि शकुन्तले मुह्य' (रा- म)— मुह्य', ( अ- भा- ) ।

## NOTES

1. स्वाभिप्रायेण—तृतीया करणे । See 'एवमात्माभिप्राय—'Act. II.

2. (a) बलवान् &c. - My desire to conceal is indeed great, I cannot overcome it. It is out of the question to reveal my wish out of my own accord But they are asking me now. Even thus I cannot come out with it at once. निवेदयितुम्—तुमुन् without a क्रियार्थक्रिया, because of the root शक in शक्नोमि ।

3. (a) अनुदिवसम्—दिवसे दिवसे इति वीप्सार्थे अव्ययी— । (b) परिहीयसे—ओहाक् त्यागे परस्मैपदी + लट् से कर्मणि । The root is not duplicated because the duplication takes place श्लौ and in the कर्म and भाववाच्य—the श्लु is replaced by यक् । (c) लावण्यमयी—लावण्य is कान्ति loveliness. "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥"—Quoted by Mallinatha is Kumara. लावण्यं प्रचुरमस्याम् इति लावण्य + मयट् + ङीप् स्त्रियाम् = लावण्यमयी full of loveliness.

राजा—अवितथमाह प्रियंवदा ! तथाहि—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥८॥

**KING—Priyamvada speaks the truth—For, her face has the cheeks slightly emaciated her chest has the breasts forsaken by firmness the middle is thinner, the shoulders are very much drooping the complexion is pale. Stricken by love this damsel appears pitiable yet charming to look at like the creeper Madhavi struck by the wind that dries up the leaves.**

अवितथेति। 'तथा' सत्यम्। अव्ययमेतत्। विगतं तथा यस्मात् इति 'वितथं' मिथ्या। न वितथम् 'अवितथं' सत्यम्। सत्यत्वे कारणमाह 'तथा हि' इति।

क्षामेति। अन्वयः—आननं क्षामक्षामकपोलम्। उरः काठिन्यमुक्तस्तनम्। मध्यः क्लान्ततरः। अंसौ प्रकामविनतौ। छविः पाण्डुरा। मदनक्लिष्टा इयं पत्राणां शोषणेन मरुता स्पृष्टा लता माधवी इव, शोच्या च प्रियदर्शना च आलक्ष्यते। व्याख्या—अनुदिवसम् अङ्गैरियंपरिक्षीयते इति 'आननम्' अस्या मुखं 'क्षामक्षामौ'ईषत्क्षामौ ('प्रकारे गुणवचनस्य'' इति द्विर्वचनम्) 'कपोलौ' गण्डौ यस्मिन् तथाविधं जातम्। 'उरः' वक्षः 'काठिन्येन' दृढ़तया 'मुक्तौ' वियुक्तौ स्तनौ' यस्मिन् तथाविधं जातम्। 'मध्यः' उदरं क्लान्ततरः' अतिशयेन क्षीणो जातः (बुद्धिस्थां पूर्वावस्थामपेक्ष्य प्रकर्षविवक्षया तरप्)। 'अंसौ' स्कन्धौ 'प्रकामम्' अत्यर्थं 'विनतौ' निम्नौ। 'छविः' भूर्त्तिः पाण्डुरा पाण्डुवर्णा जाता। अतएव 'मदनेन' कामेन 'क्लिष्टा' पीडिता 'इयं' शकुन्तला 'पत्राणां शोषणेन' शोषकारकेण 'मरुता' चैत्रवायुना स्पृष्टा' ताडिता 'लता माधवी इव शोच्या' अनुकम्पनीया, अपि च लावण्यमयी छाया इमां न मुञ्चति इति 'प्रियदर्शना च' मधुराकृतिश्च 'आलक्ष्यते' आभाति॥ ["क्लिष्टा" (रा-, वि-, म-)—'म्लाना' (त-, न्या-)]।

NOTES

1. (a) क्षाम &c.—क्षै (क्षै-भ्वादि)+क्त कर्त्तरि = क्षामः emaciated. क्षामप्रकारौ इति क्षामौ क्षामौ the duplication being due to the rule "प्रकारे गुणवचनस्य"। The duplicated form is treated as a कर्मधारय by the rule "कर्मधारयवदुत्तरेषु"। Hence the सुप् disappears giving finally क्षामक्षामौ। Now see Tika. (b) प्रियदर्शना—प्रीणातीति प्री+क कर्त्तरि = प्रियम् pleasing, lovely. प्रियं दर्शनं यस्याः whose appearance is pleasing; बहु—, with कर्मणि षष्ठी in यस्याः।

2. Reading—मदनम्लाना has कर्त्तरि क्त in म्लान। Hence मदन is the हेतु in the वाक्य—मदनेन म्लाना। But मरुत् is the कर्त्ता in मरुता स्पृष्टा। This loss of uninformity is avoided by reading मदनक्लिष्टा because क्लिष्ट has कर्मणि क्त। See also क्लिष्ट in our Swapna V. 4.

3. अवश्यं शोचितुं योग्या इति शुच+ण्यत् कर्मणि = शोच्या। 'ण्य आवश्यके' इति कुत्वं न।

**शकुन्तला—सहि कस्स वा अण्णस्स कहइस्सं। किन्दु आआसइत्तिआ दाणिं वो भविस्सं [सखि, कस्य वा अन्यस्य कथयिष्यामि। किन्तु आयासयित्री इदानीं युवयोः भविष्यामि]।**

SAKUNTALA—Friends, to whom else shall I reveal. But I shall now be the cause of trouble to you.

उभे—अदो एव्व णिब्बन्धो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदनं होदि [ अतएव निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ] ।

BOTH—Hence indeed is the pressing. The trouble shared with affectionate friends, becomes of bearable poignancy.

सखीति । 'कस्य वा अन्यस्य' जनस्य ( सम्बन्धविवक्षया षष्ठी ) 'कथयिष्यामि' । युवयोरेव कथयिष्यामि नान्यस्य । 'किन्तु इदानीम्' अधुना, एतदुक्त्वा इत्यर्थः, 'युवयोः ( कर्मणि षष्ठी ) 'आयासयित्री' क्लेशदायिनी 'भविष्यामि' । दुष्करो मे पीडोपशमः तदर्थं प्रयतमानयोर्युवयोः महान् आयासो भविष्यति । [ "किन्तु आयासयित्री" (त-, ख्या-, म- )—"आयासयित्री" ( रा-, वि- ) ] ॥

अत इति । व्याधिर्महान्, उपशमो दुष्करः 'अतएव निर्बन्धः' आग्रहातिशयः अस्माकम् । दुःखं" पीडा 'स्निग्धेषु' अनुरक्तेषु जनेषु संविभक्तं" कृतविभागं सत् 'सह्या' सोढुं शक्या 'वेदना आघातो यस्य तथाविधं 'भवति हि' । ["अतएव" ( ता-, ख्या- ) "अतएव खलु" ( रा-, वि-, म ) ॥

NOTES

1. (a) आयासयित्री—आ + यस + णिच् + तृच कर्त्तरि स्त्रियाम् one causing trouble. (b) इदानीम्—Now i. e. by revealing to you ? (c) The sense is—I have no one else to confide in ; I must tell you. But (किन्तु) by telling you, I shall only put you into trouble. This is why I have not told you so long. It will not be a bland relation but ( किन्तु ) will give you some trouble. It seems the किन्तु should not be omitted.

2. (a) उभे—उभ is dual, but उभय is singular as a rule, though plural is seen in "उभयपरस्य इरेवमये: क्लतम्"—Act VII. (b) स्निग्ध &c.—स्निह + क्त कर्त्तरि वर्त्तमाने—स्निग्धाः affectionate. तादृशो जनाः कर्म्मधा—। Now see Tika.

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्णम्
अत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥१०॥

KING—Asked by persons who equally share her sorrows and joys, this girl will not refuse to disclose the cause of her trouble which rankles in her mind. Though longingly gazed at several times by her turning round, I have become afraid of hearing at this juncture.

शकुन्तला—सहि, जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी—[ सखि, यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः—] । ( अर्धोक्ते लज्जां नाटयति ) ।

SAKUNTALA—Friends, from the time that royal sage, the protector of our hermitage, crossed the line of my sight—(Acts bashfulness when partly said).

पृष्टेति । अन्वयः—इयं बाला समदुःखसुखेन जनेन पृष्टा [ सती ] मनोगतम् आधिहेतुं न वक्ष्यति न । अनया बहुशः विवृत्य सतृष्णं दृष्टोऽपि अत्रान्तरे श्रवणकातरतां गतोऽस्मि । व्याख्या—'इयं बाला' मुग्धस्वभावा शकुन्तला दुःखञ्च सुखञ्च दुःखसुखे दुःखसुखं वा ["विप्रतिषिद्धञ्चानधिकरणवाचि" इति विभाषा द्वन्द्वैकवद्भावः] 'समे' समाने, दुःखसुखे दुःखसुखं" वा यस्य 'तेन समदुःखसुखेन' तुल्यवेदनेन 'जनेन' सखीजनेन 'पृष्टा' सती मनोगतम्' आन्तरं 'निगूढमित्यर्थः' आधेः' पीडायाः 'हेतुं' कारणं 'न वक्ष्यति न' वक्ष्यत्येव । 'अनया शकुन्तलया "बहुशः' न तु एकवारमात्रं, 'विवृत्य' परावृत्य 'सतृष्णं' साभिलाषं" दृष्टोऽपि [अपिना भावस्फुटत्वम् सन्देहस्यानवकाशश्च ] 'अत्र' अस्मिन् अन्तरे' अवकाशे 'श्रवणे' उत्तरश्रवणे 'कातरतां' भयं 'गतोऽस्मि' । स्पष्टमियं मयि साभिलाषा, तथाप्यपि भयकारणे भीतोऽस्मि, किमियं वक्ष्यतीति । ['अत्रान्तरे' ( रा०, वि०, म०, ) 'अत्रोत्तरे' ( त० आ० ) ] ॥

सखीति। 'यतः' यस्मात् कालात् 'प्रभृति' आरभ्य [ प्रभृतियोगे पञ्चमीनियमात् पञ्चमी] 'स तपोवनस्य रक्षिता' रक्षकः राजर्षिः दुष्यन्तः 'मम दर्शनस्य' दृष्टेः 'पन्थानम्' ["ऋक्पूरब्धूःपथामानक्षे" इति समासान्तः अप्रत्ययः ] 'आगतः' प्राप्तः—'अर्द्धोक्तेन' आङ्गिकेन भावेन 'लज्जां नाटयति' रूपयति )।

NOTES

1. (a) अनेन समदुःखसुखेन—See Tika ; c.f. समदुःखसुखः सखीजनः—Raghu. VIII. (b) बाला—A प्रौढ़ा might mislead. But only a frank disclosure is expected from a बाला। (c) न, न—Two negatives emphesise the affirmation. न वक्ष्यति न = not that she will not disclose = she will certainly disclose. (d) मनोगतम्—मनः गतम i.e. मनसि लीनम् secretly cherished, un-revealed. (e) इष्टो &c.—Comp. आसीद् विवृतवदना &c.—Act. II.

2. (a) दर्शन &c.—पश्यत्यनेन इति दृश + ल्युट् करणे = दर्शनम् eye. तस्य पन्थाः &c. See Tika. (b) तपोवन &c.—रक्ष + तृच् कर्त्तरि = रक्षिता।

3 अर्द्धोक्तेन—अर्द्धम् उक्तम् अर्द्धोक्तम् partly uttered. सुप्सुपेति समासः, the द्वितीया in अर्द्धम् being क्रियाविशेषणे। तेन। इति तृतीया।

उभे—कधेदु कधेदु पिअसही [कथयतु कथयतु प्रियसखी ]।

BOTH—Go on, go on, dear friend.

शकुन्तला—तदो पहुदि तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता [ ततः प्रभृति तद्गतेन अभिलाषेण एतदवस्थास्मि संवृत्ता ]।

SAKUNTALA—Since that time with my desire fixed upon him, I am reduced to this state.

राजा ( सहर्षम् )—श्रुतं यत् श्रोतव्यम्।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।

दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ ११ ॥

KING (Joyfully)—What is worth hearing is now heard. Cupid indeed is the cause of my distress he himself has

become my comforter, as becomes the day dark with clouds at the end of summer to the living world.

तत इति। 'ततः प्रभृति' 'स' राजर्षिः' 'गतेन' तद्विषयेन 'अभिलाषेण' मनोरथेन [ इतो तृतीया ] 'एषा अवस्था' यस्या तथाविधा 'सहत्ताभि' जातास्मि। मनो मे दुष्यन्तेन समागमं प्रार्थयते, तेनेयमवस्था मे। [ राघवो विद्यासागरपादाश्च "कथयतु कथयतु प्रियसखी" इति न पठन्ति ]॥

श्रुतमिति। 'श्रोतव्य" श्रवणयोग्य' यत् तत् 'श्रुतम्' मया।

स्मर इति। अन्वयः—तपात्यये जीवलोकस्य अभ्रश्यामो दिवस इव मे स्मर एव तापहेतुः स एव निर्वापयिता जातः। व्याख्या—'तपस्य निदाघस्य [ "निदाघ उष्णोपगम उष्ण उष्मागमस्तपः" इत्यमरः ] 'अत्ययः' अवसानं तस्मिन्, 'जीवलोकस्य' प्राणिसमूहस्य सम्बन्धे 'अभ्रैः' मेघैः 'श्यामः' कृष्णः 'दिवस इव' मेघाच्छन्नो वासर इव 'मे' मम सम्बन्धे 'स्मरः' कन्दर्पं 'एव तापहेतुः' दिवसपक्षे उष्णताजनकः, स्मरपक्षे सन्तापकरः 'स एव' दिवस एव, स्मर एव च, 'निर्वापयिता' विनोदहेतुः [ उभयत्र समानमेतत् ] 'जातः' मेघाच्छन्नो दिवसः वर्षणात पूर्वं तापं करोति पश्चाच्च हरति। कामोऽपि शकुन्तलावचनात् पूर्वं मे तापप्रद आसीत, परञ्च तापहरो जातः इति भावः ["अभ्रश्यामः' ( न-, व्य-, म- )—अभ्रश्यामः" (रा-, वि- ) ]॥

NOTES

1. (a) निर्वापयिता—निर् + वा + णिच् + तृच कर्त्तरि the comforter. See also under शरीरनिर्वापनाय—ante. (b) तपात्यये—अति + इ अच् भावे = अत्ययः end. Now see Tika (c) जीवलोकस्य, मे – जीवानां प्राणिनां लोको भुवनं जीवलोकः the world of living creatures तस्य शेषे षष्ठी। मे मम सम्बन्धे also जीवलोकस्य सम्बन्धे तापहेतुः and निर्वापयिता। Also we may have कृद्योगे कर्मणि षष्ठी। मे or जीवलोकस्य तापं = माम् or जीवलोकं तपति। मे or जीवलोकस्यनिर्वापयिता = माम or जीवलोकं निर्वापयति।

2. Simile—The following are compared—(i) स्मरः and अभ्रश्यामो दिवसः। (ii) अहम् and जीवलोकः—Also Remotely (iii) अवाप्ते and तपात्यये। Heat during summer oppresses like love sickness (c. f. समतापः कामं मनसिजनिदाघप्रसरयोः Ante). The oppression is very great ( तापहेतु ) when at last the sky is overcast (अभ्रश्याम)

and the clouds are about to pour. Similarly the suspense of the king was intense when Sakuntala was about to make a declaration. The shower brings relief to the world and the declaration gives comfort to the king. Thus अर behaves like the अभ्रश्याम day.*

3. Reading—Raghava reads अह्नश्याम। He means the day is oppressive in the morning hours [अह्न], and cool when it is श्याम in the evening [the other अह्न]। We have to guess the reason for the श्यामता। I believe many will prefer to have the clouds [अभ्र] directly mentioned. Besides अह्नश्याम ignores the well-known fact that just as the clouds gather the heat increases, and does not abate unless there is a down.pour. Lastly we have a similar idea in Raghu. XII. where श्यामाभ्रा दिवसा इव occurs. This leaves little doubt that here the poet wrote अभ्रश्याम।

शकुन्तला—तं जइ वो अणुमदं तह वट्टह जह तस्स राए-सिणो अणुकम्पणिज्जा होमि। अण्णहा अवस्सं सिञ्चह मे तिलोदअं [तत् यदि युवयोः अनुमतं, तथा वर्तेथां यथा तस्य राजर्षेः अनुकम्पनीया भवामि। अन्यथा अवश्यं सिञ्चतं मे तिलोदकम्]।

SAKUNTALA—Now if approved by you so arrange that I may become favoured by that royal sage. Or certainly sprinkle for me water with sesamum seeds.

राजा—संशयच्छेदि वचनम्। ✓

KING—The declaration cuts short all hesitations.

प्रियंवदा (जनान्तिकम्) अणसूए, दुरगअमम्महा अक्खमा कालहरणस्स। जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं। ता जुत्तं से अहिलासो अहिणन्दिदुं [अनसूये,

* Adopted by Prof. Gajendragadkar.

दूरगतमन्मथा अक्षमा इयं कालहरणस्य। यस्मिन् बद्धभावा एषा, स ललामभूतः पौरवाणाम्। तत् युक्तमस्या अभिलाषः अभिनन्दितुम्]।

PRIYAMVADA—[Aside] O Anasuya, with her love far advanced this one is incapable of taking time. He, on whom her affection is placed, is the very gem of the Pauravas. So her desire deserves to be approved.

तदिति। 'तत' तस्मात् 'यदि युवयोरनुमत' यदि युवां युक्तं मन्येते ["मतिबुद्धि-पूजार्थेभ्यश्च" इति वर्त्तमाने क्तः। "क्तस्य च वर्त्तमाने" इति कर्त्तरि षष्ठी] तदा 'तथा' तेन प्रकारेण 'वर्त्तेथां आचरतं 'यथा' येन प्रकारेण 'तस्य राजर्षेरनुकम्पनीया', अनुग्राह्या 'भवामि'। अन्यथा' अनुग्रहाभावे 'अवश्यं मे तिलोदकं' प्रेतदेयं तिलमिश्रं जलाञ्जलिं 'सिञ्चतम्'। निश्चितं मरिष्यामि यदि स राजा मां नानुकम्पते इत्यर्थः।

द्वयेति। 'वचन' शकुन्तलोक्तं 'सशय' एतत् कर्त्तव्यम्, एतत वा, इत्याकारं प्रश्नं 'छिनत्ति'। एतत् श्रुत्वा सखीभ्यां कर्त्तव्यम् अवधारितमेव स्यात्।

अनसूये इति। 'दूरं गतः प्राप्तो मन्मथः' कामो तस्याः तथाविधा इयं कालहरणस्य अक्षमा अयोग्या। झटिति प्रतिविधेयम्। किं कामस्य उच्छेदोऽवप्रतिविधानम्? न इत्याह—'एषा यस्मिन्' जने बद्धभावा' दत्तचित्ता 'स पौरवाणां ललामभूतः भूषणस्वरूपः 'तत' तस्मात् 'अस्या अभिलाषः अभिनन्दितुं पूजयितुं युक्तम्' [सामान्योपक्रमात् लिङ्गभेदेऽपि सामानाधिकरण्यम्। "शक्यं पवनः" इति यथा]। तत्पात्रे अस्या अभिलाषः स्तुत्यः न गर्ह्यः इत्यर्थः।

## NOTES

1. (a) राजर्षेः—The तृतीया is also admissible. राजर्षेः राजर्षिणा वा अनुकम्पनीया by the rule "कृत्यानां कर्त्तरि वा"। (b) अन्यथा—अन्य + थाल्। अन्यप्रकारेण otherwise. i e. if not pitied by the royal sage; or, not so arranged by you. न चेत् तथा वर्त्तेथां तिलोदकं सिञ्चतम्; (c) तिलोदकम्—तिलमिश्रम् उदकम्। शाकपार्थिवादित्वात्—। तत। तिलस्य उदकस्य give तिलोदकं unless उदक is taken as जातिवाचक and is therefore

avoided. This is an offering to deceased person. Hence the sense is—Otherwise I shall die.

2. संशय &c.—संशयं छिनत्ति इति संशय + छिद + णिनि साधुकारिणि कर्तरि that which removes doubt. The doubt संशय does not refer to the king's doubt about her love ; but to the friend's doubt as to what has to be done. The king has no doubt, as is obvious from पृष्टा जनेन &c. and श्रुतंयत् श्रोतव्यम्—Ante. Sakuntala asks her friends to plead for her with the king ( तथा वर्त्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि)। The friends might naturally hesitate But सिञ्चतं मे तिलोदकम् removes all hesitation [संशयच्छेदि वचनम् ]

3. (a) अक्षमा—क्षमते इति क्षम + अच् कर्त्तरि स्त्रियाम् = क्षमा capable. न क्षमा। Something has to be done quick and she is anxious to do it herself. [b] बहुभावा—भवतीति भू + ण कर्त्तरि भाव: desire बहुोभावो यस्या यया वा। [c] ललामभूत:—See आश्रमललामभूताम्—Act II. She means that Sakuntala's choice is mightily well placed (d) युक्तमस्या: &c.—Priyamvada is burning to utter the word of congratulation. Sakuntala's condition is critical [ अक्षमा इयम् etc]. Her choice is unexceptionable [ललामभूत पौरवाणाम ]; a word of encouragement fiom us saves her. What do you say ? Shall I utter it ? This is the mood in which Priyamvada makes this speech.

अनसूया – तह जह भणासि [ तथा यथा भणसि ]।

ANASUYA—It is as you say ?

प्रियंवदा [ प्रकाशम् ]—सहि, दिट्ठिआ अनुरूवो दे अहिणिवेसो। साअरं उज्झिअ कहिं वा महाणई ओदरइ। को दाणिं सहआरं अंतरेण अदिमुत्तलदं पल्लविदं सहेदि [(सखि, दिष्ट्या अनुरूपस्ते अभिनिवेशः। सागरं वर्जयित्वा कुत्र वा महानद्यो अवतरति। क इदानीं सहकारमन्तरेण अतिमुक्तलतां पल्लवितां सहते ]।)

PBIYAMVADA [Aloud]—Friend. fortunately your aim is worthy of you. Where ındeed does a mighty river fall avoiding the sea? Now. which tree except the Sahakara bears the Atimukta creeper in foliage?

तथेति। 'यथा भणसि' कथयसि 'तथा'। अस्या अभिलाषः अभिनन्दनीय इत्यर्थः।

सख्नीति। 'दिष्ट्या' भाग्येन 'ते अभिनिवेशः' अयमध्यवसायः 'अनुरूपः' सर्वथा ते योग्यः। सौभाग्यं नो यत त्वं प्रकृते जने न दृत्तचित्ता। अथवा एवमेव भवितव्यम् 'सागरं वर्जयित्वा' त्यक्त्वा कुत्र वा' न कदापि 'महानदी' अवतरति' सागर एव महानद्या अनुरूपम् अवतरणस्थानम्, दुष्यन्तोऽपि ते योग्यः वरः। 'सहकारं' रसालाम् 'अन्तरेण' विना 'क इदानीं पल्लवितामतिमुक्तलतां 'सहते' नान्यः कोऽपि। एवं दुष्यन्तं विना नान्यः कोऽपि त्वां वोढ मर्हः। एतत प्रकृतलतां प्रति। ["अनुरूपस्ते" (रा., वि-)—"अनुरूपोऽस्याः" ( म- )—"ते अनुरूपे" [ त्य-, न्या- ] ॥ "वर्जयित्वा" [ रा- वि- म- ]—"उज्झित्वा" [ त- न्या- ] ॥

NOTES

I. [a] दिष्ट्या—Luckily. An अव्यय। Or—Instrumental singular of दिष्टि which means भाग्य। इतौ तृतीया। [b] अनुरूपः—अनुगतो रूपम्, befitting. प्रादितत—। [c] अभिनिवेशः—अभि + नि + विश + घञ् भावे। आग्रहः। Or अभिनिविशते एतम् इति घञ कर्मणि the object of desire. The आधार has become कर्म here by the rule "अभिनिविशश्च"। Here Priyamvada atributes it to chance दिष्ट्या that Sakuntala has not set her heart upon an ordinary ascetic. (d) वा—Expresses विकल्प। [e] सागरम् &c.—This modifies the sentiment expressed ın the preceding line. No, choice has nothing to do with it. It is in the very nature of things it is impossible that Sakuntala should be attracted towards any other person. She was bound to be drawn towards दुष्यन्त just as a mighty river is drawn towards the sea. Having thus dismissed दिष्ट्या Priyamvada goes to explain what अनुरूपः in speech means. You see in your own garden how the Madhavi thrives on the top of the Sahakara. If you place her on any other

Adopted by Prof. Gajendragadkar.

garden-tree her dense foliage completely shuts off sun-light from the tree, thus kills it soon and then herself comes down along with it. The Sahakara alone can stand this privation of sun-light ( पल्लवितां सहते ), or rather prefer this privation, Similarly Dushyanta alone is a suitable match for you ; your union with any one else would be disastrous. By your happy choice you have avoided the disaster and deserve congratulation ( युक्तमस्याः अभिलाषः अभिनन्दितुम् ) । Prof. Gajendagadkar gives half of this speech ( सखि दिष्ट्या···अवलम्बितो to अनसूया and the rest to प्रियंवदा । As explained above, the first line of the speech ( सखि दिष्ट्या···अभिनिवेशः ) is the अभिनन्दन and the rest is only explanatory to it. Hence the whole must belong to one person and that person must be the one who utters the अभिनन्दन । It is not natural, nay, it is ridiculous, that one person should utter the अभिनन्दन and the other explain it to the recipient of the अभिनन्दन । We have seen above Priyamvada's impatience to utter the अभिनन्दन । Naturally then the अभिनन्दन has to be assigned to Priyamvada and with it the rest of the speech too. Besides the प्रकाशम् here is in modification of the जनान्तिकम् of Priyamvada's speech above. Hence what follows प्रकाशम् has to go to प्रियंवदा not to अनसूया । (f) इदानीम्—This is idiomatic वाक्यालङ्कारे । See क इदानीम् &c.—Infra.

2. Reading—Monier Williams reads अनुरूपोऽस्याः for अनुरूपस्ते । But the stage-direction प्रकाशम् shows that the speech is intended for Sakuntala Hence ते is the word, not अस्याः । We cannot say that प्रकाशम् means only that the speech is within Sakuntala's hearing not necessarily adressed to her. For, coming immediately after "तथा यथा भवसि" it is evidently the अभिनन्दन of Sakuntala's desire as suggested by प्रियंवदा ( युक्तमस्याः अभिलाषोऽभिनन्दितुम्—Ante). * Hence it has to be addressed to Sakuntala.

---

* Adopted by Prof. Gajendragadkar

राजा—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्त्तेते ?

KING—What is strange in it if the twin stars Vishakha follow the lunar digit ?

अनसूया—को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं सम्पादेम्ह [ कः पुनरुपायो भवेत् येन अविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयावः ।

ANASUYA—What can be the means by which we shall fulfill our friend's wish quickly and secretly.

प्रियंवदा णिहुअं त्ति चिन्तणिज्जं भवे सिग्घं त्ति सुअरं [ निभृतमिति चिन्तनीयं भवेत् शीघ्रमिति सुकरम् ) ]।

PRIYAMVADA—The "secretly" may require thought, the 'quickly" is easily done.

अनसूया—कहं विअ [ कथमिव ] ?

ANASUYA—How so ?

प्रियंवदा - णं सो राएसी इमस्सिं सिणिद्धदिट्ठिए सूइआहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि [ ननु स राजर्षिरस्यां स्निग्धदृष्ट्या सूचिताभिलाष इमान् दिवसान् प्रजागरकृशो लक्ष्यते ] ।

PRIYAMVADA—The royal sage with longing for this friend of ours betrayed these days by affectionate looks, appears emaciated through wakefulness.

किमत्रेति। विशाखे तदाख्ये तारके 'शशाङ्कलेखां चन्द्रकलाम् 'अनुवर्त्तेते' अनुसरतः इति 'यदि अत्र 'चित्रम्' आश्चर्यं 'किं' न किञ्चित्। विशाखयोः चन्द्रलेखाया अनुसरणं नैसर्गिकमेव अत्र न किञ्चिदाश्चर्यम्। एवम् अनसूयाप्रियंवदयोरपि शकुन्तलाया अनुवर्त्तनं स्वाभाविकम्।

क इति। सख्यमनुरूपेशाः अभिलाषः किन्तु 'कः' पुनरुपायो भवेत् येन

उपायेन 'अविलम्बितं झटिति, 'निभृतं' गुप्तं च तस्याः मनोरथं सम्पादयावः दुष्यन्तेन समागमं विधास्यावः ?

निभृतमिति । 'निभृतं' सम्पादयावः इति' यत् त्वया उक्तं तत् चिन्तनीयं भवेत्' चिन्तायोग्यं भवितुमर्हति 'शीघ्रं सम्पादयावः इति यदुक्तं तत् सुकरं' सुखसाध्यम् । दुष्यन्तेन समागमः शीघ्रं कर्त्तुं शक्यते किन्तु निभृतं कथं स्यात् तत् चिन्त्यताम् ।

नन्विति । 'ननु स राजर्षिः इमान् दिवसान्' [ "अत्यन्तसंयोगे द्वितीया"] स्निग्ध-दृष्ट्या' सस्नेहावलोकनेन 'अस्यां' सूचितः अभिलाषो'येन तादृशः सन् 'प्रजागरात्' शकुन्तलागतचिन्तया रात्रिजागरणात् 'क्रशः' क्षीणः 'लक्ष्यते' राजापि उत्सुक एव, तत् शीघ्रं कर्त्तुं शक्यम्, निभृतं कथं भवेत् चिन्तय ।

## NOTES

1. (a) विशाखे—Dual because the reference is to two stars. (b) शशाङ्क etc —लेखा is added to have the whole a feminine so as to agree with Sakuntala in gender. शशाङ्कमनुवर्त्तते does not serve the purpose so well *

2. (a) अविलम्बितम्—वि+लम्ब क्त भावे = विलम्बितम् delay विलम्बः । अविद्यमानं विलम्बितं यस्मिन् कर्मणि तत् यथा तथा । (b) निभृतम्—नितरां भृतम् इति नि+भृ+क्त कर्मणि । Well kept as a secret ; तत् यथा तथा (c) सम्पादयावः—'वर्त्तमानसामीप्ये वर्त्तमानवद्वा'' इति लट् ।

3. (a) भवेत्—सम्भावनायां लिङ् । (b) सुकरम्—सुखेन क्रियते इति सु + कृ + खल् कर्मणि ।

4. कथमिव—It here has no special meaning. It is idiomatic ( वाक्यालङ्कारे ) ।

5. (a) ननु—Implies आक्षेप censure. You ask "How so" ' What an idiot you are. Don't you see that the king loves Sakuntala ? This is the censure intended" [b] स्निग्धदृष्ट्या—स्निह + क्त कर्त्तरि = स्निग्धा affectionate. तादृशी दृष्टिः । तया । तृतीया करणे । [c] प्रजागर etc.—प्रकृष्टंजागरणम् इति प्र + जागृ + घञ् भावे = प्रजागरः wakefulness निद्राक्षयः । Now see Tika. We do not get प्रजागार with वृद्धि because the rule "जाग्रोऽविचिण्णल्ङित्सु" direct गुण with all affixes except वि, चिण्, णल् and those that drop ङ ।

* Adopted by Prof. Gajendragadkar.

राजा— सत्यमित्थम्भूत एवास्मि । तथाहि-

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रवर्त्तिभिरश्रुभिः ।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्य्यते ॥

KING—Indeed, I have really become so For this golden bracelet—with the jewels rendered pale by tears that are hot through internal heat, and flow night after night from the corner of my eye placed on my arm (palm)—as it slips down from the wrist is repeatedly moved back by me without pressing against the scars of the bow-string.

सत्यमिति । 'इत्थम्भूतः' कृश. इत्यर्थः । अन्वयः—निशि निशि भुजन्यस्तापाङ्ग-प्रवर्त्तिभिः अन्तस्तापादशिशिरैः अश्रुभिः विवर्णमणीकृतं मणिबन्धनात् स्रस्तं स्रस्तम् इदं कनकवलयं मया अनभिलुलितज्याघाताङ्कं मुहुः प्रतिसार्य्यते । व्याख्या—'निशि निशि' रात्रौ रात्रौ [ "नित्यवीप्सयोः" इति वीप्सायां द्विर्वचनम् ] 'भुजे हस्ते वामहस्ते' इति यावत् [ अत्र भुजशब्दो बाहुवाचको बाह्वोरेकदेशे हस्ते वर्त्तते ] 'न्यस्तः' स्थापितः यः 'अपाङ्गः' वामनयनकोणः तस्मात् 'प्रवर्त्तन्ते' या न्ति तैः, 'अन्तस्तापात्' मनसिजजातात् मनस्तापात् [ हेतौ पञ्चमी ] 'अशिशिरैः' उष्णैः 'अश्रुभिः' विवर्णा मणयो यस्मिन् तत् ज्यवर्णमपि आविस्तरवम्, अन्यथा तथा सम्पद्यमानं 'विवर्णमणीकृतम्' [ अभूत-तद्भावे च्विः ] 'मणिबन्धनात् करप्रकोष्ठयोः सन्धिस्थानात् 'स्रस्तं' स्रस्तं पुनः पुनरधः-स्खलितम् [ पूर्वं परम् समयोर्भेदमवलम्ब्य अत्रापि वीप्सा विधाता । ततो द्विर्भावः ] 'इदं' वामहस्तस्थितं 'कनकवलयं' सुवर्णकङ्कणं 'मया अनभिलुलितः' अमर्दितः ज्याघातस्य' धनुर्गुणस्य घर्षणस्य 'अङ्कः' चिह्नं यस्मिन् कर्म्मणि तत् तथा तथा 'मुहुः' वारं वारं 'प्रतिसार्य्यते' ऊर्द्ध्वं मणिबन्धं पुनर्नीयते । अत्र—चिन्तया व्याख्यानः—उपविश्य वामहस्तन्यस्तकपोलेन निशानयनम्—तेनऊर्द्ध्वं मणिबन्धः कूर्परस्य अधः—ततस्तापोष्णा नेत्रजलस्य वलयमाप्तिः, तेन मणिदूषणम्—दिने दिने प्रकोष्ठस्य कृशता—मणिबन्धात् कूर्परे वलयभ्रंशः—कूर्परात् वलयस्य भूयो मणिबन्धनयनम्—ततश्चापि वलयेन प्रकोष्ठ-

किणाङ्का मौर्वीकिणाङ्कास्तैः असंस्पर्शः—इत्येतत् सर्वं यथाक्रमं संबन्ध्य वाक्यं "सत्य-मित्यभ्यु न्त पर्यापि" । ["प्रविकीर्णैभिः" (त·, म्या-, म·)—"प्रसारितैः" ( रा-, वि- ) । "अनभिलुलित" ( रा·, वि- ) 'अनतिलुलित' ( त-, म्या-, म- )] ॥

## NOTES

1. (a) अन्तस्तापात्—अन्तर्गतस्तापः अन्तस्तापः internal heat. शाकपार्थिवादित्वात्—। तस्मात् (b) भुजन्यस्त &c.—Here भुजन्यस्त means हस्तन्यस्त । Compare 'हस्तन्यस्त मुखमसकलव्यक्ति' &c.—Meghadut. हस्त again refers to वामहस्त the left hand. Compare 'वामहस्तोपहितवदना आलिखिता इव प्रियसखी भर्तृगतया चिन्तया—" Act. IV. "वामप्रकोष्ठार्पितं बिभ्रत् काञ्चनमेकमेव वलयम्"—Act. IV. &c. Similarly अपाङ्ग is वामापाङ्ग । भुजेन्यस्तः placecd on the left hand. सहसुपेति समासः । भुजन्यस्तः अपाङ्गः the outer corner of the left eye placed on the left hand. कर्मधा—। तस्मात प्रवर्तन्ते इति भुजन्यस्तापाङ्ग + प्र + वृत + णिनि साधुकारिणि कर्तरि = भुजन्यस्तापाङ्गप्रवर्तीनि, तैः । (c) अनभिलुलित etc.—The friction of the bow-string cause abrasions on the fore-arm. Compare 'शरासनज्याकिणलाञ्छनो भुजः," "आस्यसि कियद्भुजौ मे रचति मौर्वीकिणाङ्क इति" etc. Prof. Gajendragadkar says "the friction of the bow-string produces scars on the wrist ( मणिबन्धन ) and on the part of the fore arm ( प्रकोष्ठ ) just above it." This is impossible. When the bow is strung and held by the grip in the middle the string does not reach below the middle of the fore arm and often even so low as that. (d) मणिबन्धनात्—मणिर्बध्यते यस्मिन् इति मणि + बन्ध + ल्युट् अधिकरणे = मणिबन्धनः । Lit. The place where a gem is worn i.e. the wrist. तस्मात् । Here again Prof. Gajendragadkar says the part where the golden braceletis worn is the fore-arm not the wrist." By wrist we do not mean the wristjoint, but the part of the fore-arm near the wrist. This is where wristlets or wrist watches are worn now a-days. (e) स्रस्तं स्रस्तम् —The वीप्सा gives the sense "each time it has slipped." The bracelet slips down to the elbow owing to the emaciation of the fore arm. Compare कनकवलयभ्रंशरिक्तप्रकोष्ठः which implies that the bracelet has slipped and left the fore arm altogether.

2. Remark—Raghava explains भुजे उपधानीकृते यस्तो योग्य-मपांगः" etc. But then why should the left arm alone be उपधानी-कृत ? Again "अत्र प्रजागरात् शय्यायां परिवर्त्तितविवर्त्तने सत्यपि उपधाने तथा निष फलत्वात् भुजोपधानत्वमुक्तम्"। Against this we remark that if the arm is used as pillow it must be the upper arm. In that case the tears will be stopped by the अङ्गद and will not reach the वलय। Besides the मणिबन्ध will be lower than the elbow and the वलय will have to slip towards the tips of the fingers, which is not possible be the emaciation however so great. With this sort of slipping, it is out of place to say that the प्रकोष्ठ (fore arm) has become रिक्त because of it (as the poet has it in the parallel passage quoted above) and that in trying to push the वलय back the ज्याघाताङ्क is not touched. Indeed अनभिलुलितज्याघाताङ्क requires that the वलय be moved over the fore arm (on which alone the ज्याघाताङ्क exists) in replacing it. This is possible only if we suppose [as I have explained in the Tika] that the king passed the night in a sitting posture with his left cheek placed on his left palm and the left elbow resting on the left thigh. It is true the वलय comes down as soon as it is replaced. The king however does not notice it immediately through absentmindedness. But he pushes it up as soon as it is noticed.

प्रियंवदा—( विचिन्त्य )—हला मअणलेहो से करोअदु। इमं देवसेसावदेसेण सुमणोगोविदं करिअ से हत्थअं पावयिस्सम् [ हला मदनलेखः अस्मै क्रियताम्। इमं देवशेषापदेशेन सुमनोगोपितं कृत्वा अस्य हस्तं प्रापयिष्यामि ]।

PRIYAMVADA (Reflecting)—Well, let a love lettter be prepared for him. I will have it concealed by flowers and under the pretext of a garland that has been offered to the gods, will cause it to reach his hands.

अनसूया—रोचइ मे सुउमारो पओओ। किं वा सउन्दला

भणादि [ रोचते मे सुकुमारः प्रयोगः। किं वा शकुन्तला भणति ]।

ANASUYA—I like this delicate measure, but what does Sakuntala say.

प्रियवदेति। 'विचिन्त्य' ध्यात्वा काव्यं निर्मित्य इत्यर्थः।

इत्येति। 'अस्मै' दुष्यन्ताय [ "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सम्प्रदाने चतुर्थी ] मदनस्य लेखः' लिपिः कन्दर्पपीड़ासूचिका लिपिः क्रियताम्। 'इमं' मदनलेखं 'देवस्य' देवताविशेषस्य 'शेषा' माल्यं 'देवशेषा' निर्माल्यमिति यावत्। सा एव 'अपदेशः' तेन। 'सुमनोभिः' पुष्पैः [ सुमनःशब्दः स्त्रियां बहुत्वे वर्तते। 'आपः सुमनसो वर्षा अप्सरःसिकताः समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् ॥" ] 'गोपित' निगूहितं कृत्वा 'अस्य हस्तं प्रापयिष्यामि' [ "शेषा" ( रा-, वि, म- ) "सेवा" ( त, ना ) ] ॥

रोचते इति। 'सुकुमारः' सुन्दर एव 'प्रयोगः' उपायः 'मे' मह्यम् [ "रुच्यर्थानां प्रीयमाणः" इति सम्पदाने चतुर्थी ] रोचते।

NOTES

1. (a) देवशेषा etc.—For शेषा in the sense of माला compare "तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे"—Kumara* (b) देवसेवा means देवस्य राज्ञः सेवा पुष्पोपहारः। I prefer the reading देवशेषा।

शकुन्तला—को णिओओ विकप्पीअदि [को नियोगो विकल्प्यते]।

SAKUNTALA—What injunction is altered ?

प्रियंवदा—तेन हि अत्तणो उवण्णासपुव्वं चिन्तेहि दाव किम्पि ललिअपदबन्धणं [ तेन हि आत्मन उपन्यासपूर्वं चिन्तय तावत् किमपि ललितपदबन्धनम् ]।

PRIYAMVADA—Then think of some fine metrical composition with an allusion to thyself.

---

* Adopted by Prof. Gajendragadkar.

शकुन्तला—हला चिन्तेमि अहं। अवहीरणाभीरुअं पुणो वेवइ मे हिअअं [ हला चिन्तयाम्यहम्। अवधीरणाभीरुकं पुनर्वेपते मे हृदयम् ]।

SAKUNTALA—I am thinking, dear. But apprensive of slight, my heart trembles.

क इति। युवयोः 'कः नियोगः' आदेशः 'विकल्प्यते' अन्यथाक्रियते मया। युवां यदा यत् ब्रूथः तदैवाहं तदा करोमि, मदनलेखमेव अधुना करिष्ये इत्यभिप्रायः।

तेनेति। 'तेन हि' यदि नैव विकल्प्यते तर्हि 'आत्मनः' स्वस्य उपन्यसनम् 'उपन्यासः' उपस्थापनम् तत्पूर्वकं 'किमपि ललितं' मधुरं 'पदबन्धनं' छन्दोरचनं 'तावत् चिन्तय'। आत्मानम् उपस्थाप्य छन्दोमयीं गीतिं रचय इत्यर्थः।

हलेति। अहं चिन्तयामि हृदयं पुनः चेतस्तु 'अवधीरणा' अवज्ञा [ अवधीर इति कैश्चिन्मते चुरादौ पठ्यते। ततो युच्) 'ततो भीरुकं' भीतं सत् 'वेपते' कम्पते। [ "अवधीरणा" ( त-, वि-, न्या-, )—"अवधीरण" ( रा-, म- ) ]॥

NOTES

1. विकल्प्यते—विकल्पन is विषमकल्पन or विभिन्न कल्पन &c. Compare विकल्पित in 'परिहासविकल्पितं सखे—Act. II—(Reading).

2. (a) उपन्यास etc —उप + नि + अस + घञ् भावे = उपन्यासः placing near, i.e. alluding. स पूर्वो यस्मिन् तत् यथा तथा। (b) ललित etc.—पदानां ललितपदानां बन्धनम्। Next कर्मधा—।

3. Readings—अवधीरणा has to be preferred because the verse below has अवधीरणा।

राजा—

अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम्।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत्॥ १३॥

KING—Here longing for union with you, O Timid One, stands he from whom you apprehend slight. The suitor may or may not attain Lakshmi; (but) how to Lakshmi can the wished for be inaccessible?

सखो—अयि अत्तगुणावमाणिणि को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि [ अयि आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ]।

FRIENDS—O Slighter-of-thy-merits, who ever keeps off with the skirts of his garment the autumnal moon-light that refreshes the body?

शकुन्तला ( सस्मितम् )—णिओइदा दाणिंम्हि ( नियोजिता इदानीमस्मि )। ( उपविष्टा चिन्तयति )।

SAKUNTALA (Smiling)—Here, I am now engaged, (Sits up and meditates).

अयमिति। अन्वयः—हे भीरु यतः अवधीरणां विशङ्कसे, सः अयं ते समागमोत्सुकः तिष्ठति। प्रार्थयिता श्रियं लभेत वा न वा; ईप्सितः श्रिया दुरापः कथं भवेत्। व्याख्या—हे 'भीरु' भयशीले [ "ऊङुतः" इत्यूङ् संबुद्धिश्च ] 'यतो' यस्मात् जनात् 'अवधीरणाम्' अवज्ञां 'विशङ्कसे' सः अयं मल्लक्षणो जनः 'ते' तव 'संगमे' समागमे 'उत्सुकः' उत्कण्ठः 'तिष्ठति'। 'प्रार्थयिता' अर्थी जनः 'श्रियं' लक्ष्मीं लभेत वा न वा' प्राप्नुयात् नापि वा प्राप्नुयात् [ शक्ति लिङ् ]। ईप्सितः प्राप्तुमिष्टो जनः 'श्रियाः' लक्ष्म्या सम्बन्धे। (यद्वा—'श्रिया' इति अनुक्ते कर्त्तरि तृतीया। 'न लोक—" इति कर्त्तृषष्ठ्या एव निषेधः) 'दुरापः' दुष्प्रापः दुर्लभ्यः (कर्मणि खल्) 'कथं भवेत्' न कथमपि। लक्ष्मीर्यत् प्रीता तदा एव लक्ष्मीलाभो भवति। एवं त्वया समागमः तवैव अनुग्रहः, समागमेप्रार्थिनी कथामङ्गीकरोमि इति भावः।

अयीति। 'आत्मनो गुणान् अवमानयति अवजानाति या तत्सम्बुद्धिः। 'शरीरस्य निर्वापयित्री" [illegible] 'शारदीं' [illegible] 'ज्योत्स्नां' चन्द्रिकां 'क

इदानीं पटान्तेन' वसनाञ्चलेन 'वारयति'। न कोऽपि। स राजा कथमपि त्वां नावधीरयेत्। इदानीमिति वाक्यालङ्कारे। ("इदानीं वाक्यभूषायां सम्प्रत्यर्थे दृश्यते" इति मेदिनी॥ 'पटान्तेन' (रा-, वि-, म-)—"आतपत्रेण" (त-, न्या-)]॥ नियोजितेति। 'इदानीं नियोजिता' गीतरचने व्यापारिता 'अस्मि'।

NOTES

1. (a) सङ्गमोत्सुकः—सङ्गमेन उत्सुकः or सङ्गमे उत्सुकः anxious for union. सहसुपेति समासः। (b) यतः—from whom. पञ्चम्यास्तस्। "ध्रुवमपायेऽपादानम्" इत्यपादाने पञ्चमी। Some word or gesture indicating slight (अवधीरणा) is supposed to reach शकुन्तला from दुष्यन्त। Hence there is अपाय and दुष्यन्त is "ध्रुव"। So the sutra applies. We must not say बिभेति इति भयार्थयोगात् भयहेतौ अपादाने पञ्चमी, because even when बिभेति is absent we have पञ्चमी—दुष्यन्तात् अवधीरणा। Cp. "बिभ्रमानो भवतः पराभवम्"—Kirat. I.

2. श्रियाः—शेषे षष्ठी as in ते in "समदेशवर्तिनस्ते न दुरासदो भविष्यति" —Act. I. Ante.

3. (a) आत्मगुण &c.—आत्मनो गुणाः आत्मगुणाः own merits. षष्ठीतत्—तान् अवमानयति इति आत्मगुण + अव + मान + णिच् स्वार्थे + णिनि साधुकारिणि कर्तरि स्त्रियाम्। ततस्त्वं ङीप्। (b) पटान्तेन—पटस्य अन्तः। तेन। The reading आतपत्रेण seems unsuitable. One does not go out in moon-light with an umbrella (आतपत्र), so the reference to an umbrella is out of place.

4. नियोजिता—The णिच् shows her submission to the will of the friends.*

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। यतः—

उन्नमितैकभ्रूलतम् आननमस्याः पदानि रचयन्त्याः।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन॥ १४॥

KING—How meet that I gaze on my beloved with eyes

* Adopted by Prof. Gajendragadkar.

that have forgotten their wink ; For as she is composing, the lines her face, with one eye-brow turned up, notifies her love for me by means of the cheeks with the pores raised.

शकुन्तला—हला चिन्तिदं मए गीदवत्थु। असिण्णिहिदाणि उण लेहणसाहणाणि [ हला, चिन्तितं मया गीतवस्तु। असन्निहितानि पुनर्लेखनसाधनानि ]।

SAKUNTALA—Friends, the substance of the song is thought out by me, but writing meterials are not at hand.

स्थाने इति। 'विस्मृतः निमेषो' नयननिमीलनं येन तेन 'चक्षुषा' [ जात्यैकवचनम् ] प्रियामवलोकयामि' इति यत् तत् 'स्थाने' युक्तं 'खलु' [ "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। अव्ययमेतत् ]। कुतो युक्तमित्याह 'यतो' यस्मात्—

उन्नमितेति। अन्वयः—पदानि रचयन्त्या अस्या उन्नमितैकभ्रूलतम् आननं कण्टकितेन कपोलेन मयि अनुरागं प्रथयति। व्याख्या—'पदानि' गीतपादान् गीतशब्दान् वा 'रचयन्त्याः विचिन्त्य योजयन्त्याः 'अस्याः उन्नमिता' ऊर्ध्वं प्रेरिता 'एका भ्रूलता' यस्मिन् तादृशम् [ ध्यानस्यस्य स्वभाव एषः] 'आननं' मुखं वदनं 'कण्टकितेन' आतरोमाञ्चेन [ इतच् प्रत्ययः। तारकादिः ] 'कपोलेन' गण्डेन [ जातावेकवचनम्] 'मयि अनुरागं' भावं 'प्रथयति' विघोषयति। इयन्तं कालं यो मयि भावो गोपितः सः अधुना घोषणया प्राप्यते, अहञ्च पश्यामि। किमतो युक्ततरं दर्शनं भवेत् इति भावः। ["कण्टकितेन प्रथयति" (रा-, वि-, म-)—पुलकाञ्चितेन कथयति" (त- व्या-) ]॥

हलेति। 'मया गीतस्य 'वस्तु' उपादानं 'चिन्तितं' ध्यातम्। 'लेखनस्य साधनानि' लेखनिर्वाहकद्रव्याणि 'पुनः न सन्निहितानि' समीपस्थानि। गीतं रचितं किन्तु कथं लिख्यते ? ["चिन्तितं मया गीतवस्तु" ( रा- वि- )—"चिन्तिता मया गीतिका" ( त-. व्या- म- ) ]॥

## NOTES

1. (a) उन्नमित &c.—उत् + नम् + णिच् + क्त कर्मणि—उन्नमिता upturned, raised, भ्रूःलता इव भ्रूलता creeper-like eye-brow, उपमितसादृश्य—the resemblance lying in taper graceful movements &c.

एका भ्रूलता। 'पूर्वकालैक—'' इति समासः। उन्नमिता एकभ्रूलता यस्मिन्। Or उन्नमिता एका भ्रूलता यस्मिन्, विपद बहु—(b) Remark—She declares her love for me not in words, which may deceive through dissimulation, but by the horripilation on her cheeks which can be caused by nothing but genuine emotion. I am a witness to this. A more pleasing sight cannot be imagined (स्थाने खलु)।*

2. असन्निहितानि—न सन्निहितानि makes the नञ् a प्रसज्यप्रतिषेध। This sort of नञ् emphasises the negation—('प्रतिषेधे प्रधानता''—Darpana) Strict logic therefore requires that it should not be compounded. But in the older days the spirit of the language was different and समास with प्रसज्यप्रतिषेध नञ् was common. Panini writes अश्रिति for न तु श्रिति, अकर्त्तरि for न तु कर्त्तरि etc.

प्रियंवदा—इमस्सिं सुओदरसिणिद्धे णलिनीपत्ते णहेहिं णिक्खित्तवण्णं करेहि (अस्मिन् शुकोदरस्निग्धे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु)।

PRIYAMVADA—Well, have the letters scratched with your nails on this lotus-leaf which is pleasant-looking like the parrot's breast.

शकुन्तला (यथोक्तं रूपयित्वा)—हला, सुणाहि दाणिं सङ्गदत्थं ण वेत्ति (हला शृणुतमिदानीं सङ्गतार्थं न वेति)।

SAKUNTALA—(Acting as described)—Listen dear and see if it is proper in sense or not.

उभे—अवहिदम्ह (अवहिते स्वः)।

BOTH—We are attending.

शकुन्तला (वाचयति)—

तुज्झ ण आणे हिअअं मम उण मअणो दिवा वि रत्तिम्पि।
णिग्घिण तवइ बलीअं तुइ वुत्तमनोरहाइं अङ्गाइं ॥१५॥

* Adopted by Prof. Gajendragadkar.

Translate in Sanskrit

( तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रावपि ।
निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि ॥ १५ ॥

SAKUNTALA (Reads)—Thy heart I know not; But, O Cruel one, with my desire placed on thee, Cupid heats my limbs by day and by night.

अस्मिन्निति । 'शुकस्य उदरं शुकोदरम् । 'शुकोदरम्' इव 'स्निग्धं' नेत्रानन्दनं तस्मिन् ["उपमानानि सामान्यवचनैः" इति समासः] 'अस्मिन् नलिनीपत्रे' कमलदले 'नखैः निक्षिप्ता' उत्कीर्णा 'वर्णा' यस्य तथाविधं 'कुरु' । पद्मपत्रे नखेन लिख्यताम् । अहन्तु तमस्मिन्नेव पत्रे पुष्पाणि निधाय राजानं प्रापयामि । ["शुकोदरस्निग्धे" (पि- )—"शुकोदरसुकुमारे" ( रा-, त-, वि-, न्या, म- ) ॥ "निक्षिप्तवर्णं कुरु" ( रा-, वि-, म- )—"आलिख्यताम्" ( त-, न्या-, ) ] ॥

शकुन्तलेन । 'यथोक्तम्' उक्तानुरूपं रूपयित्वा' अभिनीय । पद्मपत्रे नखेन लिखित्वा इत्यर्थः ।

श्रुत्वेति । 'सङ्गतः' संलग्नः युक्तः 'अर्थो' यस्य तादृशं न वा, श्रणुतम् । श्रुत्वा कथय स लग्नमसंलग्नं वा इत्यर्थः ।

अवेति । 'अवहिते' दत्तचित्ते 'स्वः' भवावः ॥ शकुन्तलेति । 'वाचयति पठति । तवेति । अन्वयः—हे निर्घृण, तव हृदयं न जाने त्वयि वृत्तमनोरथाया मम पुनः मदनः दिवा अपि रात्रावपि अङ्गानि बलीयः तपति । व्याख्या—हे 'निर्दय 'तव हृदय' चित्तं 'न जाने । 'त्वयि वृत्तः' जातः 'मनोरथः' अभिलाषो यस्याः तथाविधायाः 'मम' पुनः 'मदनः' कामः 'दिवा अपि' दिवसे च 'रात्रौ अपि' रजन्याञ्च 'अङ्गानि बलीयः' अत्यर्थं 'तपति' तापेन योजयति । ('रात्रावपि" (रा- वि-)—"रात्रिमपि" ( य-, न्या-, म- ) ॥ "मदनः" ( त-, न्या-, ) 'कामः' ( रा-, वि-, म- ) । 'मनोरथायाः' ( त-, वि-, म- ) ] ॥

## NOTES

1. शुकोदर &c.—The parrot's breast is not very well-known for its सुकुमारता, but its mild yellow green colour is very pleasing and resembles that of a lotus leaf. Hence I prefer the reading स्निग्धे to सुकुमारे ।

2. इति—कर्म of प्रयतम् ।

3. (a) दिवा an अव्यय meaning दिवसे in the सप्तमी । [b] निर्दय—निरस्ता दया यस्य इति निर्दयः pitiless, बहु— ।

4. Reading=[a] मदन is preferable to कामः because in the sloka following, the king uses the word मदनः । [b] रात्रावपि requires दिवा also to be in the द्वितीया for the sake of uniformity. But दिवा is अधिकरणवचनः । Some indeed hold that दिवा may mean दिवसम् in the द्वितीया, but that is in compounds only [e g. दिवाकरः ] । The वृत्तिकार however explains 'दिवाशब्दोऽधिकरणवचनः । दिवा दिवसे [ not दिवसम् ] करोति प्राणिनः चेष्टायुक्तान् इति दिवाकरः" । I therefore prefer रात्रावपि । (c) मनोरथानि—It seems queer to speak of the मनोरथ of अङ्ग । मनोरथायाः is better.

राजा ( सहसोपसृत्य )—

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥१६॥

KING—(Hastily approaching)—Thee, O thou of slender limbs, Cupid heats ; but verily, me he ceaselessly burns The day certainly does not cause the lily to fade so much as it does the moon.

सख्यौ ( विलोक्य सहर्षमुत्थाय )—साअदं अविलम्बिणो मनोरथस्स ( स्वागतमविलम्बिनो मनोरथस्य ) । ( शकुन्तला अभ्युत्थातुमिच्छति ) ।

FRIENDS (Looking at him and rising with joy)—Welcome to our desire that does not delay. (Sakuntala wants to get up].

राजेति । 'सहसा अतर्कितम् 'उपसृत्य' समीपमागत्य । अन्वय.—हे तनुगात्रि मदनः अनिशं त्वां तपति मां पुनर्दहत्येव । दिवसो यथा शशाङ्कं ग्लपयति कुमुद्वतीं न हि तथा । व्याख्या—हे तनुगात्रि' कृशाङ्गि सकुमाराङ्गि 'मदनः अनिशं ' सततं 'त्वां तपति' तापमात्रं च पीडयति 'मां पुनः' मां तु 'दहत्येव' भस्मीकरोत्येव । नैतदयुक्तमिति दृष्टान्तमाह—'दिवसः' वासरः 'यथा शशाङ्कं' चन्द्रं ग्लपयति' तेजोहीनं करोति 'कुमुद्वतीं चन्द्रप्रियां कुमुदिनीं 'न हि तथा' ।

सखी इति। 'उत्थाय' आचारप्राप्तम् अभ्युत्थानं कृत्वा। ['विलोक्य सहर्ष-मुत्थाय' (त, न्या, म)—'सहर्षम् (रा, वि)]॥

स्वागतमिति। 'अविलम्बिनो' विलम्बम् अकुर्वतः, झटितिमात्रमुपस्थितस्य 'मनोरथस्य' अभिलाषस्य, अभिलाषविषयत्वात् अभिलाषस्वरूपस्य तव सम्बन्धि 'स्वागतं' शोभनम् आगमनं भवतु।

शकुन्तलेति। 'अभ्युत्थातुम्' यथाचारं राज्ञः अभ्युत्थानकर्म कर्तुम् "इच्छति"। अभ्युत्थानाध्यवसाय एव कृतः न तु उत्थिता सा।

NOTES

1. )a) तनुगात्रि—तनूनि स्वल्पानि गात्राणि यस्याः सा तनुगात्री or तनुगात्रा having slender limbs, बहु—। 'अङ्गगात्रकण्ठेभ्यश्च' इति ङीष् वा। तत्सम्बुद्धौ। That which is very small तनु does not require much heat to heat it. So I do not think Cupid strikes you with much force ; only, being तनुगात्री, you are easily heated, that is all. "तनुः काये कृशेऽल्पे च' इति कोषः। (b) माम्—'पुरुषं कठिनशरीरम्' इति राघवः। The force is—Cupid pities you because you are a woman and of slender proportions. He does not vent his fury on you but merely heats you. But look at me. e thinks I am his match and strikes with all his strength, The rascal is literally burning me down, (c) ग्लपयति—ग्लै + णिच् + लट् ति = ग्लपयति or ग्लापयति (मित्त्वविकल्प) oppresses. No मित्त्व if an उपसर्ग precedes. Thus—प्रग्लापयति। (d) कुमुद्वतीम्—कुमुदानि सन्ति अस्याः इति कुमुद + ड्मतुप्स्त्रियाम्। ताम्। "कुमुदनड्वेतसेभ्यो" इति ड्मतुप्।

2. (a) अविलम्बिनः—न विलम्बते इति नञ् + वि + लम्ब—णिनि कर्तरि साधुकारिणि = अविलम्बी not delaying. तस्य। (b) मनोरथस्य—Here the मनोरथ (desire) is the king himself—मनोरथविषयीभूतो जनः।

3. Reading.—In the case of kings, उत्थान is the आचार। Hence सहर्षमुत्थाय is better than the simple सहर्षम्।

राजा—अलमलमायासेन—

सन्दष्टकुसुमशयनान्याशु विमर्दितमृणालवलयानि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति॥ १७॥

KING—Off, off with your effort. Your deeply suffering limbs, which quickly have the bed of flowers sticking on them and the bracelet of lotus-shoots smashed, are not fit for ceremonies.

अनसूया—इदो सिलादलेक्कदेसं अलङ्करेदु वअस्सो ( इतः शिलातलैकदेशमलङ्करोतु वयस्यः )। ( राजा उपविशति )। ( शकुन्तला सलज्जं तिष्ठति )।

ANASUYA—Let our friend grace a part of the stone-slab (The king sits down. Sakuntala stays covered with shame).

अलमिति। 'आयासेन' अभ्युत्थानप्रयासेन 'अलम्' [ आवेगे द्विरुक्तम् ]।

सन्दष्टेति। अन्वयः—आशु सन्दष्टकुसुमशयनानि विमर्दितमृणालवलयानि गुरु-परितापानि ते गात्राणि उपचारं न अर्हन्ति। व्याख्या—'आशु' झटिति 'सन्दष्टं' लग्नं कुसुमशयनं पुष्पशय्या येषु तथाविधानि, 'विमर्दितं' निष्पेषित 'मृणालवलयं' ..: तथा-विधानि 'ते गात्राणि' अङ्गानि 'उपचारम्' अभ्युत्थानादिक राजदर्शनोचितम् आचारं 'न अर्हन्ति'। गात्रतापात् झटिति कुसुमानि विगलन्ति, ततः शय्या एव गात्रेषु लग्ना भवति। मृणालवलयस्य परिधानमात्रमेव तापात् मर्दितं भवति। एवंविधैस्तापितै-रङ्गैः कथम् अभ्युत्थानं क्रियते इति भाव.। [ 'विमर्दितमृणालवलयानि' ( त., ब. ) 'कान्तविसभङ्गसुरभीणि' (रा., वि., म. ) ]।

इत इति। 'वयस्यः' सखा भवान् इतः' अस्मिन् स्थले 'शिलातलस्य एकदेशम् अलङ्करोतु उपवेशनेन भूषयतु। इति शकुन्तलायाः शय्याभूतं शिलातलं निर्दिशति। अतएव वयस्य इतिसन्तेहसंबोधनम्। वयस्यो जनः एकासनोपवेशनमर्हति।

शकुन्तलेति। 'लज्जया', राज्ञा तस्याः शय्या अधिकृता इति व्रीडया सह तिष्ठति।

## NOTES

1. (a) अलम् अलम्—'आपदि द्वे भवत इति वाच्यम्'। 'सम्भ्रमेणप्रवृत्ति-र्वाच्यम्' इति हत्तिकारः। (b) सन्दष्ट &c.—सम्+दन्श+क्त कर्त्तरि=सन्दष्टम् attached. The root has become अकर्मक owing to the change of

---

Adopted by Prof. Gajendragadkar.

meaning. "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" ॥* अकर्मकत्वात् कर्तरि क्तः। In a similar sense compare—सन्तप्तपदं तथा—Act. III. Infra. शय्यते अस्मिन् इति शी+ल्युट् अधिकरणे—शयनम् bed. कुसुमरचितं शयनम् or कुसुमानां शयनम् कुसुमशयनम् flower bed. Now see Tika. (c) विमर्दित &c—वि+मृद्+णिच्+क्त कर्मणि=विमर्दितम् Literally 'crushed' here caused to shrivel'. प्रशिथिलमृणालैकवलयम्—Ante. (d) उपचारम्—उपचर्यन्ते अनेन इति उप+चर+घञ् करणे=उपचारः customary formalities at the approach of the king. 'उपचारस्तु सेवायां व्यवहारोपचर्ययोः' इति हेमः।

2. Reading—क्लान्तबिसभङ्गसुरभीणि—भज्यते इति भञ्ज+घञ् कर्मणि=भङ्गः a piece छेदः। क्लान्तो म्लानो यो बिसभङ्गो मृणालछेदः तेन सुरभीणि is the meaning; but there was the whole bed of flowers sticking on the body to make it fragrant ( सुरभि )। It therefore sounds rather queer to say that fragrance was due to the solitary piece of lotus-shoot on the wrist ( बिसभङ्गसुरभि )। I therefore prefer विमर्दितमृणालवलयानि।*

प्रियंवदा—दुवेणम्मि वा अण्णोण्णाणुराओ पच्चक्खो। सहीसिणेहो उण मं पुणरुत्तवादिणीं करेदि (द्वयोरपि युवयोः अन्योऽन्यानुरागः प्रत्यक्षः। सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति)।

PRIYAMVADA—Your mutual affection is obvious to both of you, Yet love for my friend makes me speak something superfluous.

राजा—भद्रे, नेतत् परिहार्यम्। विवक्षितं हि अनुक्तमनुतापं जनयति।

**KING—O Gentle one, this should not be avoided. What is wished to be said, causes regret, if unsaid.**

---

* Adopted by Prof. Gajendragadkar.

प्रियंवदा—आवण्णस्स विसअवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो ( आपन्नस्य विषयवासिनो जनस्य आर्त्तिहरेण राज्ञा भवितव्यम् इति एषो वो धर्मः ) ।

PRIYAMVADA—The king has to be the remover of the trouble of the distressed, that are living in his kingdom—this is your duty,

राजा—नास्मात् परम् ।

KING—Nothing higher than this.

इयोरिध । 'युवयोः अन्यस्य अन्यस्य' अन्यस्मिन् अन्यस्मिन् वा 'अनुरागः द्वयोरपि' उभयोरपि भवतोः 'प्रत्यक्षः' ( भवान् जानाति 'इयं मयि रक्ता अहञ्च अस्याम्' इति—इयञ्च जानाति 'राजा मयि रज्यति अहमपि राजनि'—एवं स्थिते कर्त्तव्यमपि उभावपि भवन्तौ जानीतः । अन्यस्य वाक्प्रयोगः अनावश्यकः । 'सखीस्नेहः पुनः' 'शकुन्तलागतो मे स्नेहस्तु 'मां पुनरुक्तवादिनीम् अधिकवादिनीं, निष्प्रयोजनजल्पिनीं 'करोति' । प्रीत्या ब्रवीमि । वचनप्रयोजनन्तु नास्त्येव ।

भद्रे इति । 'एतत् वचनमित्यर्थः 'न परिहार्य्यम्' वर्जनीयम् । अवश्यमेव त्वया वक्तव्यम्, यतः 'विवक्षितं' वक्तुमिष्टं वस्तु अनुक्तं' सत् 'अनुतापं' पश्चात्तापं 'जनयति' ब्रूहि यद्वक्तुमिच्छसि इति भावः ।

आपन्नेति । 'राज्ञः', 'विषये' स्वाधिकारे 'वसति' यस्तस्य 'आपन्नस्य' विपद्गतस्य [ कर्त्तरि क्तः ] जनस्य 'आर्त्तिहरेण' विपद्विनाशिना राज्ञाभवितव्यम्—इति'यत् एषः' [विधेयप्राधान्यात् पुंल्लिङ्गता]'वः'युष्माकम् 'धर्मः' । प्रजारक्षणं राजधर्मः इति संक्षेपः । नेति । 'अस्मात् प्रजारक्षणात् परम् अधिकं 'न' नास्ति । अयमेव नः परमो धर्मः ॥

NOTES

1. (a) अन्योऽन्य &c.—अनु + रञ्ज + घञ् भावे—अनुरागः love. अन्यस्य अन्यस्य अनुरागः express व्यतिहार reciprocity, by the Varttika 'क्रियाव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्'' । But owing to 'बहुलम्' (irregularly) in the Varttika अन्य and पर do not get समासवद्भाव ! 'बहुलग्रहणादन्यपरयोर्न समासवत्'—Bhattoji. Now comes स after first

अत्र—See परस्परम्, Ante. (b) सखीजनः—सख्यौ जनः । सखसुपेति समासः । (c) पुनरुक्त &c.—Lit, पुनरुक्त is a repetition. But a repetition is superfluous; hence secondarily it means अधिक superfluous. तत् साधु वदतीति पुनरुक्त + वद + णिनि साध्वकारिणि कर्त्तरि । ताम् ।

2. Remark—Here द्वयोः is connected with प्रत्यक्षः । If taken with अन्योऽन्यानुरागः the sense becomes—your mutual attachment is evident to us But then द्वयोरपि is rendered superfluous, because to give that sense 'युवयोरन्योऽन्यानुरागः प्रत्यक्षः' serves as well as 'द्वयोरपि युवयोः &c.' The point. however, is not that it should be evident to us, but to the couple in love. Then alone the request of third person becomes unnecessary [ पुनरुक्त ] ।*

3. [a] विषय &c —विषय is देश kingdom. 'विषयो देशगोचरौ' इति विकाण्डशेषः । (b) आर्त्तिहरेण—आ + ऋ + क्तिन् भावे = आर्त्तिः distress पीड़ा । 'आर्त्तिः पीडाधनुष्कोट्योः' इत्यमरः । तां हरतीति आर्त्ति + हृ + अच् कर्त्तरि ताच्छील्ये = आर्त्तिहरः reliever to distress. Here हृ implies no lifting [अनुद्यमन] hence अच् bars अण् by the rule 'हरतेरनुद्यमनेऽच्"* । तेन । . अनुक्ते कर्त्तरि तृतीया ।

I. अस्मात्—अधिकार्थपरशब्दयोगे पञ्चमी ।

**प्रियंवदा - तेण हि इयं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवदा मअणेण आरोविदा । ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ( तेन हि, इयमावयोः प्रियसखी त्वामुद्दिश्य इदमवस्थान्तरं भगवता मदनेन आरोपिता । तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बितुम् ) ।**

PRIYAMVADA—Well, then—this dear friend of ours has been led to this changed state by all-powerful Madana with reference to thee. So it behoves thee to sustain her life by condescension.

**राजा—भद्रे, साधारणोयं प्रणयः । सर्वथा अनुगृहीतोऽस्मि ।**

---

* Adopted by Prof. Gajendragadkar.

KING—O Gentle one this prayer is mutual, I am favoured in every way.

शकुन्तला ( प्रियंवदामवलोक्य )—हला किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ( हला किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन )।

SAKUNTALA—(Looking at Priyamvada)—What is gained dear, by pressing the royal sage who is anxious through separation from the ladies of the inner appartment.

तेनेति। 'तेन हि' तस्माद्धेतोः' यतः प्रजारक्षणं वो धर्मः ततः [ एतच वक्ष्यमाणवचनं प्रति हेतुः ]—'इयम् आवयोः प्रियसखी शकुन्तला 'भगवता' प्रभुणा 'मदनेन त्वामुद्दिश्य भवन्तं विषयं कृत्वा 'इदम् अवस्थान्तरं' दशाविपर्ययम् 'आरोपिता' गमिता। विपन्ना इदं विषयवासिनी इत्यर्थः। 'तत्' तस्माद्धेतोः यतो विपन्ना ततः, [ एतत्तु जीवितावलम्बनं प्रति हेतुः ] 'अभ्युपपत्त्या' अनुग्रहेण ( "अथाभ्युपपत्तिरनुग्रहः" इति कोषः) 'अस्या जीवितमवलम्बितुमर्हसि'। प्रकर्षं गते आर्ते च एतस्य परभावे एतन्निष्प्रयोजनं वचः, तथापि स्नेहादब्रवीमि इति भावः।

भद्रे इति। 'अयं प्रणयः' एषा प्रार्थना अभ्युपपत्त्या जीवितावलम्बनरूपा याञ्चा 'साधारणः' समानः। यथा इयं मां प्रार्थयते तथा अहमपि इमां प्रार्थये "अभ्युपपत्त्या जीवितमवलम्ब्यताम्" इति। तत् ते अनेन वचनेन 'सर्वथा' सर्वप्रकारेण 'अनुगृहीतोऽस्मि'।

शकुन्तलेति। [ 'प्रियंवदाम्' ( र०, वि०, म० )—"अनसूयाम्" ( त०, श्रा० ) ]।

हलेति। 'अन्तःपुरे' सम्बन्धया तत्रस्थितः जनः यो 'विरहः' तेन पर्युत्सुकस्य उत्कण्ठाकातरस्य 'राजर्षेः उपरोधेन' राजर्षिम् अनुरुध्य 'किं' लभ्यते न किमपि प्रजागरक्षणोऽयं न हि मत्कृते किन्तु अन्तःपुरविरहात्, तदलमनेनानुपरोधेन।

## NOTES

1. (a) अवस्थान्तरम्—अव+स्था+अङ् भावे = अवस्था State. Here क्तिन् does not bar अङ् as it ought to do in the case of स्था, गा, प and पच by the rule "स्था गा पा पचो भावे". The reason is [illegible]

himself suggests the option of having णिच् or णच् with क्ता in the भाववाच्य because he uses the word व्यवस्था in I. 1. 34 — "व्यवस्थायामसंज्ञायाम् इति ज्ञापकात् नात्यन्ताय बाधा भवति"—Vrittikara व्यवा व्यवस्था। अवस्थान्तरम् a नित्यसमास of the मयूरव्यंसकादि class. Here अन्तर means अन्य। (b) भगवता—भग implies six things ऐश्वर्य, वीर्य, यशस्, श्री ज्ञान, वैराग्य। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना"। Thus भगवता here suggests that मदन is powerful and poor helpless Sakuntala is being oppressed by that matchless tyrant. She is thus आपन्न and deserves protection. (c) आरोपिता—आ + रुह + णिच + क्त—कर्मणि। Optionally आरोहिता।

2. (a) साधारणः—समानं धारणमस्य इति साधारणः that which is seen in more than one place i.e. common. समान becomes स by योगविभाग in the rule "समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु"। Next स becomes सा (पृषोदरादित्वात्)। This is Haradatta's explanation. Bhanuji derives through आधारण instead of धारण। Next the word optionally takes अञ् स्वार्थे by the Varttika 'आग्रीध्रसाधारणादञ्"। The form does not differ {and is still साधारणः। The difference is however seen in the feminine where with अञ् the form is साधारणी and साधारणा without it (b) प्रणयः—प्रणीयते अनेन or प्रणयनम् इति प्र + नी + अच् करणे भावे वा = प्रणयः solitcitation याच्ञा। "प्रणयः प्रेमयाच्ञयोः" हेमः।

राजा—

इदमनन्यपरायणमन्यथा हृदयसंनिहिते हृदयं मम।

यदि समर्थयसे मदिरेक्षणे मदनबाणहतोऽस्मि हतः पुनः॥१८॥

KING—O thou with quivering eyes that art enshrined in my heart, if you deem as otherwise this heart of mine which is not devoted to others, then pierced by Madana's arrow I am pierced again.

अनसूया—वअस्स बहुवल्लहा राआणो सुणीअन्ति। जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तह णिव्वाहेहि (वयस्य,

बहुवल्लभा राजानो श्रूयन्ते । यथा आवयोः प्रियसखी बन्धुजन-शोचनीया न भवति यथा निर्वाहय )।

ANASUYA—Friend kings are known as having many wives. Do so arrange that our dear friend will not have to be pitied by her kinsmen.

इदमिति । अन्वयः—हे मदिरेक्षणे हृदयसन्निहिते, इदम् अनन्यपरायणं मम हृदयं यदि अन्यथा समर्थयसे, मदनबाणहतः पुनः हतोऽस्मि ।

व्याख्या—'मदिरेक्षणे' चारुचञ्चललोचने [ अनेन नेत्रभङ्ग्यैव मां त्वदधीनम् अनुमातुमर्हसि इति ध्वन्यते ] हे 'हृदयसन्निहिते' मन्मनोवर्त्तिनी [ एतेन प्रत्यक्षमेव ते मम हृदयं, ततश्च मां तदधीनं जानीहि इति ध्वनिः ] 'इदं न अन्या' त्वमेव 'परायणम्' आश्रयो यस्य तथाविधं, त्वदेकनिरतम् इत्यर्थः, 'मम हृदयं' मानसं 'यदि अन्यथा' अन्य-प्रकारेण 'समर्थयसे गणयसि, यदन्यपरायणमेव मन्यसे, तदा 'मदनबाणेन' कन्दर्पशरेण 'हतः' विद्धः अहं पुनः हतोऽस्मि । एवञ्च ते मदनुरागं प्रति प्रथमं प्रमाणमनुमानं ततः प्रत्यक्षम् । यदि तु उभयमपि तत् तुच्छं मन्यसे, ततो मरणमेव मे शरणम् इति भावः [ "हतोऽस्मि" ( रा-, वि-, म- )—"हतोऽपि" ( त, का ) ] ।

वयस्ये इति । 'राजानो बहुवल्लभाः' वनिता येषां तथाविधाः श्रूयन्ते [ सामान्योक्त्या "बहुनि ते कलत्राणि" इति दृष्ट्वा परिहरति* ] । तदसमं विभक्ता प्रीतिः क्वचित् नैव वा पतेत् । तेन 'यथा' येन प्रकारेण 'आवयोः प्रियसखी बन्धुजनैः' पित्रादिभिः 'शोचनीया' शोच्या 'न भवति तथा' तेन प्रकारेण 'निर्वाहय' निर्वर्त्तय । सर्वेषु तुल्यादरो भव अस्यामनादरो मा भूत् इति भावः ।

## NOTES

1. (a) अनन्य &c.—परा अयते अस्मिन् इति परा + अय + ल्युट् अधिकरणे —परायणम् refuge आश्रयः । The ण is cerebral because by the rule "कृत्यचः" a कृत्स्थ नकार coming after a vowel the cause for the change [ रकार ] being in an उपसर्ग preceding, becomes ण । If

* Adopted by Prof. Gajendragadkar.

पराधव be treated as a कर्मधा—compound of पर and अधन, the cerebral should not be strictly available. I have therefore here explained it as a गतिसमास। (b) हृदय &c.=मम् सम्यक्प्रकारेण निहिता प्रतिष्ठिता enshrined. हृदये प्रतिष्ठिता enshrined in the heart. सप्तमीति समास। तत्पुरुषः। (c) मदिरेक्षणे—आयुष्मान् इति मद+ णिच्प्रत्यये=मदिर Lit. maddening, but technically it means the look of blooming youth that is languid, has the pupils restless, and the corners as it were laughing. Raghava quotes भादिभरत thus—"आघूर्णमानमध्या या क्षामा चाञ्चिततारका। दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे॥" ईक्षते आभ्याम् इति ईक्ष+ल्युट करणे=ईक्षणे eyes. मदिरे ईक्षणे यस्यास्तत्सम्बुद्धौ। (d) मदन &c.—Madana has struck me already and you are striking again, i.e. you are acting the ridiculous part of striking a dead man. (e) The sense is—Who can resist your charming looks? They have already enslaved me. This you can easily guess knowing the power of your eyes. But I need not leave it to guess, to infer this. You are residing at my heart. Hence you have the evidence of your own eyes to what is passing in the innermost recesses of my heart. If inspite of all this you think I am attached to some one else, why death is my only refuge.*

2. Reading—With हतोऽपि explain struck again though already struck by Madana's arrow.' हतमारणं क्रियते इति गर्हा। But to what does हत refer with that reading? Not to अहम् obtained by विभक्तिपरिणाम from मम। For मम being a विशेषण of हृदयम् is अप्रधान। The प्रधान here is हृदयम् and the reference ought to be to it. This requires हतः to be changed into हतम्। हतोऽपि is therefore preferable to हतोऽपि।

3. बहुवल्लभाः:—This is the ground for apprehension. You having many favourites, it is not unlikely that Sakuntala might suffer neglect.

* Adopted by Prof. Gajendragadkar.

राजा—भद्रे, किं वहुना ?

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे

समुद्ररसना चोर्वी सखी च युवयोरियम् ॥ १८ ॥

KING—What need of many words? Notwithstanding plurality of wives, two are the mainstay of my race—the sea girt earth and this friend of yours.

उभे—निव्वुदम्ह [ निर्वृते स्वः ] ।

BOTH—We are gratified.

प्रियंवदा ( सदृष्टिक्षेपम् )—अनसूये, जह एसो इदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि संजोएम णं [ अनसूये, यथा एष इतो दत्तदृष्टिः उत्सुको मृगपोतको मातरम् अन्विष्यति । एहि संयोजयाव एनम् ] ( उभे प्रस्थिते ) ।

PRIYAMVADA—(Casting about her look)—Anasuya, by the way its looks are cast hither this fawn is anxious and seeking its mother. Come let us help it to join its mother. (Both proceed to leave).

भद्रे इति । 'वहुना' उक्तेन 'किं' वहूनि वचांसि विष्वग्योजनानि । समासतो ब्रवीमि—

परिग्रहेति । अन्वयः—परिग्रहबहुत्वेऽपि द्वे मे कुलस्य प्रतिष्ठे—समुद्ररसना उर्वी च युवयोः इयं सखी च । व्याख्या—'परिग्रहाणां' पत्नीनाम् ( "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः ) 'बहुत्वेऽपि बाहुल्येऽपि द्वे' बह्वीषु तासु पत्नीषु द्वे एव 'मे कुलस्य' वंशस्य 'प्रतिष्ठे' आलम्बनस्वरूपे, स्थितिहेतू ("आतश्चोपसर्गे" इत्यङ् कारके ) । के ते द्वे पत्न्यौ इत्याह—'समुद्रो रसना' काञ्ची यस्याः सा रत्नाकरमेखला 'उर्वी च' वसुधा च (उर्वीति वसुधाप्रशंसा ) युवयोः इयं सखी च शकुन्तला च ( च समुच्चये ) । मुद्राभिरन्वितः समुद्रः सर्वं यस्या मेखलाः, महती सा वसुधा यथा मान्या मे एका पत्नी तथा अन्या इयमप्यपरा । अन्या न वस्त्रा मम इति भावः । [ "रसना" ( त-, मा- ), "वसना" ( रा-, चि- ) ] ॥

निहं ते इति। 'निहं ते सुखिते' 'खः' भवाम:।

प्रियंवदेति। 'दृष्टेः' नयनस्य 'क्षेपः' इतस्ततः प्रेरणं तेन सह। कथं निर्गच्छामि इति श्लोकार्थे पश्चार्धं दृष्टिं चारयित्वा आह—

अनसूये इति। 'यथा' येन प्रकारेण 'एष इतः' अस्मदभिमुखं 'दत्तदृष्टिः' तेन मन्ये 'उत्सुकः' उत्कण्ठो मृगपोतकः' हरिणशावकः' 'मातरम् अन्विष्यति'। अस्य दृष्टिपातस्य प्रकारं दृष्ट्वा एव मन्ये। यथा 'एष उत्सुकों मृगपोतको 'मातरम् अन्विष्यति' यथा' यतः 'इतो दत्तदृष्टिः'। अयमस्मदभिमुखं पश्यन् आस्ते तेनैव मन्ये मातरमन्विष्यति। अयं हि निर्गमनव्याजः यदर्थं प्रियंवदया दृष्टिक्षेपः कृतः।

## NOTES

1. (a) परिग्रह &c.—परिगृह्यते स्वीक्रियते इति परि+ग्रह+अप् कर्मणि =परिग्रहः a wife. The king already regards शकुन्तला as a परिग्रह। This is because he has no doubt that he is going to be married forthwith. (b) प्रतिष्ठे—प्रतितिष्ठति अनयोः इति प्रति+स्था+अङ् अधिकरणे वा mainstay. (c) समुद्र &c.—मुद्राभिः रत्नैः सह समुद्रः। This name is chosen on purpose to indicate wealth. The earth is vast (उर्वी) and rich (समुद्ररसना)। Hence naturally she is one of the mainstay of the race. (d) उर्वी—Lit. the vast one (e) सखी—by calling शकुन्तला a mainstay, he implies that the family will be proud in possessing her as a स्नुषा। Raghava supposes that शकुन्तला was a mainstay because she gave birth to सर्वदमन। "महाराजचक्रवर्तिवंशोत्पादकपुत्रोत्पादात्"। But the king could not have referred to it at this stage. In fact the most illustrious member of a family—the one that adds lustre to the family—is often called कुलप्रतिष्ठा without reference to future progeny Thus पार्वती is called the कुलप्रतिष्ठा of हिमालय in "तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता।"—Kumara.

2. Reading—(a) It is common with Sanskrit poets to speak of the earth as the king's spouse. The sea is sometimes called her girdle (मेखला)। Thus "कृतसीतापरित्यागः स रत्नाकरमेखलाम्। बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्॥"—Raghu. "कलत्रवन्तमात्मानमवरोधे महत्यपि तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः"—Raghu. Compare also

"धात्रीं समुद्ररसनां वसनां करोति" &c. Hence रसना is preferable to वसना । (b) After निषण्णे सः the Bengali Recension has (The Prakritas are Sanskritized)—(शकुन्तला हर्षं सूचयति)। प्रियंवदा [ जनान्तिकम् ]—अनसूये, पश्य पश्य मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम् ।

शकुन्तला—हला मर्षयतं लोकपालं यदस्माभिर्विश्रम्भप्रलापिनीभिरुपचारातिक्रमेण भणितम् ।

सख्यौ [ सस्मितम् ]—येन तन्मन्त्रितं स एव तन्मर्षयतु अन्यस्य कोऽत्ययः ।

शकुन्तला—अर्हति खलु महाराज इदं विषोढुं परोक्षं वा न किं को मन्त्रयते ।

राजा [ सस्मितम् ]—अपराधमिमं ततः सहिष्ये यदि रम्भोरु तवाङ्गसङ्गमृष्टे ।
कुसुमास्तरणे क्लमापहेऽस्य स्वजनत्वादनुमन्यसेऽवकाशम् ॥

प्रियंवदा [ सोपहासम् ]—नन्वेतावन्मात्रेण पुनस्तुष्टो भविष्यति ।

शकुन्तला [ सरोषमिव ]—विरम विरम दुर्विनीते ; एतावदवस्थां गतया मया क्रीडसि ।

This is in bad taste, and, besides, not consistent with what has gone before. The king is already seated on the stone slab which Sakuntala occupies [See Ante]. The request here made to be allowed to sit on the same seat with her is therefore meaningless. This passage does not appear to be genuine.

3. (a) सदृष्टि &c—दृष्टेः क्षेपः पातः दृष्टिक्षेपः। तेन सह। बहु—। She is on the look out for some excuse to go out leaving the lovers to themselves.* (b) यथा—In the sense यतः is rare. The विश्व notes the use of यथा when an inference (अनुमान) is drawn "यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः" इति विश्वः। इतः—This way अस्यां दिशि। सप्तम्यर्थे तसि by the Varttika "तसिप्रकरणे आद्यादिभ्य उपसंख्यानम्"। Compare "प्रयुक्तप्यमभितो यथा स्यात्"। (n) दत्तदृष्टिः—दत्ता प्रेरिता दृष्टिर्येन सः बहु—।

4. (a) मृग &c.—पोत is अर्भक little one. "पोतः पाकोऽर्भको डिम्भः" इति कोषः। मृगस्य पोतः। अनुकम्पितो मृगपोत इति मृगपोत+कन्। Its helplessness excites pity (अनुकम्पा)। The deerling neither sought its mother nor looked towards the speaker. (b) संरोप-

* Adopted by Prof. Gajendragadkar

भव:—We two will cause to join माला इति शेष:। Note the dual. She wants Anasuya to accompany her leaving the lovers to themselves.*

शकुन्तला—हला असरणम्हि अण्णदरा वो आअच्छदु [ हला अशरणास्मि अन्यतरा युवयोरागच्छतु ]।

SAKUNTALA—I am helpless dear. Do either of you come.

उभे—पुहवीए जो सरणं सो तुह समीवे वट्टइ [ पृथिव्या यः शरणं स तव समीपे वर्त्तते ]। ( निष्क्रान्ते )।

BOTH—Ha, who is the helper of the world, is at your side ? (Exeunt.)

शकुन्तला—कहं गदाओ एव्व [ कथं गते एव ]।

SAKUNTALA—How ! Gone indeed !

उभे इति। 'प्रस्थिते' इति ( आदिकर्मणि क्तः ) प्रस्थातुमुद्यते इत्यर्थः।

हलेति। अविद्यमानं शरणं' गति: यस्या: तथाविधा 'अशरणा'। उभयोर्गमनादिति भाव:। तत् युवयो: अन्यतरा' या कापि एका ( "अन्यतर" इत्यव्युत्पन्नम्। न तु डतरप्रत्ययान्तम् ) 'आगच्छतु'।

पृथिव्या इति। 'यो' जन: 'पृथिव्या:' समग्राया: धराया: 'शरणं' रक्षिता, दुष्यन्त इत्यर्थ: 'स तव समीपे वर्त्तते' तत् कथं त्वम् अशरणा ?

## NOTES

I. (a) अशरणा—"शरणं गृहरक्षित्रो:" इति यादव:। गृह or रक्षित्र suits equally well. It is नियतलिङ्ग। Hence पृथिव्या य: शरणम् &c. below. (b) अन्यतरा—अन्यतर is a primitive word (अव्युत्पन्न)। For, in the सर्वादि list, डतरप्रत्यय occurs. Hence if अन्यतर were डतरान्त it would become a सर्वनाम by तदन्तविधि। 'इह तदन्तग्रहणम्, कैवलयो: (i.e. of डतर and डतम) स ज्ञाया: प्रयोजनाभावात्"—Bhattoji. But पाणिनि specifically mentions अन्यतर also in the list, implying thereby

* Adopted by Prof. Gajendragadkar.

that अन्यतर is not अन्यतम। Cp. "अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावात् द्विबहु-विषये निर्द्धारणे वर्त्तेते" (c) युवयोः—निर्द्धारणे षष्ठी।

राजा—अलमावेगेन। नन्वयमाराधयिता जनस्तव समीपे वर्त्तते।

किं शीकरैः क्लमविनोदिभिरार्द्रवातं
सञ्चालयामि नलिनीदलतालवृन्तम्।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ २० ॥

KING—Away with anxiety This person the server stands indeed by your side Shall I work the lotus-leaf-fan whose breeze is moist with particles of water that allay lassitude; or—O thou with thighs like the outer edge of the palm of the hand having placed your lotus-red feet in my lap shall I press them as is agreeable to you?

शकुन्तला—ण माणणीएसु अत्ताणं अवराहयिस्सं [न माननीयेषु आत्मानम् अपराधयिष्यामि]। (उत्थाय गन्तुमिच्छति)।

SAKUNTALA—I shall not cause this self of mine to offened against those that deserve respect. (Wants to get up and go).

अलमिति। 'आवेगेन' सम्भ्रमेण 'अलम्'। यदि मते सख्यौ, किं तेन? 'ननु' इत्यवधारणे। 'अयम् आराधयिता जनः' एष सेवक मद्रूपो जनः' तव समीपे वर्त्तते। गच्छतां सख्यौ।

किमिति। अन्वयः—क्लमविनोदिभिः शीकरैः आर्द्रवातं नलिनीदलतालवृन्तं सञ्चालयामि किम्? उत हे करभोरु, ते पद्मताम्रौ चरणौ अङ्के निधाय यथासुखं संवाहयामि व्याख्या—'क्लमं' ग्लानिं 'विनोदयन्ति' अपनयन्ति इत्येवं शीलैः तैः 'शीकरैः' जलकणैः (हेतौ करणे वा तृतीया) 'आर्द्रः' वातो' यस्य, तत्, नलिनीदलं' पद्मपत्रमेव 'तालवृन्तं'

व्यजने तत् 'सञ्चारयामि किम्' ? 'उत' अथवा 'हे करभोरु' करभः पाणितलपार्श्वः। करभ इव ऊरुयस्याः तत्सम्बुद्धिः ( "ऊरूत्तरपदादौपम्ये" इत्यूङ् स्त्रियाम्। सम्बुद्धि-ह्रस्वः)। 'ते पद्ममिव ताम्रौ 'चरणौ' अङ्के' मत्क्रोडे 'निधाय' स्थापयित्वा 'यथासुखं' सुखं यथा भवति तथा 'संवाहयामि' मर्दनेन विनीतखेदौ करोमि इति आराधयितुः सेवाप्रपञ्चः [ "शीकरैः" ( त-, व्या- ) "शीतलैः" ( रा-, वि- म- ) ॥ "विनोदिभिः" ( रा-, वि- म ) 'विमर्द्दिभिः' ( त- व्या- ) ॥ 'वातं' ( त- व्या- ) "वातान्" ( रा- वि- म- )। "सञ्चालयामि" ( त- व्या- ) "सञ्चारयामि" ( रा- वि- म- ) ॥ 'वृन्तम्' ( त- व्य- ) 'वृन्तैः' ( रा- वि- म- ) ] ॥

नेति। 'माननीयेषु' पूजार्हेषु भवादृशेषु विषये आत्मानं न अपराधयिष्यामि'। सेवानुमत्या इति भावः ( आत्मा अपराध्यति इति अकर्मकत्वात् णौ गतिबुद्धि—' इत्यणिकर्तुः कर्मसंज्ञा ) ॥

NOTES

1. आराधयिता—आ + राध् + णिच् स्वार्थे + तृन् साधुकारिणि कर्त्तरि। The root is here of the चुरादि class. Compare आराधय in 'आराधय सपत्नीकः प्रीता कामदुघा हि सा' Raghu.

2. (a) शीकरैः—With particles of water. 'शीकरोऽम्बुकणाः स्मृताः'। (b) क्लम &c.—क्लम + वि + नुद + णिच् + णिनि कर्त्तरि ताच्छील्ये। (c) सञ्चालयामि—सम् + चल + णिच् + लट्मि। (d) नलिनी &c.—तालवृन्त is any fan, not necessarily one of palm leaf. 'व्यजनं तालवृन्तकम्' इत्यमरः। (e) करभोरु—करभ is the outer edge of the palm. 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। Here करभ is by transference of epithets = करभतुल्यः। करभः ऊरुः यस्याः gives करभ + ऊरु + ऊङ् because ऊरु is the उत्तरपद and comparison is implied (See Tika) = करभोरुः। The resemblance lies in the tarpering shape, etc. तत्सम्बुद्धिः। (f) यथासुखम्—सुखस्य अनतिक्रमो यस्मिन् कर्मणि तत् यथा तथा। अव्ययी—That is to say, not very hard so as to pain the feet. (g) संवाहयामि—सम + वह + णिच् here means 'to shampoo.' (h) उत—Introduces an alternative ( विकल्प )। अव्यय। (i) पद्मताम्रौ—'उपमानानि सामान्यवचनैः' इति समासः। The feet here red (ताम्र)without अलक्तादिव्यवहार। Implies that it would be a valued privilege to

the king to be allowed to shampoo such apair of feet. 'करभोरु पद्मताम्रौ इति पदाभ्यां चरणयो: संवाहनयोग्यत्वं ध्वनितम्'—Raghava.

3. Remark—The king here points out how he may be useful to her. In her state of health the best service she could get from two friends was that one shampooed her feet while the other fanned her into a quite sleep. Alone he could render both the services. Hence she had no need to be anxious on account of the absence of her friends. The metre is वसन्ततिलका ।

4. Reading—(a) आर्द्रवातम् requires that the reason for the आर्द्रता should be mentioned. Hence शीकरै: is necessary. शीतलै: does not give the reason. Besides the शैत्यगुण of the वायु should be left to be inferred and must not be mentioned directly by words like शीत, शीतल, हिम &c. In the present case the inference follows from आर्द्र । (b) विमर्दिभि: sounds a bit heavy, विनोदिभि: is perhaps more gentle, and better suits the occasion. The rest is left to the reader.

5. माननीयेषु—विषये सप्तमी । The अण्यन्त form was आत्मा अपरात्स्यति my self will sin. With णिच् we have अहमात्मानम् ( अणिकर्ता as कर्म ) अपराधयिष्यामि I shall cause my self to sin. The rule 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ' applies because the root अपराध् is अकर्मक ।

राजा—सुन्दरि, अनिर्वाणो दिवसः, इयञ्च ते समवस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ २१ ॥

( बलादेनां निवर्तयति )

KING—O fair one, this day is not yet extinguished, and this is your condition. Having left the bed of flowers in which lotus-leaves serve to cover the breasts how can you go

* Adopted by Prof. Gajendragadkar.

out in the sun with your limbs delicate through suffering (Stops her by force).

शकुन्तला—पौरव रक्ख विणअं। मअणसन्तत्ता वि ण हि अत्तणो पहवामि [ पौरव रक्ष विनयम्। मदनसन्तप्तापि न हि आत्मनः प्रभवामि। ]

SAKUNTALA—O descendant of Puru, respect decorum. Though smitten by love, I cannot command myself.

सुन्दरीति। हे सुन्दरि' आर्वाङ्ग ( गौरादि ) दिवसः अनिर्वाणः' अधुनापि अनल इव ज्वलति। ते समवस्था' दशा च इयम्' ईदृशी। किं तेन इत्याह—

उतसृज्येति। अन्वयः—नलिनीदलकल्पितस्तनावरणं कुसुमशयनम् उतसृज्य परिबाधापेलवैः अङ्गैः कथम् आतपे गमिष्यसि ? व्याख्या—नलिनीदलाभ्यां गुरुतापात् पद्मपत्राभ्यामिव कल्पितं' रचितं स्तनावरणं'' स्तनाच्छादनं' वल्कलस्थानीयमित्यर्थः यस्मिन् तादृशं 'कुसुमशयनम्' पुष्पशय्याम् 'उतसृज्य' त्यक्त्वा 'परिबाधया' परितः सन्तापेन 'पेलवैः' सुकुमारैः 'अङ्गैः' ( करणे वा उपलक्षणे तृतीया ) 'कथं' केन प्रकारेण 'आतपे' रविकरे 'गमिष्यसि'। यस्याः ईदृशः सन्तापः यत् कोमला शीतला च पुष्पशय्या अजल्पीया भवति, तथापि पुनः पद्मपत्रेण स्तनयोस्तापः किञ्चिदिव लघूक्रियते, सा कदापि रविकरे विचरणं नार्हति। ['स्तनावरणम्' ( रा-, वि-, म- )—'स्तनावरणा' ( त-, न्या- ) ]।

बलादिति। 'निवर्त्तयति' निवृत्तां गमनात् विरतां करोति।

पौरवेति। 'पौरव' हे पुरुकुलोद्भव ( प्रसिद्धः पौराणां विनयः, अतः पौरव इति कुलनामग्रहणम् ) 'विनयं' सदाचारं रक्ष मा मां दूषय। अविनयी मा भूः। 'मदनेन सन्तप्ता' पीडिता 'अपि न हि आत्मनः प्रभवामि' नाहमात्मानं स्वेच्छया कुत्रचित् नियोजयितुं समर्था। प्रभुरसि मे पिता कण्वः तमेव मे दातृत्वेन प्रमाणीकुरु।

## NOTES

1. (a) सुन्दरि—सुन्दर is of the गौरादि class. Hence in the feminine we get सुन्दरी and not सुन्दरा by the rule 'षिद्गौरादिभ्यश्च'। (b) अनिर्वाणः—निर् + वा + क्त कर्त्तरि = निर्वाणः when वात is not the कर्त्ता ; otherwise निर्वातः। Thus निर्वाणो दिवसः but निर्वातो वातः—the

wind has ceased. The rule is "निर्वाणोऽवाते" । न निर्वाणः । नञ्तत् – ।
(c) समवस्था = सम + अव + स्था + अङ् करणे भावे वा ।

2. (a) कुसुमशयनम्—शी + ल्युट् अधिकरणे = शयनम् bed. कुसुमानां शयनम् । तत् । (b) नलिनीदल &c. = स्तनयोरावरणं स्तनावरणम् । नलिन्या दलम् । नलिनीदलेन कल्पितम् । तत्—। नलिनीदलकल्पितं स्तनावरणं यस्मिन् । बहु— (c) आतपे—आतपति इति आ + तप + अच् कर्त्तरि = आतपः sun or sun light तस्मिन् । अधिकरणे ७मी (d) परिबाधा &c.—परि + बाध + अ भावे स्त्रियाम् = परिबाधा suffering. पेलव delicate as opposed to robust. One of robust health often becomes of delicate health through suffering. Sakuntala's strong limbs ( अङ्ग ) could dare the sun if she were not ill (परिबाधा)। But now the limbs have become delicate ( पेलव ) through her suffering and cannot stand the heat.

4. Reading—(a) स्तनावरणा suggests going out with lotus-leaves on the breasts which is not natural ; स्तनावरणम् is preferable. (b) After बलादेनां निवर्त्तयति we read in the Bengali Rec.—

शकुन्तला—मुञ्च मुञ्च मां न खल्वात्मनः प्रभवामि । अथ वा सखीमात्रशरणा किमिदानीमेव करिष्यामि ।

राजा—धिग्व्रीडितोऽस्मि ।

शकुन्तला—न खल्वहं महाराजं भणामि, दैवमुपालभे ।

राजा—अनुकूलकारितैव कथमुपालभ्यते ।

शकुन्तला—कथमिदानीं नोपालप्स्ये यदात्मनोऽनीशां कृत्वा परगुणैर्लोभयति ।
राजा ( स्वगतम् )—

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वाद्
आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥

( शकुन्तला गच्छत्येव ) राजा—न कथमात्मनः प्रियं करिष्ये । ( उपसृत्य पटान्तमवलम्बते )

Here as in the interpolation already noticed, the prose portion is trash and serves only to introduce the verse following. But the substance of the verse does not bear scrutiny. Thus—

1. क्षिप्त does not usually mean 'lost'. क्षिप् means 'to fling. कालक्षेप occurs in Bengali. व्याक्षेप is not rare in Sanskrit. But क्षिप्त reminds one of the 'insane' and is thus निहतार्थ।

2. (a) In the line कुमार्यः न खलु मदनमेव आबाधन्ते किन्तु मदनमपि आबाधन्ते, suppose, instead of मदनमपि, we read मन्मथमपि, The remark loses its force and reads tame. The object of the line is to say that मदन is not only the oppressor, but is also the oppressed. The identity of the oppressor and the oppressed is not prominent when different names are used refering to the two capacities. Hence मन्मथमपि is अपुष्टार्थ।

(b) Again किन्तु, तु or some other equivalent is necessary in or to contrast with न खलु। अपि does not serve the purpose, for it goes to answer for एव। A cautious writer would have said आबाधन्ते मदनमपि तु which avoids both the objections (a) and (b) and preserves the metre too.

3. Lastly, the second line कामं नत्कौऽपि &c. is a repetition of the first line अपरीतसुखौ &c. For कामं नत्कौऽपि अतिकारसुखम् implies the same as अपरीतसुखौ भवति, and कातराः स्वाच्छन्दाने does not differ in substance from दयितप्रार्थनासु प्रतीपाः।

4. (a) आत्मनः—शेषे षष्ठी। आत्मनः सम्बन्धे प्रभवामि इत्यर्थः। (b) प्रभवामि—प्र + भू means 'to rule', to become master', 'to control' &c.

**राजा—भीरु अलं गुरुजनभयेन! दृष्ट्वा ते विदितधर्मा तत्रभवानात्र दोषं ग्रहीष्यति कुलपतिः। अपि च—**

**गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः।**
**श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः॥२२॥**

KING—O timid one, off with your fear for your superiors. Having known of you, His worship the Lord of anchorites, who is aware of the Sastras will not take offence at it. Besides, several daughters of royal sages are heard as married by the Gandharva-marriage and welcomed by their fathers.

शकुन्तला—मुञ्च दाव मं। भूओवि सहीजणं अणुमाणइस्सं [ मुञ्च तावन्माम्। भूयोऽपि सखीजनमनुमानयिष्यामि ]।

SAKUNTALA—Do release me. I will yet again honour my friends.

राजा—भवतु मोक्ष्यामि।

KING—Well I will release.

भीरु इति। हे 'भीरु' भयशीले (उक्ति कृते सं बुद्धिरूपः) गुरुजनभयेन 'अलम्'। तात: कुप्यति इति मा मंस्था.। 'ते' तव सम्बन्धे 'इत्तं' आमूल वृत्तं ज्ञात्वा ( इत्तिरत्र ज्ञानार्थे ), 'विदित:' अवगत: 'धर्म:' शास्त्रार्थो यस्य स:, अधिगतविधि: 'तत्रभवान्' मान्य: 'कुलपति:' पिता ते कण्व: 'अत्र' अस्मिन् त्वत्कृते आत्मसम्प्रदानव्यापारे 'दोषं न ग्रहीष्यति'। न केवलं शास्त्रमेवात्र प्रमाणम्। 'अपि च आचारोऽपि। अस्य—

गान्धर्वेणेति। अन्वय:—बह्व्यो राजर्षिकन्यका गान्धर्वेण विवाहेन परिणीता:। ता: पितृभि: अभिनन्दिताश्च श्रूयन्ते। व्याख्या—'बह्व्य:' बहुतरा: राजर्षीणां 'कन्यका:' कुमार्य: 'गान्धर्वेण' रहसि परस्परानुमोदनकृतेन 'विवाहेन' ( "गान्धर्व: समयान्मिथ:" इति स्मृते: ) "परिणीता:' कृतोद्वाहा: तताश्च 'ता:' कन्यका: 'पितृभि:' गुरुभि: 'अभिनन्दिताश्च' अनुमोदिताश्च 'श्रूयन्ते'। तदाह—स:एव विवाहो भवतु [ "हृ बह्वो राजर्षिकन्यका:" (रा-, वि-, म-)—"बह्व्योऽत्र मुनिकन्यका:" (त-, ब) ॥ "अभिनन्दिता:" ( रा-, वि-, म )—"अनुमोदिता:" ( त-, आ- ) ] ॥

मुञ्चेति। 'भूयोऽपि पुनरपि' 'सखीजनम् अनुमानयिष्यामि' सम्भावयिष्यामि, सख्यो अत्र किं मन्यन्ते तज्जिज्ञासया सखीजनं पूजयिष्यामि।

NOTES

1. (a) भीरु—भीरु timid + ऊङ् स्त्रियाम्—भीरू:। This is नदीसंज्ञक। Hence by the rule "अम्बार्थनद्योर्ह्रस्वः" we have भीरु with उ

short in the vocative singular. (b) विदितधर्मा—विदितधर्म + अनिच्समासान्त। विदितधर्मा। By the rule "धर्मादनिच् केवलात्"—अनिच् comes after a बहुव्रीहि in which धर्म is final and is preceded by only one पद। When more than one पद precedes धर्म as in परम: स्व: धर्मोऽस्य we shall have परमस्वधर्म: not परमस्वधर्मा। But परमस्वो धर्मोऽस्य will give परमस्वधर्मा because परमस्व is the only पद preceding धर्म in the final बहुव्रीहि।

2. Reading—(a) शकुन्तला was a राजर्षिकन्यका and not मुनिकन्यका। And गान्धर्वविवाह was not prevalent among munis. Hence the former is preferable. (b) अभिनन्दन is more acceptable than mere अनुमोदन and contrast better with censure ( दोषं ग्रहीष्यति ) which शकुन्तला apprehends.

3. भूय:—बहु + ईयसुन once again. The friends have already helped her with their advice regarding her choice. She wants their counsel again ( भूयस् ) with respect to the king's proposal to have the marriage performed in Kanya's absence.

शकुन्तला—कदा [ कदा ]।

SAKUNTALA—When ?

राजा—

अपरिक्षतकोमलस्य तावत् कुसुमस्येव नवस्य षट्पदेन।
अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य ॥२३॥

( मुखमस्या: समुन्नमयितुमिच्छति। शकुन्तला परिहरति नाटयेन )।

KING—Meanwhile, O fair one as is done of the fresh flower by the bee, the flavour of this your tender and untouched lower lip is being gently tasted by me longing for a sip. (Tries to raise her face. Sakuntala acts its avoidence).

नेपथ्ये—चक्कवाकवहुए आमन्तेहि सहअरं। उवहिदा रअणी [चक्रवाकवधुके, आमन्त्रयस्व सहचरम्, उपस्थिता रजनी

**IN THE DRESSING ROOM—Ah ! Chakravaka's spouse, bid adieu to your mate, night has approached.**

अपरीति। अन्वयः—तावत् हे सुन्दरि, षट्पदेन नवस्य कुसुमस्य इव, पिपासता मया अपरिक्षतकोमलस्य अस्य ते अधरस्य रसः सदयं गृह्यते। व्याख्या—'तावत्', तत्कालं, यावत् मोक्ष्यामि तावत् इत्यर्थः ( तावदिति अव्ययो। 'यावत्तावच्च साकल्ये-ऽवधौ मानेऽवधारणे' इत्यमरः ) हे 'सुन्दरि' मनोहारिणि शकुन्तले 'षट्पदेन' भ्रमरेण 'नवस्य' नूतनस्य' अदृष्टपूर्वस्य 'कुसुमस्य इव' यथा पुष्पस्य रसो भ्रमरेण गृह्यते तथा 'पिपासता' पातुमिच्छता, पानार्थमाकुलेन इत्यर्थः: 'मया, अपरिक्षतस्य' अस्पृष्टस्य 'कोमलस्य' सुकुमारस्य, अतएव स्पर्शवतस्य 'अस्य ते अधरस्य रसः' 'स्वादः सदयं' कृपामृदु यथा तथा गृह्यते' आदीयते। मोक्ष्यामि, किन्तु यावत् मोक्ष्यामि तावत् रसो गृह्यते, इति पूर्वेण सम्बन्धः। रसे गृहीते मोक्ष्यामि इति फलितम् [ 'तावत्' ( वि-पाठान्तरम्-म-) 'यावत्' ( रा, वि-नूतम ) ]।

चक्रेति। हे 'चक्रवाकवधुके' अनुकम्पिते रथाङ्गदयिते सहचरं' चक्रवाकम् आमन्त्रयस्व' सम्भाषस्व' युवयोर्मध्यः प्रस्थानसमयः प्राप्तः, यतः परिणतो दिवसः 'रजनी उपस्थिता' आगतप्राया। एतच्च शकुन्तला प्रति सख्योः सङ्केतवाक्यम्। गौतमी आगच्छति दुष्यन्त विसर्जय इति भावः।

NOTES

1. (a) अपरिक्षत &c.—परि + क्षण हिंसायाम् + क्त कर्मणि = परिक्षतः pricked i. e. touched. न परिक्षतः। नञ् तत्—। अपरिक्षतश्चासौ कोमलश्च। कर्मधा—। (b) षट्पदेन—षटपदानि अस्य इति षट्पदः lit. having six feet. A name of the black-bee.

2. Reading—(a) यावत् gives the same sense. The king does not directly answer Sakuntala's 'कदा'। (d) For शकुन्तला —मुञ्च तावन्माम्—परिहरति मध्ये न the Bengali Rec. reads—

( दिशोऽवलोक्य ) अयं प्रकाशं निर्गतोऽस्मि। ( शकुन्तला स्थित्वा पुनस्तत्रैव पदैर्निवर्तते )।

शकुन्तला ( पदान्तरे प्रतिनिवृत्त साङ्गभङ्गम् ) पौरव, अनिच्छापूरकोऽपि सम्भाषण-मात्रपरीक्षितोऽयं जनो न विस्मर्तव्यः।

राजा—सुन्दरि, त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।

दिनावसाने छायेव पुरो मूलं वनस्पतेः ॥

शकु (पदान्तरं गत्वा आत्मगतम्)—हा धिक् हा धिक्, इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः । भवतु एभिः पर्यन्तकुरबकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धनम् ( तथा कृत्वा स्थिता ) ।

राजा – कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्य निरपेक्षेव गतासि ।

अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम् ।

कठिनं खलु चेतः शिरीषस्येव बन्धनम् ॥

शकु—एतच्छ्रुत्वा न मेऽस्ति विभवो गन्तुम् ।

राजा—सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि ; (अग्रतोऽवलोक्य) हन्त व्याहतं मे गमनम् ।

मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।

हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥

( सबहुमानमादत्ते ) ।

शकु ( हस्तं विलोक्य )—अहो दौर्बल्यशिथिलतया परिभ्रष्टमेतन्मृणालवलयं न मया परिज्ञातम् ।

राजा ( मृणालवलयमुरसि निक्षिप्य )—अहो स्पर्शः ।

अनेन लीलाभरणेन ते प्रिये विहाय कान्तं भुजमत्र तिष्ठता ।

जनः समाश्वासित एव दुःखभागचेतनेनापि सता न तु त्वया ॥

शकु—अतःपरं न समर्थास्मि विलम्बितुम् । भवतु एतेनैव व्यपदेशेनात्मानं दर्शयिष्यामि ( इत्युपसर्पति ) ।

राजा ( दृष्ट्वा सहर्षम् )—अये जीवितेश्वरी मे प्राप्ता । परिदेवनानन्तरं प्रसादोन्मुखोऽस्मि खलु दैवेन ।

पिपासाक्षामकण्ठेन याचितञ्चाम्बु पक्षिणा ।

नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥

शकु राज्ञः ( सम्मुखी स्थित्वा )—आर्य, अर्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो

मृणालवलयस्य कृते प्रतिनिवृत्तास्मि। कथितं मे हृदयेन त्वया गृहीतमिति। तन्निक्षिपेदम्। मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यसि।

राजा—एकेनाभिसन्धिना प्रत्यर्पयामि।

शकु—केन पुनः।

राजा—यदीदमहमेव यथास्थानं निवेशयामि।

शकु—का गतिः भवतु तावत् ( इत्युपसर्पति )।

राजा—इतः शिलापट्टकैकदेशं संश्रयावः ( इत्युभौ परिक्रम्योपविष्टौ )।

राजा ( शकुन्तलाया हस्तमादाय )—अहो स्पर्शः।

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा।
प्ररोहः सम्भृतो भूयः किं स्वित् कामतरोरयम्॥

शकु ( स्पर्शं रूपयित्वा )—त्वरतां त्वरतामार्यपुत्रः।

राजा ( सहर्षमात्मगतम् )—इदानीमस्मि विश्वसितः। भर्तुराभाषणपदमेतत्। ( प्रकाशम् ) सुन्दरि, नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य। यदि तेऽभिमतं तदन्यथा घटयिष्यामि।

शकु ( स्मितं कृत्वा )…यथा ते रोचते।

राजा ( सव्याजं विलम्ब्य प्रतिमोच्य )—सुन्दरि दृश्यताम्।

अयं स ते श्यामलतामनोहरं विशेषशोभार्थमिवोज्झिताम्बरः।
मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः॥

शकु—न तावदेनं प्रेक्षे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः।

राजा ( सस्मितम् )—यद्यनुमन्यसे तदहमेनां वदनमारुतेन विशदां करवाणि।

शकु—तदानुकम्पिता भवेयं किन्तु अहं न ते विश्वसिमि।

राजा—मैवं नवो हि परिजनः सेव्यानामादेशात् परं न वर्तते।

शकु—अयमेवात्यादरोऽविश्वासजनकः।

राजा ( स्वगतम् )—नाहमिमं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। ( मुखमुन्नमयितुं प्रवृत्तः। शकुन्तला प्रतिषेधं रूपयन्ती विरमति )।

राजा—अयि मदिरेक्षणे, अलमस्मदविनयाशङ्कया ( शकुन्तला किञ्चिद्दृष्ट्वा व्रीडावनतमुखी तिष्ठति )।

राजा [ अङ्गुलिभ्यां मुखमुन्नमय्य आत्मगतम् ]—

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥

शकु—प्रतिज्ञाभमन्थर इव आर्यपुत्रः ।

राजा—कर्णोत्पलसन्निकर्षादीक्षणमूढोऽस्मि [ मुखमारुतेन चक्षुः सेवते ] ।

शकु—भवतु प्रकृतिस्थदर्शनास्मि संवृत्ता । लज्जे पुनरनुपकारिणी प्रियकारिण आर्यपुत्रस्य ।

राजा—सुन्दरि किमन्यत्

इदमनुपकृतिपक्षे सुरभि मुखं ते यदाघ्रातम् ।
ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण ॥

शकु [ सस्मितम् ]—असन्तोषे पुनः किं करोति ।

राजा—इदम् [ इति व्यवसितः । शकुन्तला वक्त्रं ढौकते ] ।

This is slovenly in style. In substance it is silly and does not care much for decorum. The passage describes at great length how the मृणालवलय was picked up by Dushyanta and put back on the wrist of Sakuntala. This however contradicts the poet; for, later on we find the मृणालवलय still lying in the grove. Compare 'हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि'—Infra—which is undoubtedly authentic being common to all the recensions. The interpolation, clumsy as it is must have been made at a very early date. The साहित्यदर्पण quotes the sloka चारुणा स्फुरितेनायम् &c. from the above in some 14th century—the line हृदयस्य निगडमिव मे, as it occurs here, was by वर्धमान ascribed to Kalidasa.

3. चक्रवाक &c.—चक्रं इव उच्यते इति चक्र+वच+घञ् कर्मणि—चक्रवाकः । तस्य वधूः । अनुकम्पिता सा इति चक्रवाकवधू+कन् स्त्रियाम्—चक्रवाकवधुका । तत्सम्बुद्धौ । By the rule 'केऽणः' long अ, इ, उ become short if क of an affix follows. Hence वधू becomes वधु । Here चक्रवाक stands for दुष्यन्त, वधू for शकुन्तला, and रजनी for गौतमी ।

शकुन्तला—( ससम्भ्रमम् )—पौरव, असंसअं मम सरीरवुत्तन्तोवलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि। दाव विडवान्तरिदो होहि [ पौरव, असंसयं मम शरीरवृत्तान्तोपलम्भाय आर्य्या गौतमी इत एव आगच्छति। तावत् विटपान्तरितो भव ]।

SAKUNTALA—(with alarm)—O descendant of Puru, doubtless venerable Goutami is coming this very way to have a report on my body (health). In the meantime get concealed by twigs.

राजा—तथा। ( आत्मानमावृत्य तिष्ठति )।

KING—As you say. (Stands concealing himself).

( ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च )।

सख्यौ—इदो इदो अज्जा गोदमी [इत इत आर्य्या गौतमी]॥

(Then enter Gautami with a vase in her hand and the friends).

FRIENDS—This way, this way, let venerable Gautami proceed.

गौतमी ( शकुन्तलामुपेत्य )—जादे अवि लहुसन्दावाइं दे अङ्गाइं [ जाते, अपि लघुसन्तापानि ते अङ्गानि ]।

GAUTAMI (Approaching Sakuntala)—My child, do your limbs suffer less now ?

शकुन्तलेति। 'सम्भ्रमेण' भयेन सह'। 'असंशयं' निश्चितं 'मम शरीरस्य वृत्तान्तः वार्ता। तस्य 'उपलम्भाय' परिज्ञानाय। 'इत एव' अस्यामेव दिशि [ सार्वविभक्तिकस्तसिः ] 'आगच्छति' यावत् सा न आयाति 'तावत्' तत्काल' 'विटपैः' शाखाभिः 'अन्तरितः' व्यवहितो 'भव'।

तत इति। 'पात्रं' शान्तिजलस्य पात्रं 'हस्ते' यस्याः सा [ हस्त-पाणि-प्रभृतिभि-र्वं [illegible] समस्यमानस्य परनिपातो इष्यते। तत्र [illegible] ]

गौतमी इतिवर्जितं शकुन्तला च प्रविशतः इति विमलितविपरिणामः। एतच्च "अद्य-प्रभृति शकुन्तलां अनुप्रवजामध्ये गौतमीवत्स विसर्जयिष्यामि" इति मिश्रोक्तवाक्य-स्फुटमावदनम्।

इत इति। 'इतः आर्य्या गौतमी' आगच्छतु इतिवाक्यशेषः।

जाते इति। जातमिति अपत्यमात्रमुच्यते। स्त्रिया संबुद्धौ हे 'जाते' पुत्रि शकुन्तले 'अपि अङ्गानि ते लघुः मन्दः 'सन्तापो' येषां तथाविधानि किम्? अपि प्रश्ने। पीड़ालाघवं जातं न वा।

NOTES

1. (a) शरीर &c.—उप + लभ + घञ् भावे = उपलम्भः accession प्राप्तिः। वृत्तस्य जातस्य अन्तः समाप्तिः वृत्तान्तः the end of what has happened i.e. all details from beginning to end. Now see Tika. तादर्थ्ये चतुर्थी। (b) तावत्—अवधौ or अवधारणे। (c) विटप &c.—अन्तरम् अन्तर्द्धिः जातमस्य इति अन्तर + इतच् = अन्तरितः hidden. "अन्तरमवकाशावधिपरिधानान्तर्द्धि-भेदतादर्थ्ये" इत्यमरः। See also Tika.

2. जाते—जन + क्त + कर्त्तरि जातम् anything born i.e. offspring in general. This gives जाता in the feminine. तत्संबुद्धौ।

शकुन्तला – अज्जे अत्थि विसेसो। [ आर्य्ये अस्ति विशेषः ]।

SAKUNTALA—There is an improvement, respected mother.

गौतमी—इमिणा दब्भोदएण णिराबाधं एव दे सरीरं भविस्सदि [अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति ]। ( शिरसि शकुन्तलामभ्युक्ष्य ) वच्छे परिणदो दिअहो। एहि उडजं एव्व गच्छम्ह [ वत्से परिणतो दिवसः। एहि उटजमेव गच्छामः ]। (प्रस्थिता)

GAUTAMI—With this water from Kusa-grass your body will indeed be free from suffering. (Sprinkling her in the head) My child the day has ended. Come let us go to the [Starts to go out].

भार्गे इति। हे भार्गे मार्गे भावः 'क्लिष्टः' उत्सुकः 'असि'। उपशमः अनुभूयते उत्कण्ठायाः।

अनेनेति। 'अनेन इदं लिङ्गं च उदकीय' अनेन [अञ्जलिपातिनि भादिः। इती वा नव्य तृतीया] 'ते शरीरं निर्गता आबाधा' पीड़ा यस्मात् यस्य वा तादृशम् 'एव भविष्यति'। न केवलम् उपशमः, किन्तु समूलमेव नाशो भविष्यति।

वत्से इति। 'वत्से' जाते 'दिवसः परिणतः' चरमे यामे स्थितः। सन्ध्या आगतप्राया। रवेस्तापो नास्ति, किमवावस्थानेन, एहि उटजमेव गच्छामः'। 'प्रस्थिताः' प्रस्थातुमारब्धाः [ आदिकर्मणि क्तः ]।

NOTES

1. निराबाधम्—आबाधनम् इति आ + बाध + अ भावे = आबाधा suffering. Now see Tika.

शकुन्तला ( आत्मगतम् )—हिअअ पढमं एव्व सुहोवणदे मनोरहे कादरभावं ण मुञ्चसि। साणुसअविघट्टिअस्स कहं दे सम्पदं सन्दावो [(हृदय, प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। सानुशयविघटितस्य कथं ते साम्प्रतं सन्तापः ]। (पदान्तरे स्थित्वा प्रकाशम्) लदावलअ, सन्दावहारअ, आमन्तेमि तुमं भूओवि परिभोअस्स [ लतावलय, सन्तापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय ]। (दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः )।

SAKUNTALA [Aside]—My heart, at first, the object of desire readily presenting, you do not at all give up timidity. Now, separated with regrets, how are your regrets (justified ] ? (Stopping after a step or two—Aloud ] O Ivy-bower, remover of my sufferings, I invite thee for enjoyment again [Sakuntala sorrowfully leaves with others ].

हृदय इति। हे हृदय प्रथमं मनोरथे' मनोरथविषयीभूते राजनि 'सुखेन

...यासं विना एव 'उपनते' सम्प्राप्ते सति "कातरभाव" भीरुतां न च मुञ्चसि [एवकारो भिन्नक्रमः]। 'अनुशयेन' पश्चात्तापेन 'सह विघटितस्य' मनोरथेन वियोजितस्य 'मे सन्तापः' अनुशय इत्यर्थः 'कथं साम्प्रतं' युक्तम् ["युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः]। न कथमपि युक्तम्। यद्वा—'साम्प्रतम्' अधुना 'सानुशयविघटितस्य मे कथं सन्तापः' किमर्थम् अनुशयः। अयुक्तोऽयमनुशयः। उभयथा हृदयं प्रति तिरस्कारः। स्थिते अनादरः याते अनुशयः इत्यसङ्गतं मे इति।

लतेति। लतानां वलयः लताभिर्वलयाकारेण वेष्टितं स्थानम्। तत्सम्बुद्धिः। हे 'लतावलय' लतागृह, हे 'सन्तापहारक' खेदविनोदन 'भूयोऽपि' पुनरपि 'परिभोगाय' उपभोगाय 'त्वाम् आमन्त्रये' प्रवर्तये। प्रार्थये त्वां पुनरपि मे खेदमपनोदयेत्यर्थः। राजानं प्रति सङ्केतोऽयम्।

## NOTES

1. प्रथममेव—The एव should be taken with न। Thus न मुञ्चसि।

2. (a) सानुशय &c.—अनु + शी + अच् भावे अनुशयः remorse पश्चात्तापः regret; "अवेदनुशयो द्वेषे पाश्चात्तापानुबन्धयोः" इति विश्वमेदिन्यौ। तेन सह सानुशयम्। वि + घट + णिच् + क्त कर्मणि = विघटितम् separated, घट is to join, विघट is to disjoin. सानुशयं यथा तथा विघटितम्; तस्य। (b) साम्प्रतम् —An अव्यय meaning युक्त proper.

3. (a) लतावलय &c.—Gautami takes it as an innocent adress to the grove. It is really meant for the king inside the लतावलय। (b) सन्तापहारक—हरतीति हृ + ण्वुल् कर्तरि = हारकः reliever. सम् + तप् + घञ् भावे = सन्तापः suffering. सन्तापस्य हारकः। षष्ठीतत्पुरुषः समासः। The plain sense of सन्तापः is here "summer heat." लतावलय is then evidently सन्तापहारक। Applied to the king, सन्ताप is मदनबाधा which the king has relieved. (c) परिभोगाय—परि + भुज + घञ् भावे = परिभोगः enjoyment. In the case of the लतावलय it is the enjoyment of shade, and in the case of दुष्यन्त, enjoyment of each other's company, 'तुमर्थाच्च भाववचनात्'' इति चतुर्थी।

राजा—(पूर्वस्थानमुपेत्य सनिःश्वासम्)—अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि—

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु॥२४॥

क्व नु खलु सम्प्रति गच्छामि। अथवा इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि। (सर्वतोऽवलोक्य)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि॥२५॥

KING—[Returning to the former place; Sighing]—Ah! How full of hindrances is the fulfilment of objects desired. Of that damsel with fine-eye-lashed eyes, the face, with the lower lip covered by the fingers [therefore] charming through the half uttered words of prohibition—the face that was turning constantly towards the shoulders, was indeed lifted somehow by me, but not kissed. Where indeed shall I go now? Or, here I will stay for some time in this ivy-bower that has been enjoyed and vacated by my darling [Looking all round]. This is the bed of flowers on the stone, pressed down by her body—This is the withered love-letter traced on the lotus leaf with her nails—This is lotus shoot-decoration, slipped from her hand. With my eyes thus sticking. I am not able to go out in a hurry from the cane-bower, even though deserted,

अहो इति। 'प्रार्थितानाम् अर्थानां सिद्धयः' निष्पत्तयः 'विघ्नवत्यः' अन्तर्विघ्नैः प्रत्यूहाः [भूम्नि मतुप्]।

मुहुरिति। अन्वयः—पक्ष्मलाक्ष्याः अङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामं, मुहुः अंसविवर्ति मुखं मया कथमपि उन्नमितं हि न तु चुम्बितम्। व्याख्या—'पक्ष्मले' प्रशस्तपक्ष्मवती [प्राशस्त्ये मत्वर्थीयो लच्] 'अक्षिणी' यस्याः तथाविधायाः तस्याः पक्ष्मलाक्ष्याः 'अङ्गुलिभिः संवृतः' इत्यर्थम् आच्छादितः 'अधरोष्ठो' निम्नोष्ठो यस्मिन् तथाविधं

ततः शीतलत्वादमादिव 'प्रतिविधानेषु' निषेधकज्ञानवर्जेषु 'विज्ञव' हीनम् अस्पष्टीयावीन मौषधम्। तत्र तत् 'अभिराम' मनोहरम 'मुहुः' वारं वारं 'अंगुलीः' अभयोः विवर्तते' मां परिहरन्ती विवृणोति यत् तथाविधं 'मुखं' मया कथमपि, अतिप्रयत्नेन विघ्नान् व्यावृत्य 'उन्नमितं हि' उन्नमितमेव 'न तु चुम्बितम्'। कथमपि विघ्नान् अतीत्य यदा तस्या वदनमुन्नमितवान् तदा मेवे सिद्धमेव प्रार्थितम्। किन्तु तदैव गौतम्या विघ्नितः, वदनं नैव चुम्बितम्। इतिविघ्नवत्त्वः खिन्नः। [ "चुम्बितं तु" ( रा-, त-, ना , द- )—"चुम्बितं तत्" ( वि- ) ]॥

क्वेति। 'प्रियया' प्राक् 'परिमुक्तम्' अधुना 'मुक्तम्' यत् तस्मिन् 'लतावलये मुहूर्त' अवकाशं स्थास्यामि', [ "परिभुक्तमुक्त" ( रा- वि-, म- )—"परिभुक्त" ( त- ब- ) ]॥

सर्वत इति। 'सर्वतः' सर्वासु दिक्षु [सप्तम्यर्थे तसिः ] 'अवलोक्य'। अन्वयः— तस्याः शरीरलुलिता शिलायाम् इयं पुष्पमयी शय्या। तस्याः नखैः अर्पितः नलिनीपत्रे एष क्लान्तो मन्मथलेखः। तस्याः हस्तात् भ्रष्टम् इदं बिसाभरणम्। इति आसज्यमानेक्षणः [ सन् ] शून्यादपि वेतसगृहात् सहसा निर्गन्तुं न ईशोऽस्मि। व्याख्या— "तस्याः" शकुन्तलायाः [ एतदुत्तरत्रापि संबध्यते ] 'शरीरेण लुलिता' मर्दिता शिलायां प्रस्तरतले 'इयं पुष्पमयी' कुसुमकल्पिता 'शय्या' शयनीयं दृश्यते। तत्र सा विरहिणी शायानासीत् इतीयं मां स्मारयति। तस्याः नखैः अर्पितः उत्कीर्णवर्णः 'नलिनीपत्रे' कमलदले 'एष क्लान्तो म्लानः 'मन्मथलेखः' मदनलिपिः भाति। इह सा मयि भाव- मवर्णयत् इत्येष मे कथयति। तस्या 'हस्तात् भ्रष्टं च्युतम् 'इदं' बिसाभरणं' मृणाल- वलयम आस्ते। आवासीत् अन्यमनस्कावसाय इत्यं तन्मे निवेदयति। 'इति एभिः प्रकारैः 'आसज्यमाने' लग्ने 'ईक्षणे' नेत्रे यस्य तथाविधः सन् 'शून्यादपि' प्रियाविरहितादपि वेतसगृहात्' वानीरवलयात् 'सहसा' हठात् 'निर्गन्तु' बहिर्यातुं 'न ईशोऽस्मि' न समर्थोऽस्मि। प्रियोपभुक्तं वस्तु मे दृष्टिं बध्नाति, तेन तेन चिह्नेन तां प्रत्यक्षां स्मारितो भावयितो गन्तुं असमर्थः। [ आसज्यमान—( क-, ना- )— 'आसक्तमान'' ( रा-, वि-, म- ) । "ईशोऽस्मि" ( रा-, ना- )—"शक्नोमि" (क-, व )—"शक्तोऽस्मि" ( न- ) ]॥

1. (a) विघ्नवत्यः—विघ्नन्ति एभिः इति वि+हन्+क करणे घञर्थे = विघ्नाः obstacles. ते सन्ति बाहुल्येन आसु इति विघ्न+मतुप् स्त्रियां = विघ्नवत्यः full of obstacles. (b) प्रार्थितार्थ &c.—प्रकर्षेण अर्थितं इति प्र+अर्थि+क्त कर्मणि = प्रार्थिता: longed after. प्रार्थिता अर्थो वस्तुनि इति प्रार्थितार्थाः longed-for object. सिध+क्तिन् भावे = सिद्धयः achievements. Now see Tika.

2. (a) अङ्गुलि &c.—अधर ओष्ठः अधरोष्ठः or अधरौष्ठः the lower lip. कर्मधा—। अङ्गुलिभिः संवृतः covered by the fingers. तत्—। तादृशः अधरोष्ठो यस्मिन् तत्, बहु—। (b) प्रतिषेध &c.—प्रति+सिध्+घञ् भावे = प्रतिषेधः prohibition, तस्य अक्षराणि words of prohibition i.e. the exclamation "Don't." ( मा मा )। तत्र विक्लवम् powerless in the words of prohibition, i.e. unable to utter clearly the words of prohibition (मा मा)। The प्रतिषेधाक्षर being a labial (मा repeated) requires the free use of both the lips to utter. But, the lower lip was covered by the fingurs. Hence the inability.* अभि समन्तात रमते अनेन इति अभि+रम+घञ् करणे = अभिरामम् charming. प्रतिषेधाक्षरविक्लवम् ततएव अभिरामम्।

3. (a) अंसविवर्ति—अंस+वि+वृत्+णिनि कर्तरि by the rule "बहुल-माभीक्ष्ण्ये"—णिनि is sometimes attached to indicate frequency of action. Here the face is constantly (आभीक्ष्ण्य) being turned from side to side to avoid the persistent attempts of the king to have a kiss. Hence the rule applies. (b) पक्ष्मलाक्ष्याः—पक्ष्माणि सन्ति मनोहराणि अस्मिन् इति पक्ष्मन्+लच् = पक्ष्मलम् having fine eyelashes, पक्ष्मन् is of the सिध्मादि class and takes लच् by the rule "सिध्मादिभ्यश्च"। तादृशम् अक्षि अस्या इति पक्ष्मलाक्षि+षच् (समासान्त) ङीष् स्त्रियाम् = पक्ष्मलाक्षी। तस्याः। षच् is guided by the rule "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" and here अक्षि is स्वाङ्गवाचक। Raghava things that this epithet points to the attraction that draws the king towards the face. (c) नु—Express regret.* तत् for न takes away the regret which is not proper here because "अहो" at the beginning of the speech prepares us for some such expression of regret.

4. Remark—The sloka substantiates the general ( सामान्य)

---

* Adopted by Prof. Gajendragadkar.

statement "विघ्नवत्यः प्रार्थितार्थसिद्धयः" । In the present case चुम्बन is the अभिलषित । The obstacles ( विघ्न ) are numerous. Thus the lower lip is अङ्गुलिसंवृत which is the first obstacle. Then there is direct prohibition (प्रतिषेध) । The third obstacle is the constant turning of the face from side to side (अंसविवर्ति ) । And last of all the interruption offered by Gautami. Hence the Figure (अलङ्कार) is अर्थान्तरन्यास defined by दण्डिन् as "ज्ञेयः सोऽर्थान्तरन्यासो वस्तुप्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥"

5. (a) प्रिया &c.—पूर्वं परिभुक्तं पश्चात् मुक्तं परिभुक्तमुक्तम् enjoyed and vacated. "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति पूर्वकालकर्मधा—। प्रियया परिभुक्तमुक्तम्, इतम्— तस्मिन् । (b) लतावलये—लतानां वलयम् । तस्मिन् । अधि ङसौ । (c) मुहूर्त्तम् – अत्यन्तसंयोगे द्वया ।

6. आसज्यमानचक्षुः—Here सज्ज cannot take आत्मनेपद । Several grammarians think that सज्ज cannot take आत्मनेपद in the कर्तृ-वाच्य । Possibly this is the reason why राघव &c read आसज्यमानचक्षुः in the कर्मवाच्य । But old writers often use सज्ज in the आत्मनेपद । Thus "स वाचा सज्जमानया" with words sticking in his throat ; 'येषां नोपरि नाधस्तान्न तिर्यक् सज्जते गतिः' whose course is unimpeded upwards, downwards and oblique &c. in the Ramayana. These are not आर्ष ( वैदिक ) usages for the भाष्यकार himself says "यदभिप्रायेषु सज्जते", though कालिदास, as we know, does not hesitate to use वैदिक forms. Hence सज्जमान is preferred. In the present instance, the king's sight is arrested at very step—here by the flower-bed, there by the lotus bracelet, and elsewhere by the love-letter. He likes to linger and dwell on them.

( आकाशे )—राजन्,

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्यापयोदकपिशाः पिशिताशनानाम् ॥ २६ ॥

* Adopted by Prof. Gajendragadkar.

In the air—O King the evening sacrificial rite being fairly begun, apparitions of cannibals, purple like evening-clouds scattered all round the altar on which there is the consumer of Ghee [ Fire ], move about striking terror in various ways.

राजा—अयमहमागच्छामि। ( निष्क्रान्तः )

## तृतीयोऽङ्कः (THIRD ACT)

सायमिति। अन्वयः—सायन्तने सवनकर्मणि संप्रवृत्ते, हुताशनवतीं वेदिं परितः प्रकीर्णाः सन्ध्यापयोदकपिशाः पिशिताशनानां छाया बहुधा भयमादधानाश्चरन्ति। व्याख्या—साये भवम् इति 'सायन्तनम्' ["सायंचिर—" इति ट्युल्, तुट् च], तस्मिन्। सायं 'सवनकर्मणि' होमविधौ 'संप्रवृत्ते' सम्यक् प्रवृत्ते आरब्धे सति, 'हुतं' हविः अश्नाति यः अग्निः तद्वतीं वेदिं परितः' वेद्याः समन्तात् 'प्रकीर्णाः', विक्षिप्ताः अग्नौ प्रदास्यमानं हविः आच्छिद्य ग्रहणार्थं गतयः आगत्य केचित् अत्र, कति च तत्र, केचन पुनरन्यत्र, इति क्रमेण अवस्थिताः सान्ध्यापयोदः' सान्ध्यामेघ इव कपिशाः' पाटलवर्णाः पिशिताशनानां क्रव्यादानां 'छायाः' प्रतिबिम्बानि ["छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इतिकोषः] 'बहुधा' अनेकप्रकारेण भयम् आदधानाः, जनयन्त्यः सत्यः 'चरन्ति' विहरन्ति। अधुनैव हुताशे हविर्दास्यते, किन्तु मायिनो राक्षसाः प्राप्ताः मायया अग्नेः हिंसाके अग्निमुखादपि तत् ग्रहीष्युः इति भय नः। तदेहि राजन् रक्षय देवतानां भागम् इति भावः। [प्रकीर्णाः" (त०, व्या०, म०)— "प्रयताः" (रा०, वि०)॥ "सन्ध्यापयोद" (रा०, भि०, म०,)—"सन्ध्याम्बुद" (त० व्या०)]।

अयमिति। 'अयम्' इति अविलम्बं सूचयति। "एष यामि" "एष त्वां हन्मि" इत्यादिषु एतच्छब्दो यथा। त्वरितं यामि क्षिप्रं हन्मि इत्यादि तदर्थः। इहापि 'अयमहमागच्छामि' क्षिप्रमागच्छामि इत्यर्थः।

### NOTES

1. (a) संप्रवृत्त—सम्+प्र+वृत्+क्त कर्तरि or [illegible]

संवृत्तम् that which has progressed. तस्मिन् । The ceremony having advanced, the Rakshasas have made their appearance. The apparitions were not noticed before. (b) हुताशनवतीम्—हुत + अश + ल्यु कर्त्तरि वा ल्युट कर्त्तरि = हुताशन: fire. This supposes अश to be of the नन्द्यादि class. Thus it is that Bhanuji derives पन्नगाशन taking perhaps नन्द्यादि as आकृतिगण। But even then "कर्मण्यण्"seems to bar ल्यु and give the form हुताश: for the word is not directly named there. Better say अश्नातीति अशन: (नन्द्यादि)। हुतस्य अशन: । ह्रतन—. तद्वतीम्। The name suggest that आहुति is about to be offered to the fire, but Rakshasas have come to intercept it (c) भयम्—The भय is not of personal risk but of the misappropriation of the हुत (Ghee). (d) आदधाना:—आ + धा + शानच् कर्त्तरि। कर्त्रभिप्राये क्रियाफले आत्मनेपदम्। They terrify for their own benefit ( कर्त्रभिप्राये क्रियाफले )।

## चतुर्थाऽङ्कः

विष्कम्भक:

( तत: प्रविशत: कुसुमावचयं नाटयन्त्यौ सख्यौ ) अनसूया—पिअंवदे, जइवि गान्धव्वेण विहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूअभत्तुगामिणी संवुत्तेति णिव्वुदं हिअअं तहवि एत्तिअं चिन्तणिज्जं [ प्रियंवदे, यद्यपि गान्धर्वेण विधिना निवृत्तकल्याणा शकुन्तला अनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं हृदयं, तथापि एतावच्चिन्तनीयम् ]।

(The enter the friends acting the gathering of flowers).

ANASUYA—Priyamvada, though my heart is delighted, because, with her blessings performed by Gandharva rites Sakuntala has become united to a suitable husband, still thi much has to be thought about.

प्रियंवदा — कहं विअ [ कथमिव ] ?

PRIYAMVADA—How is that ?

तत इति । 'कुसुमानाम् अवचयं चयनम् [अवचिनोतेर्भावे अच् ॥ ननु अवचाय इति अलामाध्यम् । वामनस्य "अवतारावचाययञ्चर्योर्दीर्घव्यत्यासो वालानाम्" इत्याह । तत्र राघवभट्ट. कन्यके इमे इचाम् आरुह्य पुष्पाणि चिनुतः, तेन प्रत्यासत्तेरभावात् न घञ् इति समाधत्ते ॥ वयन्तु इत्यारोहणं न साधु मन्यामहे । शाब्दिकचक्रवर्तिः साक्षादिव सरस्वती कविर्यदि अचमिच्छति अलेवास्तु वै नाम तत्र विप्रतिपत्तेरम्] 'नाटयन्त्यौ' अभिनयन्त्यौ 'सख्यौ' अनसूयाप्रियंवदे प्रविष्टे' । [ नाटयन्त्यौ" ( रा- वि- ) —"अभिनयन्त्यौ" ( त-,, न्या-, म- ) ] ।

प्रियमिति । 'शकुन्तला गान्धर्वेण विधिना' अनुष्ठानेन विवाहानुष्ठानेन 'निवृत्त' समाप्त' मङ्गलं विवाहमङ्गलं यस्याः तादृशी सती 'अनुरूप' भर्तारं गच्छति' इति योग्यापात्रस्था इत्यर्थः 'मे इयम्' जाता 'इति' हेतोः 'यद्यपि निश्चितं सुस्थितं मे हृदयं, तथापि एतावत्' एतन्मात्रं चिन्तनीयं विचारणीयम् । |"विधिना," ( रा-, वि- )— "विवाहविधिना" ( त-, न्या- मा- ] ।

## NOTES

1. (a) कुसुमावचयम्—अवचयनम् इति अव+चि+अच् भावे = अवचयः gathering. Now see Tika. The rule "हस्तादाने चेरस्तेये" requires घञ् to be attached to चि when the gathering is from close quarters [within reach—प्रत्यासत्ति ] excepting cases of theft. The form then becomes अवचाय as we have it in "अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः" । Vamana condemns अवचय [See Tika]. The poet however uses the form deliberately, for he repeats it in the मालविकाग्निमित्रम् ।*. The fact is, it is a Vedic form which had not yet disappeared from भाषा at the time of Kalidasa. Raghava defends saying that this is not a case of घञ् at all, for the flowers were really not within reach and were reached only by climbing up the tree ! (b) अभिनयन्त्यौ seems to be the better reading [ See p. 381 note 3].

* Adopted by Prof. Gajendragadkar.

2. (a) गान्धर्वेण—"गान्धर्वो देवतर्षाभ्यां [illegible] । [illegible]वैवाहिकमीप्सितः ॥" Hence गान्धर्व is a वैधविवाहः and may be called a विधि। (b) विधिना—विधीयते इति वि+धा+कि कर्मणि=विधिः that which is sanctioned. तेन। (c) अनुरूप &c.—अनुरूपोऽयम्। अनुरूपमर्ह + अस + विनि कर्त्तरि साधुकारिणि णिनि । (d) निर्वृतम्—निर् + वृ + क्त कर्त्तरि satisfied. The root is अकर्मक when निर् preceedes in this sense. (e) एतावत्—एतत् परिमाणमस्य इति एतद्+वतुप् this much. Refers to 'स्मरति वा न वा इति' next page. Or refers to the whole marriage affair. The affair has to be viewed with misgivings.

3. कथमिव – How 'with misgivings'? इव in such cases seems to imply that the speaker is at a loss to find out an answer to his query. Compare "कथमिव"—Infra. "किमिव"—Infra &c.

अनसूया—अज्ज सो राएसि इट्टिं परिसमाविअ इसोहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदो-गदं वुत्तन्तं सुमरइ वा ण वेत्ति [ अद्य स राजर्षिरिष्टिं परि-समाप्य ऋषिभिर्विसृष्टः आत्मनो नगरं प्रविश्य अन्तःपुरसमागतः इतोगतं वृत्तान्तं स्मरति वा न वा इति ]।

ANASUYA—It is this. Dismissed to-day by the Rishis after having finished the sacrifice, whether or not that royal sage, having entered his town associated with the ladies of the inner apartments, remembers the events that transpired here.

प्रियंवदा—विसद्धा होहि [ विस्रब्धा भव ]। ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति। तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति [ न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। तात इदानीम् इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते इति ]।

PRIYAMVADA—Rest assured. Excellent features like those do not war with virtue. What Father will do now, having heard of this affair, I do not know.

अदोति। "ऋषिभि: इष्टिं यागं परिसमाप्य अद्य विसृष्ट.' खस्ति भवती नगरं प्रतिनिवर्त्त इति कृताभ्यनुज्ञ: 'स राजर्षि: आत्मनो नगरं प्रविश्य अन्त:पुरं :' तत्कथा अन्त:पुरवर्त्तिनीभि: महिषाभि: 'समागत:' मिलित: 'इतोगतम्' इदस्थं वृत्तान्तं तात: 'स्मरति वा न वा इति' एतत चिन्तनीयम्' इति पूर्वेण सम्बन्ध:। इयञ्च भाविन्या विपत्त्याशङ्का।

विसृब्धेति। 'विस्रब्धा' विस्रम्भवती, 'नि:शङ्का इति यावत् 'भव'। सम्भ्रमं त्यज। 'तादृशा:' दुष्यन्तसदृशा: 'आकृतिविशेषा:' विशिष्टा आकृतय:, 'गुणविरोधिनी' गुणेन विरोधवन्तो 'न भवन्ति'। रूपेण गुणो वसति। दुष्यन्तस्य येथा रूपं तथा स अनार्य्यं नाचरेत्। मम तु अपरविधा शङ्का। 'इदानीं' जाते कर्मणि 'इमं वृत्तान्तं श्रुत्वा तात:' कण्व: 'किं प्रतिपत्स्यते' अवधारयिष्यति इति 'न जाने'। दुष्यन्तात् नि:शङ्का भव, अहन्तु तातात् बिभेमि इति भाव:।

## NOTES

1. (a) इष्टिम्—इज्यते इति यज+क्तिन् कर्मणि=इष्टि: a sacrifice. ताम्। (b) अन्त &c.—अन्त:स्थितं पुरम् अन्त:पुरम् the inner appartments शाकपार्थिवादि। By transference of epithets, this means the ladies of the inner apartments. Now see Tika. (c) इतोगतम्—इदम् + सप्तम्यास्तस् = इत: (आद्यादि) here. गतम् transpired जातम्। इतो गतम् here transpired, सहसुपेति समास:। (d) स्मरति वा न वा = This is pre-sentiment of approaching danger. वृत्तान्तं स्मरति not वृत्तान्तस्य स्मरति because here there is no शेषत्व hence the कर्म appears as कर्म। Again स्मरति has वर्त्तमान सामीप्ये भविष्यति लट् by the rule "वर्त्तमानसामीप्ये वर्त्तमानवद्वा"।

2, (a) आकृति &c.—आक्रियन्ते इति आ+कृ+क्तिन् कर्मणि=आकृतय: creations, i. e. features. विशिष्यन्ते वि+शिष्+घञ् कर्मणि=विशेषा: those that are left, i.e. the best; because the best remains after the elimination of the worthless आकृतीनां विशेषा: the best of feautures, i.e. persons having excellent features, तत्—the वर्ण

in भावतीनाम् being भेदे and not निर्द्धारणे। According to कैयट there is no निर्द्धारण unless the individual seprated, the class from which it is separated and the ground of separation are all mentioned. Hence the present case has nothing to do with the prohibition "न निर्द्धारणे। (b) गुणविरोधिन:—गुणान् विरुध्नन्ति इति गुण + वि + रुध + णिनि ताच्छील्ये कर्त्तरि Or विरोध: अस्ति एषाम् इति विरोध + इनि मत्वर्थे = विरोधिन: opposed, गुणै: विरोधिन:। गुण is here mental. The विरोध is एकाधारस्थितेरभाव:। The ईदृ is the आधार in which reside these excellent feature. The suggession is that perfect features and perfect mind reside in amity in the same आधार! So constantly do the two go together, thusseeing that one of them (the features) is present, it may be inferred that the other (गुण) is also there. Cp. 'न ह्याकृति: सुसदृशी विजहाति वृत्तम्"—Mrichchakatik.

3. Remark—Anasuya apprends wilful neglect of Sakuntala. The king will not have the courage to disclose facts through fear of the other queens. This is a very low estimate of the virtues of Dushyanta. Priyamvada allays her anxiety, by referring to the attractive presence of the king. Such excellent feautures do not harbour a preverse mind; यत्राकृतिस्तत्र गुणा वसन्ति, hence Dushyanta cannot be unjust to Sakuntala.

अनसूया—जह अहं देक्खामि तह तस्स अनुमदं भवे [यथा अहं पश्यामि तथा तस्य अनुमतं भवेत् ]।

ANASUYA—As I see it, it will be approved by him.

प्रियंवदा—कहं विअ [ कथमिव ]।

PRIYAMVADA—How is that ?

अनसूया—गुणवदे कण्णआ पडिवादणिज्जेत्ति अअं दाव पढमो संकप्पो। तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो [ गुणवते कन्यका प्रतिपादनीया इति अयं तावत् प्रथमः संकल्पः। तं यदि दैवमेव सम्पादयति ननु अप्रयासेन कृतार्थो

ANASUYA—This indeed is the foremost desire th daughter has to be given to a virtuous person, If luck alone accomplishes that, verily the superiors have their desires fulfilled without effort,

यथेति। 'अह यथा' येन प्रकारेण 'पश्यामि तथा' तेन प्रकारेण यदि तात: पश्यति तस्य अनुमतम्' अनुमोदितं 'भवेत्'। एकमेव वस्तु भिन्नप्रकारेण दृष्टं भिन्नमिव भाति। मद्दृष्ट्या यदि तात: पश्येत्, नूनमनुमोदेत स:।

गुणवते इति। 'कन्यका गुणवते' गुणिने 'प्रतिपादनीया' सम्प्रदातव्या 'इति' एव 'प्रथमो' मुख्य:, सङ्कल्प:' अभिलाष:' गुरुजनस्य इत्यर्थ:। 'तम्' सङ्कल्पं 'यदि दैवमेव' गुरुजनस्य प्रयासं विना एकल दैव' 'सम्पादयति' सफलयति। 'नन्' [ अवधारणे ] 'अप्रयासेन' प्रयत्नाभावेन 'कृतार्थ:' सिद्धप्रयोजनो 'गुरुजन:'। कन्या सत्पात्रे देया इति निर्विवादम्। दानञ्च दैवाधीनमपि पुरुषप्रयत्नमपेक्षते। "न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा:"। तत्र तातेन क: कृतो यत्न: ? दैवमेव केवलमिमां सत्पात्रस्थामकरोत्। तदत्र तोष एव भविता तातस्य न रोष:। [ "अप्रयासेन" रा-, वि- —"अल्पायसेन" ( म- ) ]॥

NOTES

1. (a) तस्य—अनुक्त कर्त्तरि षष्ठी by the rule "क्तस्य च वर्त्तमाने" (b) अनुमतम्—अनु+मन+क्त कर्मणि वर्त्तमाने।

2. कथमिव—See Ante.

3. (a) गुणवते—गुणा: सन्ति अस्य इति गुण+मतुप्=गुणवान् qualified. तस्मै। Used substantively. 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति वामन:। (b) कृतार्थ:—कृत: सिद्ध: अर्थ: प्रयोजनमस्य having the purpose served. बहु—। (c) अप्रयासेन—प्र+यस+घञ् भावे=प्रयास: effort. न प्रयास: absence of effort. The नञ् here implies अभाव absence "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्था: षट्प्रकीर्त्तिता:॥

प्रियंवदा ( पुष्पभाजनं विलोक्य )—सहि अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं [ सखि, अवचितानि बलिकर्मपर्य्याप्तानि कुसुमानि ]।

PRIYAMVADA—(Looking at the flower vase)—Friend flowers have been gathered for the rite of Bali

अनसूया—णं पिअसहीए सउन्दलाए सोभग्गदेवआ अच्चणीआ

[ ननु प्रियसख्याः शकुन्तलायाः सौभाग्यदेवता अर्चनीया ] ।

ANASUYA—Should not the [Or—Verily the ] God of Success of our dear friend Sakuntala be worshipped ? [Or—has to be worshipped ]

प्रियंवदा—जुज्जदि [ युज्यते ] । ( तदेव कर्माभिनयतः ) ।

PRIYAMVADA—All Right ! (They act the same act).

( नेपथ्ये )—अयमहं भोः ।

IN THE DRESSING ROOM—Here I am Ho !

अनसूया—( कर्णं दत्वा )—[ सहि अदिधीणं विअ णिवेदिदं ] सखि अतिथीनामिव निवेदितम् ] ।

ANASUYA—[Listening—Friends, the call is like that of guests.

पुष्पेति । 'पुष्पाणां भाजनं' पात्रं 'विलोक्य' बलिकर्मणि बलिक्रियायां 'पर्याप्तानि', प्रचुराणि 'पुष्पाणि अवचितानि' गृहीतानि । अधिकमास्यम् ।

नन्विति । "ननु" प्रश्ने । 'सुभगा' भाग्यवती । तस्या भावः 'सौभाग्यम्' [ अपि "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः ] । पतिकर्तृक सत्कार एव नारीणां सौभाग्यम् । तस्य 'देवता' तदधिष्ठात्री देवता इत्यर्थः । प्रागेव अनसूया अनसूया "इतोगतं भवति वा" इति पतिष्ठते अनादरं प्रदर्शितवती । प्रियंवदया च "विसृष्टा मव" इत्युक्तम् । तथापि अजानाना एव "ननु सौभाग्यदेवता अर्चनीया" इति पृच्छति । ननु—प्रश्ने अव्ययम् ।

तदेवेति । 'तदेव' पुष्पचयनमेव 'अभिनयतः' नाट्येन दर्शयतः । [ "अभिनयतः ( [illegible] )—'आरभेते'" ( रा-, वि- प्र- ) ] ।

कर्णमिति । 'निवेदितं' निवेदनम् [ भावे क्तः ] । यथा 'अतिथीनां' निवेदितम् [illegible] [illegible] । [ "अतिथीनाम्" ( रा-, वि- ) —"अतिथिना" ( र-, मा-, ना- ) ] ॥

## NOTES

1. बलिकर्म &c.—परि+आप+क्त कर्मणि—पर्याप्त, ०ानि sufficient. बलि is पूजा। बलेः कर्म अनुष्ठानं बलिरेव कर्म इति वा बलिकर्म performance of worship. इतत्—; or the act of worshipping कर्मधा—। तस्मै पर्याप्तानि। चतुर्थीति समासः।

2. ननु—If प्रश्ने, then the speech is a timid suggestion to worship luck, because अनसूया apprehends slight while प्रियंवदा is sure of favour. Or take ननु as आक्षेपे, i. e. implying a bold contradiction of Priyamvada's statement that enough flower is already gathered. In either case, अनसूया wants to gather more.

3. (a) युज्यते—कर्मणि लट्। दिवादि। प्रियंवदा admits the need of having more. (b) तदेव कर्म—The very same act, i.e. कुसुमावचयन्। (c) अभिनयतः—This seems to decide in favour of the reading कुसुमावचयमभिनयन्त्यौ instead of कुसुमावचयं नाटयन्त्यौ—Ante. (d) The reading आरभेते implies that कुसुमचयन is only begun for the first time. This is contradicted by तदेव i. e. यत् कर्म प्रक्रान्तं तदेव। Besides from the प्रकरण we know they were already at it for some time. Hence अभिनयतः has to be perferred.

4. भोः—In announcing one's solf "भोः शब्दं कीर्तयेदन्ते"।

5. अतिथीनामिव &c.—With the reading अतिथिना &c. Explain अतिथिना निवेदितमिव आत्मनिवेदनं कृतमिव। मन्ये कश्चिदतिथिः प्राप्तः स्यात्। This too is a good reading.

प्रियंवदा—णं उडजे सण्णिहिदा सउन्दला [ ननु उटजे सन्निहिता शकुन्तला ]। ( आत्मगतम् ) अज्ज उण हिअएण असण्णिहिदा [ अद्य पुनः हृदयेनासन्निहिता ]।

PRIYAMVADA—Well Sakuntala is at hand in the cottage. (Aside) But not at hand at heart to-day.

अनसूया—होदु, अलं एत्तिएहिं कुसुमेहिं ( भवतु, अलमेतावद्भिः कुसुमैः )। ( प्रस्थिते )।

ANASUYA—Well, these flowers are enough. (Begin to retire).

नेपथ्ये—आः अतिथिपरिभाविनि—

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

IN THE DRESSING ROOM—Ah, you slighter-of-guest! He thinking of whom with mind undiverted thou dost not notice me, rich in penance standing near—shall not recognise you though reminded, as does a maniac (or—drunkard) the previously uttered speech.

नन्विति। 'ननु' अवधारणे। 'सन्निहिता' समीपवर्त्तिनी। सैव अतिथेः सत्कारं करिष्यति। अलमावयोः सम्भ्रमेण इत्यर्थः। 'अद्य पुनः' दुष्यन्तस्य नगरप्रत्यावर्त्तनात् तद्गतचिन्तया 'हृदयेन' मनसा [अभेदे करणे तृतीया] 'असन्निहिता' उटजे नास्ति। देहेन सा तत्र, मनसा तु हस्तिनापुरे। तथाविधया तया अतिथिसत्क्रिया नैव वा भवेत्। [ 'उटजे सन्निहिता' (त व्य·)—"उटजसन्निहिता" (र·, वि·, म·) ]॥

भवत्विति। 'एतावद्भिः' एतत्परिमितैः 'कुसुमैः' यानि चितानि तैरेव 'अलम्' [illegible] सम्पत्स्यते इत्यर्थः। (अत्र सम्पादनक्रिया गम्यमाना। तां प्रति करणत्वात् तृतीया)।

आः इति। 'अतिथिं परिभवति' अवमन्यते वा या—तत्सम्बुद्धिः, ('न भाभू—' इति णत्वनिषेधः)।

विचिन्तेति। अन्वयः—अनन्यमानसा यं विचिन्तयन्ती तपोधनं माम् उपस्थितं न वेत्सि, सः, प्रमत्तः प्रथमं कृतां कथामिव, बोधितोऽपि सन् त्वां न स्मरिष्यति। व्याख्या—अविद्यमानमन्यत् यस्य आलम्बनं तत् 'अनन्य' तन्मयमित्यर्थः: ('नञोऽस्त्यर्थानाम्—' इति बहुव्रीहिः [illegible])। तादृशं 'मानसं' मनो यस्याः ([illegible])। तादृशी, तदेकचित्ता सती 'यं' जनं दुष्यन्तमित्यर्थः: 'विचिन्तयन्ती' [illegible] 'तपोधनं' [illegible] 'मां' दुर्वाससम् 'उपस्थितं' समीपे वर्त्तमानं [illegible] 'न वेत्सि' न [illegible] 'सः' ते मनोगतो जनः 'प्रमत्तः' [illegible]

स्वार्थः: 'अवचयम्' [illegible]: पूर्वं 'कृतं' कथिता 'कथामिव चोचिताऽपि सम्-
आगतः सत्रपि 'ता' न करिष्यति'। ((स्वयं तु नैव करिष्यति, तथा कारितोऽपि न
करिष्यति।* ))

## NOTES

1. (a) सन्निहिता—सम्+नि+धा+क्त कर्तरि। सम्+नि+धा is here अकर्मक। (b) हृदयेन—The fact is, the body is in the cottage, but हृदयम् असन्निहितम् the heart is away. But 'body' and 'mind' together make up the 'individual'. When the body is indentified ( अभेद ) with the individual, we get सन्निहिता शकुन्तला; but identifying the mind, we have असन्निहिता शकुन्तला। Hence अभेदे करणे तृतीया।

Prof. Gajendragadkar imagines that this remark should not be आत्मगत। If आत्मगत it 'mars the beauty of the passage'. Besides Anasuya's भवतु अलम् &c. becomes abrupt.

Let us see, A guest announces himself. Anasuya catches his voice and draws Priyamvada's attention to it (सखि, अतिथी-नाम्, &c). This amounts to saying—'Leave flowers alone. Let us go and arrange for the reception of the guest.' To this Priyamvada replies with a gentle censure [ ननु &c.]—Don't you know Sakuntala is there ? She will do the needful. No cause for alarm, we continue plucking flowers here."

With what face can Priyamvada add to this aloud—'Sakuntala is not there' in direct contradiction to herself ? She cannot. The remark must be to herself, This is also clear from what Anasuya says in reply. She begins with भवतु which almost always introduces something in modification of what precedes. If Priyamvada's remark is to herself then Anasuya sees that Priyamvada wants to stay for more flowers. Anasuya modifies this [ भवतु ] saying—Well, we have enough of flowers, let us [ अलम् &c. ].

If Priyamvada's remark is aloud then Anasuya finds her

---

* Adopted by Prof. Gajendragadkar.

In that case what does अस्तु modify? Nothing. Hence the remark must be to herself.

2. अलम् &c.—This much of flowers will do. कुसुमैः has करणे तृतीया।

3. अतिथिपरि &c — An अतिथि is सर्वदेवमय। Darest thou slight him? अ: implies कोप। "आस्तु स्यात् कोपपीडयोः" इत्यमरः। The reading अतिथिपरिभाविणि with the cerebral ण sometimes occurs. But the rule "न भा भू पू कमि गमि प्यायि वेपाम्" prohibitits the cerebral in the case of न in a कृत् coming after भा, भू &c. I therefore prefer to read अतिथिपरिभाविनि with the dental न।

4. (a) अनन्य &c.—मन एव इति मनस् + अण् = मानसम्, प्रज्ञादि। In the feminine this becomes मानसी with ङीप् by the rule "टिड्ढाणञ्—" &c. The same form is expected if मानस is final in a compound because तदन्तविधि is allowable in the case of a स्त्रीप्रत्यय, as is seen in कुम्भकारी। अन्यत्र प्रकरणे तदन्तविधिः—Vrittikara. Yet we have here मानसा owing to the prohibition "अनुपसर्जनात्" [when the final in a compound is अदन्त and an उपसर्जन, it will take टाप् as usual] (b) तपोधनम्, माम्—This shows the gravity of the offence. The slight is offered not to an ordinary passer-by but to me दुर्वासस् (माम्). the vey repository of asceticism (तपोधनम्)* (c) उपस्थितम्—Again you offend me not as you meet me casually by the road side, but even when uninvited I condescend to come to your door and stand by you (उपस्थित)। (d) माम्—we do not get षष्ठी because there is no शेषविवक्षा। (e) अपि = For force see Tika. (f) कृताम् = Uttered.,
[illegible] भावार्थः।

प्रियंवदा—हद्धी हद्धी अप्पिअं एव्व संवुत्तं। कस्सिंपि पूआरिहे अवरद्धा सुण्णहिअआ सउन्तला [हा धिक्, हा धिक्, अप्रियमेव संवृत्तम्। कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया शकुन्तला ]। (पुरोऽवलोक्य) ण क्खु जस्सिं कस्सिंपि। एसो दुव्वासो

---

* Adopted by Prof. Gajendragadkar.

सुलहकोवो महेसी तह सविअ पविरलपादुब्भडाए गईए पडिणि-उत्तो [ न खलु यस्मिन् कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः तथा शप्त्वा अविरलपादत्वरया गत्या प्रतिनिवृत्तः ] को अण्णो हुदवहादो दहिदुं पहवदि [ कोऽन्यः हुतवहात् दग्धुं प्रभवति ]।

PRIYAMVADA—Alas ! Alas ! The undesirable has indeed happened. Sakuntala with her heart a blank has sinned against some person, deserving worship. (Looking in advance) Indeed not against any ordinary person. Here is the easily excited great sage Durvasas having cursed like that, coming back with a speed which is quick and short stepped. Whoelse but fire is able to burn ?

हा धिगिति । 'हा' खेदे । 'धिक्' निन्दायाम् । दुःखेन आत्मनो भाग्यं निन्दति (आवेगे द्विरुक्तम्) । 'अप्रियमेव संवृत्तम्' जातम् । "यद् पुनः हृदयेन अशङ्कितम्" इति यन्मया शङ्कितं तदेव प्राप्तम् इत्येवकारार्थः । 'पूजार्हे' पूज्ये कस्मिन्नपि जने । 'शून्य' विविक्तम् । मनसो दुष्यन्तं प्रति गतत्वात् 'शून्यं हृदयं' बहुव्रीहि यस्याः तथाविधा 'शकुन्तला अपराद्धा' पूजामदत्त्वा कृतापराधा जाता ( कर्त्तरि क्तः ) । 'न खलु यस्मिन् कस्मिन् अपि' प्रसादे सप्तमी । 'एषः सुलभः कोपो' यस्य तथाविधः, कोपनः इत्यर्थः 'महर्षिर्दुर्वासाः' अतिपूज्यः 'तथा' तेन प्रकारेण, कठोरमित्यर्थः, 'शप्त्वा अविरल-पादा' अदूरन्यस्तचरणा 'त्वरा' क्षिप्रता यस्याः तथाविधया 'गत्या प्रतिनिवृत्तः' उटजात् प्रत्यावृत्तः द्रुतपादक्षेपं निवर्त्तते इत्यर्थः । 'हुतवहात्' अग्नेः 'अन्यः' इतरः ( "अन्यारात्—" इति पञ्चमी ) 'कः दग्धुं प्रभवति' ईष्टे । अयमन्यः स्यात् तथाभूतां शकुन्तलां दृष्ट्वा दयेत न शपेत इत्यर्थः ।

## NOTES

1. (a) पूजार्ह—पूजामर्हति इति पूजा + अर्ह + अच् कर्त्तरि = पूजार्हः: deserving worship. तस्मिन् । विषये सप्तमी । (b) अपराद्धा = अप + राध + क्त कर्त्तरि स्त्रियाम् । The root is अकर्मक and takes कर्त्तरि क्त by the rule "गत्यर्थाकर्मक—" । (c) शून्यहृदया—Her mind is with Dushyrnta, hence the heart is a blank (शून्य) । She is unconscious of her surroundings.

2. (a) यस्मिन् कस्मिन्—This is an idiomatic combination of यद् and किम् to express an ordinary character.* Compare "यानि कानि च मित्राणि कर्त्तव्यानि"—Friends have to be secured, no matter who. Also in combination of तद् compare "येन तेन प्रकारेण कार्यसिद्धिः"—The work should be done by whatever means possible. (b) सुलभकोप:—सुखेन लभ्यते इति सु + लभ + खल् कर्मणि = सुलभ: easily accessible. तादृश: कोपो यस्य whose anger is easily excited. (c) अविरल &c —विरल "scanty" is "few and far between" as in "नीवारविरलपादपच्छायासु"—Act II. Ante. Hence न विरला अविरला: not few and far between. अविरला: पादा: पादक्षेपा: यस्यां सा अविरलपादा in which the steps were not few and far between. यद्—। तादृशी त्वरा यस्यां सा in which there was haste with short and quick steps यद्—।

3. स: अन्य: etc.—कृतस्य यत्न: कृतयत्न:। तस्मात्। The Bengali Recn. gives this and गच्छ पादयो: etc. together as one speech attributed to प्रियंवदा। I have followed Raghava in the allotment of speeches and actors here though it seems there are reasons to prefer the arrangement of the Beng. Recn.

अनसूया—गच्छ पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं उपकप्पेमि [गच्छ, पादयोः प्रणम्य निवर्तय एनम्, यावदहम् अर्घोदकम् उपकल्पयामि]।

ANASUYA—Go bring him back by bowing at his feet, while I collect water and offering of worship.

प्रियंवदा—तह (तथा)। (निष्क्रान्ता)।

PRIYAMVADA—All right. (Exit).

अनसूया (पदान्तरे स्खलितं निरूप्य)—अम्मो आवेअक्खलिदाए गदीए पब्भट्टं मे अग्गहत्थादो पुप्फभाअणं [अहो आवेगस्खलितया गत्या प्रभ्रष्टं मे अग्रहस्तात् पुष्पभाजनम्] (पुष्पोच्चयं रूपयति)।

ANASUYA—(Acting slipping at the next step)—Ah ! the flower-basket has dropped from the tip of my hand (i.e. finger ) my step having slipped through anxiety. (Acts the gathering of flowers).

गच्छेति । 'एनं' दुर्वाससं पादयोः' चरणयोः.' ( चरणे इति सप्तमी । केशेषु गृहीत्वा चौरं ताडयति इति यथा । राघवस्तु "द्वितीयार्थे सप्तमी" इत्याह । तदप्रयोजनम् ) 'प्रणम्य' आपादं नत्वा इत्यर्थः । निवर्तय इत्यर्थं प्रत्यानय । यावत् अवधौ । यावत् स प्रत्यागच्छति तावत 'अहम् अर्घं:' दुर्वाससोऽर्हं पूजाद्रव्यम् 'उदकं' जलञ्च समाहृत्य 'उपकल्पयामि' पूजोपहारं रचयामि [ यावद्योगे भविष्यति लट् ] ।

अम्मो इति । 'अम्मो' इत्याश्चर्ये । 'आवेगेन' दुर्वासोवृत्तान्तात् जातेन सम्भ्रमेण "स्खलितया गत्या' ( हेतौ तृतीया ) 'मे' । अग्रभागो हस्तस्य 'अग्रहस्तः' हस्ताग्रभागः अङ्गुल्य इत्यर्थः ( कर्मधा—। "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः*) तस्मात् 'पुष्पभाजनं प्रभ्रष्टं' पुष्पाणि च भूमौ पतितानि । दुर्निमित्तमेतत् अशुभसूचकम् । 'पुष्पाणां' भूपतितानाम् 'उच्चयं' संग्रहम् ("उच्चयस्य प्रतिषेधो वक्तव्यः" इति घञ् निषेधात् अच् भावे ) रूपयति' अभिनयति ।

NOTES

1. अर्घोदकम्—अर्घं च उदकञ्च तयोः समाहारः । Or अर्घसहितम् उदकम् । शाकपार्थिवादि—। "आपः क्षीरं कुशाग्रञ्च दधि सर्पिः सतण्डुलम् । यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्तितः ॥" सिद्धार्थकः श्वेतसर्षपः ।

2. पदान्तरे—अन्यत् पदं पदान्तरम् next step, नित्यसमास of the मयूरव्यंसकादि class तस्मिन् ।

3. अग्रहस्त etc —हस्ताग्र and अग्रहस्त etc., are got in तत् and कर्मधा—respectively, by taking the गुण (अग्र) and गुणिन् ( हस्त ) as distinct and as identical. Comp. "अग्रावपदार्थ" etc. in Kumara V. 63.

( प्रविश्य ) प्रियंवदा—सहि प्रकिदिवक्को सो कस्स अणुणअं पडिगेह्णदि ! किं वि उण साणुक्कोसो किदो । [ सखि प्रकृतिवक्रः स कस्य अनुनयं प्रतिगृह्णाति ? किमपि पुनः सानुक्रोशः कृतः ] ।

PRIYAMVADA (Entering)—Friend, perverse by nature whose entreaties does he accept ? Yet he was made somewhat relenting.

2. (a) [illegible]—This sort of भू is idiomatic. Compare "[illegible] [illegible] ता[illegible] मुनिः—Panchatantra. "न तावदिमां पश्यामि येन [illegible]-[illegible]: —Act II. &c. (b) प्रथमम्—सामान्ये नपुंसकम् । It does not qualify अपराधः ।

अनसूया—तदो तदो [ तदस्ततः ] ।

ANASUYA—Then, what then ?

प्रिअंवदा—तदो—मे वअणं अण्णहा भविदुं णारिहदि, किन्दु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि—त्ति मन्तअन्तो सअं अन्तरिहिदो [ततो—मे वचनमन्यथा भवितुं नार्हति किन्तु अभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते—इति मन्त्रयमाणः स्वयमन्तर्हितः ] ।

PRIYAMVADA—Then he bodiby disappeared as he was saying this—my announcement does not deserve to be otherwise but the curse shall leave at the sight of some ornament of identification.

अनसूया—सक्कं दाणिं अस्ससिदुं । अत्थि तेन राएसिणा सम्पत्थिदेण सणामहेआहिअं अङ्गुलिअअं सुमरणीअं त्ति सअं पिणद्धं तस्सिं साहीणोवाआ सउन्तला भविस्सदि [शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कितम् अङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन् स्वाधीनोपाया शकुन्तला भविष्यति ] ।

ANASUYA—It is now possible to cherish hope. There is the ring stamped with his name, fastened on as a memento by the royal sage himself when departing. With it (Or with that) Sakuntala will be provided with a remedy at her own control.

[illegible]

'अन्तर्हितः'। कथयन्नाह—'नै वचनम् अन्यथा भवितुं न अर्हति'। शकुन्तला दुर्वासो निवारिष्यति च। 'किन्तु'—अभिज्ञायते येन तत् 'अभिज्ञानं' परिचायकम् (लुट् करणे) तादृशं यत 'आभरणं' भूषणं, यत् किञ्चिदपि, तस्य 'दर्शनेन' (ईतौ करणे वा तृतीया) 'शापो निवर्त्तिष्यते' निवृत्तो भविष्यति। प्रथमं विस्मृत्य पश्चात् अभिज्ञानं दृष्ट्वा स स्मरिष्यति इति भावः।

शक्यमिति। 'इदानीम्' अधुना अनया आत्मा 'आत्मस्थित' शक्य' कथञ्चित् आत्मस्था भवामि। कारणमाह—'सम्प्रस्थितेन' प्रस्थातुमुद्यतेन 'तेन' राजर्षिणा स स्मरत्यनेन इति 'स्मरणीयम्' स्मरणसाधनमित्यर्थः ("कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् अत्र करणे अनीयर्) 'इति' कृत्वा 'स्वयं पिनद्धम्' आसञ्जितम् 'स्वस्य नामधेयेन' नाम्ना 'अङ्कित' मुद्रितम् 'अङ्गुरीयकम् अस्ति। तस्मिन् अङ्गुरीयके सति 'शकुन्तला स्वाधीन: स्वायत्त: 'उपाय:' शापनिवर्त्तनो यस्या: तादृशी भविष्यति'।

## NOTES

1. (a) अभिज्ञान &c.—अभिज्ञानम् आभरणम् अभिज्ञानाभरणम् an ornament which is the means of identification, i.e. which bears some marks by which it may be known that it belongs to the king कर्मधा—। तस्य दर्शनम्। तेन। (b) निवर्त्तिष्यते—Opionally निवर्त्स्यति (c) अन्तर्हित:—अन्तर्+धा+क्त कर्त्तरि। गन्तत्वात by the rule "अन्तरपरिग्रहे"।

2. सम्प्रस्थितेन—सम्+प्र+स्था+क्त आदिकर्मणि कर्त्तरि = सम्प्रस्थित: about to depart. तेन।

3. (a) स्मरणीयम्—स्मरत्यनेन इति स्मृ+अनीयर् करणे बाहुलकात् See Tika—that which reminds. The ring with the king's name engraved on it will remind Sakuntala of her royal spouse (b) इति—See Tika. Or take it as हेतौ। He left the ring because (इति) it will remind, "हेतुप्रकरणादिनिवर्त्तिषु। एवमर्थे प्रकारे तौ च"। इति मेदिनी। (c) स्वाधीनोपाया—उपायते अनेन इति उप+अय—अच् करणे = उपाय, that by which one goes (अयति) near (उप), i.e. attains the desired object i. e. means. स्वस्मिन् अधि इति स्व+अधि+ख आर्षे निपातनम् = स्वाधीन: under one's own control. समीतत् by the rule "[illegible]" the [illegible] being of the [illegible] class. By the

rule "अवइव वाचितंनु-चकरर्मक-चर्थेयुक्त-अधुनातरपदात् खः", ख (इन) is always added after compounds with अधि as final. Or thus—इनं आधिमत् अधिगतः अधीनः subject. प्राद्दितत्। Or अधि उपरि इनः यस्य, बह। or इने इति अधीनम् अव्ययी –। "अधीनो निघ्न आयतः" इत्यमरः। Goyichandra on the authority of Bhashya's use of "ग्रधीनार्थमधीनम् भवति" &c. wishes to add 'ख' after अधि only also. स्वधिन् अधीनः। In both the cases we say स्वधिन and not स्वस्वाम in the feminine because स्व in the sense 'self' आत्मन् is always musculine. "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः। But the first derivation seems preferable ; for if the latter is allowed, it seems useless to read अधि as शौण्डादि and to direct "अधुनातरपदात् खः"। स्वाधीन उपायो यस्याः।

प्रियंवदा—सहि एहि देवकज्जं दाव से निव्वत्तेम्ह [ सखि एहि देवकार्यं तावत् अस्या निवर्त्तयाव: ]। ( परिक्रामतः )।

PRIYAMVADA - Come friend, we go and perform her rites to the gods ) They walk round).

प्रियंवदा—(अवलोक्य)—अनसूए, पेक्ख दाव-वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही भत्तुगदाए चिन्ताए। अत्ताणंवि ण एसा विभावेदि किं उण आअन्तुअं। [ अनसूये, प्रेक्षस्व तावत्- वामहस्तोपहितवदना आलिखिता इव प्रियसखी भर्तृगतया चिन्तया। आत्मानमपि न एषा विभावयति किं पुनरागन्तुकम्। ]

PRIYAMVADA—( Looking outside )—See Anasuya, our friend, with her thought centered in her husband her face placed on her left hand, looks like one painted She is not aware of her own self even, what to speak of a stranger.

सखीति । 'एहि' आगच्छ 'अस्याः' शकुन्तलायाः "देवकार्यं" तावत् नि र्वर्त्तयाव: कुर्वः [ "तावदस्याः" ( स, व्या, ) – "तावत्" ( रा-वि, म- ) ]

अनसूयेति । 'प्रियसखी' शकुन्तला 'भर्तरि' पति दुष्यन्त 'गतया' प्राप्तया स्वामिसम्बन्धिन्या इत्यर्थः 'चिन्तया' [ हेतौ तृतीया ]' वामहस्ते उपहितं' स्थापितं 'वदनं' यस्याः तादृशी सती 'आलिखिता' चित्रार्पिता 'इव' लक्ष्यते। 'एषा' एतदवस्था स्वयं 'आत्मानमपि न विभावयति' बुध्यते 'किं' पुनरागन्तुकं' समुपागतमतिथिम्।

## NOTES

1. Reading—तावद्वता: is better than तावत्, because वता makes it clear that they mean to propitiate the [illegible] spoken of before.

2. (a) तावत्—This is अवधारणे emphasising [illegible] Do you see; cp. "कुरुष्व तावत्" [b] आगन्तुकम्—आगच्छति इति आ+गम्+तुन् [illegible] औणादिक=आगन्तु: a guest अतिथि:। स एव इति कन् स्वार्थे। तम्। "अतिथि: कुशपुत्रे स्यात् पुमानागन्तुकेऽपि च" विश्वमेदिनी।

अनसूया- पिअंवदे दुवेणं एव्व णो मुहे एसो वुत्तन्तो चिट्ठदु। रक्खिदव्वा क्खु पकिदिपेलवा पिअसही। [ प्रियंवदे द्वयोरेव नौ मुखे एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी ]।

ANASUYA—Priyamvada, let this story rest in the mouth of us two only. Our naturally delicate dear friend has indeed to be spared.

प्रियंवदा—को दाणिं उण्होदएण णोमालिअं सिञ्चदि। [ कः इदानीमुष्णोदकेन नवमालिकां सिञ्चति। ] ( उभे निष्क्रान्ते )।

PRIYAMVADA—Now, who sprinkles the Navamallika with hot water? [ Exeunt both ].

इति विष्कम्भकः। [ This much is Prelude ].

---

प्रियंवदे इति। 'एष वृत्तान्तः' [illegible] 'द्वयोरेव नौ मुखे तिष्ठतु' [illegible] [illegible] अन्यत्र। 'प्रकृत्या पेलवा' [illegible] 'प्रियसखी' [illegible] [illegible] तत् [illegible] मा [illegible]।

क इति। "कः इदानीं" कः पुनः [इदानीं [illegible]। "इदानीं [illegible] च [illegible]' इति मेदिनी ]। [illegible] 'उष्णोदकेन' [illegible] 'नवमालिका'

## NOTES

1. (a) इदानीम्—Idiomatic [illegible] । Compare इदानीम् in "न चैदानीमाचार्यः सूत्राणि कृत्वा निवर्तयति"—Bhashya. (b) नवमालिकाम्—Sakuntala has already been compared to the नवमालिका in point of delicacy. Thus "नवमालिकाकुसुमपेलवाऽपि त्वम्" Act. I. Here however the reference is to the creeper and not to the flower. As the delicate नवमालिका cannot bear the sprinkling of hot water, Sakuntala will not be able to st and the shock of the news of the curse.

2. विष्कम्भक:—See beginning of Act III. This too is a शुद्धविष्कम्भक because the पात्रs are मध्यम ।

( ततः प्रविशति सुप्तोत्थितः शिष्यः ) । शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति । परिक्रम्यावलोक्य च ) हन्त प्रभातम् । तथा हि—

> यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
>
> आविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
>
> तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
>
> लोको नियम्यत इवैष दशान्तरेषु ॥२॥

(Enters a disciple who has just awoke from sleep)

DISCIPLE—I am ordered to watch the time by his Reverence Kasyapa who has returned from his journey. Having gone out I will see how much of the night is left. Going round and looking about) Oh! It is dawn! For on the one side the lord of the herbs is reaching the summit of the setting-hill; on the other, the sun is exposed with Aruna, as his fore runner. By the simultaneous rise and fall of the two luminaries, people are steadied as it were at the changes of their career .

तत इति। 'ततः' आदौ सुप्तः पश्चात् 'उत्थितः' (पूर्वकालस्य उत्तरकालेन कर्मधारयः) शिष्यः प्रविशति'। वेलेति—'प्रवासात्' प्रवासं कृत्वा [ ल्यब्लोपे कर्मणि पञ्चमी ] यद्वा—प्रवसत्यस्मिन् इति 'प्रवासः' परदेशः। तस्मात् [ अपादाने पञ्चमी ] 'उपावृत्तेन प्रत्यागतेन 'तत्रभवता काश्यपेन वेलायाः' होमवेलायाः 'उपलक्षणार्थं दर्शनार्थम् 'आदिष्टोऽस्मि'। तदन्देशात् प्रकाशं निर्गतः' बहिर्गतः सन् 'रजन्याः कियत् किम्परिमाणम् 'अवशिष्टम्' इति एतत् 'अवलोकयामि'। हन्त' इति सम्भ्रमे 'प्रकृष्टं भातम्' आलोको यस्मिन् तत् प्राप्तम्।

यातीति। अन्वयः—एकतः ओषधीनां पतिः अस्तशिखरं याति। एकतः अरुणपुरःसरः अर्कः आविष्कृतः। एष लोकः तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां दशान्तरेषु नियम्यते इव। व्याख्या—'एकतः' पश्चिमगगने 'ओषधीनां' वृक्षज्योतिषां 'पतिः' चन्द्रः 'अस्तशिखरं याति'। 'एकतः' पूर्वस्मिन् गगने 'अरुणः' गरुडाग्रजः अनूरुः 'पुरःसरो' यस्य तादृशः 'अर्कः' सूर्यः 'आविष्कृतः' परिव्यक्तः। 'उदितः सूर्यः, चन्द्रश्च अस्तं याति। 'एष लोकः' संसारः 'तेजसोः द्वय' तस्य चन्द्रसूर्यरूपस्य 'युगपत्' समकालं यत् व्यसनं' ध्वंसः चन्द्रस्य, यश्च उदयः सूर्यस्य, ताभ्याम्। अन्याः दशाः दशान्तराणि [ मयूरव्यंसकादि ] तेषु 'नियम्यते' शिक्ष्यते 'इव' इत्युत्प्रेक्षा। उदये मा मोदस्व तपनं भावि इत्थं शिक्षा। व्यसने च अन्यं विषादेन भुयोऽप्युदयो भविता इति नियमनम् [ अत्र प्रथमं तावत्—गगनार्धे व्यतीतमात्रेऽपि अस्तं प्रति याति चन्द्र इति प्रकाशयति। कृष्णाष्टमीत आरभ्य ततकालं सूर्यस्यापि दर्शनं प्रकाशम्। अतः पूर्वार्धं प्रभातोपलक्षणाय मात्रम्। अपरश्च—यद्याविष्कृत एवार्कः "उपस्थितां होमवेलां गुरवे निवेदयामि" इत्यनन्तरोक्तं न सङ्गच्छति। "आविष्कृतारुणः" इति कमलपाठे पुनः व्यसनोदययोर्यौगपद्यं दुष्यति। तस्मात् प्रक्षिप्तोऽयं श्लोकः]। [ "आविष्कृतोऽरुण—" (रा०, त०, कि०, व्या०)—आविष्कृतारुणः—" (पि० म०) । "द्वयस्य" (त०, व्या०) "द्वयाज—" (रा०, कि०, म०) ]॥

## NOTES

1. Summary—एवं इर्ष विभाति वनावास शकुन्तला, इत्यत आर्ये चारदेशं गमनार्थित्वत्तकुलोचितानुरं प्रमावती राजा। सा च विद्योतिनी सचिव आख्याती

प्राप तमतिथिं दुर्वाससमनुधावमाना "बोधित्वाऽपि मां न स्मरिष्यति" इति तेन शप तमध्यानमाना नाभ्यनात। शापस्तु पथि सख्या प्रसादितेन तेन अभिज्ञानदर्शनावसानः कृतः। ततो गच्छति काले अभिव्यक्तिगर्भलक्षणा शकुन्तला राजधानीं न नीता कथ वश प्रवासाग्नितप्त:। अन्यद्दुरयाविस्मरणं गताय अशरीरिणी वाक् तस्य सुतां दुष्यन्तपरिणीतां ससत्त्वामकथयत। स च तद्दिनमेव शिष्याभ्यां तां गौतमीसहितां महर्षिः हस्तिनापुरं प्राहिणोत।

2. (a) वेलोप &c.—वेला time काल। "वेला काले च जलधेस्तीरनीरविकारयोः" इति विश्वः। (b) हन्त—an अव्यय implying surprise mixed with regret विषाद। He believed the night was not yet wholly ended; for he says कियदवशिष्टं रजन्याः। But he saw his mistake on going out. By a little twisting we may say this causes विषाद। "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः। Or implies निश्चय—हन्त प्रभातम् it is indeed (निश्चय) dawn "हन्तेति=दाननिश्चययोरपि"—Ganakara.

3. (a) एकतः—सप्तम्यर्थे तसिः। आद्यादिः। (b) अस्तशिखरम्—अस्तस्य अस्ताचलस्य शिखरं चूडाम्। (c) ओषधीनाम्—Raghava explains—Herbs avert danger; yet the moon though the lord of herbs, cannot escape danger. Thus the inevitable is unavoidable, and this consideration should have a steadying influence in reverses. "आतिदुःसहमरणादिविपत्तिसहस्रविनाशिका ओषधयः। तासां पतिरपि अस्तशिखरं याति"—Raghava. (d) आविष्कृतः—आविस् + कृ + क्त कर्मणि disclosed. याति gives कर्तृता to the moon; to preserve uniformity it is necessary that sun should also have कर्तृता, which आविष्कृत does not give to it. We believe the verse is an interpolation (See Tika also). We cannot say we have here आदिकर्मणि क्त in the कर्तृवाच्य, for, the usual sign of such क्त the उपसर्ग प्र is here absent. True, the difficulty is avoided by reading आविष्कृतारुणपुरःसर एकतोऽर्कः and explaining—आविष्कृतो यः अरुणः सः पुरःसरो यस्य तादृशः अर्कं एकत आस्ते in which अर्कः has कर्तृता। But this introduces a fresh difficulty; for then the उदय becomes a past event and अस्तगमन is still future; and the two, अस्तगमनोदयौ,

must no longer be spoken of as simultaneous ( युगपत् ) । See Tika, (e) अरुणपुरःसरः—पुरः अग्रे सरति गच्छति इति पुरस् + सृ + ट कर्तरि = पुरःसरः forerunner, Now see Tika. अरुण is Garuda's elder brother. He was born before time and immature, being without the thighs (अनूरु) । He was about to die of chill and was placed by his father कश्यप in front of the sun on the chariot of that luminary, as his driver, to remove the chillness. (f) अर्कः—अर्च्यते इति अर्च + घञ् कर्मणि । उदयवान् अर्कः त एव इति अग्निः । (g) युगपत् &c.—वि + अस + ल्युट् भावे = व्यसनम् ध्वंसः । "व्यसनं विपदि भ्रंशे" इत्यमरः । व्यसनञ्च उदयश्च व्यसनोदयौ rise and fall. युगपत् = अन्याय । युगपत् समकालौ यौ व्यसनदयौ ताभ्याम् । कर्मधा—। (h) लोकः—The universe भुवनम् । "लोकस्तु भुवने जने" इत्यमरः । By transference of epithets it means here भुवनस्थजनसमुदायः ।

3. Remark—The metre is वसन्ततिलका । The reading आत्म-दशान्तरेषु has a superfluous word आत्मन् । दशान्तरेषु implies आत्म-दशान्तरेषु । The lesson conveyed is "चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च" । See also Swapnanataka sl. 4. Act. I.

अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥४॥

Moreover, the moon having disappeared, the same lily, with her beauty now to be recalled from memory, does not please my eyes. Surely, to the weaker sex, the pangs caused by the absence of the favourite, are beyond measure very hard to bear.

अन्तर्हित इति । अन्वयः—शशिनि अन्तर्हिते सैव कुमुद्वती संस्मरणीयशोभा [सती] मे दृष्टिं न नन्दयति । नूनम् अबलाजनस्य इष्टप्रवासजनितानि दुःखानि अतिमात्र-सुदुःसहानि । व्याख्या—'शशिनि' चन्द्रे 'अन्तर्हिते' दर्शनपथात् अतीते सति 'सा एव'

पूर्वं दृष्टा 'कुमुद्वती' कुमुदिनी' ["कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुप्] संस्मर-णीया' स्मृतिगम्या न तु प्रत्यक्षा 'शोभा' यस्याः तादृशी सती मे दृष्टिं न नन्दयति' न मोदयति। 'नून' निश्चितम् 'अबलाजनस्य' दुर्बलस्य स्त्रीजनस्य' सम्बन्धे 'इष्टस्य' अभिलषितस्य जनस्य 'प्रवासेन' देशान्तरस्थित्या 'जनितानि' दुःखानि 'अतिमात्रं' यथा तथा 'सुदुःसहानि' भवन्ति। [ श्लोकोऽयं कथमपि न प्रभातोपलक्षणार्थं भवितुमर्हति। अपि च पूर्वश्लोके चन्द्रः अस्तं याति इत्युक्तं न तु यातः इति। तत् कथमन्तर्हिते इत्यतिशयोक्तिः? अन्यच्च—"मे" इति "अन्यस्य नन्दयति" इत्युपक्षिपति, तथायुक्तम्। "संस्मरणीयशोभा" इत्यनुक्तमपि गम्यते एव, तत् किमनया कष्टोक्त्या? 'अतिमात्र-सुदुःसहानि' इति सुदूरौ: अतिमात्रस्य च एकत्र समावेशः कीदृशः इत्येतत् सहृदयै-र्विभाव्यम्। पुनश्च—पूर्वार्द्धे दृष्टिनन्दनस्य अभावमुक्त्वा तत् समर्थनाय परार्द्धे दुःखस्य दुःसहत्वनिर्देशो न मनोरमः। तदयमपि प्रक्षिप्त एव श्लोकः ]।

## NOTES

1. अन्तर्हिते &c.—Raghava has 'शशिनि चन्द्रे…यतः स शशयुक्त कलङ्को अतस्तस्यान्तर्धानमुचितमिति भावः"। This is far-fetched. शशिन् in itself does not imply 'scandal ( कलङ्क )। Again he says "अथ च कौ पृथिव्यां मुदतो हर्षयुक्ता सेवपूर्वं दृष्टा शकुन्तला शशिनि इति दूषान्ते विषयनिगर-णात् तदंशोद्भवत्वाद्वा अन्तर्हिते असन्निहिते इत्यादि पूर्वार्द्धं सर्वं योज्यम्"। This is fine imagination, and had undoubtedly influenced the interpolator (See Tika). But it overlooks the fatal objection, that the love affair between Sakuntala and Dushyanta was unknown to all in the hermitage except Anasuya and Priyamvada. Just then even Kanva was not aware of it, so it could not have been referred to by the disciple.

3. Remark.—The metre is वसन्ततिलका। The first half gives a specific instance to support the generalisation in the second half. Hence we have अर्थान्तरन्यास।

अपिच—

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।

वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥४॥

अपिच—

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-र्
अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥५॥

. Morever, the moon is impurpling the dew drops on the jujube trees ; the peacock, with its sleep over, is leaving the kusa thatch of the cottage ; and this antelope got up from the edge of the mud-bank, is forthwith becoming high behind in order to stretch its limbs. Moreover, the moon—the very one by whom darkness is being caused to disappear, the middle domain of Vishnu was reached after having placed his Pada on the head of Sumeru, the lord of the mountain—is dropping from the sky with very little of his rays left. Even of the great the highest ascent becomes ended in a deep descent.

कर्कन्धूति । अन्वयः—अग्रसन्ध्या कर्कन्धूनाम् उपरि तुहिनं रञ्जयति । मयूरो वीतनिद्रो दार्भम् उटजपटलं मुञ्चति । एष हरिणश्च खुरविलिखितात् वेदिप्रान्तात् उत्थितः स्वाङ्गमायच्छमानः, सद्यः पश्चादुच्चैर्भवति । व्याख्या—'अग्रसन्ध्या' प्रातःसन्ध्या 'कर्कन्धूनां' बदरीवृक्षाणाम् ["कर्कन्धूर्बदरी कोलिः" इत्यमरः ] 'उपरि तुहिनं' हिमं 'रञ्जयति' अरुणरागेण योजयति । 'मयूरः' आश्रममयूरः वीता' विगता 'निद्रा' यस्य तथाभूतः सन् 'दार्भं' कुशनिर्मितम् 'उटजपटलं' पर्णशालाया आवरणं मुञ्चति' जहाति । 'एष हरिणश्च आश्रममृगोऽपि खुरैःविलिखितात्' मुखशयनार्थं क्षुण्णात् [ पशुचर्म एव यत् खुरोत्कीर्णे स्थाने भूमिषु ते शेरते ] 'वेद्याः' यज्ञवेदिकायाः 'प्रान्तात् उत्थितः 'सन्' निद्रान्ते 'स्वम् अङ्गम्' स्वरूपम 'आयच्छमानः' प्रसारयन् [ "समुदाङ्भ्योयमोऽग्रन्थे" इत्यात्मनेपदम् ] 'सद्यः' तत्क्षणम् उत्थानसमये एव 'पश्चात् अपरकाये 'उच्चैः' उन्नतो 'भवति' । अतो ब्रवीमि प्रभातमिति ।

पादेति। अन्वयः—चयिततमसा येन चितिधरगुरोः सुमेरोः मूर्द्ध्नि पादन्यासं कृत्वा विष्णोर्मध्यमं धाम क्रान्तं स अयं चन्द्रः अल्पशेषैर्मयूखैः गगनात् पतति। महतामपि अत्यारूढिः अपभ्रंशनिष्ठा भवति। व्याख्या—'चयित' चयप्राप्तं 'तमो' यस्मात्तथाविधेन इतान्धकारेण [अनेन माहात्म्यम्] 'येन चन्द्रेण 'चितिधराणां पर्वतानाम् [शेषषष्ठ्या समासः] 'गरोः' पत्युः 'सुमेरोः मूर्द्ध्नि' शिरसि 'पादानां' चरणानां किरणानाञ्च 'न्यासं' पातं 'कृत्वा' [सुमेरुशिरसोऽप्यूर्ध्वचारी चन्द्रः। तेन शिरसि किरणपातो युज्यते] 'विष्णोः' वलिच्छलने वामनरूपस्य तस्य मध्यमं' धाम द्वितीयचरणविन्यासस्थलम् आकाशमित्यर्थः 'क्रान्तम्' आरूढं, 'स' एवंभूतो महिमान्वितः 'अयं चन्द्रः' एष दृश्यमानश्चन्द्रः 'अल्पशेषैः' अल्पावशिष्टैः 'मयूखैः किरणैः उपलचितः सन् [इत्यम्भूतलक्षणे तृतीया] 'गगनात पतति' गगनाङ्गनं जहाति। अतो ब्रवीमि प्रभातमिति। 'महतामपि' किं पुनरितरेषाम् 'अत्यारूढिः' उच्चैः स्थितिः 'अपभ्रंशः' दूरपातः 'निष्ठा' अन्ता यस्याः तादृशी भवति। अत्युच्चारोहणात् परमेव अतिनीचं प्रतिगमनं भवति॥ उच्चैःपदं पतनमनुरूपं कलयति कालि इतिनिष्कर्षः॥ यथा प्राकृतः कश्चित् कुत्रचित् उच्चस्थाने पादं न्यस्यततोऽप्युच्चं स्थानमारोहति, तथा महिम्ना महान् एषचन्द्रः गगनशिखरमारोढुमिच्छुः पर्वतानां गुरोरेव, न तु यस्य कस्यचित, शिरसि पादमधात् आरूढश्च गगनम्। परन्तु अधुना दूरमधः पपात, न चिरं गगनाग्रे एव स्थितः इति स्फुटार्थः। किरणैः सुमेरुशिखरं समुद्भास्य गगनमारूढ़ इत्यपि अर्थः।

1. (a) तुहिनम्—Frost, dew. "तुषारस्तुहिनं हिमम्" इत्यमरः। (b) अग्रसन्ध्या—सम्यक् ध्यायन्त्यस्याम् इति सम + ध्यै + अङ् अधिकरणे = सन्ध्या time for meditation. Or सम् + धा + अङ भावे अधिकरणे वा = सन्धा junction सन्धिः, i.e., junction of day and night, यथा प्रथमा, सन्ध्या। There are two junctions अग्रसन्धा or अग्रसन्ध्या = dawn and अपरसन्ध्या or अपरसन्धा = dusk. "सन्ध्या पितृप्रभूः सन्धा" इति शब्दार्णवः। (c) उटजपटलम्—पटल thatch. "पटलं छदिः" इत्यमरः। "छदिर्गृहाच्छादनम् 'छानी' इति ख्यातम्" इत्यमरटीका। (d) आयच्छमानः—we have आत्मनेपद because the action benefits the stag. Otherwise दरिद्रेभ्यो धनं स यच्छति। The sutra "आङो यमहनः" has no application here, because that refers toयम when अकर्मक and has no कर्त्रभिप्राय;

again स्वाङ्ग here = स्वरूपम् and not any particular limb of the animal, so also the varttika "स्वाङ्गकर्मकाङ्ग" should not apply here.

2. Remark.—The metre is मन्दाक्रान्ता। स्वभावोक्ति or जाति is the figure 'नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती। स्वभावोक्तिश्च जातिश्च—॥" इति दण्डी।

3. (a) क्षितिधर &c.—धरन्तीति धृ + अच् कर्त्तरि = धरा: up-holders, क्षितेर्धरा: क्षितिधरा: the sustainers of the earth, i.e. the mountains. Now see Tika. क्षितिं धरन्तीति gives अण् with a कर्मोपपद resulting in the form क्षितिधार। (b) चयित &c.—चय: सञ्जात: अस्येति चय + इतच् चयितम्। Now see Tika.

4. (a) अत्यारूढि:—अति + आ + रुह + क्तिन् भावे high ascent. (b) अपभ्रंश &c.—निस + स्था + अङ् भावे = निष्ठा end अन्त। 'निष्ठानिष्पत्ति-नाशान्ता:" इत्यमर:। अप + भ्रंश + घञ् भावे = अपभ्रंश: long slip दूरपात:। अपभ्रंशो निष्ठा यस्या:।

5. Remark.—(a) Note the pun—पाद = किरण and चरण। मूर्द्धन् = शृङ्ग and शिरस। पतति = अवरोहति and भ्रश्यति। (b) The महत्त्व of चन्द्र is established by (1) गिरिगुरुशिरसि चरणपात:, (2) तमोनाश:, (3) विष्णु-क्रान्तिक्रमणम्। (c) The metre is मन्दाक्रान्ता। अर्थान्तरन्यास is the figure.

( प्रविश्यापटीक्षेपेण ) अनसूया— जइ वि णाम विसअपर-म्मुहस्स जणस्स एदं ण विदिअं तहवि तेण रण्णा सउन्दलाए अणज्जं आअरिदं [ यद्यपि नाम विषयपराङ्मुखस्य जनस्य एतत् न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्य्यमाचरितम् ]।

ANASUYA—(Entering without raising the curtain)—Though this may not be known to a person who is averse from the world, still something ignoble has been done by that king towards Sakuntala.

शिष्य:—यावदुपस्थितां होमवेलां गुरवे निवेदयामि। ( निष्क्रान्त: )।

DISCIPLE—I will report to the preceptor that the time for the offerings of oblations is at hand. (Exit).

प्रविश्येति। 'पश्चा:' पटस्य जवनिकाया: 'क्षेप:' निरसनं 'पटीक्षेप:' जवनिका-पसारणम्। न पटीक्षेप: 'अपटीक्षेप:' तेन। जवनिकामनपसार्य्य एव प्रविष्टा अन-सूया। यद्वा—'अपटी' जवनिका [ "अपटी काण्डपटिका प्रतिसीरा जवनिका तिर-स्कारिणी" इति हलायुध: ]। तस्या: क्षेपेण तां निरस्य इत्यर्थ:।

यद्यपीति। 'विषयेभ्य:' इन्द्रियग्राह्येभ्य: 'पराङ्मुखस्य' निःस्पृहस्य 'जनस्य' मादृशस्य एतत् 'यद्यापि न नाम' [ नाम इति सम्भाव्ये ] 'विदितं' ज्ञातं 'तथापि' मादृशो जन: अत्र विषये प्रमाणं न इत्यभ्युपगतेऽपि 'तेन राज्ञा शकुन्तलायाम् 'अनार्य्यम्' असत् आचरितम्'। आस्तां तावत् अहं विषयिणां युक्तायुक्तं विचारयितुमनर्हा, किन्तु शकुन्तलायाम् . असदाचरितम् इति नास्ति सन्देह:। रङ्गमञ्चस्थेन शिष्येण न श्रुतमेतत्। [ "यद्यापि" ( र॰, वि॰ )—'एवमम्' ( त, न्या॰, म॰ )—"पराङ्-मुखस्य" ( त॰, वि॰न्या॰ )—"पराङ्मुखस्यापि" ( रा॰ म॰ ) ॥

यावदिति। 'उपस्थितां' सम्प्राप्तां 'होमवेलां गुरवे निवेदयामि' विज्ञापयामि 'यावत्' [ यादवधारणे ]।

## NOTES

1. (a) विषयपराङ्मुखस्य—परा दूरं अञ्चति गच्छतीति परा + अञ्च + क्विन् कर्त्तरि = पराक् averted. पराक् मुखं यस्य स पराङ्मुख: one with face averted तस्य। (b) जनस्य—'क्तस्य च वर्त्तमाने' इति अनुक्ते कर्त्तरि षष्ठी। (c) विदितम्—विद् + क्त कर्मणि वर्त्तमाने by the rule "मतिबुद्धिपूजार्थेभ्यश्च", विद् here being बुद्ध्यर्थक। (d) For यदि. अपि ( twice ), नाम, तथा see below.

2 (a) शकुन्तलायाम—आधारे सप्तमी। Compare "अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु"—Act I. (b) अनार्य्यम्—अर्य्यते गम्यते अनुष्ठीयते इति यावत् इति ऋ + ण्यत् कर्मणि—आर्य्यम् that which is adopted by good people. न आर्य्यम् that which good people shun. नञ्तत्।

Reading.—The passage is obscure. My explanation, as given in the Tika, will be clear from the following analysis—(a) Anasuya wants to show that 'तेन राज्ञा शकुन्तलायामनार्य्यमा-चरितम्"। (b) A possible objection occurs to her—This is a love affair, and therefore a worldly matter. Anasuya standing

* Adopted by Prof. Gajendragadkar.

as she does aloof from the world [ विषयपराङ्मुखा ] cannot presumably judge whether any वैषयिक matter is न्याय्य or अन्याय्य। This other side of the question ( पक्षान्तर )—her ineligibility to judge—she introduces by यदि। "यदि इति पक्षान्तरे"—Vardhamana. She states the objection as a mere possibility ( सम्भाव्य ), not that people will surely urge it against her. The bare possibility is expressed by नाम। The objection she does not admit as valid. She mentions it with a sneer (गर्हा) expressed by अपि। "गर्हा समुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः। The second अपि is समुच्चये। Thus the reasoning is—Perhaps you will say I am outside the world and am no judge of न्याय्य and अन्याय्य in love-affairs. Even then it cannot be denied that the king has behaved ill ( अन्याय्य ) towards Sakuntala.

4. गुरवे—"कर्मणा यमभिप्रैति स: सम्प्रदानम्" इति सम्प्रदाने चतुर्थी। "क्रियाग्रहणमपि कर्तव्यम्" is a Varttika usually meant for अकर्मक verbs. The भाष्यकार however rejects it, because as he says "क्रियापि कृत्रिमं कर्म"। Hence "कर्मणा यमभिप्रैति—" covers all cases.

अनसूया—पडिबुद्धावि किं करिस्सं। ण मे उइदेसु वि णिअकरणिज्जेसु हत्थपाआ पसरन्ति। कामो दाणिं सकामो होदु जेण असच्चसन्धे जने सुद्धहिअआ सही पदं कारिदा [ प्रतिबुद्धापि किं करिष्यामि। न मे उचितेष्वपि निजकरणीयेषु हस्तपादं प्रसरति। काम इदानीं सकामो भवतु येन असत्यसन्धे जने शुद्धहृदया सखी पदं कारिता ]। अहवा दुव्वाससो सावो एसो विआरेदि। अण्णहा कहं सो राएसि तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तं वि ण विसज्जेदि [ अथवा दुर्वाससः शाप एव विकारयति। अन्यथा कथं स राजर्षिः तादृशानि मन्त्रयित्वा एतावतः कालस्य लेखमात्रमपि न विसर्जयति ]। (विचिन्त्य) ता इदो अहिण्णाणं अङ्गुलीअअं

से विसज्जेम। दुक्खसीले तपस्सिजणे को अब्भत्थीअदु। णं सहीगामी दोसो त्ति ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं। इत्थं गदे अम्हेहिं किं करणिज्जं [ तत् इतः अभिज्ञानमङ्गलीयकं तस्मै विसृजावः। दुःखशीले तपस्विजने कः अभ्यर्थ्यताम्। ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम्। इत्थं गते अस्माभिः किं करणीयम् ]।

ANASUYA—What again shall I do when awake? My hand and feet do not proceed even towards my own everyday duties. Now be content Cupid by whom our purehearted friend is made to resort to a man who is false to his promise. Or, it is the curse of Durvasa that is causing perversion. Otherwise why that royal sage having talked in that strain does not send a letter even for such a long time? (Reflecting) We shall then send him the identification-ring from here. The ascetics being constantly engaged with penance, who is to be requested? Nor indeed, to Father Kasyapa returned from travel, can I even if I try report Sakuntala as wedded by Dushyanta and with child in, because the blame lies with my friend. Such being the case what can be done by us.

प्रतिबुद्धेति। प्रभाता रजनी प्रतिबोधनकालः प्राप्त इत्यालप्य आह—'प्रतिबुद्धा' शयनादुत्थिता अपि किं करिष्यामि? 'उचितेषु' [“अभ्यस्तेऽप्युचितं न्याय्यम्” इति रघुटीकायां मल्लिनाथः] “निजेषु” स्वकीयेषु 'करणीयेषु प्रातःकृत्यादिषु 'अपि किं' पुनरन्यत्र 'मे हस्तौ च पादौ च' हस्तपादम् (प्राण्यङ्गत्वादेकवद्भावः) न 'प्रसरति' प्रवर्त्तते। 'कामः कन्दर्पः 'इदानीं' 'इहमे हत्ते' 'सकामः' सिद्धमनोरथो 'भवतु'। कामिनां प्रतारणा कन्दर्पस्य धर्मः। सोऽधुना सिद्धः। 'येन' कामेन 'शुद्धम्' अकपटं

'हृदयं' यस्याः तादृशी 'सखी' शकुन्तला 'असत्या' मिथ्या 'सन्धा' प्रतिज्ञा यस्य तादृशे असत्यसन्धे इत्यर्थः, पदं' स्थानं 'कारिता प्रापिता [सर्वधात्वर्थानुवादः करोतिना भवति; "हृक्रोरन्यतरस्याम्" इति अणिकर्तुः अत्र कर्मसंज्ञा। ततः अभिहिते कर्मणि सखी इति प्रथमा ]। 'अथवा' न हि राज्ञो दोषः। 'एष दुर्वाससः शापः विकारयति' विकारम् अन्यथाभावं करोति ["तत्करोति—" इति णिच्]। 'अन्यथा' यदि नायं शापविकारः तदा स राजर्षिः तादृशानि' तथाविधानि मधुराणि सरलाणि च 'मन्त्रयित्वा' भाषित्वा 'एतावतः' एतन्मात्रस्य सुदीर्घस्य 'कालस्य' [ सम्बन्धमात्रविवक्षया षष्ठी ] 'लेखमात्रमपि पत्रिकामपि, आस्तां नेत्रजनप्रेरणम्, 'न विसर्जयति' प्रेरयति। तन्नूनं शापात् सर्वं तेन विस्मृतम्। 'तत्' तस्मात् शापनिहन्तये इतः अस्मात् तपोवनात् 'तस्मै' तं दुष्यन्तमभिप्रेत्य 'अभिज्ञानम्' स्मरणीयम् 'अङ्गुलीयकं विसृजावः प्रेषयावः। किन्तु 'तपस्विजने दुःखं व्रतोपवासादिकं 'शीलयति' अभ्यसति यः तस्मिन् [कर्मोपपदेण: । अणोपवादः ] सति 'कः' को वा जनः तत्प्रथमार्थम् 'अभ्यर्थ्यताम्'? तापसाः सदा तपसि एव रताः तपो विहाय ते न यास्यन्ति। एषः 'दोषः सख्यौ' शकुन्तलां 'गामी' गन्ता [गमिगाम्यादीनामुपसंख्यानात् द्वितीयासमासः ] 'इति' हेतोः प्रवासात् प्रतिनिवृत्तस्य तातकाश्यपस्य' [सम्बन्धमात्रविवक्षया षष्ठी ] निवेदयितुं व्यवसिता' उद्युक्ता अपि शकुन्तलां दुष्यन्तेन परिणीताम्' ऊढाम् 'सत्त्व' जीवम् 'आपन्नां प्राप्तां गर्भिणीम् निवेदयितुं 'न पारयामि' न शक्नोमि। शकुन्तला च अनवहिता दुर्वाससमकोपयत्। तदस्मिन् वार्तोपाते दोषस्तस्या एव इति तातकण्वं न निवेदयामि। 'इत्थं गते एवं सति 'अस्माभिः' सखीजनैः 'किं करणीय न जानामि।

## NOTES

1. (a) प्रतिबुद्धापि—अपि समुच्चये। अप्रतिबुद्धा I cannot of course do anything; प्रतिबुद्धा too ( अपि ) I cannot, करणविषये प्रतिबुद्धाप्रतिबुद्धयोः समुच्चयः। (b) सखी पदं कारिता—Non causal form—सखी पदं कृतवती। Causal form, active—यः सखीं ( or सख्या ) पदं कारितवान्। Causal passive—येन सखि पदं कारिता or येन सख्या पदं कारितम्। सखी being the प्रयोज्यकर्म becomes उक्त by the कारिका—"अप्रधाने दुहादीनां प्रधाने नीहृकृष्वहाम् बुद्धिभक्षार्थयोः शब्दकर्मणाञ्च निजेच्छया। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥

2. विसर्जयामि—स्वार्थे णिच् । Compare "गौतमीं विसर्जयिष्यामि"—Act. III.

3. (a) तपस्विजने—तपस्विनां जनः लोकः समूह इत्यर्थः (or तपस्वी चासौ जनश्च) तपस्वीजनः । तस्मिन् । आधारे सप्तमी । (b) कः अभ्यर्थ्यताम्—Who is to be requested" means by काकु 'no one is to be requested" (c) आपन्नसत्त्वाम्—सत्त्वम् आपन्ना gives आपन्नसत्त्वा by the rule "प्राप्तापन्ने च द्वितीयया" । सत्त्वापन्ना is an optional form by the rule "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" । आपन्नं सत्त्वं यया इति बहुव्रीहिः is also allowable. (d) *अथवा &c.—Here she does not know what to do to have Sakuntala recognised by Dushyanta. The difficulty is caused by a combination of circumstances. First Dushyanta has forgotten all about it owing to the curse. Second, the sight of the ring will awaken the king's memory but there is none to carry it to the city. Third, she cannot move Kanva to arrange for the despatch of the ring, because she apprehends the sage might get displeased with his daughter. For he had left the hermitage leaving his daughter in charge to look after guests (c.f. दुहितरं शकुन्तलामतिथिसत्काराय सन्दिश्य—Ante.) which she signally failed to do in respect of such an august peasonage as Durvasas.

(प्रविश्य) प्रियंवदा (सहर्षम्)—सहि, तुवर तुवर सउन्दलाए पत्थाणकोदुअं णिव्वट्टिदुं [ सखि, त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् ] ।

[Entering] PRIYAMVADA (with joy)—Hasten, friend, hasten to perform the auspicious rites at Sakuntala's departure.

अनसूया—सहि कहं एदं [ सखि कथमेतत् ] ।

ANASUYA—How is this, friend ?

प्रियंवदा—सुणाहि । दाणिं सुहसइदपुच्छिआ सउन्दला-

---

* Adopted by Prof. Gajendragadkar.

सआअं गदम्हि ( शृणु । इदानीं सुखशयितप्रच्छिका शकुन्तला-सकाशं गतास्मि ]।

PRIYAMVADA—Listen. I just now went to Śakuntala as an inquirer of her easy sleep.

सखीति। 'शकुन्तलायाः प्रस्थानस्य' गमनसमयस्य भर्तृभवनयात्रायाः 'कौतुकं' मङ्गलं 'निर्वर्त्तयितुं' कर्त्तुं 'त्वरस्व' [ आवेगे छिद्रक्रम ] ।

शृणुविति। 'इदानीम्' अस्मिन्नेव क्षणे 'सुखशयितं सुखशयनम्' [ भावे क्तः ] पृच्छतीति 'सुखशयितप्रच्छिका' सुखं शयित न वा इति जिज्ञासार्थम् [ क्रियार्थायां क्रियायां ण्वुल् स्त्रियाम् ] 'शकुन्तलायाः सकाशं', समीपं 'गतास्मि'। [ 'सुखशयित-प्रच्छिका" ( रा-, वि- )—"सुखसुप्तिकाप्रश्ननिमित्तम्" ( त-, न्या- )—"सुख-शयितं प्रष्टुम्" ( म ) ] ।

NOTES

1. कौतकम्— Customary auspicious ceremonies परम्परायात-मङ्गलम्। 'कौतकं चाभिलाषे स्यादुत्सवे नर्महर्षयोः। परम्परासमायातमङ्गले च कुतूहले ॥'' इति विश्वः।

2. सुखशयितप्रच्छिका—शी + क्त भावे = शयितम् lying down ; hence sleep. सुखेन शयितम् सुखशयितम् sleep with ease, i.e. quiet sleep सहसुपेति समासः। तत् पृच्छतीति सुखशयित + प्रच्छ + ण्वुल् कर्त्तरि स्त्रियाम्। Raghava reads पृच्छिका। But there is no reason for सम्प्रसारण।

अनसूया— तदो तदो [ ततस्ततः ]।

ANASUYA—Then ? What then ?

प्रियंवदा—दाव एणं लज्जावनदमुहिं परिस्सजिअ सअं तादकस्सवेण एव्वं अहिणन्दिदं—दिट्ठिआ धुमाउलिददिट्ठिणो वि जअमाणस्स पाअए एव्व आहुदी पडिदा। वच्छे सुसिस्स-परिदिण्णा विअ विज्जा असोअणिज्जासि संवुत्ता। अज्ज एव्व इसिपरिक्खिदं तुमं भत्तुणो सआसं विसज्जेमि—त्ति ( तावत् एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकाश्यपेन एवमभि-

नन्दितम्—दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावके एव आहुतिः पतिता। वत्से सुशिष्यपरिदत्ता इव विद्या अशोचनीयासि संवृत्ता। अद्यैव ऋषिप्रतिरक्षितां त्वां भर्त्तुः सकाशं विसर्जयामि—इति ]।

PRIYAMVADA—Just then, by father Kasyapa himself after having embraced her, congratulation was thus pronounced, as she stood with her face turned down through bashfulness—'O joy! the oblation of the sacrificer, though he had his sight disturbed by smoke, has fallen into fire indeed. My child like knowledge made over to a deserving pupil, you have become one that can cause no regret. This very day I send you to your husband, protected by anchorites.

तावदिति। 'तावत्' तत्कालम् (तावद्वधौ) लज्जया अवनतमुखीम् एनां शकुन्तलां परिष्वज्य' आलिङ्ग्य 'स्वयं तातकाश्यपेन एवम्' अनेन प्रकारेण 'अभिनन्दितम् अभिनन्दनमुच्चारितम्। अभिनन्दनप्रकारं प्रगृ—'धूमेन 'आकुलिता' कलुषीकृता 'दृष्टिः' यस्य तथाविधस्य 'अपि यजमानस्य' याज्ञिकस्य (अनेन दर्शनव्याघातात् आहुतेः अन्यत्र पातशङ्कास्ति) 'आहुतिः दिष्ट्या भाग्येन 'पावके एव' अग्नौ एव, यथास्थानमेव इत्यर्थः 'पतिता' न तु अन्यत्र। त्वदर्थं योग्यं पात्रं नैव लब्धं मया तथापि त्वं सत्पात्रे एव पतिता इत्यर्थः। हे 'वत्से, सुशिष्याय परिदत्ता' यथाशास्त्रं दत्ता 'विद्या इव अशोचनीया संवृत्ता 'असि' इदानीं शोच्या न भवसि। 'अद्यैव त्वाम् ऋषिभिः प्रतिरक्षितां गोपितां कृत्वा 'भर्त्तुः सकाशं समीपे विसर्जयामि' प्रेषयामि [ वर्त्तमानसामीप्ये भविष्यति लट् ]—'इति' एवं तेन अभिनन्दितम्।

## NOTES

1. (a) अभिनन्दितम्—अभि + नन्द् + क्त भावे। There is no शेषविवक्षा hence we have अनुक्ते कर्त्तरि तृतीया in तातकाश्यपेन। तातकाश्यपेन अभिनन्दितम् = Congratulation was uttered by तातकाश्यप। (b) दिष्ट्या—An अव्यय expressing हर्ष joy. "दिष्ट्या हर्षे मङ्गले च" इति मेदिनी। (c) दिष्ट्या···पतिता—Implies I did not see (आकुलितदृष्टि) that in

Dushyanta there was a suitable husband for you. Yet chance wedded you to him.

2. सुशिष्य &c.—It is a pity that knowledge should be imparted to a bad pupil. Sciences become अशोचनीय when their recepient is virtuous. Cf. "कुशिष्यमध्यापयत: कुतोयश:", also Manu—"विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम। असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा॥ यमेव तु शुचिं विद्या नियतं ब्रह्मचारिणम्। तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने॥"—Quoted by Vidyasagara,

अनसूया—अह केण सूइदो तादकस्सवस्स वुत्तन्तो (अथ केन सूचितस्तातकाश्यपस्य वृत्तान्त:)।

ANASUYA—But by whom was the matter revealed to father Kasyapa?

प्रियंवदा—अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाणिआए (अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या)।

PRIYAMVADA—By a metrical utterance without a body, when he entered the fire-house.

अनसूया (सविस्मयम्)—कहेहि (कथय)।

ANASUYA (With wonder)—Reproduce.

प्रियंवदा (संस्कृतमाश्रित्य)—

दुष्यन्तेनाहितं तेजो दधानां भूतये भुव:।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव॥६॥

PRIYAMVADA—(Speaking Sanskrit)—O Brahman. consider they daughter—who for the glory of the world, is bearing the energy deposited by Dushyanta—as like the Sami tree that has fire within,

अथेति। 'अह' अथ, केन 'तादकास्सवस्स' तातकाश्यपाय इत्यर्थ: [ चतुर्थ्यर्थे विभक्त्या षष्ठी ] वृत्तान्त: 'सूचित:'

अग्निशरणमिति। 'शरीर' देह' विना छन्दोमयया वाक्यात्मिकया 'वाण्या' वाचा देववाण्या इत्यर्थः 'अग्नीनां शरणं गृहं वेतानिसदनमित्यर्थः 'प्रविष्टस्य' तातकाश्यपस्य' ( चतुर्थ्यर्थे षष्ठी ) वृत्तान्तः सूचितः [ "वाण्या" ( रा, वि- )—"वाचा" ( त- न्या-, म- ) ] ॥

प्रियंवदेति। 'संस्कृत' देवभाषाम् आश्रित्य अवलम्ब्य। आभिः प्राकृतं वाच्यम्, इह तु देववाण्या अनुकरणार्थं संस्कृतमाश्रितम्।

दुष्यन्तेति। अन्वयः—हे ब्रह्मन्, दुष्यन्तेन आहितं तेजो भुवो भूतये दधानां तनयाम् अग्निगर्भां शमीमिव अवेहि। व्याख्या—हे ब्रह्मन्' वेदविदां वर काश्यप 'दुष्यन्तेन' राज्ञा आहितं' कृताधानं 'तेजः भुवो' जगतो 'भूतये' मङ्गलाय मङ्गल- निमित्तमित्यर्थः 'दधानां धारयन्तीं 'तनयां' कन्यां शकुन्तलाम् 'अग्निगर्भे, यस्या तथा- विधाम् ( गड्वादीनामाकृतिगणत्वात् सप्तम्याः परनिपातः) पूतामित्यर्थः 'शमीमिव' शमीनाम्ना ख्यातं वृक्षविशेषमिव 'अवेहि' जानीहि। मन्ये कन्यकार्थमनेनकया प्रबोधितः काश्यपः ॥

## NOTES

1. अग्निशरणम्—शरण is गृह here. 'शरणं गृहरक्षित्रोः' इत्यमरः।

2. संस्कृतमाश्रित्य—Usually ascetic females speak प्राकृत। "योषा विदूषकोन्मत्तबालतापसयोषिताम् ··विद्वद्भिः प्राकृतं कार्यं कारणात् संस्कृतं क्वचित्॥" —मातृगुप्त quoted by Raghava.

3. (a दुष्यन्तेन—नाममात्रग्रहणात् 'किमप्याभिजात्यमौदार्यशौर्यविनयादि- गुणसम्पन्नत्वं व्यज्यते"—Raghava. (b) दधानाम्—Here the क्रियाफल is भुवो भूतिः which benefits भू। So the परस्मैपद is expected. अकर्त्रभि- प्रायेऽपि अत्र आत्मनेपदम्। (c) भूतये भुवः—This indicates भाविचक्रवर्तित्व of the child in the womb—Raghava. (d) अग्निगर्भाम्—तेजस् is compared with अग्नि by implication. Hence अस्या दुगर्भयोगात्पूता शकुन्तला जगत्पावनीव जाता इति ध्वनिः। The allusion is to Fire who bearing the energy of Siva entered first the अश्वत्थ and then the शमी to allay the heat which he was feeling within himself Since then he has continued to resideinside the शमी tree.

**अनसूया ( प्रियंवदामाश्लिष्य )—सहि पिअं मे पिअं मे। किन्तु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परि-**

तोसं अणुहोमि (सखि प्रियं मे प्रियं मे। किन्तु अद्य एव शकुन्तला नीयते इति उत्कण्ठासाधारणं परितोषम् अनुभवामि)

ANASUYA—(Embracing Priyamvada)—Joy to me! friend, joy to me! But I feel pleasure co-extensive with regret, be cause Sakuntala is being taken away this very day.

प्रियंवदा—सहि वअं दाव उक्कण्टं विनोदइस्सामो। सा तवस्सिणी णिव्वुदा होदु (सखि आवां तावदुत्कण्ठां विनोदयिष्याव:। सा तपस्विनी निर्वृत्ता भवतु)।

PRIYAMVADA—Friend, we will allay our anxiety. Let that poor creature be happy.

अनसूयेति—'आश्लिष्य आलिङ्ग्य। हर्षात् इति भाव:।

सखीति। एतत् 'मे प्रियम्'। मम मे हितकरम्। 'किन्तु अद्य शकुन्तला नीयते इति हेतो: 'उत्कण्ठया' खेदेन 'साधारण समान 'परितोषम् अनुभवामि'। भर्ता सङ्गस्यते शकुन्तला इति परितोष: किन्तु अद्यैव याति इति खेद:।

सखीति। 'विनोदयिष्याव: लघयिष्याव:। 'तपस्विनी' दीना शकुन्तला ['तपस्वी तापसे दीने" इति हैम:] 'निर्वृत्ता' सुखिनी भवतु'।

NOTES

I. उत्कण्ठा &c.—For साधारण see under "साधारणोऽयं प्रणय:"—Act III. Or साधारण = समानाधिकरण having the same location, i e. co-extensive. उत्कण्ठनम् इति उद् + कण्ठ + अ भावे = उत्कण्ठा anxiety "रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा:॥

2. तपस्विनी—तपस् + विनि मत्वर्थे स्त्रियाम्। It means here अनुकम्पार्हा pitiable—"तपस्वी चानुकम्पार्ह:" इत्यमर:।

अनसूया—तेण हि एदस्सिं चुदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालान्तरक्खमा णिक्खित्ता मए केसरमालिआ। ता इमं हत्थसण्णिहिदं करेहि। जाव अहंवि से मिअरोअणं तित्थमित्तिअं दुव्वाकिसलआणि त्ति मङ्गलसमा-

सम्भयाणि विरएमि । [ तेन हि—एतस्मिंश्चूतशाखावलम्बिते नारिकेरसमुद्गके एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केशरमालिका । तदिमां हस्तसन्निहितां कुरु । यावत् अहमपि मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि इति मङ्गलसमालम्भनानि विरचयामि ) ।

ANASUYA—Well then, in this cocoanut basket suspended on the mango twig was placed by me, for this very purpose, a Vakula-garland suited to stand a lapse of time; so make it here at hand, whilst I too prepare the auspicious decorations, viz Gorochana, clay from holy places and young shoots of the Durva grass.

तेनेति । 'तेन हि' तस्मादेव निमित्तात् । यतःत्वरा कर्त्तव्या अतः । 'चूतशाखायाम्' आम्रशाखायाम्' 'अवलम्बिते एतस्मिन् नारिकेरस्य' नारिकेलस्य 'समुद्गके' सम्पुटके 'एतन्निमित्तमेव प्रस्थानकौतुकसम्पादनार्थमेव 'मया कालान्तर' दिनात्ययं 'क्षमते' इति 'कालान्तरक्षमा' [इति णः] गतेऽपि काले अम्लाना 'केशरमालिका' वकुलमाला 'निक्षिप्ता' स्थापिता । 'तत' तस्मात् यतः एतन्निमित्तं रचिता तस्मात् 'इमां मालां 'हस्तयोः सन्निहितां समीपस्थां 'कुरु' । उद्धर आस्ते, एनां भूमिं प्रापय इत्यर्थः । 'यावत्' अवधौ । 'अहमपि मृगरोचनां' गोरोचनाम् [ 'मृगः पशौ कुरङ्गे च' इति विश्वः ] 'तीर्थस्य' तीर्थस्थानस्य 'मृत्तिकां दूर्वाणां 'किसलयानि' अङ्कुरान् 'इति' एतानि 'मङ्गलानि' मङ्गलार्थानि 'समालम्भनानि' अलङ्करणानि' [ "समालम्भमालेपे तिलकेऽलङ्कृतावपि" इति यादवः ] 'विरचयामि' । ( यावद्योगे भविष्यति लट् ) ।

NOTES

1. इति मङ्गलसमा &c.—समालभ्यन्ते एभिः इति सम् + आ + लभ + ल्युट् करणे = समालम्भनानि decorations अलङ्करणानि । 'लभेश्च' इति नुम् । Vidyasagara takes समालम्भन = आलेप unguent. The plural in समालम्भनानि seems to go against this sense. The Bengali Rec. however has the singular. The इति may also mean इत्यादीनि । Compare "मङ्गलसमालम्भनं विरचयावः"—Infra. "मे सक्षौमखनम्"—Ibid

"आश्रमसुलभैः प्रसाधनैः"—Ibid, which are all in favour taking समालम्भन = अलङ्करण।

प्रियंवदा—तह करोमदु (तथा क्रियताम्)। (अनसूया निष्क्रान्ता। प्रियंवदा नाट्येन सुमनसो गृह्णाति)।

PRIYAMVADA—Be it so done (Exit Anasuya—Priyamvada acts the gathering of flowers).

नेपथ्ये—गौतमि, आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय।

IN THE DRESSING ROOM—Gautami, let Sarnagarva and others be ordered to escort Sakuntala.

प्रियंवदा—(कर्णं दत्वा) अनसूए, तुवर तुवर एदे क्खु हत्थिणाउरगामिणो इसिओ सद्दावीअन्ति (अनसूये, त्वरस्व त्वरस्व। एते खलु हस्तिनापुरगामिनः ऋषयः शब्दाय्यन्ते)।

PRIYAMVADA—(Listening)—Hasten, Anasuya, hasten, The sages to go to Hastinapura are indeed being called.

(प्रविश्य समालम्भनहस्ता) अनसूया—सहि, एहि एहि गच्छम्ह (सखि, एहि एहि गच्छावः)। (परिक्रामतः)॥

ANASUYA (Entering with the decorations in hand)—Come friend, we go. (They walk round).

अनसूयेति। सुमनसो गृह्णाति' पुष्पाणि चिनोति [मूलम्—( रा-, वि-, म- )—] प्रियंवदा तथा करोति। अनसूया निष्क्रान्ता" ( त-, ना- )॥ 'तथा करोति' नारिकेलसमुद्गकं शाखाखाया अवतारयति ]॥

गौतमीति। 'शकुन्तलायाः नयनम्' इतो हस्तिनापुरप्रापणम्। तस्मै [ तादर्थ्ये चतुर्थी ] 'शार्ङ्गरवप्रभृतयः 'आदिश्यन्ताम्'।

अनसूये इति। 'हस्तिनापुरं गामिनः ऋषयः शब्दाय्यन्ते' शब्दं कार्यन्ते [शब्द-वैर—" इति क्यङ्। ततोणिच्। अणिकर्तुः कर्मसंज्ञा। उक्ते कर्मणि प्रथमा]। [ 'शब्दायन्ते" ( रा-, वि-, म- )—रा-, वि-, म-॥—"शब्दायन्ते" ( त-, ना- )।

प्रविश्यन्ति । समालम्भनानि मङ्गलालङ्करणानि हस्ते यस्याः [ मङ्गलादेराकृतिगणत्वात् सप्तम्याः परनिपातः ] ।

## NOTES

1. सुमनस:—Usually feminine plural in the sense of flowers "आप: सुमनसो वर्षा अप्सर:सिकता समा: । एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्" ।

2. शाङ्गरवमिश्रा:—शाङ्गरवेण मिश्रा: Sarnagarva and others. ३तत् । Or मिश्र is प्रशंसावचन when it occurs as final in a compound and then forms a नित्यसमास । Thus शाङ्गरव: प्रधान येषां ते शाङ्गरवमिश्रा: । 'मतल्लिकोद्‌मिश्रा: सुा: प्रकाण्डस्थलभित्तय:'' इतिगणरत्नमहोदधि. । See आर्यमिश्र also.

3 (a) हस्तिनापुरगामिन:—२तत्—[See Tika] । गामिन् in the उत्तरपद is of the क्षुभ्नादि class and does not take the cerebral ण । This is inferred from the rule 'प्रष्टोऽग्रगामिनि'' which has the dental न , Prof. Gajendragadkar reads गामिण: with the cerebral and condemns our गामिन: as wrong He does not admit गामिन् to be of the क्षुभ्नादि गण 'as it is not specifically mentioned in it" and appeals to निपातन, for the dental in ''प्रष्टोऽग्रगामिनि'' । Here in the first place mention is not necessary in the case of क्षुभ्नादि गण, because this is not a closed list. Words have to be included into it from usage [ आकृतिगण ] । Grammarians unanimously declare that "अविहितलक्षणो णत्वप्रतिषेध: क्षुभ्नादिषु द्रष्टव्य:' ।

Secondly, निपातन will not do because न (dental) is seen with numerous other पूर्वपदs besides अग्र । Thus 'सर्वस्वाग्रग्रभूताश्च ते नरा: स्वर्गगामिन:'' (Narayana) with स्वर्ग as the पूर्वपद, 'स्रोतोवहा सागरगामिनीव'' (Kalidasa) with सागर for पूर्वपद. 'पूर्वसागरगामिनीम्'' (Kalidasa) the पूर्वपद being पूर्वसागर, ''कलगामिनि" (Haradatta, Bhattoji &c.) with कल as the पूर्वपद, 'नरा निरयगामिन:'' (Vyasa = Padmapurana) with निरय as the पूर्वपद &c. All these apparent anomalies disappear if गामिन् is included in the क्षुभ्नादि list. (b) शब्दायन्ते—are made to speak out. i. e. they are called and they answer. With the reading शब्दायन्ते the sense is शब्दं कुर्वन्ति they shout ( शब्द + क्यङ् करणे = शब्दाय) they make a noise. But no

more shouting is intended. They are made to respond. Hence we must have णिच्। Thus शब्दाय (नाम धातु) + णिच् = शब्दायि to cause to speak. शब्दायि + कर्मणि लट् अन्ते = शब्दायन्ते। Now शब्दाय is अकर्मक because the कर्म is included in the धात्वर्थ "धात्वर्थेनोपसंग्रहात् —कर्मणोऽकर्मिका क्रिया"। Hence आश्रम: (अणिकर्त्ता) शब्दायते becomes with णिच attached गौतमी आश्रमम् (अणिकर्तु: कर्मत्वं वा) शब्दाययति by the rule "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ"। In the कर्मवाच्य we get गौतम्या आश्रम: शब्दाय्यते। Note that without णिच् the यक् will be in the भाववाच्य giving ऋषिभि: शब्दाय्यते।

प्रियंवदा (विलोक्य)—एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दिअमाणा सउन्तला चिट्ठइ। उवसप्पह्म णं [एषा सूर्योदये एव शिखामज्जिता प्रतीष्टनीवारहस्ताभि: स्वस्तिवाचनिकाभि: तापसीभि: अभिनन्द्यमाना शकुन्तला तिष्ठति। उपसर्पाम एनाम्] (उपसर्पत:)।

PRIYAMVADA (Looking)—There at the very rise of the sun bathed with a plunge up to the crest, stands Sakuntala being congratulated by Tapasa-women who have come carrying picked wild-grain in their hands to pronounce benediction. Let us approach her. (They approach her).

(तत: प्रविशति यथोद्दिष्टव्यापारा आसनस्था शकुन्तला)

(शकुन्तलां प्रति) तापसीनामन्यतमा—जादे, भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि (जाते, भर्त्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व)।

(Then enters on a seat Sakuntala engaged as described).

ONE ASCETIC WOMAN (To Sakuntala)—Child, may you acquire the title "Chief Queen" indicative of thy husband's great esteem—[Monier Williams].

एषेति। 'एषा शकुन्तला सूर्य्योदये एव शिखामज्जिता' शिखामज्जनपूर्वकं कृता-वगाहा सती 'प्रतीष्टा' गृहीता सत्कृत्य गृहीता इत्यर्थः, ये 'नीवाराः' ते इष्टं यासां ताभिः, स्वस्तिवाचन" मंगलोच्चारणं यासां आगताभिः 'तापसीभिः, अभिनन्द्यमाना तिष्ठति'। 'एनाम् उपसर्पाव:' अस्याः समीपे गच्छाव: ( उपसर्गवशात् सकर्मकत्वम् )। [ 'प्रतीष्ट' ( स० वि० व्या० ) – "प्रतिष्ठित" ( रा म० ) ]।

तत इति। 'उद्दिष्टस्य' वर्णितस्य अनतिक्रमः 'यथोद्दिष्टम्'। तस्मात् 'यथोद्दिष्टः" ( मत्वर्थीयोऽच्प्रत्ययः )। तादृशो 'व्यापारो' यस्याः सा। कृतस्नाना तापसीभिरभि-नन्द्यमाना इत्यर्थः।

शकुन्तलामिति। 'तापसीनाम्' ( निर्द्धारे षष्ठी ) 'अन्यतमा' एका ( अन्यतमेति अव्युत्पन्नं प्रतिपादिकम् )।

जाते इति। 'भर्त्तु' पत्युः 'बहुमानस्य' पूजायाः 'सूचकम्' 'अभिवाचकं' 'महा-देवी' इति 'शब्दम्' आप्नुहि 'लभस्व'। भर्त्रा चर्चिता देवीषु च श्रेष्ठा भव।

## NOTES

1. (a) शिखा is चूडा crest. 'शिखावमालं चूडायाम्" इत्यादि हेम:। शिखामज्जिता—मस्ज + णिच् + क्त कर्मणि = मज्जिता caused to dive. शिखायां मज्जिता। Or मज्जनं मज्जः। भावे घञ्। शिखाया मज्जः शिखामज्जः im-mersion of the crest. स सञ्जातः अस्या इति शिखामज्ज + इतच् स्त्रियाम्। (b) प्रतीष्ट &c.—प्रति + इष + क्त कर्मणि = प्रतीष्टाः carried. नितरां व्रियन्ते इति नि + वृ + घञ् कर्मणि = नीवाराः wild grains. नि becomes नी by the rule "उपसर्गस्य घञि अमनुष्ये बहुलम्"। प्रतीष्टा नीवाराः प्रतीष्टनीवाराः। ते इष्टं यासां ताभिः। The सप्तम्यन्त word इष्ट is placed last as in वह्न्याहि।" Compare—कर्मकृतपाणि, पाणिगृहीता, समरपापरता &c. (c) स्वस्तिवाचनिकाभिः— वचनकर्मणि प्रेरणम् इति वच + णिच् + ल्युट् भावे = वाचनम् स्वस्ति इत्यस्य वाचनं स्वस्तिवाचनम्। In auspicious ceremonies worthy Brahmanas have to be approached with the request "Do you say blessing" स्वस्ति भवन्तो ब्रुवन्तु। Thus urged the Brahmanas say "Let there be blessing unto thee" स्वस्त्यस्तु। This urging to say स्वस्ति is स्वस्ति वाचन। Those who urge are called स्वस्तिवाचनिक (see below) "संपूज्य

मन्त्रमात्रोत्थाथैर्ब्राह्मणान् स्वस्ति वाचयेत्। अर्घ्य' कर्म'णि मात्रध्ये स यात्रिऽरक्षुत-दर्शने॥" Raghava explains पारम्पर्य'ण च स्वस्तिवाचनाधिकारिभोमि:'। Hence his derivation is स्वस्तिवाचने नियुक्ता अधिकृता वा इति स्वस्तिवाचन +ठक=स्वस्तिवाचनिका: by the rule "तत्र नियुक्त:"। This is open to two objections—First, ठक requires ऐच to come in after व in स्वस्ति by the rule "द्वारादीनाञ्च"—स्वस्ति being of the द्वारादि class. The form then is सौवस्तिवाचनिक। Second in the feminine, this gives सौवस्तिवाचनिकी। Nor can we say that the affix is ठन् and not ठक, for in this sense we can have ठन only after compounds ending in अगार as देवागारिका कोष्टागारिका &c. Again स्वस्ति-वाचन' प्रयोजनमासाम् gives स्वस्तिवाचना by the Varttika "पुण्याहवाचना-दिभ्यो लुक्", the भाष्यकार classing पुण्याहवाचन, शान्तिवाचन and स्वस्ति-वाचन together. I therefore porpose to derive thus—स्वस्ति वाचयन्ति इति स्वस्ति + वच् + णिच् + ल्युट् क'र्त्रि बाहुलकात = स्वस्तिवाचना:। त एव स्वस्तिवाचनका: with कन स्वार्थे। स्त्रियां स्वस्तिवाचनिका:। ताभि:।

2. प्रविशति—The stage direction is apparently anomalous. If शकुन्तला is आसनस्था she cannot be described as प्रविशति। Hence the direction indicates the existence of some sort of curtain behind the friends, which is now removed disclosing Sakuntala engaged as described. प्रविशति then means दर्श'काणां नेपथ्य' प्रविशति।

3. अन्यतमा - अन्यतर and अन्यतम are not derived from अन्य with the affixes डतर and डतम। If they were, पाणिनि would not have specifically mentioned अन्यतर as a सर्व'नाम as he has done in the सर्वादि list, after having declared that डतर and डतम affixes produce सर्व'नाम words. अन्यतम does not appear in the सर्वादि list; it is not therefore a सर्व'नाम। See note on अन्यतरा—Act. III

4. (a) बहुमानसूचकम्—मन + घञ् भावे = मान: esteem. बहु: मान: great esteem. तं सूचयतीति or तस्य सूचकम्। (b) महादेवी &c.—महती देवी महादेवी the great queen i. e. chief queen. देवी has a technical sense. It means the queen, that joins the king at coronation (अभिषेक)। "देवी कृताभिषेकायामितरासु च भट्टिनी" इत्यमर:। Thus शकुन्तला was not even entitled to be called a देवी।

If then she came to be called महादेवी it would only indicate her husband's great esteem ( बहुमान ) for her ।*

द्वितीया—वच्छे, वीरप्पसविणी होहि [वत्से वीरप्रसविनी भव ]।

SECOND—Child, may you give birth to a hero.

तृतीया—वच्छे भत्तुणो बहुमदा होहि [वत्से भर्तुर्बहुमता भव ]। ( आशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः )।

THIRD—Child may you be greatly esteemed by your husband. (Exeunt all except Gautami after bestowing blessings).

सख्यौ ( उपसृत्य )—सहि, सुहमज्जणं दे होदु [ सखि, सुखमज्जनं ते भवतु ]।

FRIENDS—(Approaching)—Friend, may this be a happy bath to you.

शकुन्तला—साअदं मे सहीणं। इदो णिसीदह [ स्वागतं मे सखीभ्याम्। इतो निषीदतम् ]।

SAKUNTALA—Welcome to my friends. Sit down here.

उभे ( मङ्गलपात्राण्यादाय उपविश्य )—हला सज्जा होहि जाव मङ्गलसमालम्भणं विरएव [ हला सज्जा भव यावन्मङ्गल-समालम्भनं विरचयावः ]।

BOTH (Taking up the pots of auspicious things and sitting down)—Get ready, dear, we will perform your auspicious decorations.

द्वितीयेति। वीरमपत्यं प्रसूते इति 'वीरप्रसविनी' वीरसूः 'भव'। ( एष ते गर्भो वीरं जनयतु )।

---

* Adopted by Prof. Gajendragadkar.

...शतीति। 'भर्तुः' पत्युः 'बहुमता' प्रिया 'भव'। नैवं प्रथमाया आशिषः पुनरुक्तिः। या हि अर्चिता सैव प्रिया इति नास्ति नियमः। "अर्चिता तस्य कौशल्या प्रिया कैकयवंशजा" इत्यादिषु भेददर्शनात्।

आशिष इति। 'गौतमीं वर्जयित्वा' (अपरीप्सायामपि द्वितीयोपपदादमुल्) इति गौतमीवर्जं 'निष्क्रान्ताः'।

सख्यौ इति। सुखयतीति सुखं 'सुखकरम् [ यथायथ् ] 'मज्जनम्' अवगाहः 'ते भवतु'। आपृच्छ्य ब्रज्यमानयोः सख्योरियमिदाशंसा।

शकुन्तलेति। 'स्नानं शुभावहम्' 'मे सख्योर्भवतु। 'इत' अत्र मत्समीपे 'निषीदतम्' उपविशतम्।

उभे इति। 'मङ्गलार्थं' मङ्गलद्रव्याणि 'पात्राणि' भाजनानि 'आदाय' गृहीत्वा 'उपविश्य' आहतुः। 'सज्जा' उद्युक्ता 'भव'। 'यावत् [ अवधारणे ] 'मङ्गलार्थे' 'समालम्भनम्' अलङ्करणं 'विरचयावः'।

NOTES

1. वीरप्रसविनी—वीर + प्र + सू + इनि कर्तरि ताच्छील्ये साधुकारिणि वा।

2. (a) भर्तुः—'क्तस्य च वर्तमाने' इति अनुक्ते कर्तरि षष्ठी। (b) बहुमता—मन + क्त कर्मणि स्त्रियाम् = मता desired ईप्सिता। बहु मता बहुमता gretly desired i. e. loved. "मतिरिच्छा"—Vrittikara. The first तापसी wishes her honour (बहुमान) from her husband; this one desires that she may enjoy his love. Thus it is not a repitition of the other.

3. गौतमीवर्जम्—गौतमी + वर्जि + णमुल् By the rule "द्वितीयायाञ्च" we may have णमुल् with a द्वितीयान्त उपपद if the compound implies haste ( परीप्सा )। Here no haste is implied, yet we have णमुल्। In another place the poet writes "अभितः परिवारसङ्घात् सङ्घवर्जमयीभवा"। Haradatta thinks परीप्सा (haste) may be absent in some cases ( प्रायिकम् )। 'द्वितीयायाञ्च इति णमुल्। तत्र हि परीप्सायामिति प्रायिकम्"; Panini himself compounds एकवर्जम् without परीप्सा in "अनुदात्तं पदमेकवर्जम्।

4. (a) सख्योर्म्याम्—स्नानं like गन्ध, पुष्प, धूप, दीप &c. is a पूजोपचार। Compare "पाद्यं स्नानं पात्रमध्यं माचमनीयकम्। मधुपर्काचमनस्नान-

चरणाभरणानि च। गन्धपुष्पं धूपदीपौ नैवेद्यं चन्दनं तथा। प्रतीकयेदन्न गायानुप-चारांस्तु षोडश॥" सखीभ्याम—It is usual to have चतुर्थी when स्वागत is an उपचार। Thus "वस इव नमिश्चलित दृशः स्वागीश्चिन्तयी। तेर्व ते परमीशाक स्वागतं व्याजहार।" Some read सख्योः-शेषे षष्ठी as in "स्वागतं राजदारि-कायाः"—Bhasa; "स्वागतं तपोधनायाः"—uttara. (b) निषीदतम्—सद becomes षद by the rule "सदिरप्रतेः"। Hence निषीदतम्, विषीदतम् &c. but witness प्रतिसीदतम्।

5. सज्जा—सज्जते इति सस्ज+अच् कर्त्तरि स्त्रियाम्।

शकुन्तला—इदंवि बहुमन्तव्वं दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि [इदमपि बहुमन्तव्यम्। दुर्लभमिदानीं मे सखीमण्डनं भविष्यति]। (वाष्पं विसृजति)।

SAKUNTALA—This too has to be highly esteemed. Decoration by my friends will now be rare for me. (Sheds tears).

उभे—सहि उइदं ण दे मङ्गलकाले रोइदुं [सखि, उचितं न ते मङ्गलकाले रोदितुम्]। (अश्रूणि प्रमृज्य नाटोन प्रसाधयतः)।

BOTH—Friend, it is not proper for you to weep at an auspicious moment. (Wiping away her tears, they act decorating).

प्रियंवदा—आहरणोइदं रूपं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि [आभरणोचितं रूपम् आश्रमसुलभैः प्रसाधनै-विप्रकार्य्यते]।

PRIYAMVADA—The beauty that deserves jewellery is insulted by decorations available in a hermitage.

शकुन्तलेति। 'इदमपि' सखीभ्याम् अलङ्करणमपि मे 'बहुमन्तव्यम्' आदर्त्तव्यम्। कुत इत्याह—इदानीं' दूरस्थायां मयि 'सखीभ्यां मण्डनं प्रसाधनं 'मे' मम सम्बन्धे [शेषे षष्ठी। "न लोकेति—"कर्त्तृषष्ठ्या निषेधात्] 'दुलभं भविष्यति'। 'वाष्प विसृजति' मुञ्चति, रोदिति इत्यर्थः। दुर्भिमित्तमेतत् भाविनो महती व्यसनस्य सूचकम्।

क्षमे इति। मङ्गलस्य काले अपि, प्रसाधनक्षणे इत्यर्थः 'ते रोदितुं न उचितम्' अनर्हम्। अयुक्तमेतद्रोदनं तस्मा रोदीः। 'अश्रूणि' शकुन्तलाया नेत्रजलानि 'प्रमृज्य' मोचयित्वा 'नाट्येन' अभिनयकर्मणा 'प्रसाधयतः' प्रसाधनम् अलङ्करणं नाटयतः इत्यर्थः।

प्रियंवदेति। 'आभरणानां' पद्मादिलङ्काराणाम् 'उचितं' योग्यं 'रूप' कान्तिः। 'आश्रमे सुलभैः' सुखप्राप्यैः 'प्रसाधनैः' मञ्जरीनवपल्लवादिभिरलङ्करणैः 'विप्रकार्यते' प्रदूष्यते। एभिस्ते मण्डनं धर्षणा एव।

NOTES

1. दुर्लभम्—दुःखेन लभ्यते इति दुर् + लभ् + खल् कर्मणि। लभ् does not become लम्भ owing to the prohibition "न सुदुर्भ्यां केवलाभ्याम्"—लभ will not have नुम् in खल् and घञ् unless some other उपसर्ग is coupled with सु or दुर्। Thus दुर्लभ, सुलभम् सुदुर्लभम &c.—but दुरालम्भ सुप्रलम्भ &c दुरालभा is a कृताप्रष्द and therefore स्वप्रमाण।

2. रोदितुम्—रुद + तुमुन् भावे by the maxim "अव्ययकृतो भावे"। The sense is रोदनम्। Hence the construction is clear—मङ्गलकाले रोदितुम् रोदनम् ते तव सम्बन्धि उचितं युक्तं न। उचितम् qualifies रोदितुम्। ते goes with उचितम् and not with रोदितुम्, for then we shall have त्वया instead of ते owing to the prohibition "न लोकाव्यय निष्ठाखलर्थ-तनाम्" because रोदितुम् is an अव्यय।

3. (a) प्रसाधनैः—प्रसाध्यते एभिः इति प्र + साध् + णिच् + ल्युट् करणे = प्रसाधनानि decorations. Refers to the मङ्गलसमालम्भनानि spoken of above. (b) विप्रकार्यते—वि + प्र + कृ + णिच + लट् ते कर्मणि। The णिच is स्वार्थे because विप्रकृ without णिच means to insult. Thus "विप्र-कृतोऽपि रोषणतया मा स्म प्रतीप गमः.—Infra, "विप्रकृतः पन्नगः फणं कुरुते"—Infra; "विप्रकृताः तारकेण दिवौकसः"—Kumara; Or thus—वि + प्र + कृ + घञ् भावे = विप्रकारः insult, or perversion अन्यथाकरणम्। विप्रकारेण दूषयति इति विप्रकार + णिच + लट्ति = विप्रकारयति mars by alteration. This sort of णिच is seen in cases like असिना हन्ति असयति; दात्रेण लुनाति दात्रयति &c; and is allowed by the गणसूत्र "कर्तृकरणात् धात्वर्थे"—The instrument (करण) of the agent (कर्तृ) takes णिच and then becomes a धातु। Now in the कर्तृवाच्य we have प्रसाधनानि रूपं विप्रकारयन्ति the decorations mar the beauty by alternation. In कर्मणि it becomes प्रसाधनैः रूपं विप्रकार्यते।

(प्रविश्य उपायनहस्तौ) ऋषिकुमारकौ—इदमलङ्करणम्। अलङ्क्रियतामत्रभवती। (सर्वा विलोक्य विस्मिताः)।

TWO HERMIT LADS (Entering with present in hand)—Here is jewellary ; let her honoured self be decorated (All are amazed on seeing these).

गौतमी—वच्छ णारअ कुदो एदं [वत्स नारद, कुत एतत्]।

GAUTAMI—Child Narada , whence is this ?

प्रथमः—तातकाश्यपप्रभावात्।

FIRSF - Through Father Kasyapa's majesty,

गौतमी—किं माणसी सिद्धि (किं मानसी सिद्धिः)।

GAUTAMI—What ! A mental creation ?

प्रविश्येति। उपेयन्ते एभिरित्युपायनानि उपहारद्रव्याणि (करणे ल्युट्) 'हस्ते' ययोः तौ [गड्वादीनामाकृतिगणत्वात् सप्तम्याः परनिपातः]। 'सर्वा' आभरणानि 'विलोक्य विस्मिताः'। महार्हत्वात् अतर्कितोपस्थित्या च विस्मयः।

गौतमीति। 'कुतः' कुतो लब्धम् 'एतत्'।

प्रथमेति। 'तातकाश्यपस्य प्रकृष्टात् भावात्' एतत् प्राप्तम्। तातस्य माहात्म्यात्। गौतमीति। 'किं' मनस इयं 'मानसी सिद्धिः' कृतिः? किमेतत् तव प्रभावात् मनसा कृतं तत्रभवता? .

NOTES

1. तातकाश्यपप्रभावात्—भू+घञ् भावे=भावः। प्रकृष्टो भावः प्रभावः majesty. प्रादितत्—। प्र+भू does not take घञ् because of the prohibition अनुपसर्गे in the rule—श्रिणीभुवोऽनुपसर्गे। [illegible]।

द्वितीयः—न खलु। श्रूयताम्। तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति। तत इदानीम्—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैर्
दत्तान्याभरणानि नः किसलयोद्भेदप्रतिद्वन्द्विभिः ॥७॥

SECOND—Certainly not. Listen. By his reverence we were thus commanded—"Collect flowers from the trees for Sakuntala." Now, then, unto us by a certain tree was exhibited an auspicious silk-garment white like the moon ; by a certain other one was poured liquid lac, nice for dying the feet with ; from others were delivered ornaments by the palms of wood-nymphs protruded up to the wrist and vying with the show of fresh twigs.

द्वितीय इति। 'न खलु' नैव मानसी सिद्धिः। 'श्रूयतां' तस्मात् आकर्ण्यताम् 'शकुन्तला' एव 'हेतुः' कारणं 'शकुन्तलाहेतुः' तस्मात् [ हेतौ पञ्चमी ] तस्य वा [ शेषे षष्ठी ] 'कुसुमानि वनस्पतिभ्यः' वृक्षेभ्यः [ "वनस्पतिर्ना द्रुमात्रे" इति मेदिनी। पारस्करादिः ] 'आहरत' आनयत यूयम् 'इति वयमाज्ञप्ताः तत्रभवता काश्यपेन'।

क्षौममिति। अन्वयः—तत्र इदानीं नः केनचित् तरुणा इन्दुपाण्डु माङ्गल्यं क्षौमम् आविष्कृतम्। केनचित् चरणोपरागसुभगो लाक्षारसो निष्ठ्यूतः। अन्येभ्यः आपर्वभागोत्थितैः किसलयोद्भेदप्रतिद्वन्द्विभिः वनदेवताकरतलैः आभरणानि दत्तानि।

व्याख्या—तत्र प्रस्थितेषु अस्मासु 'इदानीम्' अधुना 'नः' अस्माकम् [ "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति चतुर्थी ] 'केनचित् तरुणा 'इन्दुः' चन्द्र इव पाण्डु' धवलम् अतएव 'माङ्गल्यं' मङ्गलकर्मयोग्यं 'क्षौमं' दुकूलयुगलम् 'आविष्कृतं' प्रकाशितम्। केनचित् तरुणा 'चरणयोः उपरागे' रञ्जनकर्मणि 'सुभगः' उदारः साधुः इत्यर्थः 'लाक्षारसः' अलक्तकः 'निष्ठ्यूतः' उद्गीर्णः। 'अन्येभ्यः' तरुभ्यः 'पर्वणः' सन्धेः भागः' प्रदेशः, मणिबन्ध इत्यर्थः। तस्मात् 'आ' तत्पर्यन्तम् 'उत्थितैः' अतएव 'किसलयानां नवपल्लवानाम् 'उद्भेदाः' विकाशाः उद्भिन्नानि किसलयानि इत्यर्थः तेषां 'प्रतिद्वन्द्विभिः' तत्सदृशैः वनदेवतानां करतलैः आवोत्थितैः हस्तैः करैः 'आभरणानि' रत्नादीनि भूषणानि 'दत्तानि'। 'तातकाश्यपप्रभावात् वनस्पतयः कुत्र वा 'सर्वं' क्वापि वा वनदेवताः प्रतिनिधीकृत्य, नः संवर्द्धयामासुः। [ "चरणोपरागसुभगो" ( त., पि- ला- ) "चरणोपभोगसुलभो" ( रा-, म- )। 'नः किसलय—" (त- मा )—"तरु-किसल—" ( रा- कि-, म- )। "किसलयोद्भेदप्रतिद्वन्द्विभिः" ( रा- कि- म- )— "[illegible]फि॰" ( अ॰ मा )।

## NOTES

1. (a) अकन्मलाहेतोः—Here the rule—"षष्ठी हेतुप्रयोगे' does not apply. For this does not regulate the षष्ठी in हेतुशब्द but that in the word of which the हेतुत्व is implied ( द्योत्य )। Hence it would be cited only if the word अकन्मला had appeared with the षष्ठीविभक्ति attached to it. Beside, the विभक्ति to explain here is that in the Pratipadika अकन्मलाहेतु। This प्रातिपदिक arises out of the वाक्य—अकन्मला एव हेतुः or अकन्मलायाः हेतुः। But this directly states the हेतुत्व of अकन्मला and does not leave it to be inferred ( द्योतित )। This is another reason why the rule does not apply. Hence explain अकन्मलाहेतोः as हेतौ पञ्चमी or शेषषष्ठी। See also our notes under निवासहेतोः in Raghu XIV, or विश्रामहेतोः in Meghaduta st. 24. Similarly parse लोकहेतोः of Act. V. &c. (b) वनस्पतिभ्यः—वनस्पति often means trees that do not show flowers. It also means any tree (See Tika). अपादाने पञ्चमी। There is अपाय when the flowers are plucked and वनस्पति is ध्रुव। And the rule is 'ध्रुवमपायेऽपादानम्'।

2 (a) क्षौमम्—क्षुमा is a sort of fibre. 'क्षौमं स्यात् वा शाणवस्त्रं' quoted by Vachaspati, makes a difference between क्षुमा and शण (flax). क्षुमायाः विकारः। (b) इन्दुपाण्डु—उपमानकर्मधा—। white as the moon. See Tika (c) माङ्गल्यम्—Auspicious. Ordinarily this is derived as मङ्गलाय हितम्। This refers to the sutra "तस्मै हितम्"। But this sutra directs the affix छ giving मङ्गलीय and not माङ्गल्य। Again मङ्गले साधु gives मङ्गल्यम् which is the word in common use c. f. "अमङ्गल्यं शीलं तव भवतु नामैवमखिलम्" 'सर्वमङ्गलमङ्गल्ये' &c The following derivation may be suggested—(1) मङ्गलम् blessing, anything promoting a blessing. i.e. auspicious. मङ्गलमेव इति मङ्गल + ष्यञ् स्वार्थे = माङ्गल्यम् like चातुर्वर्ण्यम् एव चातुर्वर्ण्यम्, त्रिलोकी एव त्रैलोक्यम् &c. चतुर्वर्णादि ; (2) Or मङ्गलमेव माङ्गलम् blessing प्रज्ञादि। तत्र साधु इति माङ्गल + यत् = माङ्गल्यम् auspicious. [ 3 ] Or again मङ्गले साधु इति

+ यत् = मङ्गल्यम् auspicious तदेव इति अत्र स्वार्थे प्रत्ययादिः । [b] निष्ठ्यूतः— नि + ष्ठिव + क्त कर्मणि । Literally it means "spat" which is vulgar ( ग्राम्य )। Here secondarily ( गौणवृत्ति ) 'poured' which avoids ग्राम्यता । "निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्य-कक्षां विगाहते ॥"—Dandin. [e] अन्यभ्यः—अपादाने पञ्चमी । The context is अन्येभ्य उत्थितैः which implies अपाय । Hence 'भ्रुवमपाये—इत्य-पादानता । [f] वनदेवता &c —Raghva takes this as करणे तृतीया the कर्तृता resting with the वनस्पति । The trees having no hands of their own do the work with the hand of the nymphs residing in them.* [g] आपर्व &c.—पर्वन् is a joint. Here wrist. पर्वणो भागःप्रदेशः पर्वभागः । तत्पर्यन्तम् आपर्वभागम् up to the wrist, अव्ययी— । आपर्वभागम् उत्थिताः । सहसुपेति समासः । तैः । [h] किसलय &c —By निपातन in the rule 'द्वन्द्वं रहस्यमर्यादा—' द्वन्द्व is got from द्वि repeated Thus द्वि द्वि = द्वन्द्वम् in the neuter. "द्विशब्दस्य द्विर्वचन पूर्वपदस्य अम्भावः अत्व चोत्तरपदस्य निपात्यते'—vrittikara 'द्वन्द्व कलहयुग्मयोः' इत्यमरः । Here the sense is कलह । प्रतिकृतं द्वन्द्वं प्रतिद्वन्द्वम् rivalry. तदस्त्येषाम् इति प्रतिद्वन्द्व + इनिमत्वर्थे = प्रतिद्वन्द्वीनि rivals. किसलयोद्भेदाः = उद्भिन्नानि किस-लयानि by the maxim 'भावप्रधानं द्रव्यानयनं भविष्यति' । किसलयोद्भेदानां प्रतिद्वन्द्वीनि rivals of the fresh leavcs, i e. the hands thus put out resembled the bunches of fresh leaves that were in the trees The well shaped and delicately tinged [ताम्रतल] palms resembled clusters of new leaves.*

3. Reading.—[a] It is difficult to see why Raghava reads चरणोपभोगसुलभः unless it is for the alliteration of लकार in सुलभो लाक्षा । But the reading adopted by us has रकार and गकार both repeated. [b] 'तत्किसलय' &c is the Devanagri reading and is adopted by Raghava, Vidyasagara and Monier Williams. But तत् seems redundant. The sense is clear without तत् । On the other hand नः of the Bengali Recension implies that all this was a special favour unto us—अस्मभ्यम् आविष्कृतम् अस्मान् निष्ठ्यूतः अस्मभ्यं ददाति—because done on seeing us. They do not

* Adopted by Prof. Gajendragadkar.

do this for any body and every body. Hence प्रियंवदा takes this as an अभ्युपपत्ति (favour) indicating luck (See below). (c) किसलयच्छायापरिपन्थिभिः is vague.

प्रियंवदा—(शकुन्तलां विलोक्य)—हला इमाए अब्भुववत्तीए सूइदा दे भत्तणो गेहे अणुहोदव्वा राअलच्छी (हला अनया अभ्युपपत्त्या सूचिता ते भर्तुर्गृहे अनुभवितव्या राजलक्ष्मीः)। (शकुन्तला व्रीड़ां रूपयति)।

PRIYAMVADA—(Looking at (Sakuntala)—By this condescension is indicated the royal fortune which is to be enjoyed by you in the house of your husband. (Sakuntala acts bashfulness).

प्रथमः—गोतम, एह्येहि अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः।

FIRST LAD—Come, come, Gautama, we report this service of the trees to Kasyapa who has come up from his plunge into the water.

द्वितीयः—तथा। (निष्क्रान्तौ)।

SECOND—Just so. (Exeunt).

सख्यौ—अए अणुवहुत्तभूषणो अअं जणो। चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह [अये अनुपभुक्तभूषणोऽयं जनः। चित्रकर्मपरिचयेन अङ्गेषु ते आभरणविनियोगं कुर्वः]।

FRIENDS—Well, we have never worn jewellery. We place the ornaments on your limbs by our knowledge of painting.

हलेति। 'अनया अभ्युपपत्त्या' अनुग्रहेण वनस्पतिकृतेन इत्यर्थः 'भर्तुर्गृहे' ['ते' इति "क्त्यानां कर्त्तरि वा" इति पाक्षिकी षष्ठी] 'अनुभवितव्या' भोक्तव्या 'राजलक्ष्मीः'

राजवीः 'सूचिता' ज्ञापिता। [ "राजवत्नीः" ( त०, चि०, ना० )—राजवत्नीरिति ( रा०, म० ) ]॥

प्रकुन्तलेति। 'ज्ञौ्डा लज्जा 'रूपयति' अभिनयति।

प्रवम इति। 'एहि' आगच्छ 'अभिषेकात्' अवगाहनस्नानात्' 'उत्तीर्णैव' तीरं-प्राप्तैव 'काश्यपाय' ["कर्मणा यमभिप्रैति—" इतिसम्प्रदाने चतुर्थी ] 'वनस्पतीनां सेवां दुकूलादिदानेन परिचर्यां' 'निवेदयाव."।

अये इति। 'अये' इति सम्भ्रमे। 'अव' जनः' अज्ञदिशो जनः 'अनुपभुक्तानि' असेवितानि 'भूषणानि' येन तादृशः। कुत्र किं परिधेयं न जानीवहे। 'चित्रकर्मणः' आलेख्यालेखनस्य 'परिचयेन' अभ्यासेन' ( करणे तृतीया ) 'ते अङ्गेषु आभरणानां विनियोगं कुर्वः: चित्रादि दृष्टानि लिखितानि च। तेन ज्ञानेन त्वां भूषयावः।

## NOTES

1. (a) अभ्युपपत्त्या—अभ्युपपत्ति is अनुग्रह favour. "अभ्युपपत्तिरनुग्रहः' इत्यमरः। अनुक्ते कर्तरि ३या of सूचिता।

2. अभिषेकोत्तीर्णाय—उद् + तृ + क्त कर्तरि = उत्तीर्ण got up. अभिषेकात् अभिषेकं समाप्य उत्तीर्णः। सहसुपेति समासः—the पञ्चमी in अभिषेकात् being ल्यब्लोपे कर्मणि।

3. (a) अये—The jewellery came unexpectedly. Never having worn them and not having thought how to wear them, they found themselves in a fix. Hence the सम्भ्रम। 'अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि" इति विश्वः। b) चित्रकर्म परिचयेन—परि + चि + अच् भावे परिचयः skill acquired by practice; अभ्यास। For this sense compare 'परिचयं चललक्ष्यनिपातने करोति"—Raghu. चित्रस्य कर्म अनुष्ठानं चित्रकर्म the act of painting. तस्मिन् तस्य वा परिचयः skill in the act of painting. तेन। करणे तृतीया।

शकुन्तला—जाणे वो कोउसं [ जाने वां नैपुण्यम् )। (उभे नाट्येनालङ्कुरुतः )।

SAKUNTALA—I know your cleverness. (Both act dressing her).

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः )। काश्यपः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया

कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।

वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥८॥

( परिक्रामति ) ।

(Then enters Kasyapa having come up from his plunge).

KASYAPA—Because Sakuntala will go to-day my heart is smitten with anguish; my throat is troubled with the checked flow of tears; and my senses are paralysed with anxiety. Such through affection is the helplessness of me living in the forest; how, alas! are the house-holders afflicted by the grief of first parting with their daughters? (Goes round the stage).

शकुन्तलेति। 'वां' युवयोः 'नैपुण्य' निपुणता चित्रलेखनपटुतामित्यर्थः [ ष्यञ् भावे] 'जाने'। यद्वा—"नैपुण्यं निपुणता चतुरता। येन अज्ञातमपि ज्ञानगोचरं कृत्वा प्रसाधयसि। 'नाट्येन' अभिनयेन 'अवहस्तः' अवहस्तकं नाटयतः इत्यर्थः।

'स्नानात् उत्तीर्णः' तीरं प्राप्तः कृतस्नानः इत्यर्थः।

यास्यतीति। अन्वयः—अद्य शकुन्तला यास्यति इति हृदयम् उत्कण्ठया संस्पृष्टं, कण्ठः स्तम्भितबाष्पवृत्तिकलुषः, दर्शनं चिन्ताजडम्। अरण्यौकसो ममतावत् स्नेहादीदृशं वैक्लव्यम्, अहो गृहिणः नवैः तनयाविश्लेषदुःखैः कथं नु पीड्यन्ते। व्याख्या— 'अद्य शकुन्तला' पतिगृहं 'यास्यति इति' हेतोर्मम 'हृदयं' चेतः 'उत्कण्ठया' आवेगेन 'संस्पृष्टं' सम्यगाक्रान्तम्। भाविना अपि न तु भूतेन भवता वा, विरहेण कातरं मे मनः। कण्ठः स्तम्भिता' धैर्येण वारिता या 'बाष्पवृत्तिः' अश्रुप्रसरः, तया 'कलुषः' विकृतः। नाहं रोदिमि किन्तु स्वरभङ्गो मे जातः। दृश्यते ज्ञायते अनेन 'दर्शनं' तत्तदिन्द्रियं ( करणे ल्युट्। इन्द्रियमात्रं न तु केवलं चाक्षुषं ) 'चिन्तया शकुन्तलागमनानुध्यानेन 'जडं' विकलम्। इन्द्रियं नष्टप्रायिकं भवति किन्तु विषयग्रहणं नास्ति। 'अरण्यम् ओकः' आश्रयो यस्य तथाविधस्य ( "ओकः सद्मनि चाश्रये" इति विश्वः वनवासिनो निर्ममस्य 'मम तावत्' ममैव (तावद् अवधारणे) 'स्नेहात् ममतया 'ईदृशं वैक्लव्यम्' ईदृशी विकलता, अहो' वा अहो इति खेदार्थम्। "अहो धिगर्थे शोके करुणार्थविषादयोः" इति मेदिनी। 'गृहिणः' गृहस्थाः महता "नवैः" नूतनैः

प्रथमानुभूतैः 'तनयाभिः यो विश्लेषः' वियोजनं तज्जातैः दुःखैः कथं कीदृशं नु पीड्यन्ते' दुःखस्य प्रतिव्यक्तिभिन्नत्वात् बहुत्वम्। निर्ममस्य ममापि यत् अवस्थाप्रायं मन्ये वराका विषयिणस्तेन नितरां एव भवन्ति—इत्यभिप्रायः। ("कलुषः कलुषः" (रा॰ वि॰ म॰)—"अन्तर्वाष्पभरोपरोधिगदितम्" (त॰ न्या॰)॥ 'ईदृशमर्थो" (दि॰) "ईदृशमियम्" (रा॰)—ईदृशमपि" (त॰ न्या॰ म॰)॥ कथं 'नु' (वि॰ म)—"कथं न" (रा॰, त॰, न्या)।

## NOTES

1. नैपुण्यम्—निपुण is पटु skilful. तस्यभावः इति निपुण + ष्यञ् = नैपुण्यम् skill. The word निपुण is ब्राह्मणादि and also युवादि। Hence निपुणस्य भावः gives नैपुण्यम् (ब्राह्मणादित्वात् ष्यञ्) as well as नैपुणम् (युवादित्वादण्)।

2. स्नानोत्तीर्ण:—see अभिषेकोत्तीर्णाय—Ante.

3. यास्यति—Note the future. The departure neither has happened nor is happening. But the thought that it will happen, affects me. This shows the unbearableness of the separation (b) इति—Indicates हेतु। (c) मस्पृष्टम्—सम is intensive सम्यक् स्पृष्ट। (d) स्तम्भित &c—स्तम्भ + णिच् + क्त कर्मणि स्तम्भिता checked. वाष्पस्य वृत्तिः the flow of tears स्तम्भिता वाष्पवृत्तिः कर्मधा। तया कलुषः। (e) अहो—आश्चर्ये अव्ययम्। His emotion surprises him. He thought he was above such feelings. Also see Tika (f) नु—प्रश्ने here He fails to estimate the grief of house holders and wants to know how much it affects them. Of course thereby he implies that the shock to them is tremendous Reading—[a] It seems natural to mention कण्ठ after हृदय। So the Devanagari reading is preferable, [b] As explained above—अहो and नु are necessary to bring out the sense.

सख्यौ—हला सउन्दले, अवसिदमण्डणासि। परिहेहि संपदं क्खोमजुअलं [हला शकुन्तले, अवसितमण्डनासि। परिधेहि साम्प्रतं क्षौमयुगलम्]। (शकुन्तला उत्थाय परिधत्ते)।

**FRIENDS**—Dear Sakuntala; you have your decoration

finished. Now put on this pair of silk robes (Sakuntala rises and puts them on).

गोतमी—जादे एसो दे आनन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरु उवट्ठिदो ! आचारं दाव पडिवज्ज [ जाते, एष ते आनन्दपरिवाहिना चक्षुषा परिष्वजमान इव गुरुः उपस्थितः । आचारं तावत् प्रतिपद्यस्व ] ।

GAUTAMI—My child, here, your father has arrived embracing you as it were with eyes that are pouring joy. Observe the custom.

शकुन्तला ( सव्रीडम् )—ताद वन्दामि [ तात वन्दे ] ।

SAKUNTALA [ with an ashamed air]—Father, I salute thee.

हलेति । 'अवसित' समाप्त 'मण्डनम्' अलङ्करणं यस्याः तथाविधा 'असि' । 'साम्प्रतम्' अधुना [ ''साम्प्रतं तूचितेऽधुना'' इति हैमः ] 'क्षौमयुगलं परिधेहि' ।

जाते इति । 'आनन्दं' हर्षं 'परितो वाहयति' प्रेरयति यत् तथाविधेन 'चक्षुषा परिष्वजमानः' त्वामालिङ्गन्निव, अत्यादरेण पश्यन्नित्यर्थः 'गुरुः' तातस्ते 'उपस्थितः' समीपे स्थितः । 'आचारं' वन्दनरूपं 'प्रतिपद्यस्व' तावत्', [प्रतिपूर्वात् पद्यतेः लोट् ]।

शकुन्तलेति । 'व्रीडया' लज्जया' 'सह' । समीपं स्थितेऽपि तात अनवधाना वन्दनमन्थरा आचारं स्मारिताऽस्मि इति व्रीडा ।

## NOTES

1. (a) अवसितमण्डना—अव + सो + क्त कर्त्तरि = अवसितम् ended. अव + सो is अकर्मक as is seen from the निर्देश in 'भीतमुक्त्माभवमवसाययति प्रतिज्ञा''—Act V. Hence we get कर्त्तरि क्त by the rule ''गत्यर्थाकर्मक:—'' । Now see Tika. (b) क्षौमयुगलम्—युगमस्त्यस्मिन् इति युग + लच् मत्वर्थे = युगलम् । Or युग + कलच् औणादिक कर्त्तरि = युगलम् । or again युगं लाति इति युग + ला + क कर्त्तरि । क्षौमयोः युगलम् ॥ परि + धा + लोट हि = परिधेहि ।

2. (a) जाते—See under ''जाते अपि लघुसन्तापानि'' &c. Act. III. [b] आनन्द &c.—आ + नन्द + घञ् भावे = आनन्द joy. तं साधु परिवाहयति इति आनन्द + परि + वाहि + णिनि साध्वाकारिणि कर्त्तरि = आनन्दपरिवाहिन् । तेन ।

(c) अथवा—आतावेक्षवचनम्। करणे इथा। (d) आचारम् – आ + चर + घञ् कर्मणि आचार: custom. तम्। The custom is to do obeisance to superiors. Hence Gautami orders her to salute Kanva (e) तावत्—is emphatic ( अवधारणे )। Cp. – "कुरुष्व तावत् करभोरु" &c. Rag. XIII.

3. सव्रीड़म्—व्रीड़ + अ भावे = व्रीड़ा and व्रीड़ + घञ् भावे = व्रीड़ as in "व्रीड़भावहति मे स सम्प्रति"—Raghu. व्रीड़या व्रीड़ेन वा सह यथा तथा।

काश्यप:—

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव।
सुतं त्वमपि सम्राजं सेव पुरुमवाप्नुहि ॥८॥

KASYAPA—My child, as Sarmistha was of Yayati, be thou thy husband's favourite; as she got Puru, do thou too get an emperor as son.

गौतमी—भअवं, वरोक्खु एसो ण आसिसो [ भगवन्, वर: खल्वेष न आशी: ]।

GAUTAMI—Mighty Sir, this is indeed a boon and not a mere benediction.

काश्यप:—वत्से इत: सद्योहुतानग्नीन् प्रदक्षिणीकुरुष्व।
( सर्वे परिक्रामन्ति )।

KASYAPA—My child, this way, keeping to the right, do thou go round the fires in which oblation has just been offered (all go round).

ययातेरिति। अन्वय:—हे वत्से, (त्वं) शर्मिष्ठा ययातेरिव भर्तु: बहुमता भव। त्वमपि सा पुरुमिव सम्राजं सुतम् अवाप्नुहि। व्याख्या—हे 'वत्से' प्रकृष्णार्थे त्वं 'शर्मिष्टा' असुराजस्य वृषपर्वण: कन्या 'ययाते:' नहुषतनयस्य 'इव भर्तु:' पत्यु: 'बहुमता' प्रिया 'भव'। 'त्वमपि सा' शर्मिष्ठा 'पुरु' चन्द्रवंशस्य कर्तारम् 'इव सम्राजं' चक्रवर्तिनं' सुतं पुत्रम् 'अवाप्नुहि' लभस्व। पत्या पुत्रेण च सुखिनी भव इति भाव:।

भगवन्निति। भगवदुक्तं शर्मिष्ठावत् हितोक्तिमिव अवगम्य पश्यति। तत् 'एष वर:

चासु' ["दैवाद् ते वरः" इत्यमरः]। अनभिमतं तु 'आशीः' विशेषणाभावत् ["आशीर्हितैषणा" इति हैमः] फलति वा न वा। इदन्तु नववृत्तिः न आशीः।

सद्य इति। 'इतः' अस्मात् दिवि 'सद्यः' समाने अह्नि अस्मिन्नेव अह्नि ["सद्यः-परुत्—" इति समानस्य सभावो द्यश्चप्रत्ययो निपात्यते] 'हुतान्' तर्पितान् 'अग्नीन्' त्रेताग्नीन् 'अप्रदक्षिणान् प्रदक्षिणान् सम्पद्यमानान्' 'कुरुष्व' (प्रादिसमासस्तत्र्निः। यथा—अभ्यग्नीभावसिद्धद्भ्यादि। ततश्चिः)। ("सद्योहुतानग्नीन्" (त-, वि-, का-) —, "सद्योहुताग्नीन्" (रा- म-)।

सर्वे इति। परिक्रामन्ति' इत्युक्तमथपरिक्रमणेन अभ्यग्निमनसमभिनयन्ति।

## NOTES

1. ययातेः &c.—Yayati was one of the founders of the Lunar race. He had two wives देवयानी the daughter of शुक्राचार्य, the preceptor of the Danavas and शर्मिष्ठा the daughter of वृषपर्वन् the Danava-king. The latter was the favourite. Hence शुक्र cursed him. पुरु his youngest son by शर्मिष्ठा, took upon himself the consequences of the curse (i.e. जरा) and releived his father, and as a reward of his devotion he obtained universal sovereignty (साम्राज्य)। For details see Mahabharat Adiparvan.

2. आशीः—आशास्यते एताम् इति आ+शास इच्छायाम्+क्विप् कर्मणि—आशिस, of which the nom. sing is आशीः। We may have here क्विप् भावे also.

3. (a) अग्नीन्—Refers to the three fires of the सामिक। (b) प्रदक्षिणीकुरुष्व—प्रदक्षिण+च्वि+कृ+लोट् स्व कर्तभिप्राये क्रियाफले। No समास owing to the probibition "उपपदमतिङ्"। If प्रदक्षिण be derived as an अव्ययीभाव (see on प्रदक्षिणं करोति—Infra.) of the तिष्ठद्गु class, further compounding is barred by the च in the rule "तिष्ठद्गुप्रभृतीनि च"। 'किमर्थश्चकारः? एवकारार्थः। तिष्ठद्गुप्रभृतीन्येव। क्व मा भूत्? प्रभृतीन्येव एकार्थीभावमविययाणि भवन्ति मतु अन्यदान्येव एकार्थीभावं प्रतिपद्यन्ते इत्यर्थः:"। To defend further compounding which is now and then seen we observe that Bhoja takes the Bhashya in a

different sense. According to him the Bhashyakara wants to say that तिष्ठद्गु &c. cannot follow but may lead in a compound. Thus परमतिष्ठद्गु is incorrect but तिष्ठद्गुप्रिय: is allowable. Hence samasa with प्रिय leading is justifiable. We may also say in defence of such समास that the leading word is not प्रदक्षिण but प्रदक्षिणो which is quite different, and is not of the तिष्ठद्गु class. A word of any गण ceases to belong to the गण when altered by the addition of some affix. Thus मनस् is सर्वादि but मनस्विन् is not सर्वादि। Hence, even accepting Kaiyyata's interpretation we see no bar to having प्रदक्षिणीकृत्य &c. But प्रदक्षिणीकुरुष्व being तिङन्त is not a compound. Also cp.— "अतिङन्तश्चाय' समास:" ।

काश्यप:—वत्से—

अमी वेदिं परित: क्लृप्तधिष्ण्या: समिद्वन्त: प्रान्तसंस्तीर्णदर्भा:
अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नय: पावयन्तु ॥१०॥
( शकुन्तला प्रदक्षिणं करोति ) ।

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् ) क्व ते शार्ङ्गरवमिश्रा: ?

KASYAPA—My child, let yonder sacrificial fires, that are being fed with sacred fuel, that have their places alloted round the altar, that have kusa-grass strewn at the edge, purify thee, removing sin with the smell of the oblations. (Sakuntala goes round the fires) Now proceed. (Looking round). Where are Sarngarva and others ?

( प्रविश्य ) शिष्य:—भगवन्, इमे स्म: ।

DISCIPLE (Entering)—Here we are, your reverence.

कश्यप इति । ["वत्से" (त-, न्या,)—"शकुन्तलमाशास्ते" ( रा-, वि-, म- )] ।

अमी इति । अन्वय:—अमी समिद्वन्त:, वेदिं परित: क्लृप्तधिष्ण्या: प्रान्तसंस्तीर्णदर्भा वैतानाः वह्नय: हव्यगन्धै: व: दुरितम् अपघ्नन्त:, त्वां पावयन्तु । व्याख्या—'अमी' हूयमाना:' 'समिध:' यज्ञकाष्ठानि सन्ति येषां तादृशा: समिद्भिरिद्धा इत्यर्थ: 'वेदिं' यज्ञवेदिकां परित: तस्या समन्तात् [तद्योगे न परिता योगे द्वितीया] 'क्लृप्तानि' विहितानि

'धिष्ण्यानि' स्थानानि येषां तथाविधाः ["धिष्ण्यं स्थाने गृहे" इत्यमरः] 'प्रान्ते पर्यन्ते सङ्क्लृप्ताः' आस्तृता 'दर्भाः' कुशा येषां तथाविधाः ( एभिर्विशेषणैः अग्नीनां यज्ञीयता प्रतिपाद्यते ) 'वितानस्य' यज्ञस्य इमे 'वैतानाः' यज्ञियाः ("वितानं क्रतौ यज्ञे" इति हेमः) 'वह्नयः' अग्नयः वैतानाग्नयः 'हव्यस्य' आहुतेः 'गन्धैः' पुन. पुनः प्राप्तैः गन्धैः ( अवछन्दोगतत्वात् बहुत्वम्—कारके इद्या ) 'दुरितं पापकं 'अपघ्नन्तः सन्तः त्वां पावयन्तु' शोधयन्तु ।

प्रकुर्वन्निति । 'प्रक्रमत्व'' दक्षिणस्यां' दिशः, यद्वा—प्रक्रमत्वं दक्षिणस्य मानस्य इति 'प्रदक्षिणम्' ( तिष्ठद्गुप्रभृतीनि च" इति अव्ययीभावः ) । तत् 'करोति' । यथा—दक्षिणं प्रागः अः यथाक्रमम् (प्रादित्य— ) 'करोति' । [illegible] श्लोकं पठति तावत् शकुन्तला प्रदक्षिणं करोति इति भावः । (मूलम् [illegible]
( रा०, वि०, म—एतत् न पठन्ति ) ।

प्रतिति । 'इदानीं प्रातष्ठस्व' प्रस्थानं प्रतिपद्यस्व ("समवप्रविभ्यः स्थः" इत्यात्मनेपदम् ) 'इष्टैः' दर्शनस्य 'येषः' पातनं तेन 'सह' । परितो विलोक्य इत्यर्थः ।

## NOTES

1. (a) क्लृप्तधिष्ण्याः:—धिष्ण्य( = स्थान) is a rare word in later Sanskrit. The three fires गार्हपत्य, आहवनीय and दक्षिण have alloted places round the altar. (b) समिद्वन्तः—समिधः सन्ति एषाम् इति समिध् + मतुप् । ध् becomes द् by the rule "झलां जशोऽन्ते" । (c) "वेदिं परितः दर्भाः" serves to show that the fire is sacrificial ( वैतान ) । On the efficacy of हव्यगन्ध compare "पुनान' पवमाड ते धूमैराहुतिगन्धिभिः" "धूमायं घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे मुञ्चमानमात्मा" &c.—Rag.

2. Reading—The words "ऋक्छन्दसाशास्ते are out of place here. A stage direction should not be a mere explanation of what an actor says. Yet ऋक्छन्दसा only explains the metre of the sloka following and आशास्ते gives its sense. These by no means help the actor who is none the worse by their omission.

3. प्रदक्षिणम्—this act is defined—"प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः । दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः । सकृत् त्रिर्वा वेष्टयेत् सम्यक् देवतायाः प्रदक्षिणम् ॥"—Sastrasara quoted by Vachaspati.

* Adopted by Prof. Gajendragadkar.

4. *Remark.—Prof. Monier-William, thinks Kalidasa tried* **here to imitate Vedic metres but failed. Such slokas however abound in the Mahabharata. They seem to mark the period of transition and are no fruitless attempts at imitation.** *

5. शार्ङ्गरवमिश्राः—See IV here ante.

काश्यपः—भगिन्यास्ते मार्गमादेशय ।

KASYAPA—Show your sister the way.

शार्ङ्गरवः—इत इतो भवती ( सर्वे परिक्रामन्ति ) ।

SARNAGARVA—This way you go this way [All go round].

काश्यपः—भो भोः सन्निहितास्तपोवनतरवः—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥११॥

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः ॥१२॥

KASYAPA—Ho ! Ho ! trees of the hermitage that are near, she who does not attempt to drink water first in the day, you remaining unwatered; she who though found of decorations, does not pluck your new leaves through affection for you; she to whom it is a festivity at the time of your first show of flowers, she Sakuntala is here going to her husband's house. Be it approved by you all. [Making signs; as if heard the note of a Kokila]. Sakuntala has her departure approved by trees, her companions during her stay in the forest. For by these, the sweet note of the cuckoo is made into their response.

* Adopted by Prof. Gajendragadkar.

कोकिलस्य विरुतं मधुकूजितम् आत्मनः स्वस्य (आत्मीयवचनस्य) प्रतिवचनं प्रत्युत्तरम्। अनेन तत् सम्पद्यमानं कृतम्' [इति चिन्त्यः]। यद्यनभिमतं स्यात् तदा वायसादीनां कटुरटितेन प्रत्युत्तरं स्यात्। कोकिलकलकूजितेन तु गमनमनुमन्यते॥ [यतः" (त- व्या-)—यथा" (रा- वि- म-)॥ "आत्मनः" (त- व्या-)—"ईदृशम्" (रा- वि- म-)]॥

## NOTES

1. सन्निहिताः—He addresses those that are सन्निहित (near); because they alone can hear him. But his speech is intended for all.

2. (a) अपीतेषु—पान means to drink. Trees may be said to drink water when they are watered. पीत—watered But पीत usually means that which is drunk as in पीतं मधु, पीताः पेयाः &c. Here after the Bhashyakara we say पीत = पीतजल that which has taken its fill of water [this is by उपचार—transference of epithets]. Or on the same authority; पा + क्त भावे = पीतं पानम् a draught. पीतमस्ति एषाम् इति पीत + अचमत्वर्थे = पीताः। Or if we are allowed to take पा here as अकर्मक [notwithstanding that जल is directly mentioned as कर्म] we may say पा + क्त कर्त्तरि पीताः those that have drunk water; but this is not sound See our notes under विदित: in Kirat I. (b) आदत्ते—आ + दा + लट ते कर्त्रभिप्राये। "आङो दो—" does not here apply; because that rule is to meet cases where the result does not benefit the agent. "अकर्त्रभिप्रायार्थोऽयमारम्भः"—Vrittikara. Here आत्मसत्ताभिप्रायम् आदानम्॥ वि + अव + सो + लटति = व्यवस्यति।

3. Remark—The figure is समासोक्ति [See [illegible]r वातेरित &c. Act I]. The watering of the trees is likened [illegible]ffering water by a sister to her brothers to drink. First [illegible] of flowers is indirectly compared to safe first delivery o[illegible]er.

4. (a) अनुमतगमना—अनु मन + क्त कर्मणि [illegible] approved. Note that the क्त here is as usual in the अती[illegible] and not वर्त्तमाने। The rule "मतिबुद्धिपूजार्थेभ्यश्च" is permissive [illegible]y (विधि) and not restrictive—नियमः। In other words it do[illegible]ot bar what is available in अतीते; but provides for what i[illegible]not available.

आत्मपूजायां विधिरेव न हि प्राप्तस्य प्रतिषेधः। वर्त्तमाने एव इति नार्थ नियमः।
(b) तद्धितः—Since the क्त in अनुमत is not वर्त्तमाने, the rule 'क्तस्य च वर्त्तमाने'' does not apply; and the nominative of अनुमत does not take षष्ठी but अनुक्ते कर्त्तरि तृतीया। Compare पूजितो यः सुरासुरैः; "तनुमतोऽनुमतः सचिवैर्ययौ" etc.

(आकाशे)—

> रम्यान्तरः कमलिनीहरितैः सरोभि-
> श्छायाद्रुमैर्नियमितार्कमरीचितापः।
> भूयात् कुशेशयरजोमृदुरेणुरस्याः
> शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १३ ॥

( सर्वे सविस्मयमाकर्णयन्ति )

IN THE AIR—May her path—with its stages made pleasants by tanks that are green with lotus-beds—with the heat of the sun's rays allayed by shady trees—become one with the dust soft as the pollens of lotuses, one with a mild and favourable breeze and one that is safe. (All listen with wonder).

रम्यान्तर इति। अन्वयः—कमलिनीहरितैः सरोभिः रम्यान्तरः, छायाद्रुमैर्नियमितार्कमरीचितापः, अस्याः पन्थाः कुशेशयरजोमृदुरेणुः शान्तानुकूलपवनश्च शिवश्च भूयात्। व्याख्या—'कमलिनीभिः' पद्मिनीभिः, कमलवनैः हेतुभिः 'हरितैः' श्यामैः 'सरोभिः' जलाशयैः करणैः [illegible]याणि' श्यामत्वसम्बन्धात् मनोहराणि' अन्तराणि अवकाशाः यस्मिन् तथाविधः, 'छा[illegible]ार्मैः द्रुमैः' हेतुः [शाकपार्थिवादिः। यद्वा—छायाद्रुमौ नमेरुप्रधानैः काव्यभिः [illegible]मितः' निवारितः 'अर्कमरीचेः' रविकरस्य 'तापो' यस्मिन् तथाविधः 'अस्याः' शकु[illegible] 'पन्थाः' मार्गः 'कुशे' जले शेते कुशेशय'' पद्मम् ( "शयवास-वासिष्वकाल[illegible]ति सप्तम्या अलुक्]। तस्य 'रजांसि' परागा इव 'मृदवः' कोमलाः 'रेणवो' धू[illegible]स्मिन्, शान्तः' अप्रचण्डश्च 'अनुकूलः' सम्मुखयायी च पवनो' वातो यस्मिन् तथाविधः, '[illegible]श्च' मङ्गलकरश्च, यद्वा—निरुपद्रवश्च 'भूयात्' इति इष्टाशंसा। अस्याः पन्थं मनोहरं [illegible]छायश्च। अपि सामग्री सुखप्रचारमपि तस्या भूयात् गमने वातोऽनुकूलो

नातिपरुषश्च भवतु वाताश्च सर्वांगीनं भवतु। [“अर्कमरीचि” (रा० का०)— ‘अर्कमयूख’ (र०, चि०, म०)]। ‘आकर्णयन्ति’ श्रृण्वन्ति (‘अनुमतगमनासि तपोवनदेवताभिः’ इति च चित्र०)। आकाशभाषी इति विभव:। किमिदं भगवत्याः वाणी?

## NOTES

1. आकाशे—Note the distinction between this आकाशे and आकाशे in विष्कम्भक Act. III. Here the speaker there the addressee, is unseen.* Hence the usual "किं ब्रवीषि" etc.—are here absent. "किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्॥

2. (a) भूयात्—आशंसायां लिङ् may it become. (b)* I have differed from commentators in explaining the आशंसा in the sloka. It is usual to take all the five attributives as entering into the आशंसा। Thus—रम्यान्तरो भूयात, नियमिततापो भूयात्, मृदुरेणुर्भूयात, शान्तानुकूलपवनश्च भूयात. शिवश्च भूयात। But the tanks and trees are there already on the road. Hence रम्यान्तरत्व and नियमिततापत्व are accomplished facts. As such they cannot be part of आशंसा which is "अप्राप्तस्य इष्टार्थस्य प्राप्तुमिच्छा"। Besides if all the five were intended the च would have been repeated four times, and not twice only as is necessary when there is समुच्चय of two things with a third (कुशेशयरजोमृदुरेणु.)। Prof. Gajendragadkar takes कुशेशयरजोमृदुरेणुत्व also as an accomplished fact. But it is not easy to believe that the whole length of the way from the Himalayas to Hastinapura was of such billiard-table evenness. Even at the very start we find the [illegible]d uneven and Kasyapa has to warn Sakuntala against stu[illegible]lings. (c.f. अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति।

गौतमी—जादे, णादिजणसिणिद्धाहिं अणुण्[illegible]गमणासि तपोवणदेवदाहिं। पणम भअवदीणं [जाते, ज्ञाति[illegible] अनुमतगमनासि तपोवनदेवताभिः। प्रणम भगव[illegible]]।

---

* Adopted by Prof. Gajendragadkar.

GAUTAMI—My child you have your start approved by the deities of the hermitage who are as affectionate as kinsmen. Bow to their majesties.

शकुन्तला ( सप्रणामं परिक्रम्य जनान्तिकम् )—हला पिअंवदे णं अज्जउत्तदंसणसमुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा पुरदो पवट्टन्ति [ हला प्रियंवदे, ननु आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्त्तेते ]।

SAKUNTALA (Bowing and going round—Aside)—Dear Priyambada, though I am anxious for a sight of my husband, my feet indeed move sorrowfully forwards as I am leaving the site of the hermitage.

ज्ञाते इति। 'ज्ञातिजन' इव ज्ञातय इव 'स्निग्धाभिः' सस्नेहाभिः 'तपोवनस्य देवताभिः अनुमतगमना असि'। 'भगवतीः' एताः वनदेवताः 'प्रणम'।

हलेति। 'आर्यपुत्रस्य दर्शनेन उत्सुकाया' व्यग्राया 'अपि आश्रमपदं परित्यजन्त्याः मे चरणौ ननु दुःखेनैव 'पुरतः' अग्रतः प्रवर्तेते' गच्छतः। आत्मगतस्य दुःखस्य चरणयोरुपचारः। [ "पुरतः" इति अव्ययपदमव्ययं न तु पूर्वशब्दात् अतसुचादिप्रत्ययनिष्पन्नम्। तथा च दीक्षितः—"पुरत इति समानकालीनमव्ययादिवत् अप्रामाणिकमिव" ]।

NOTES

1. (a) ज्ञा[illegible]न &c.—ज्ञाति with स्निग्ध is masculine. ज्ञातिजना इव स्निग्धाः। [illegible]मानानि सामान्यवचनैः" इति समासः। (b) तपोवन &c.—[illegible] says अनु[illegible]मना वनेभिः, and [illegible] has अनुमतगमना देवताभिः i.e. the male a[illegible] refers to the male and the female to the females for [illegible]tion.

2. (a) [illegible]--Indicates सम्बोधन। See Tika (b) आर्यपुत्र &c.—By the [ru]le "प्रसितोत्सुकाभ्यां तृतीया च" we may have आर्यपुत्रदर्शनेन or आर्यपुत्रदर्शने उत्सुका। सहसुपेति समासः।

प्रियंवदा— ण केवलं तवोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तवोवणस्स वि अवत्थं पेक्ख दाव [न केवलं तपोवनविरहकातरा सखी एव । त्वया उपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् ] ।

उग्गलिअदब्भकवला मिई परिच्चत्तणच्चणा मोरी ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सु विअ लदाओ ॥ १४ ॥
( उद्गलितदर्भकवला मृगी परित्यक्तनर्तना मयूरी
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ १४ । ]

PRIYAMVADA—It is not merely that our friend is distressed by separation from the hermitage but look at the plight of the hermitage too which has at hand its separation from you. The deer have thrown up their mouthful of kusa-grass ; the peacocks have renounced their dance ; twigs from which brown leaves are cast, are as if shedding tears.

नेति । 'सखी' त्व तपोवनविरहेण' आश्रमवियोगेन 'कातरा'—न केवलम्' इति 'एव' । किन्तु 'त्वया उपस्थितवियोगस्य' आसन्नविरहस्य, उपस्थितत्वद्विरहस्य इत्यर्थः ( सापेक्षत्वेऽपि गमकत्वात् समासः ) 'आश्रमस्यापि अवस्थां दशां तावत् प्रेक्षस्व' । तामेवावस्थां वर्णयति ।

उद्गलितेति । अन्वयः—मृगी उद्गलितदर्भकवला, मयूरी [illegible]रित्यक्तनर्तना, लताः अपसृतपाण्डुपत्रा अश्रूणि मुञ्चन्तीव । व्याख्या—'मृगी' मृगव[illegible]उद्गलितः' मुखात् भ्रष्टः दर्भकवलः' कुशग्रासो यस्याः तादृशी उन्मुखी [illegible] 'मयूरी' मयूरवधूः 'परित्यक्तं' परिहृतं नर्तनं नृत्तं यया तादृशी तिष्ठति । 'लताः [illegible]ल्यः 'अपसृतानि' अपगतानि च्युतानि 'पाण्डुपत्राणि' जीर्णपर्णानि यस्याः तथाभूताः [illegible] 'अश्रूणि' नेत्र-जलानि 'मुञ्चन्ति इव' उत्प्रेक्षा । [ "मृगी मयूरी" ( त-, अ:- ) [illegible] "मृगाः मयूराः" ( रा, वि, म ) ] ।

## NOTES

1. (a) त्वया—तृतीया owing to the word वियोग which is ऊनार्थ। तृतीया in connection with ऊनार्थ words is indicated (ज्ञापित) by the rule 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' which enjoins तृतीयातत्—with ऊनार्थ words त्वया and वियोग: are परस्परसापेक्ष। Yet वियोग is compounded and त्वया left uncompounded, because the construction is obvious (गमक) in spite of the समास। See Tika. यथा—ऊना सदृशब्दयोगे तृया। (b) अवस्थाम्—अव + स्था + अङ् भावे = अवस्था plight. The rule "स्था गा पा पचो भावे" attaches क्तिन् to स्था in the भाववाच्य and thus bars अङ्। Yet अवस्था is allowable because पाणिनि writes 'व्यवस्थायामसंज्ञायाम्' with अङ् to स्था in the भाववाच्य। 2. (a) Compare "नृत्तं मयूरा: कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः... तस्याः प्रपन्ने समदुःखभावम् अत्यन्तमासीद्रुदितं वनेऽपि॥ Raghu XIV. (b) मृगी मयूरी लता are all in the feminine. This is natural, the speaker being a woman. See preceding pages.

शकुन्तला (स्मृत्वा)—ताद लदावहिणिअं वणजोसिणिं दाव आमन्तइस्सं (तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये)।

SAKUNTALA—(Recollecting) Father, I will bid adieu to my creeper—sister Vanajyotsna.

काश्यपः—अवैमि ते तस्यां सोदर्य्यास्नेहम्। इयं तावत् दक्षिणेन।

KASYAPA—I know thy sisterly affection for it. Here it is to the right.

शकुन्तला—(उपेत्य लतामालिङ्ग्य)—वणजोसिणि, चूदसंगता वि मं पच्चालिंग इदोगदाहिं साहावाहाहिं। अज्जप्पहुदि दूरपरिवत्तिणी दे क्खु भविस्सं (वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिङ्ग इतोगताभिः शाखाबाहाभिः। अद्यप्रभृति दूरपरिवर्त्तिनी ते खलु भविष्यामि)।

SAKUNTALA—(Approaching and embracing the per) Vanajyotsna, though joined to the mango-tree, embrace me back with thy arms of twigs that proceed this way. From to-day I shall indeed be roaming far from thee.

शकुन्तलेति । 'श्रुत्वा' प्रियंवदया "लता" शब्दोच्चारणात् श्रुतिः । लतारूपां 'भगिनी' ( शाखापाणिर्बाहि ) 'आमन्त्रयिष्ये' सम्भाष्य गमिष्यामि ।

अवैमीति । 'तस्यां' वनज्योत्स्नायां 'ते सोदर्य्यायाः' समानोदरे शयितायाः भगिन्या यः 'स्नेहः' ( 'समानोदरे शयितः' 'सोदराद् यः' इति यप्रत्ययः, स्त्रियां टाप ) तम् 'अवैमि' जानामि । भगिन्यामिव वनज्योत्स्नायां ते स्नेह इति मे विदितम् । इयं तावद् दक्षिणेन' अदूरे दक्षिणभागे वर्त्तते । (समम्यर्थे एनप् ) । [ 'सोदर्य्यास्नेहम्" ( वि- )—'सोदर्य्यस्नेहम्' ( रा-, म- )—'सौहार्द्दम् ( त-, न्या ) ॥

शकुन्तलेति । [ 'उपेत्य लतामालिङ्ग्य' ( त-न्या- )—"लतामुपेत्य' ( रा- वि-, म- ) ] ॥ वनज्योत्स्नेति । 'चूतेन सङ्गता अपि' मिलिता अपि (भर्त्तृसंसर्गसुखेन अप्यविस्मृतिः शङ्किता अपिना ) 'इतोगताभिः' लम्बिताभिः' 'शाखारूपाभिः बाहाभिः बाहुभिः 'मां, प्रत्यालिङ्ग' मयालिङ्गिता प्रत्यालिङ्गनं कुरु । कारणमाह—'अद्य' अस्मिन् अहनि 'प्रभृतिः' ( प्रभृति वा ) आदियंस्मिन् कर्मणि तत् यथा तथा ते दूरे परिवर्त्तते विहरति या तादृशी 'खलु भविष्यामि' । अतः परं दुर्लभदर्शनां मां प्रत्यालिङ्ग ।

## NOTES

1. तावत्—Indicates अवधारण ।

2. सोदर्य्यास्नेहम्—समानोदरे शयिता इति समानोदर + य = सोदर्य्या lit. born of the same womb. Here a sister, समान becomes स optionally when य is to be attached and उदर follo[illegible]. The rule is 'विभाषोदरे' । Hence the forms—सोदर्य्या and [illegible]मानोदर्य्या । तस्याः स्नेहः । With the reading सोदर्यस्नेह derive सम[illegible]दरे शयितं सोदर्य्यम् । सामान्ये नपुंसकम् । तस्मास्नेहः । The Beng[illegible]ading सौहार्द्दम improves the style.

3. अद्यप्रभृति—प्रभृति is usually [ though not [illegible]cessarily] an अव्यय implying limit [ अवधि ] or beginning ( आदि ) । In the 1st case, it enjoins पञ्चमी as in कार्त्तिक्याः प्रभृति । In the 2nd case सप्तमी is the विभक्ति, as here.

काश्यपः—

सङ्कल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
संश्रितवती नवमालिकेयम्
अस्यामहं त्वयि च सम्प्रति वीतचिन्तः ॥ १५ ॥

इतः पन्थानं प्रतिपद्यस्व ।

KASYAPA—Through good deeds you have resorted to, as indeed previously contemplated by me for your sake a husband equal to yourself ; this Navamalika has her union with mango tree. Now I am relieved of my anxiety for it and for you. This way go back to the road.

शकुन्तला ( सख्यौ प्रति )—हला एषा दुवेण्णं वो हत्थे णिक्खेवो [ हला एषा द्वयोर्युवयोर्हस्ते निक्षेपः ] ।

SAKUNTALA—(To her friends)—Dear, this creeper is a trust into the hands of both of you.

उभे—अअं जणो कस्स हत्थे समप्पिदो ( अयं जनः कस्य हस्ते समर्पितः ] । ( वाष्पं विहरतः ) ।

BOTH—Into whose hands are ourselves entrusted ? (Shed tears.)

सङ्कल्पितमिति । अन्वयः—मया तवार्थे प्रथममेव सङ्कल्पितम् आत्मसदृशं भर्तारं त्वं सुकृतैर्गता । इयं नवमालिका चूतेन संश्रितवती । सम्प्रति अहम् अस्यां त्वयि च वीतचिन्तः । व्याख्या—'मया तवार्थे' त्वन्निमित्त 'प्रथममेव' दुष्यन्तमेव तपोवनागमनात् प्रागेव 'सङ्कल्पितं मनसा अभीप्सितम् 'आत्मनः' तव 'सदृशं' योग्यं 'भर्तारं' पतिं 'त्वं' 'सुकृतैः' निजपुण्यैः मत्प्रयासं विनैव 'गता' प्राप्ता । 'इयं' पुरोवर्तिनी 'नवमालिका' वनज्योत्स्ना 'चूतेन' 'संश्रितं' संश्रयः [ भावे क्तः ] अस्ति यस्याः तादृशी जाता [ संश्रितवत्यात्मयुप ] । अतः 'सम्प्रति' अधुना अहम् 'अस्यां' नवमालिकायां

'त्वयि च' विषये 'वीता' विगता 'चिन्ता' उत्कण्ठा यस्य तथाविधः स त्वम्। इ कन्ये मे त्वञ्च वनजोत्स्ना च। इ अपि पादस्थे। तन्निश्चिन्तोऽहम्। [ मूलम् ( रा०, वि० भ० )—'त्वदर्थं स्वगुणं गेतासि। अत्रास्तु सम्प्रति वरं त्वयि वीतचिन्तः कान्तं समीपसहकारमिमं करिष्ये॥" ( त०, न्या० )॥

इति इति। "इतः" अस्यां दिशि 'पन्थान'' गन्तव्यं मार्गं 'प्रतिपद्यास्व' प्रतिगच्छ।

इतेति। 'एषा' वनजोत्स्नायुवयोर्हस्ते निक्षेपः न्यासः।

अयमिति। 'अयंजनः' एष सखीजनः। आवां इ इत्यर्थः। ( 'वाधयम्' अस्य 'विहरतः' सूचतः )।

NOTES

1. (a) अये—An अव्यय similar to कृते in meaning. (b) संश्रितवती—Do not derive with क्तवतु because the root being सकर्मक we shall then have चूतम् कर्मणि द्वितीया instead of चूतेन = सहार्थे ३या। See Tika. (c) वीतचिन्तः—वि विशेषेण + इ + क्त कर्त्तरि = वीता gone. See Tika. (d) The Beng. reading is evidently vicious. वनज्योत्स्ना is already married. See चूतसङ्गता above. Also see Act. I.

2. विहरतः = हृ means प्रापण। विशेषेण हरतः वहिः प्रापयत· विहरतः।

3. Remark—The marriage of the mango-tree with a creeper remind us the sloka—"मिथुनं परिकल्पित त्वया सहकारः फलिनी च नन्विमौ"—Raghu

काश्यपः—अनसूये अलं रुदित्वा ननु भवतीभ्यामेव स्थिरीकर्त्तव्या शकुन्तला। ( सर्वे परिक्रामन्ति )।

KASYAPA—No weeping, Anusuya. Sakuntala has to be steadied indeed by you two. [They all go round].

शकुन्तला—ताद, एसा उडअपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अनघप्पसवा होइ तदा मे कंवि पिअणिवेदइत्तिअं विसज्जइस्सह [तात, एषा उटजपर्य्यन्तचारिणी गर्भमन्थरामृगवधूः यदा अनघप्रसवा भवति तदा मे कमपि प्रियनिवेदयितारं विसर्जयिष्यथ ]।

SAKUNTALA—Father, when this doe, slow because of foetus and roaming near the cottage, becomes safely delivered you will send to me some one—a reporter of the good news.

काश्यपः—नेदं विस्मरिष्यामः।

KASYAPA—I shall not forget this.

शकुन्तला (गतिभङ्गं रूपयित्वा)—को णु क्खु एसो णिवसणे मे सज्जइ [ को नु खल्वेष निवसने मे सज्जते ]। (परावर्तते)।

SAKUNTALA (Acting obstruction of motion)—Who indeed is this that clings to my robe ? (Turns round].

अनुसूये इति। 'रुदित्वा अलम्' [ अलंयोगात् क्त्वा ]। 'ननु' कुत्सने। 'भवतीभ्यामेव' नान्येन 'शकुन्तला स्थिरीकर्तव्या' रोदनात् वारयितव्या रोदननिषेधे नियुक्ता स्वयं रोदिषि इति कुत्सितमेतत्।

तातेति। 'एषा गर्भेण गर्भभारेण 'मन्थरा' मन्दगतिः अतएव 'उटजस्य' पर्णशालायाः 'पर्यन्तेषु प्रान्तभूमिषु 'चरति' या तथाविधा, आसन्नप्रसवा इत्यर्थः मृगवधूः यदा 'अनघः' अव्यसनः सुखः इत्यर्थः 'प्रसवो' यस्याः तादृशी 'भवति तदा मे कमपि प्रियनिवेदयितारं' शुभवार्ताहरं 'विसर्जयिष्यथ'। सुखेन प्रसूता इति वार्ता मे प्रेरयितव्या।

शकुन्तलेति। 'गतेः' गमनस्य 'भङ्गं' बाधां 'रूपयित्वा' अभिनीय। 'निवसने' वस्त्रे 'सज्जते' लगति ( "यदभिप्रायेषु सज्जते" इति भाष्यप्रयोगादात्मनेपदम् )। 'परावर्तते' वलितकन्धरा पश्चात् अवलोकयति। ["सज्जते" ( रा-, वि- ) "सज्जति" (म-)—]।

NOTES

1. (a) अलं रुदित्वा—Optionally अलं रोदनेन by the rule 'अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा'—अलम् and खलु implying prohibition give क्त्वा optionally, cp. 'अलमन्यथा सम्भाव्य' Act. I pp. 173. (b) ननु implies censure. The censure is—You have to comfort her, but you are weeping !

2. उटज &c.—उटजपर्यन्त + चर + णिनि + कर्तरि ताच्छील्ये। It.

cannot travel far because गर्भमन्थरा। (b) अनघ &c.—"अघं व्यसन-पापयोः। अघ is here व्यसन calamity. अविघ्नमागमनम् अस्मिन् अनघः safe &c. (c) प्रिय etc.—प्रियं साधु निवेदयति इति प्रिय + नि + विद + णिच् + ण्वुल् कर्त्तरि साधुकारिणि।

3. इदम्—कर्मविवक्षायां द्वितीया। षष्ठी is attached when there is शेषविवक्षा।

4. सज्जते—सञ्ज + लट् ते। The root is उभयपदी, "यदभिप्रायेषु सज्जते" इति भाष्यप्रयोगात्।

काश्यपः—वत्से—

> यस्य त्वया व्रणविरोपणमिङ्गुदीनां
> तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
> श्यामाकमुष्टिपरिवर्धितको जहाति
> सोऽयं न पुत्रकृतकः पदवीं मृगस्ते॥१६॥

KASYAPA—My child that adopted child of yours, the fawn of whose mouth pricked by kusa points the healing oil of Ingudi was poured by you, and who was reared by you with handfuls of Shyamaka grains, does not leave your track.

शकुन्तला—वच्छ किं सहवासपरिच्चाइणिं मं अणुसरसि। अचिरप्पसूदाए जणणीए विणा विवड्ढिदो एव्व। दाणिं वि मए विरहिदं तुमं तादो चिन्तइस्सदि। णिवत्तेहि दाव (वत्स, किं सहवासपरित्यागिनीं मामनुसरसि। अचिरप्रसूतया जनन्या विना विवर्धित एव। इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तस्व तावत्)। (रुदती प्रस्थिता)।

SAKUNTALA—My child, why do you follow me who is leaving your company? Without the mother that was just delivered of you, you were indeed reared, Now too, forsaken as you are by me father will look after you. Do then go back [Proceeds weeping].

यस्येति। अन्वयः—यस्य कुशसूचिविद्धे मुखे त्वया व्रणविरोपणम् इङ्गुदीनां तैलं न्यषिच्यत, सः अयं श्यामाकमुष्टिपरिवर्धितकः पुत्रकृतको मृगः ते पदवीं न जहाति। व्याख्या—'यस्य कुशानां सूचिभिः' सूचितीक्ष्णैः अग्रैः 'विद्धे' विद्यते 'मुखे त्वया व्रणानां विरोपणं' रोपकं, व्रणरोपणम् 'इङ्गुदीनां तैलं न्यषिच्यत' निषिक्तम् सः अयं श्यामाकानां धान्यविशेषाणां मुष्टिभिः 'त्वद्दत्ताभिः' परिवर्धितकः अनुकम्पया पोषितः (अनुकम्पायां कः) अतीव मुखेन अत्तुमसमर्थो वराको मुष्टिशः श्यामाकं मुखे दत्त्वा वर्धितः, 'कृतकः' कृत्रिमः 'पुत्रः' (मयूरव्यंसकादिः) 'मृग' ते पदवीं पन्थानं न 'जहाति' न मुञ्चति। यत्र त्वं यासि सोऽपि स्नेहात् तत्रैव याति।

वत्सेति। 'सहवास' संसर्गं 'परित्यजन्ति' या तथाविधां 'मां किमनुसरसि'। 'अचिरप्रसूता' 'जननी' निजमाता मृगी, तया 'विना विवर्धित एव' न च मृतः। 'इदानीमपि मया' कृत्रिमया जनन्या 'विरहितं त्वां तातश्चिन्तयिष्यति'। सद्योजातोऽपि मात्रा त्यक्तो न मृतः, अधुना वर्धितस्य, उपमात्रा त्यक्तस्य, मातामहेन च चिन्तितस्य का क्षतिः? 'रुदती' नेत्रजलं मुञ्चन्ती एव प्रस्थिता' चलिता।

## NOTES

1. (a) व्रणविरोपणम्—वि + रुह + णिच् + ल्युट् करणे = विरोपणम् or विरोहणम् healing. See Tika. (b) न्यषिच्यत—नि + सिच् + लङ् त कर्मणि। In लङ् this becomes नि + असिच् &c.—Thus अ intervenes between इ and स yet we have ष by the rule 'प्राक्सितादड्व्यवायेऽपि' which applies to roots सुनोति, सुवति &c—up to सेव (Pan. 8. III. 70). This includes सिच्। (c) कुशसूचिविद्धे—This explains the necessity of feeding. With the mouth sore (विद्ध) it was unable to eat so had to be nursed. (d) पुत्र &c—कृतक is कृत्रिम् (कृत एव) false, Compare कृतककोपम्' Act I—Beng. Rec. कृतकः पुत्रः gives पुत्रकृतकः instead of कृतकपुत्रः (see Tika). Or पुत्रश्चासौ कृतकश्च पुत्रकृतकः कर्मधा—See also our notes on अपत्यकृतिकाम्—Uttaracharit Act I.

2. सहवास—&c.—सह is similar सदृश। सहवासः similar life, i.e. एकवासस्थानम्, संसर्गः। कर्मधा— तं साधुपरित्यजतीति सहवास + परि + त्यज + णिनुच् साधुकारिणि कर्तरि। ताम्।

3. (a) विवर्धित एव—The force is—There was every likelihood of your dying, but you grew. (b) विनयिष्यति—Your own mother left you when you were too young to help yourself. You are now grown up and only your adoptive mother is leaving you ; besides, there is your grand-father to look after you. So take heart.*

काश्यपः—वत्से, अलं रुदितेन । स्थिरा भव । इतः पन्थानमालोकय ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया विरतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १७ ॥

KASYAPA—My child, weeping is useless. Be steady. Watch the track. By firmness have the flow of tears stopped—tears that have obstructed the operation of your eyes of which the eyelashes are turned up. Your steps are indeed getting irregular on this ground where you have not noticed the high and low places.

काश्यप इति । 'रुदितेन' रोदनेन ( भावे क्तः ) 'अलं', मा रोदीः इत्यर्थः । 'इतः' अस्मिन् दिने 'पन्थानमालोकय मार्गं प्रति सावधाना भव । कारणमाह—

उत्पक्ष्मेति । अन्वयः—उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं वाष्पं स्थिरतया विरतानुबन्धं कुरु । अलक्षितनतोन्नतभूमिभागे अस्मिन् मार्गे ते पदानि विषमीभवन्ति खलु । व्याख्या—'उद्गतानि पक्ष्माणि, लोमानि ययोः तादृशयोः' 'नयनयोः' सम्बन्धे 'उपरुद्धा' आवृता 'वृत्तिः' व्यापारो नेत्रव्यापार इत्यर्थः येन तादृशं 'वाष्पं' नेत्रजलं 'स्थिरतया' धीरतया ( कर्तरि तृतीया ) 'विरतः' निवृत्तः 'अनुबन्धः' प्रवाहो यस्य तथाविधं कुरु । धैर्यमवलम्ब्य नेत्रजलं निवर्तय । 'अलक्षितः' अदृष्टः 'नतः' निम्नः 'उन्नतः'

* Adopted by Prof. Gajendragadkar

उन्नत 'भूमिभागः' यस्मिन् तादृशे 'अस्मिन् मार्गे' वर्त्मनि ते पदानि पादपाताः अवि-षमाणि 'विषमाणि' सम्पद्यमानानि 'भवन्ति खलु' तस्मात् निषिध्यते ( खलु निषेधे । "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः ) । निर्गतमपि जलं पक्ष्मसु स्थितं सत् दृष्टिं रुणद्धि । भूमिश्च नतोन्नता । तेन गतिर्व्याहन्यते । तत् स्थिरा भव नेत्र-जलं संहर पन्थानमालोकय इति पूर्वेण सम्बन्धः । [ "विरतानुबन्ध" ( वि- म- )— "विहतानुबन्ध" ( रा )—'शिथिलानुबन्धं ( स- व्या- ) ] ॥

NOTES

1. [a] उन्नपक्ष्मणो:—Up-turned eyelashes are considered as enhancing beauty. Here Prof. Gajendragadkar objects—"... a reference to the enhanced beauty of Sakuntala is hardly proper in Kasyapa's speech." I do not say that Kasyapa did refer to her enhanced beauty I merely state a fact—point of excellence furnished her by nature. But even if Kasyapa did refer to her beauty the reference would not be improper. All depends upon the motive. To a child its mother is the most handsome woman in the world ; so is the child to its mother or the father. They would like to dwell upon this handsomeness. Thus the illustrious Sankarcharyya speaks of the वपुस् of Gauri, whom he regards as his mother, in this strain—

"'मञ्जीररम्योभिनवचरणं वलित्रयाभिमध्यं

हाराभिरामकुचमम्बुरुहायताक्ष्याः'' ।

Prof. G. takes उन्नपक्ष्मन् to imply that the eyes were deliberately kept open. Hence he says 'the eyes remain full of tears. For, unless the eyelashes come down tears do not fall to the ground eyes are not cleared of tears which consequently obstructed their operation,"

When so saying Prof. G. overlooks two obvious difficulties.—(1) No reason is given in the text why Sakuntala deliberately kept her eyes open and did not wink. (2) The verse speaks of अनुबन्ध of tears. Hence, eyes open or closed,

the tears will fall down the cheeks in streams. (d) अवच्छित &c.—Tears prevent proper watching of the road (c) पदानि विषमीभवन्ति—Hence watch the road (पन्थानमवलोकय)। विषम + च्वि + भू + लट् अन्ति । (d) खलु—अवधारणे or निषेधे । See Tika also.

2 Reading—The reading शिथिलीभवन्ति as occurs in the Beng. Recn, is suported by भोज in the सरस्वतीकण्ठाभरण ।

**शार्ङ्गरवः—भगवन्नोदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम्, अत्र सन्दिश्य प्रतिगन्तुमर्हसि ।**

SARNGARAVA – Venerable Father, it is enjoined that an affectionate person has to be followed up to the water's edge. Well, this is the edge of a lake. It behoves thee to return having advised us here.

**काश्यपः—तेन हि इमां क्षीरवृक्षच्छायामाश्रयामः । ( सर्वे परिक्रम्य स्थिताः ) ।**

KASYAPA—Then we resort to this shade of the fig tree (All go round and stop).

**काश्यपः ( आत्मगतम् )—किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः सन्देष्टव्यम् । ( चिन्तयति ) ।**

KASYAPA (Aside)—What message most suitable for his honour Dushyanta, can indeed be sent by me ? (Meditates)

भगवन्निति । उदकस्य अन्तः सीमा 'उदकान्तः' जलप्रान्तः, आ उदकान्तात् 'ओदकान्तम्' जलप्रान्तपर्यन्तम् (अव्ययीभावः) 'स्निग्धः' वत्सलो 'जन. अनुगन्तव्य इति श्रूयते' एतद्धि शास्त्रम् । 'तत्' तस्मात् 'इदं सरसः तीरं' तटं जलप्रान्त इत्यर्थः । अतः परं भगवता न गन्तव्यम् । 'अत्र सन्दिश्य; सन्देशमुक्त्वा प्रतिगन्तुमर्हसि "ओदकान्तम् ( त- व्या- )—ओदकान्तात्" (म —"उदकान्तम्" ( रा- वि- ) ] ।

तेनेति । क्षीरपदी वृक्षः 'क्षीरवृक्षः' वटभेदः ( शाकपार्थिवादिः ) तस्य 'छायाम् आश्रयामः आश्रित्य तिष्ठाम इत्यर्थः । 'सर्वे' अभिनेतारो जनाः 'परिक्रम्य' रङ्गमञ्चे रितो भ्रान्त्वा 'स्थिताः' गमनाद्विरताः ।

किमिति। दुष्यन्तस्य युक्तरूपं योग्यम् 'अस्माभिः' मादृशैर्जनैः 'किं नु खलु सन्देष्टव्यम्'। यस्मात् 'अहं काश्यपसगोत्रः' श्रोता पुरुकुलधुरन्धरो राजा दुष्यन्तः। तत् किञ्च उक्तं स्यात्। (चिन्तयति ध्यायति-युक्तायुक्तं विचारयति)।

NOTES

1. (a) ओदकान्तम्—The अव्ययीभाव is optional by the rule "आङ् मर्यादाभिविध्योः। Here the sense is मर्यादा (exclusion). Hence the forms ओदकान्तम (compounded द्वितीयान्त, क्रि' वि') and ओदकान्तात (uncompounded). The सन्धि is allowable because by the rule "निपात एकाजनाङ्" आङ् is not a प्रगृह्य Also आ meaning मर्यादा or अभिविधि is really आङ् from which ङ् has disappeared (ङित्)। Compare—ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥"- Bhashya. [b] Monier Williams reads ओदकान्तात uncompounded. ओदकान्तं स्निग्धो जनोऽनुगन्तव्यः' seems to be an old saying. The Bhashya perhaps refers to it when it says 'आ उदकान्तात ओदकान्तात्'। This to a certain extent favour M. W. But all others have the मकारान्त reading.

2. युक्तरूपम्—अतिशयेन युक्तम् इति युक्त+रूपप् प्रशंसायाम्। Construe दुष्यन्तस्य युक्तरूपम् or दुष्यन्तस्य सन्देष्टव्यम्।

शकुन्तला (जनान्तिकम्) - हला पेक्ख। णलिणीपत्तान्तरिदं वि सहअरं अदेक्खन्तो आदुरा चक्कवाई आरडदि। दुक्करं अहं करेमि। [हला प्रेक्षस्व। नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाकी आरटति। दुष्करमहं करोमि]

SAKUNTALA—[Aside]—Dear, see,—The female Chakravaki shrieks distressed when not seeing her mate even hidden by lotus leaves. I am doing what is difficult to do.

अनसूया—सहि, मा एव्वं मन्तेहि [सखि, मा एवं मन्त्रयस्व]।

एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं।
गरुअं विरहदुक्खं आसाबन्धो सहावेदि ॥ १५ ॥

[ एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ॥
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥१७॥ ]

ANASUYA—Friend, do not say so She too, without her beloved, passes the night which becomes excessively long through grief. The tie of hope causes to support the sorrow of separation though heavy

इतेति। नलिनीपत्रैः' कमलदलैः अन्तरित व्यवहितम् अपि सहचरं' चक्रवाकम् 'अपश्यन्ती', न तु प्रनष्टमपश्यन्ती आतुरा' चक्रवाकी आरटति विरौति। अहं दुष्करम् अतिकठोरं करोमि। चक्रवाकी प्रियस्य पत्रान्तरमपि न सहते अहन्तु वनगिर्यादीनामपि व्यवधानं नगणयामि प्रियस्य। का एवमन्या कुर्यात्। एतत् दुष्करकरणं 'प्रेक्षस्व'। [ तथा च भासः—दुष्करमहं करोमि – स्वप्ननाटकम् ]।

अनसूयेति। मा एवं मन्त्रयस्व भाषस्व [ मा शब्दोऽयं माङ्‌शब्दात् भिन्नः। तेन न लुङ्; 'मा गच्छ वृकेभ्यः' इत्यत्र यथा ]।

एषेति। अन्वयः—एषापि प्रियेण विना विषाददीर्घतरां रजनीं गमयति। आशाबन्धः गुरु अपि विरहदुःखं साहयति। व्याख्या—'एषा' चक्रवाकी 'अपि प्रियेण' चक्रवाकेण 'विना' तद्वियोगजेन 'विषादेन दीर्घतरां पूर्वतो दीर्घत्वेन अनुमिताम् [ द्वयोरन्यतरस्य पूर्वावस्थामपेक्ष्य अतिशयः। तेन तरप् ] रजनीं' गमयति' यापयति [निशि वियुक्तौ चक्रवाकौ तिष्ठत इति प्रसिद्धिः ]। एषा अपि दुष्करं करोति न त्वमेव केवलम्। अत्र कारणम्—'आशारूपो यो 'बन्धः' बन्धनं स 'गुरु' दुर्वहम् 'अपि विरहस्य दुःखं'' पीडां' वियोगव्यथां साहयति' विरहिभिर्वाहयति। [ हेतुमणिच्। विरही विरहदुःखं सहते—आशाबन्धः विरहिणा विरहदुःखं साहयति इति] 'यथा गुरु किञ्चित् वस्तु दुर्वहं नागदन्तकादिषु बद्धं सुवहं भवति आशया बद्धो विरहभारोऽपि तथा।

## NOTES

1. प्रेक्षस्व—ईक्षण is not necessarily to see. It may mean seeing or considering, or noting &c. as in समीक्ष्यकारिन्, परीक्षण &c. The object of प्रेक्षस्व is the whole fact.—One does not tolerate

the intervention of even a leaf the other minds not forests and hills. Or, no comparison is intended ; ईक्षण is seeing ; the कर्म is the आरम्भ of the चक्रवाकौ।

2. (a) रजनीम्—रजनी गच्छति इति रजनीं गमयति। अणिकर्तृः कर्म वा by the rule 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ'। [b] साहयति—The nominative is विरहिणा understood. See Tika [c] The words गुरु (heavy) and बन्ध (knot) suggest that विरहदुःख is a weight. This is उत्प्रेक्षा। गुरु is श्लिष्ट meaning दुःसह when दुःख is considered by itself, and दृढ if thought of as a weight. Thus रूपक and श्लेष here help the उत्प्रेक्षा। There is अर्थान्तरन्यास also.

3. Remark—For paralell compare—

'मनोरथेन जीवामि —Bhasa in Swapna.

'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां

सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि'—Meghadutam

'आशातन्तुर्न च कथमप्यस्य मुच्छेदनीय प्राण-

त्राणं कथमपि करोत्यायताक्ष्याः स एक.—Mal. IX.

काश्यपः—शार्ङ्गरव, इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

KASYAPA Sarnagirva the king has to be told by you this in my words having placed Sakuntala in front.

शार्ङ्गरवः—आज्ञापयतु भवान्।

SARNAGARVA—Let your reverence command.

काश्यपः—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मनस्-

त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम्।

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया

भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १८ ॥

KASYAPA—Having well thought of us whose wealth is self-restraint, of the high family of yourself too and of that flow

of affection of her towards you by no means brought about by relatives; she is to be ranked by you with equal honour among your wives. More than this depends on luck. That should not indeed be expressed by the wife's relatives.

काश्यप इति । 'त्वया मद्वचनात्' मद्वचनमवलम्ब्य [ल्यब्लोपे कर्मणि पञ्चमी] स राजा शकुन्तलां पुरस्कृत्य' अग्रतो निधाय 'इति वक्तव्यः' एवम् अभिधातव्यः ।

अस्मानिति । अन्वयः—संयमधनान् अस्मान्, आत्मनः उच्चैः कुलञ्च, त्वयि अस्या कथमपि अबान्धवकृतां स्नेहप्रवृत्तिञ्च साधु विचिन्त्य त्वया इयं दारेषु सामान्य-प्रतिपत्तिपूर्वकं दृश्या । अतः परं भाग्यायत्तम् । तत खलु वधूबन्धुभिर्न वाच्यम् । व्याख्या—'संयमः आत्मदमनमेव 'धनं' येषां तथाविधान् 'अस्मान्' मद्विधान् तापसान् ( 'अस्मान्' = माम्—इति पक्षे तु 'सविशेषणानां प्रतिषेधः' इति प्राप्नोति । अस्मान् संयमधनान् विचिन्त्य इति विधेयत्वेन व्याख्यायां तत् परिहार्यम्) 'आत्मनः स्वस्य 'उच्चैः कुलञ्च' पौरवं वंशञ्च 'त्वयि भवद्विषये 'अस्याः' शकुन्तलायाः 'कथमपि अबान्धवकृतां सर्वथा बन्धुजनप्रयासं विनैव घटितां ताम्' अभिप्रयितां 'स्नेहप्रवृत्तिञ्च' भावानुबन्धञ्च 'साधु' सम्यक् 'विचिन्त्य' अनुध्याय 'त्वया इयं 'शकुन्तला 'दारेषु' पत्नीषु [ दारशब्दः पुंसि बहुत्वे । अधिकरणे सप्तमी) 'सामान्या' साधारणी तुल्या इत्यर्थः या 'प्रतिपत्तिः' गौरवम् ( 'प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे' इति हैमः) तत् पूर्वकम्' अगौरवभेदेन इत्यर्थः 'दृश्या' सम्भाव्या । तथा कृते मम संयमस्य, तव वंशोन्नतेः अस्याः स्नेहप्रकर्षस्य च सदृशं भवति । 'अतः' अस्मात् गौरवभेदेन दर्शनात् 'परम् अधिकं गौरवाधिक्येन दर्शनमित्यर्थः, भाग्यायत्तं 'भाग्याधीनम् । 'तत् खलु' गौरवाधिक्येन दर्शनं किल 'वध्वा बन्धुभिः' पित्रादिभिः 'न वाच्यं' न शंसनीयम् ।

NOTES

1. [a] अस्मान्—Refers to ascetics in general; hence plural. If taken to refer to कण्व alone, then the construction must be अस्मान् संयमधनान् विचिन्त्य—considering me as rich in self-restraint, and not संयमधनान् अस्मान् विचिन्त्य—thinking of me who is rich in selfrestraint. The reason is अस्मद् will not take the plural when refering to one object only, if there is a विशेषणपद

in the वाक्य ['सविशेषणानां प्रतिषेधः']। Hence for the plural संयमधन has to be predicated (विधेय) of अस्मद्। सम्+यम+अप् भावे = संयमः। सः धनं येषाम्, बहु। See Tika (b) अस्याः—शेषे षष्ठी। Not कृद्योगे कर्तरि षष्ठी। the क्तिन् in प्रवृत्ति gives षष्ठी to स्नेह which is then compounded. (c) ताम्—that flow of affection—प्रसिद्धार्थे! Hence no यच्छब्द is necessary. Comp—'तं वेश्मवासं प्रसमीक्ष्य कुर्युर्वीतस्पृहत्वं शिथिलं समर्थाः"—Kumara. (d) सामान्य &c.—सामान्या प्रतिपत्तिः, कर्मधा—। सा पूर्वा यस्मिन् कर्मणि तत् सामान्यप्रतिपत्तिपूर्वम्। तदेव इति स्वार्थे कन्। the समासान्त कप् will not give ह्रस्व in पूर्वा because of the prohibition 'न कपि' "। Or the rule does not apply here, "क्वचित् अपवादविषये उत्सर्गः प्रवर्तते"। Better say—सा पूर्वा (अर्थे) यस्मिन्, बहु। गड्वादित्वात् सप्तम्यन्तस्य परनिपातः। ततः कप् समासान्तः। (e) भाग्यायत्तम्—आ+यत्+क्त कर्मणि = आयत्तम् Retricted. भाग्ये आयत्तम्। सहसुपेति समासः।

शार्ङ्गरवः गृहीतः सन्देशः।

SARNAGARVA—The message is received.

काश्यपः—वत्से, त्वमिदानीमनुशासनीयासि। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।

KASYAPA—My child, you have to be instructed now, though dwelleis of the forest, we are acquainted with worldy matters.

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम।

SARNAGARVA--Nothing indeed can pcssibly be unknown to those that are of superior intelligence

शार्ङ्गरव इति। 'सन्देशो' वाचिकः 'गृहीतः' मनसि कृतः।

काश्यप इति। इदानीम्' अधुना भर्तुः भवनप्रवेशकाले 'त्वम् अनुशासनीया' उपदेष्टव्या 'असि'। 'वनम् ओकः' भवनं येषां तथाविधा जनाः। 'लौकिकज्ञा' लोकव्यवहाराभिज्ञा अतः उपदेशनसमर्थाः।

शार्ङ्गरवेति। न खलु' न नूनं धीमतां 'कश्चित् अविषयः' अगोचरः 'नाम' (नाम इति सम्भाव्ये)। प्राज्ञैः ज्ञानवद्भिः सर्वमेव ज्ञायते।

1. (a) इदानीम्—Now i.e. on the occasion of your entering a new life. (b) अनुशासनीया - The अनुशासन will relate to married

life. (c) लौकिकज्ञा—लोके विदितम् or भवम् इति लोक+ठञ्—लौकिकम् wordly. तत् जानन्ति इति लौकिक+ज्ञा+क कर्त्तरि। Or—लौकिकज्ञ ज्ञाः, इत्यम्। (d) वयम्—For plural, take the whole of वनौकसोऽपि सन्तो लौकिकज्ञाः as the predicate; otherwise the Varttika 'अविमृष्टविधेयांशः प्रतिषेधः'' will interfere.

काश्यपः—सा त्वमितः पतिकुलं प्राप्य—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥१८॥ 20
कथं वा गौतमी मन्यते ?

ASYAPA—[Instructed by me] and having reached thy husband's residence from hence thou shouldst always await upon thy superiors; shouldst adopt the behaviour of a loving friend towards the group of thy co-wives, shouldst not through peevishness go against thy husband even if insulted, shouldst be extremely courteous towards thy attendants; shouldst be without arrogance in enjoyments. Thus do young females reach the status of matrons. The perverse are the banes of their family. How does Gautami think?

गौतमी—एत्तिओ वहुजणस्स उवदेसो। जादे, एदं क्खु सव्वं ओधारेहि [एतावान् वधूजनस्योपदेशः। जाते, एतत् खलु सर्वमवधारय]।

GAUTAMI—This much is the lesson for one who is a bride My child, remember all this.

काश्यप इति। 'सा' मया उपदिष्टा त्वम् 'इतः' अस्मात् स्थानात् 'पत्युः कुलं' गृहं भर्त्तुर्भवनम् ("कुलं जनपदे गृहे" इति विश्व.) 'प्राप्य'—

शुश्रूषस्वेति। अन्वयः—गुरून् शुश्रूषस्व, सपत्नीजने प्रियसखीवृत्तिं कुरु, विप्रकृतापि रोषणतया भर्त्तुः प्रतीपं मास्म गमः, परिजने भूयिष्ठं दक्षिणा भव, भोगेषु अनुत्सेकिनी भव। एवं युवतयो गृहिणीपदं यान्ति। वामाः कुलस्य आधयः॥ यथा—

युवतयो वामाः एवं कुलस्य आधयः (सन्त्यः) गृहिणीपदं यान्ति। व्याख्या—'गुरून्' श्वश्रूप्रभृतीन् 'शुश्रूषस्व' परिचर ("शुश्रूषा परिचर्या च" इति त्रिकाण्डशेषः। 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदं नित्यम्]। 'सपत्नीजने समूहे 'प्रियसख्याः वृत्तिं' व्यापारं 'कुरु'। सपत्नीषु प्रियसखीव वर्तस्व। 'विप्रकृता' पत्या अवमानिता 'अपि रोषणतया क्रोधनतया क्रुद्धभावेन इत्यर्थः 'भर्तुः' पत्युः 'प्रतीपं' प्रतिकूलं 'मास्म गमः' मा याः 'परिजने' सेवकेषु 'भूयिष्ठं' बाहुल्येन 'दक्षिणा' उदारा 'भव', 'भोगेषु' सम्पत्सु अनुत्सेकिनी' अगर्विता भव। 'एवम्' अनेन प्रकारेण 'युवतयः' तरुण्यः 'गृहिणी-पदं' गृहकर्त्री अधिकारं 'यान्ति' लभन्ते। 'वामाः' प्रतिकूलाः' विपरीतचारिण्यो याश्च; 'कुलस्य' गृहस्य 'आधयः' मनःपीडास्वरूपः [ 'आधिर्मानसपीडायां प्रत्याशावाञ्छ बन्धके व्यसने चाप्यधिष्ठाने' इति विश्वः ]। यद्वा—युवतयो' नवे वयसि वर्तमानाः 'वामाः' स्त्रियः [ 'विद्याद्वामामपि स्त्रियाम्' इतिविश्वः ] 'एवम्' अनेन प्रकारेण कुलस्य' गृहस्य 'आधयः' अधिष्ठानानि, कुलालम्बभूताः सत्यः [ 'आधिः···अधिष्ठाने' इति प्रागुक्त विश्वः ] 'गृहिण्याः पदम्' अधिकारं 'यान्ति' गृहावलम्बनत्वात् अन्वर्थेन गृहिणीशब्देन अभिधीयन्ते इति भावः।* ['भोगेषु' ( मो- न-, न्या- )—'भाग्येषु' ( रा-, वि ) ]।

कथमिति। 'गौतमी [ वा इति विकल्पे ] 'कथं' 'केन प्रकारेण' मन्यते' अवधारयति। मदुक्तं युक्तं न वा गौतमी वदतु। स्वयं जानन्नपि दाक्षिण्यात् गौतम्याः अभिमतं जिज्ञासते।

गौतमीति। 'वधूजनस्य एतावान्' एतन्मात्रम् 'उपदेशः' परं ज्ञातव्यं किमप्यस्ति तासाम्? 'अवधारय' हृदये कुरुष्व।

## NOTES

1. (a) शुश्रूषस्व—श्रु + सन् + लोट् स्व। The आत्मनेपद is due to the rule 'ज्ञाश्रुस्मृदृशां सनः' which bars the rule 'पूर्ववत् सनः'। Thus though श्रु is परस्मैपदी. the सन्नन्त root is always आत्मनेपदी। (b) सपत्नीजने—समानः पतिः यासाम् gives समान + पति by the rule 'नित्यं सपत्न्यादिषु'। Next we get ङीप् in the feminine because the word has become नकारान्त। This gives समानपत्नी। समान now becomes स by निपातन in the rule quoted – 'समानादिषु

* Adopted Prof. by Gajendragadkar.

इति वक्तव्ये समासस्य समासार्थं वचनम्'—Vritti. (c) प्रतीपम्—प्रतिकूलमपाम् इति प्रति + अप् + अ (समासान्त) by the rule 'ऋक्पूरब्धू: पथामानक्षे'। This gives प्रति + अप। Now by the rule.—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' we get प्रति + ईप = प्रतीपम् against. (b) भोगेषु—This is the Bengali reading. Bhoja has the same; this ought to be enough to reject भागेषु। Besides भागेषु i.e. अदृष्टेषु is hardly intelligible here. (e) युवतय:— By the rule 'यूनस्ति:' we get युवन् + ति = युवति in the feminine. this bars the form यूनी with ङीप्। The rule 'पुंयोगादाख्यायाम्' does not apply, so ङीप् is not available. युवती is a different word meaning-one having a husband etc. and is not at all related to युवन्। We are thus left with only one feminine form of युवन् viz. युवति, acc. to Panini.

काश्यप:—वत्से, परिष्वजस्व मां सखीजनञ्च।

KASYAPA—My child, embrace me and the friends.

शकुन्तला—ताद इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति [ तात इत किं प्रियंवदामिश्रा: सख्यो निवर्त्तिष्यन्ते ]।

SAKUNTALA—Father, well should Priyambada and other friends turn back from here ?

काश्यप:—वत्से इमे अपि प्रदेये। न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।

KASYAPA—They too, my child, have to be given away in marriage. It is not fit for them to go there, Gautami will go with thee.

शकुन्तला ( पितरमाश्लिष्य)—कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअतडोम्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं [ कथमिदानीं तातस्य अङ्कात् परिभ्रष्टा मलय-तटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि ]।

SAKUNTALA—( Embracing her father ) Removed from my father's lap like a sandal sapling uprooted from the side of the Malaya, how shall I now support life in another soil ?

वत्से इति। मां सखीजनस्य परिग्रमस्य' भागिनी। भागिन्या ममात् निवर्तय इत्यर्थः।

शकुन्तलेति। 'प्रियंवदया मिश्राः' [ इतत् ] युक्ताः, प्रियंवदाप्रभृतयः।

काश्यप इति। 'प्रदेये' प्रदातव्ये, अनुरूपाय वराय इत्यर्थः।

शकुन्तलेति। 'इमामीं तातस्य अङ्कात्' क्रोड़ात् 'परिभ्रष्टा च्युता अहं' 'मलयस्य' तदाख्यस्य पर्वतस्य 'तटात्' प्रान्तभूमेः 'उन्मूलिता' उत्खाता 'चन्दनस्य' चन्दनतरुस्य' 'लता इव' शाखा इव नवोद्गतचन्दनशावक इव इत्यर्थः [ "लता ज्योतिष्मती दुर्वाशाखा-वल्लीप्रियङ्गुषु" इति हेमः ] कथं केन प्रकारेण 'जीवितं जीवनं 'धारयिष्यामि'।

## NOTES

1. (a) प्रियंवदामिश्रा—If मिश्र is taken as प्रशंसावचन then say प्रियंवदामहिता: honoured by the company of प्रियंवदा। See also ante—शाङ्गरवमिश्राः &c. (d) निवर्तिष्यन्ते—निवर्त्स्यन्ति is an optional form.

2. गन्तुम—By the maxim 'अव्ययकृतो भावे' we have गन्तुम् = गमनम्। Hence construe तव गन्तु गमनम् अनयोः सम्बन्धे न युक्तम्। Do not say अनयोःगन्तु गमनम् &c.—For, the षष्ठी in अनयोः is barred by the rule "न लोकाव्ययनिष्ठाखलर्थतनाम्"। This is after the भाष्यकार। According to the सूत्रकार we have 'शकधृष—ज्ञाति अर्थार्थे' उपपदे तुमुन्।

3. (a) The reading मलयतरून्मूलिता—does not recommend itself. A twig cut off from a tree (तरु) cannot to the propriety be called उन्मूलता। Again if मलयतरु is चन्दन then the second reference to चन्दन in चन्दनलता is superfluous. (b) चन्दनलता—A very young tree is not improperly called a लता। लता cannot be taken here as शाखा। It is sapling—लता इव इति लता by transference of epithets. Indeed when one wants to naturalise a foreign tree one does not think of cutting off branches from tree, but looks for saplings. On the whole तट seems preferable

4. देशान्तरे—अन्तर means भिन्न, अन्य ; अन्यो देशः देशान्तरम् । मयूर-व्यंसकादित्वात्पुरुषः । A नित्यसमास of देश and अन्तर । Neuter owing to the rule 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" । अधि ७मी ।

काश्यपः—वत्से किमेवं कातरासि—

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥२१॥ ॥२१॥

( शकुन्तला पितुः पादयोः पतति । )

[KA]SYAPA—Why art thou so distressed, my child? Placed in the proud position of the chief wife of thy husband of distinguished ancestry; busy with his affairs that are momentous through exuberanae of wealth, and having soon brought forth a holy son as the East does the sun thou shalt not my child, mind the sorrow caused by separation from me. [Sakuntala falls at her father's feet].

काश्यपः—यदिच्छामि ते तदस्तु ।

KASYAPA—Let that befall you what I wish.

काश्यप इति । हे 'वत्से किं' निमित्तम् 'एवं' कातरा' आर्ता 'असि' । प्रकारवमेतत् ॥ अभिजनेति अन्वयः—वत्से, त्वम् अभिजनवतो भर्तुः श्लाघ्ये गृहिणीपदे स्थिता [ सती ], तस्य विभवगुरुभिः कृत्यैः प्रतिक्षणम् आकुला [ सती ], अचिरात् प्राचीवार्कं पावनं तनयं प्रसूय च, मम विरहजां शुचं न गणयिष्यसि । व्याख्या—हे 'वत्से, त्वम्' प्रशस्तः 'अभिजनः' कुलं यस्यास्ति, तस्य, महाकुलीनस्य त्यर्थः [कुलं ह्यभिजनो जन्मभूम्यामपि' इत्यमरः] 'भर्तुः' पत्युः 'श्लाघ्ये' प्रशस्ते 'गृहिणीपदे' गृहिणीस्थाने स्थिता' भर्तुः स्वच्छगामिनी तद्गतहृदया सती, 'तस्य' भर्तुः 'विभवेन' सम्पदा 'गुरुभिः' महद्भिः' 'कृत्यैः' कार्यैः' करणैः 'प्रतिक्षणं' निरन्तरम् 'आकुला' व्यग्रा गुर्वी कार्यचिन्तया व्यासक्तहृदया सती, 'अचिरात्' शीघ्रं 'प्राची' इता पूर्वी दिक् 'अर्कं' पूर्ण्यं सूर्यम् इव 'पावनं' पुण्यं 'तनयं' पुत्रं प्रसूय च' पुत्रमुत्पाद्य

आक्रष्टहृदया च सती 'मम विरहजां' वियोगजनितां शुच'' शोकम् ["मन्युशोकौ तु शुक् स्त्रियाम्" इत्यमरः] 'न गणयिष्यसि' न चिन्तयिष्यसि। अनुभूतामपि शुचं व्यासक्ततया न गुर्वीं सम्भावयिष्यसि।

काश्यपः इति। 'ते' तव सम्बन्धे 'यत् इच्छामि यत् अकथितमधुना मे मनसि वर्त्तते 'तत् अस्तु' फलतु। इति वस्तुनिगूहनम्। शापकारणं प्रत्याख्यानं दिवेन चक्षुषा पश्यन् मेनकानुकम्पामीहमान आह—"यदिच्छामि ते तदस्तु", मयि दूरे मेनका त्वां रक्षतु, इति भावः।

## NOTES

1. (a) अभिजनवतः—अभिजन्यते अस्मिन् इति अभि+जन+घञ् अधिकरणे संज्ञायाम् = अभिजनः race. No वृद्धि because of the prohibition "जनिवध्योश्च"। अभिजन+मतुप् (वतुप) प्रशंसायाम्। (b) Kanva here refers to the diversion which will detract her attention from the separation—(1) The love of the husband; (2) The numerous engagements, (3) affection for child. She will certainly feel the absence of her father when at ease. But this will leave her no time to think of it.

2. यदिच्छामि—Here he is anticipating future events. See Tika. Prof. Gajendragadkar is unwilling to believe that Kanva had prevision of future events at this stage. I think the pronouncement "दुष्यन्तेनाहितं तेजो" &c. coupled with the fact that Anasuya and Priyamvada had kept perfect silence in the matter was enough to rouse the sage's curiosity and make him think thus disclosing all details.

Prof. G. also asks "why did he [Kanva] not remove the root cause of all by sending the ring to the king?" I answer, it may be said that this does not necessarily imply absence of all knowledge. For Prof.G. concedes that the sage know all after the pupils had gone back to the hermitage. But even then the sage did nothing in the matter. He could have at once got the ring back from the Raghu's belly and ended the misery of his daughter there and then.

—— is, why Kanva, a renowned sage, stood apparently indifferent in more than we laymen can guess. To us it is enough that Kanva's indifference makes way for Sakuntala's atonement for the sin [of insulting Durvasas]; an atonement that purges her soul of dross and helps in its onward march towards perfection. Besides, without this indifference of Kanva as without Durvasa's curse we should have missed the beautiful scene of reconciliation drawn in Act VII !!

शकुन्तला ( सख्यावुपेत्य )—हला दुवे वि मं समं एव्व परिस्सजह [ हला द्वे अपि मां सममेव परिष्वजेथाम् ]।

SAKUNTALA (Approaching the friends)—Dear, embrace me both of you simultaneously.

सख्यौ ( तथा कृत्वा )—सहि, जइ णाम सो राआ पच्चभिण्णाणमन्थरो भवे तदा इमं अत्तणामहेअङ्किअं अङ्गुलीअअं दंसेहि [ सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्, ततः तस्मै इदम् आत्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ]।

FRIENDS (Doing the same)—Friend, if perchance that king becomes slow at recognition then show him this ring stamped with his own name.

शकुन्तला—इमिणा संदेहेण वो आकम्पिदम्हि [ अनेन सन्देहेन वामाकम्पितास्मि ]।

SAKUNTALA—I am startled by this suspicion of yours.

हलेति। 'सख्यौ उपेत्य' तयोः समीपं गत्वा उभयोस्तुल्यादरा इति हेतोः आह 'समं' युगपत् एव 'परिष्वजेथाम्' आलिङ्गतम्।

सख्याविति। 'यदि नाम' यदि सम्भाव्यमेतत् 'स राजा प्रत्यभिज्ञाने' संस्मृतौ, त्वदपूर्वं मया इति ज्ञाने 'मन्थरः' शिथिलः, अलसः विमुख इति यावत् 'भवेत्' 'ततः तस्मै इदम् आत्मनः' अस्यैव राज्ञः 'नामधेयेन' नाम्ना 'अङ्कितं' मुद्रितम् अङ्गुलीयकं दर्शय।

शकुन्तलेति। 'अनेन सन्देहेन' शङ्कया स्मृतिलोपशङ्कया 'आकम्पिता' भीता 'अस्मि',—इति भाविमाः विपत्तेराभासः। [ "सन्देहेन" ( रा० म० )—"सन्देहेन" ( त०, वि०, व्या० ) ]॥

## NOTES

1. तदर्थ्ये—"कर्मणा यमभिप्रैति—" इति सम्प्रदाने चतुर्थी।

2. सन्देहेन—The reading सन्देशेन also suits the context. सम् + दिश + घञ् कर्मणि = सन्देश: instruction. सन्देह is शङ्का suspicion, "यदि भवेत्" in the speech above is शङ्का। Besides the speech following also refers to शङ्का ( स्नेह: पापशङ्की )। I therefore prefer सन्देहेन।

सख्यौ—मा भाआहि। सिणेहो पावशङ्की [ मा बिभीहि। स्नेह: पापशङ्की ]।

FRIENDS—Be not alarmed. Affection suspects evil.

शाङ्गरव: — युगान्तरमारूढ: सविता। त्वरतामत्रभवती।

SARNAGARVA—The sun has ascended another stage. Let her ladyship hasten.

शकुन्तला ( आश्रमाभिमुखी स्थित्वा )—ताद कदा णु भुओ तवोवणं पेक्खिस्सं [ तात कदा नु भूयस्तपोवनं प्रेक्षिष्ये ]।

SAKUNTALA (standing with her face towards the hermitage)—Father, when shall I again see the hermitage ?

काश्यप:—श्रूयताम्—

भुक्त्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥२१॥

KASYAPA—Listen. Having long continued as co-wife of the vast four-sited Earth, having settled Daushyanti without a rival, you will again take residence in this tranquil hermitage with thy husband by whom the burden of relatives shall have been placed on him (Daushyanti).

सख्याविति। 'मा बिभीहि' माभैषी: [ चाक्ति यो मा-शब्द' तद्योगे न लुङ् ] 'स्नेह: पापम्' अनिष्टम् 'शङ्कते' इत्येवम् अनिष्टं शङ्कावती न हि वस्तुतस्तत् सूचयति॥

शार्ङ्गरवेति । 'सविता' सूर्य्यः 'अन्यत युगं' भागयुगलं प्रहरमित्यर्थः ["युगं कृतादौ युगले" इति विश्वः ] 'आरूढः' प्राप्तः । दिनमानस्य प्रथम प्रहरमतीत्य द्वितीयं प्रविष्टः इत्यर्थः । 'भवभवती' मान्या शकुन्तला 'त्वरताम्' सत्वरा भवतु । [ 'युगान्तरमारूढः" ( रा-, वि-, म- )—'दूरमधिरूढ़:' ( त-, न्या ) ] ॥

शकुन्तलेति । 'आश्रमस्य अभिमुखी' सती 'स्थित्वा' गमनात् निवृत्य ।

भूत्वेति । अन्वयः—चिराय चतुरन्तमहीसपत्नी भूत्वा, अप्रतिरथं तनयं दौष्यन्तिं निवेश्य तदर्पितकुटुम्बभरेण भर्त्रा सार्द्धं शान्ते अस्मिन् आश्रमे पुनः पदं करिष्यसि । व्याख्या—'चिराय' चिरम् [ अव्ययमेतच्चिरार्थकम् ] 'चत्वारोऽन्ताः प्रान्तभागा यस्याः तथाविधायाः समग्राया इत्यर्थः, 'मह्याः' विपुलाया धरित्र्याः 'सपत्नी भूत्वा', अविद्यमानः 'प्रतिरथो' विपक्षो यस्य तथाविधं 'तनयं दौष्यन्तिं' दुष्यन्तात्मजम् [अजातत्वात् न नाम्ना सामान्येन दौष्यन्तिशब्देन व्यपदेशः* ] निवेश्य' राज्ये स्थापयित्वा, 'तस्मिन्' दौष्यन्तौ 'अर्पितः' निक्षिप्तः कुटुम्बानां बान्धवानां 'भरः' भारः पोषणकर्म येन तथाविधेन 'भर्त्रा सार्द्धं' पत्या सह 'शान्ते' शमप्रधाने' विषयचिन्तारहिते 'अस्मिन आश्रमे पुनः' भूयोऽपि 'पदं करिष्यसि' स्थानं लप्स्यसे ['पदं स्थाने विभक्त्यन्ते'' इति:] । परिणते वयसि पुत्राय राज्यं दत्त्वा भर्त्रा सह इहैव आरण्यकव्रतं चरिष्यसि इत्यर्थः । [ मूलम् ( रा-, वि-, म- )—'भूत्वा चिराय सदिगन्तमहीसपत्नी दौष्यन्तिमप्रतिरथं तनयं प्रसूय । तत्सन्निवेशितभरेण सहैव भर्त्रा शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥' (त-, न्या)]

## NOTES

1. विभीहि—भी + लोट हि । माङि लङ्' does not apply here. The मा here is different from माङ् and gives लोट् as in 'मा कुरु धनजनयौवनगर्वम्' (see ante also). Optionally बिभिहि ।

2. युगान्तर—&c*—युग is two. It is usual to divide the day-time into 8 equal parts and attach specific virtue to each. Two of these here probably make a युग । Then from sun-rise to about 9 A.M. is th 1st युग ; the second extends from about 9 A.M. to 12 noon ; and so on. अन्यत् युग युगान्तरम् another युग i.e. the 1st युग is already over and the 2nd has commenced.

---

* Adopted by Prof. Gajendragadkar.

3. (a) चतुरन्त &c.—मही the vast one is the धरणी; she again not in part but taken in her entirety. (b) दौष्यन्तिम्—दुष्यन्तस्य अपत्यं पुमान् इति दुष्यन्त + इञ् = दौष्यन्तिः by the rule 'अत: इञ्'। तम्। (c) अप्रति &c.—प्रतिरूपः or प्रतिगतो रथः अस्य इति प्रतिरथः an antagonist. अविद्यमानः प्रतिरथो यस्य, तम्। (d) निवेश्य—नि + विश + णिच् + ल्यप् having settled. राज्याभिषेचन is settling; in this sense निविश occurs in "स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम्'—Raghu XV. 97. Again विवाह is also settling. निविश् has this sense in "निवेश्य सनाभौ यदाह कन्यामुपलप्स्ये"—Mahabh, also 'भवान् निवेश्यः प्रथमं ततोऽयं भीमः'—Ibid. (e) तदर्पित &c.—Having left the kinsmen in his care, i.e. You two only will come. If निवेश्य means विवाह्य then this epithet mentions by implication, the coronation of the son. For unless he is the king he cannot support the kinsmen. But coronation is an important ceremony and should not be left to be inferred from a relatively insignificant affair which is honoured by direct mention. It seems better therefore to take निवेश्य = राज्ये अभिषिच्य।

गौतमी - जादे, परिहीअदि गमणवेला। णिवत्तेहि पिदरं। अहवा चिरेण वि पुणो पुणो एसा एव्वं मन्तइस्सदि। णिवत्तेदु भवं [ जाते, परिहीयते गमनवेला। निवर्त्तय पितरम्। अथवा चिरेणापि पुनः पुनः एषा एवं मन्त्रयिष्यते। निवर्त्ततां भवान्]।

GAUTAMI—My child, the time for starting is being spent. Send back your father. Or even for long she will talk thus again and again. Let your reference return.

काश्यपः—वत्से, उपरुध्यते तपोऽनुष्ठानम्।

KASYAPA—My child, the practice of penance is being obstructed.

शकुन्तला ( भूयः पितरमाश्लिष्य )—तवचरणकिलन्तं तादसरीरं। ता मा अदिमेत्तं मम किदे उक्कण्ठेदु [ तपश्चरणक्लान्तं तातशरीरम्। तस्मात् अतिमात्रं मम कृते उत्कण्ठस्व ]।

SAKUNTALA (Again embracing her father)—Father's frame is emaciated by practice of penance. So do not pine for me excessively.

शीतमिति। 'गमनस्य वेला' समयः 'परिहीयते' 'क्षीयते प्रातरेव गमनस्य युक्तत्वात्। 'पितरं निवर्त्तय' आश्रमं प्रति प्रेषय—इत्युक्ते, काश्यप संबोध्य आह—'अथवा पश्चान्तरे 'एषा' शकुन्तला चिरेणापि' कालेन न विरता भविष्यति 'एवम्' ईदृशमेव 'पुनः पुनर्मन्त्रयिष्यते'। तत भवान् निवर्त्तताम्' आत्मना एव प्रतिगच्छतु।

काश्यप इति। 'तपसः अनुष्ठानम्' आचरणम् उपरुध्यते विघ्नितं भवति। तत प्रतियामि। (उपपूर्वात् रुधेः कर्मणि लट्)।

शकुन्तलेति। 'तातस्य' शरीरं तपश्चरणेन कृशं' जातम्। 'तत् मम कृते' मदर्थं (कृते इत्यव्ययम्) अति मात्रम्' अत्यर्थं 'मा उत्कण्ठस्व'मा उत्सुको भव ('उत्कण्ठस्व' (म॰)—'उत्कण्ठितम् (रा॰, वि॰)॥

NOTES

1. परिहीयते—परि + हा + लट् ते कर्मकर्त्तरि। The cool morning is passing.

2 उत्कण्ठस्व—The reading उत्कण्ठितम् seems bad in grammar Here also मा is diff. from माङ्।

काश्यपः (सनिःश्वासम्)—

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः॥२२॥ 23

गच्छ। शिवास्ते पन्थानः सन्तु। (निष्क्रान्ता शकुन्तला सहयायिनश्च)।

KASYAPA—(With a sigh)—My child how possibly can my grief abate while beholding the offering of Nivara, previously made by thee, sprouted at the door of the cottage? Go, may the stages of thy journey be safe (Exeunt Sakuntala and the attendants).

सख्यौ (शकुन्तलां विलोक्य)—हद्धी, हद्धी अन्तरिदा

सउन्दला वनराईए । [ हा धिक्, हा धिक् अन्तरिता शकुन्तला वनराज्या ] ।

FRIENDS (Watching Sakuntala)—Alas ! Alas Sakuntala is hidden by the line of forests.

कामाय इति । 'निःश्वासेन' दुःखनिश्वासेन 'सह' आह । शममिति । अन्वयः —हे वत्से त्वयारचितपूर्वम् उटजद्वारि विरूढं नीवारबलिं विलोकयतः मम शोकः कथं नु शममेष्यति । व्याख्या—हे 'वत्से त्वया पूर्वम् इतः प्राक् 'रचितं विहितम् [ "भूतपूर्वे चरट्" इति निर्देशात् पूर्वशब्दस्य परनिपातः ] उटजस्य पर्णशालायाः' 'द्वारि' प्रवेशे एव 'विरूढम्' अङ्कुरितम् [ अतः सदैव दर्शनपथे स्थित्वा स्मारकम् ] 'नीवारमयं बलिं' पूजापहारं 'विलोकयतः' पश्यतो 'मम शोकः' तापः 'कथ नु' कथमपि न [ इति काकुः ] शम' शान्तिम् एष्यति' गमिष्यति [गमनार्थस्य इणधातोः लृट्] इयद्दिन या मम बलिकर्मणि साहाय्ये स्थितासीत् सा गता, इत्यनिशं स्मारितः कथं शोकं शमयेयम् । ["द्वारि विरूढम्" (वि )—"द्वारविरूढम्" (रा-, त-, न्या-, म- )] ।

गच्छेति । 'ते पन्थानः' दिने दिने गन्तव्याः अध्वानः (प्रतिदिनं भिन्नः इति बहुवचनम् । अविवक्षिते भिन्नत्वे तु एकवचनमेव । "शान्तानुकूलपवनश्च शिवश्च पन्थाः" इति यथा ) ॥ ( 'शकुन्तला निष्क्रान्ता सहयायिनश्च' अनुचराश्च निष्क्रान्ताः इति लिङ्गवचनविपरिणामेन योजनीयः ) ॥

सख्याविति । 'हा धिक्' इति आत्मनो भाग्यं निन्दतः । 'वनराज्या' कानन-श्रेण्या 'अन्तरिता' व्यवहिता अदर्शनीया जाता । ( "अन्तरिता ' ( त न्या- )— "अन्तर्हिता ( रा-, वि म- ) ) ।

## NOTES

1. उटजद्वारि—The force is that the grains have sprouted at the very threshhold of the hut Whenever I enter, they remind me of you. So how can I cease to be sorry ?* Thus द्वार requires emphasis. It should not therefore be in the middle of a compound as in the reading उटजद्वारविरूढम् । It

* Adopted by Prof. Gajendragadkar.

does not lose prominence when it is last in a तत्पुरुष, because 'उत्तरपदार्थ प्रधानस्तत्पुरुष.'—a तत्पुरुष has its last member prominent.

2. गच्छ—You go, I will manage my grief somehow. Indicates deep emotion.*

3. अन्तरिता—अन्तर here means अन्तर्धि screen. अन्तरं सञ्जातमस्या इति अन्तर + इतच् screened.

काश्यपः ( सनिःश्वासम् )—अनसूये गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छ माम् ( सर्वे प्रस्थिताः ) ।

KASYAPA (With a sigh)—Anasuya, your fellow-worker in religion has left. Having checked your grief, follow me. (All start to go).

उभे—ताद, सउन्दलाविरहिदं सुण्णं विअ तवोवनं पविसामो [ तात, शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशाम ः।

BOTH—Father, without Sakuntala we are entering as it were a vacant hermitage.

काश्यप इति । 'सह' एकत्र धर्मं चरति या सा गतवती । 'शोकं निगृह्य', नियम्य 'मामनुगच्छ' चिरमिव वयमत्र स्थिताः । तदेहि आश्रमं यामः । 'प्रस्थिताः' प्रस्थातुमारब्धाः ( आदिकर्मणि क्तः ) । ( 'अनुगच्छ माम्' ( वि ) – "मामनुगच्छतम्" ( त , न्या )—'अनुगच्छतं मां प्रस्थितम् ( रा- म- ) ] ॥

उभे इति ॥ 'शकुन्तलया विरहितं वियुक्तं 'तपोवनं शून्यमिव' जनहीनमिव 'प्रविशामः' ['तपोवनम्' ( त- वि-, न्या- )—'तपोवनं कथम् ( रा- म- ) ] ॥

NOTES

1. (a) गतवती—The emotion here reaches its climax * (b) सहधर्म &c.—धर्मं चरति इति धर्म + चर + णिनि ताच्छील्ये = धर्मचारिणी । सह धर्मचारिणी । सहसुपेति समासः । Refers to शकुन्तला । (c) अनुगच्छ—Kasyapa generally ignores प्रियंवदा ।* Compare अनसूये, अलं रुदित्वा· Ante. Also see Introduction.

---

* Adopted by Prof. Gajendragadkar.

काश्यपः—स्नेहप्रवृत्तिरेवं दर्शिनी । ( सविमर्शं परिक्रम्य ) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः—

अर्थो हि कन्या परकीय एव तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामंप्रत्यर्पितन्यास इवान्तरात्मा ॥२२॥ २५

( निष्क्रान्ताः सर्वे )

KASYAPA—The flow of the affection shows it thus. (Going round thoughtfully) Heigh Ho ! Ease has now been attained by me after having sent Sakuntala to her husband's abode (You ask) why ? Because a daughter is indeed another's property.. To-day having sent her to her husband, this inner self of mine has become perfectly serene like one who has restored a deposit (Exeunt all).

काश्यप इति । स्नेहस्य प्रवृत्तिः प्रवाहः 'एवं दर्शयति' या तथाविधा [स्यस्मादृशैर्योगिभिः] । 'विमर्शेन' चिन्तया 'सह परिक्रम्य' आह । हन्त 'हर्षे' 'भोः' इत्याभिमुख्ये । 'शकुन्तलां प्रतिकुलं' पतिगृहं 'विसृज्य' संप्रेष्य 'इदानीं स्वास्थ्यं' स्वभावं 'लब्धम्' । इयन्तं कालं नाहं प्रकृतौ स्थितः अधुना तु प्रकृतिमापन्नः ।

अर्थ इति । अन्वयः—हि कन्या परकीय एव अर्थः । अयं मम अन्तरात्मा अद्य तां परिग्रहीतुः संप्रेष्य प्रत्यर्पितन्यास इव प्रकामं विशदो जातः । व्याख्या—'हि' यतः 'कन्या' दुहिता 'परकीय एव' परस्य अन्यस्य एव [ "कुग्जनस्य परस्य च" इति छे कुक् ] 'अर्थः' धनम् । कन्या हि परस्य अन्यस्य निक्षेपः [ तथा च भवभूतिः—"कन्यायाः परार्थता मतैव" ] । 'अयम् एष "मम अन्तरात्मा' आभ्यन्तरं स्वरूपम् अद्य तां न्यासरूपां कन्यां परिग्रहीतुः' परिणेतुः सम्बन्धे 'संप्रेष्य' विसृज्य 'प्रत्यर्पितः' निर्यातितः 'न्यासः' निक्षेपो येन तथाविधः 'इव प्रकामम्' अत्यर्थं 'विशदः' प्रसन्नो 'जातः' । परधनरक्षणचिन्तया इयद्दिनमप्रसन्नं चेतः अद्य प्रसन्नं जातम् । [ मूलम् ( रा-, वि-, म- )—"जातोऽस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेपमिवार्पयित्वा" ( त-, व्या- ) ।

निष्क्रान्ता इति । 'सर्वे' अभिनेतारो जनाः 'निष्क्रान्ताः' ।

NOTES

1. (a) अयं &c.—अयस्य प्रवृत्ति: your affection for Sakuntala.
(b) एवंदर्शिनी—एवम् + इश + णिच + णिनि कर्तरि exhibits in this light. There are people, plants, and every thing as before in the hermitage; Sakuntala alone has left. Yet you see it vacant. Your affection for the departed makes it so to you.

2 हि—Expresses हेतु। My mind is at ease because I have restored the trust property.

## चतुर्थोऽङ्कः—(FOURTH ACT)

## पञ्चमोऽङ्कः।

(ततः प्रविशत्यासनस्थो राजा विदूषकश्च)। विदूषकः (कर्णं दत्वा)—भो वअस्स, सङ्गीदसालन्तरे अवहाणं देहि, कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि। जाणे तत्तहोदी हंसवदीआ वण्णपरिअअं करेदि त्ति [भो वयस्य, सङ्गीतशालान्तरे अवधानं देहि, कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते। जाने तत्रभवती हंसपादिका वर्णपरिचयं करोतीति]।

(Then enter the king and Vidushaka on seats). VIDUSHAKA (Listening)—O Friend, direct your attention to the interior of the music-hall. Vocal performance of sweet and chaste song is being heard. I think that Her Highness Hamsapadika is cultivating the acquaintance of melodies.

राजा—तूष्णीं भव यावदाकर्णयामि।

KING—Keep quiet while I listen.

विदूषक इति। 'कर्णं दत्त्वा' श्रवणमभिनीय। 'सङ्गीतशालायाः' तौर्यत्रिक-भवनस्य 'अन्तरे' मध्ये 'अवधानं देहि' मनः प्रेरय। 'कला' च 'विशुद्धा' अनवद्या च या गीतिः' तस्याः स्वरेण' कण्ठध्वनिना 'संयोगः' मधुरा विशुद्धा च गीतिः कण्ठेन गीयमाना 'श्रूयते' [शृणोतेः कर्मणि लट्]। 'जाने' मन्ये तत्रभवती 'हंसपदिका' तदाख्या राज्ञी 'वर्णस्य' गानक्रियायाः 'परिचयम्' अभ्यासं 'करोति'।

राजेति। 'यावत्' यत्कालम् अहम् आकर्णयामि गीतिं शृणोमि तावत् 'तूष्णीं' 'भव' मौनमवलम्बस्व।

NOTES

1. Summary.—अथैकदा कार्यचिन्तया श्रान्तो दुष्यन्त एकान्ते विदूषकेण सह स्थितः सङ्गीतशालायां उच्चरन्तीं कामपि कलगीतिकामशृणोत्। स च गायिकार्थं विदूषकं प्रेषितवान्, शकुन्तलया च सह कण्वपरिजनाः प्राप्ताः; तैरावेदितवृत्तोऽपि राजा शापोपहतचेताः शकुन्तलावृत्तान्तं नास्मरत्। सा तु अभिज्ञानेन अङ्गुलीयकेन स्मारयामि इति यावत् हस्तं परामृशति तावत् शून्यां दृष्टा अङ्गुलिः। अतः सा तं बोधयितुं रहस्यं किञ्चित् तयोर्वृत्तमवर्णयत्। तदपि असौ शापमोहिता अपूर्वमिव मेने। एवं सति तत्रैव तां परित्यज्य आश्रमवासिनो निवृत्ताः; सापि रुदती आप्रसवं परिरक्षणीय पुरोहिताय समर्पिता राज्ञा। राजभवनात् सहपुरोधसा निर्गतान्तु तां कापि ज्योति-मयी स्त्रीमूर्तिः उत्क्षिप्य विहायसा जगाम्।

2. वर्णपरिचयम्—वर्ण is गीतक्रम melody. "वर्णः स्वर्णे व्रते" इति प्रस्तुत्य "भेदे गीतक्रमे चर्मे" इत्या[illegible]मः।

3. (a) यावत्—अवधौ। See Tika. Or अवधारणे। 'आकर्णयाम्येव' इत्यर्थः। (b आकर्णयामि—आसम्यक् कर्णेन गृह्णामि इति आ+कर्ण+णिच्, लट् मिप्=आ+कर्णि (नामधातु) लट् मिप्=आकर्णयामि। This is by the Varttika 'प्रातिपदिकात् धात्वर्थे बहुलम् इष्ठवच्च' as in अश्वेन गमयति अश्वयति।

**आकाशे ( गीयते )—**

**अहिणवमहुलोलुवो तुमं तह परिचुम्बिअ चूअमञ्जरि।**
**कमलवसइमेत्तणिव्वुदो महुअर विसुमरिदोसि णं कहं ॥१॥**

[अभिनवमधुलोलुपस्त्वं परिचुम्ब्य चूतमञ्जरीम्
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ ]

IN THE AIR (Song)—Ever onging after fresh honey, O Bee having kissed the mango blossom ke that, how have you forgotten her, being satisfied with a mere sojourn inside the lotus.

राजा—अहो रागपरिवाहिणी गीतिः ।

KING—O how wing with emotion is the song ?

विदूषकः—किं दाव गीदीए अवगदो अक्खरत्थो [किं तावत् गीत्या अवगतः अक्षरार्थः] ।

VIDUSAKA—Has the meaning of the words of the song been really grasped by you ?

अभिनवेति । अन्वयः—हे मधुकर, अभिनवमधुलोलुपस्त्वं चूतमञ्जरीं तथा परिचुम्ब्य कमलवसतिमात्रनिर्वृत्तः सन् कथमेनां विस्मृतोऽसि । व्याख्या—हे 'मधुकर' भ्रमर [भो राजन् इति व्यङ्ग्यम्] 'अभिनवस्य' नूतनस्य अनास्वादितरसस्येत्यर्थः 'मधुनः' पुष्परसस्य [प्रणयरसस्य इति व्यङ्ग्यम्*] 'लोलुपः' अभिलाषी 'त्वं चूतस्य' सहकारस्य 'मञ्जरी' नवजातम् अनास्वादितरसम् मुकुलम् [नवयौवनां माम् इति व्यङ्ग्यम्*] 'तथा' तेन प्रकारेण भावप्रकर्षपूर्वकमित्यर्थः 'परिचुम्ब्य' उपभुज्य 'कमल' प्रफुल्लपद्म [ नतप्राययौवनायां देव्यां वसुमत्याम् इति व्यङ्ग्यम्*] 'वसतिमात्रेण' वासमात्रेण' [ दैवीसान्निध्यमात्रेण इति व्यङ्ग्यम्' ॥ मयूरव्यंसकादि । 'मात्रेण समासः । अयन्तु समस्यते एव' इति भौजोक्तरीत्या समासः ] 'निर्वृत्तः सुखितः सन् कथं' किमर्थम् 'एनां चूतमञ्जरीम्' [ माम इति व्यङ्ग्यम्*] 'विस्मृतोऽसि' न स्मरसि [गीत्युक्तस्य गत्यर्थत्वात् कर्त्तरि क्तः] ।

राजेति । 'रागस्य' गातेः 'परिवाहः' निर्गमनम् अस्ति यस्याः तादृशी, 'रागमेति' परिवाहयति' समन्तात् निःसारयति वा तादृशी वा 'गीतिः' । अत्र गायिकायाः भावः स्पष्टमुपलभ्यते इत्यर्थः ।

विदूषक इति । 'अक्षराणाम् अर्थः' गूढोऽभिसन्धिः 'अवगतः' ज्ञातः 'किम्' ?

---

* Adopted by Prof. Gajendragadkar.

NOTES

1. (a) अभिनव &c.—मधिं तं लुभ्यति लुप् + यङ् + अच् कर्तरि = लोलुपः greedy. अभिनवं मधु fresh honey. कर्मधा।—तत्र लोलुपः। (b) तथा—तेन प्रकारेण, i.e with such ardour. (c) कमल &c.—कमल is a full-blown lotus. It suggests dearth of honey. कमले वसतिः कमलवसतिः sojourn in a lotus. सहसुपेति समासः। सा एव कमलवसतिमात्रम् mere sojourn &c—नित्यसमासः—मयूरव्यंसकादिः। तेन निर्वृतः। इतरत्—। According to Bhoja, words of the निष्ठा and मयूरव्यंसक class my lead in a compound. "भोजस्तु न चानेन समास इति वचनात् अयमर्थेन सह समासात एव इत्याह मयूरव्यंसकमिव इति"—Vardhamana in the Ganaratnamahodadhi. (d) विस्मृतः—वि + स्मृ + क्त कर्तरि वर्तमाने। it is मनसा गमनम्। Hence, गत्यर्थत्वात् कर्तरि क्तः।

राजा ( स्मितं कृत्वा )—सकृत्कृतप्रणयोऽयं जनः। तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भनं गतोऽस्मि। सखे माधव्य मद्वचनादुच्यतां हंसपादिका निपुणमुपालब्धोऽस्मीति।

KING (With a smile)—This person is one to whom love was made only once. Hence I have received her sharp rebuke with reference to queen Vasumati. Friend Madhavya let Hamsapadika be told in my words that I am cleverly censured.

विदूषकः—जं भवं आणवेदि [ यत्भवान् आज्ञापयति ] ( उत्थाय) भो वयस्स गहीदस्स तह परकीएहिं हत्थेहिं सिहण्डए ताडीअमाणस्स अच्छराए वीदरायस्स विअणत्थि दाणिं मे मोक्खो ( भो वयस्य, गृहीतस्य तथा परकीयैर्हस्तैः शिखण्डके ताड्यमानस्य, अप्सरसा वीतरागस्य व, नास्तीदानीं मे मोक्षः )।

VIDUSHAKA—What Your Highness commands. (Rising) For me O friend, held by the hair with other's grip and

* Adopted by Prof. Gajendragadkar.

being beaten, there is no escape now, as of a passion-less person held by a nymh.

**राजा—गच्छ नागरिकवृत्त्या संज्ञापयैनाम् ।**

KING—Go tell her after the fashion of a jolly person.

राजेति । 'अय जनः' एषा गायिका 'सकृत्' एकवारं कृतः मया दर्शितः 'प्रणयी' यस्मिन् तथाविधः । 'तत्' तस्मात् प्रणयप्रणयात् परं किञ्चित् तस्मात् 'देवी' बहुमतीम् अन्तरेण' बहुमतीमभिलक्ष्य 'अस्याः' हंसपादिकायाः [कृद्योगा कर्तरि षष्ठी ] महत्' कठोरम् उपालम्भनं' तिरस्कारं 'गतोऽस्मि'। 'मित्रम्' अतिदिश्य न उपालब्धोऽस्मि इति सदंशनात्' मद्वचनमनुसृत्य [ल्यब्लोपे कर्मणि पञ्चमी] 'उच्यतां हंसपादिका' ।*

विदूषक इति । 'तथा हंसपादिकया' 'परकीयैः:सखीप्रभृतीनां' 'हस्तैः' शिखण्डकै चूडाग्रं गृहीतस्य' धृतस्य ततः 'ताड्यमानस्य मे इदानीम् अप्सरसा' [ भाष्यप्रयोगात् एकत्वेऽपि ] गृहीतस्य 'वीतरागस्य' अनासक्तस्य' प्रशान्तस्य इत्यर्थः 'इव मोक्षो' मुक्तिः, इस्मात् संसाराच्च निवृत्तिः 'नास्ति'। यथा अप्सरसा गृहीतो योगी विपद्यते तथा अहमपि तथा इत्यर्थः ।* ( परकीयैः हस्तैः also suggests अविवाहितहस्तेन)

राजेति । 'नागरिकस्य' नगरवासिनो जनस्य 'वृत्त्या' व्यवहारेण, विदग्धाचारेण सरसवाक्प्रयोगेण इत्यर्थः 'एनां संज्ञापय' निवेदय । मद्वचसा यथा अनुकूलता ईर्ष्या न कुर्यात् ।*

NOTES

1. (a) स्मितम्—Vidusaka's simplicity, as evinced by the question brought the smile, (b) सकृत् &c.—सकृत् is an अव्यय meaning एकवारम् once. प्रणय is याच्ञा, i.e. love. (c) देवीम्—This is the form of speech for a कृताभिषेका queen – 'देवी कृताभि- [illegible]षेकायां इतरासु च भट्टिनी ।'—Darpana 'अन्तरान्तरेण युक्ते' इति द्वितीया । [illegible]रेण—An अव्यय meaning 'with reference to' as in 'भवन्त- मन्तरेण कीदृशोऽस्या दृष्टिरागः'—Act II.

2 (a) गृहीतस्य—गृहीत is seized, also ensnared (in the case of वीतराग]. The वध is by attendents etc.. By उपचार this is attri-

* Adopted by Prof. Gajendragadkar.

buted to हंसपदिका herself. Hence there is no विघ्। Compare 'पञ्चभिर्हलैः कर्षति ग्रामं ग्रामणीः' when कर्षण though done by others is attributed to the ग्रामणी and there is no विघ्। (d) विवक्षके—The construction is विवक्षके यत्नेतव्यं not विवक्षके तावकत्वं। (e) अप्सरसा —अप्सरस is usually feminine plural; but singular is also used 'आपः सुमनसो वर्षा अप्सरस सिकता समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्।' एका अप्सरा, एका सिकता—are seen in the Bhashya. (d) वीतरागसा—वीतः विगतः रागः विषयवासना यस्य तस्य (e) मोक्षः—मोक्ष + णिच् स्वार्थे ( चुरादि ) + अच् or घञ् भावे—मोक्षः release also emancipation ( in the case of वीतरागः )।

3 नागरिक &c.—नगरे नियुक्तः or भव इति नगर + ठक् or ठञ् = नागरिकः a citizen. Here the word implies cleverness प्रावीण्यम्; The proper affix is then वुञ् by the rule 'नगरात् कुत्सनप्रावीण्ययोः'। That would give नागरक। But all editions read नागरिक। Raghava seems to avoid the difficulty by taking नागरिकवृत्ति as नागरिका चक्र for a peculiar gesture in which the wrist is made to drop, the index and middle finger are bent, and the hand is shaken in ridicule. Thus 'नागरिकवृत्तिरिति विवृताकरा मध्यमतर्जनीभ्यां वक्राभ्यामधोमुख कम्पिताभ्याम् इत्यर्थः'। This may save the grammar but it sacrifices the sense.

विदूषकः—का गई ( का गतिः ]।

VIDHUSAKA—No help.

राजा—( आत्मगतम्, किं नु खलु गीतार्थमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि। अथवा—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

( पर्याकुलस्तिष्ठति )।

KING( Aside )—Why indeed, even without separation from my desired person, am I so powerfully moved on hearing what is sung ? Or that a creature, though happy becomes agitated on beholding the beautiful, or hearing sweet sounds is nothing but that it unconsciously recalls with its mind likings of previous births that are permanent through association ( i.e. Vasana). (Continues agitated).

राजेति। 'किं' प्रश्ने। 'नु' वितर्के 'खलु' अवधारणे। वितर्कगर्भः प्रश्नः। उत्कण्ठार्थे अवधारणम्। 'गीतम् अर्थे' वस्तु 'गीतस्यगानस्य अर्थे' वस्तु वा आकर्ण्य 'इष्टजनेन' प्रियजनेन 'विरहात्' वियोगात् 'ऋतेऽपि' विनैव 'किं' नु खलु बलवत्' अत्यर्थम् 'उत्कण्ठितोऽस्मि विचलितोऽस्मि। उत्कण्ठायां निश्चयः। तत्कारणं प्रति वितर्कगर्भः प्रश्नः। शापेन विस्मृतशकुन्तलावृत्तान्त आह 'इष्टजनविरहादृतेऽपि' इति। एतद्धि वचामात्रमलीकोक्तम् 'अबाधपूर्वं' शकुन्तलास्मरणम्।

रम्याणीति। अन्वयः—जन्तुः सुखितोऽपि रम्याणि वीक्ष्य मधुरान् शब्दान् निशम्य च पर्युत्सुको भवति इति यत् तत्नूनं भावस्थिराणि जननान्तरसौहृदानि अबोधपूर्वं चेतसा स्मरति। व्याख्या—'जन्तुः' यः कश्चित् जीवः 'सुखितोऽपि' सञ्जातसुखोऽपि सुखमनुभवन्नपि [तारकादित्वादितच् प्रत्ययः] रम्याणि' मनोहराणि वस्तूनि [विशेषण-मात्रप्रयोगो विशेष्यप्रतिपत्तौ] 'मधुरान्' हृद्यान् 'शब्दान् निशम्य च' श्रुत्वा च 'पर्युत्सुकः' उन्मना भवति इति यत् तत् नूनम्' असंशयं 'भावेन' 'संस्कारेण, वासनया इत्यर्थः: 'स्थिराणि' अपरिहार्याणि [ यद्वा—'भावे' हृदये 'स्थिराणि' बद्धमूलानि ] 'जननान्तरस्य' पूर्वजन्मनः सुहृदयस्य भावाः 'सौहृदानि', प्रियाणि [अणि हृद्भावः ; आदिवृद्धिः। अनणि हृद्भावे तु उभयवृद्ध्या सौहार्दानि॥ आद्ये 'अणि परतो हृद्भावः, द्वितीये 'सिद्धे हृद्भावे अण्' इति विवेकः॥ सुहृत्सुहृदयशब्दौ द्वावपि युवादिषु पठ्येते; ततः भावे अण्) अबोधपूर्वम्' अज्ञातपूर्वं यथा तथा 'चेतसा' मनसा स्मरति', अजानन् 'स्मरति। स्मृतिमात्रं भवति स्मृतेर्विषयस्य तु बोधो न जायते। मन्ये पूर्वजन्मनि मया गीतानुयायि किञ्चिदनुभूतं नाधुना तत्स्वरूपमुपलभ्यते। स्मृति-विषयमनुस्मरन्नेवोत्कण्ठितः॥ वस्तुतस्तु शकुन्तलाश्रया प्रीतिस्तेन स्मृता, शापाच्च शकुन्तला॥

[ "पर्युत्सुको भवति" ( त., का. )—"पर्युत्सुकोऽभवति" ( रा. वि, म. ) ]। पर्याकुलः' उन्मनाः 'तिष्ठति'।

## NOTES

1 (a) आकर्ण्य—आ सम्यक् कर्णेन गृहीत्वा इति आ + कर्ण + णिच् + ल्यप्। कर्णेन गृह्णाति कर्णयति is like अश्वेन गमयति अश्वयति &c—See Ante. (b *इष्टजन &c.—This उत्कण्ठा is exactly like what one feels under इष्टजनविरह। But दुष्यन्त does not recollect इष्टजनविरह in the present life Hence the explanation is sought in incidents of prior life in the verse following. Compare—'वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् सः। उन्मना प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः॥"—Raghu.

2. (a) *चेतसा—All स्मरण is चेतसा। Why then mention चेतसा? Is देहेन स्मृति possible? The poet seems to mean—तस्य चित्त (स्वतः) स्मरति, स तु न स्मरति। (b) जनमान्तर &c—सुहृदयस्य भावाः इति सुहृदय + अण्। Here when we attach अण् we do not get हृत् preceding Hence the rule 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" does not apply The अण् gives आदिवृद्धि and हृदय changes into हृत by the rule "हृदयस्य हृत लेखयदण्लासेषु"। If, however, we say सुहृदो भावाः we have सुहृत + अण् in which अण् comes after हृत्। This will give उभयपदवृद्धि resulting in सौहार्द। The first differs from this in the fact that there हृत appears after अण् has come in. Both सुहृदय and सुहृत are of the युवादि class and अण् is available in the sense भाव or कर्म by the rule 'हायनान्तयुवादिभ्यः अण्"। The वृत्तिकार does not however, recognise the form सौहृद। जननान्तरम्, मयूरव्यंसकादि [ तस्य सौहृदानि। तानि। Words of the मयूरव्यंसकादि class may lead in a कर्मधा—according to भोज supported by वर्धमान (see Ante), Hence जननान्तर may be compounded with सौहृद। But the भाष्य uses the compound जनमान्तर in which अन्तर does not lead. This seems to raise doubts as to whether समास with अन्तर should be treated as falling under मयूरव्यंसकादि।

---

* Adopted by Prof. Gajendragadkar.

3. Reading.—The reading पर्य्युत्सुकोभवति implies अभूततद्भाव by च्वि। But the person who is सुखित is undoubtedly अपर्य्युत्सुक। Hence सुखित gives all the meaning of च्वि and something more. च्वि is therefore not available—वाक्येन अर्थस्य उक्तत्वात् अभावः प्रत्ययस्य। पर्य्युत्सुको भवति is better. N. B.—The sloka seems to be an echo of "मनो हि जन्मान्तरसङ्गतिज्ञम्"—Raghu. VII.

(ततः प्रविशति कञ्चुकी)। कञ्चुकी—अहो नु खलु ईदृशीमवस्थां प्रतिपन्नोऽस्मि।

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३॥

कामं धर्मकार्य्यमनतिपात्यं देवस्य। तथापि इदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम्। अथवा अविश्रमोऽयं लोकतन्त्राधिकारः।

भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥४॥

यावन्नियोगमनुतिष्ठामि। (परिक्रम्यावलोक्य च) एषदेव—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा निषेवते श्रान्तमना विविक्तम्।
यूथानि सञ्चार्य्य रविप्रतप्तः शीतं दिवा स्थानमिव द्विपेन्द्रः ॥५॥

(उपगम्य) जयतु जयतु देवः। एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसन्देशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः। श्रुत्वा देवः प्रमाणम्।

(Then enters the Chamberlain). CHAMBERLAIN—Alas! Am I indeed reduced to such a state? Employed in the inner

apartments of the king that very cane-wand which was taken up by me as custom, has a long time having elapsed, now become useful for the support of me whose gait is unsteady when walking. Well it is true, religions matter must not be delayed by his majesty. But still I dare not repeat to him, who has just now left the judgmentseat, the arrival of Kanva's disciplies which is sure to cause fresh bother. Or, ceaseless is the task of protecting the world. The sun has his steeds yoked but once. Night and day, courses the wind. Sesha indeed has the burden of the world placed always on him. Of the enjoyer of the sixth part too this is the characteristic. Well I do my duty. (Walking round and beholding.) Here is Sire enjoying solitude with his mind fatigued after having guarded his subjects as his own children like a majestic elephant enjoying a cool place, heated by the sun after having led his herds in the day-time. (Approaching) Prosper O Sire, Prosper ! —here indeed have arrived with ladies, ascetics, living in forests in the valley of mount Himalya bearing Kasyapa's message. Having heard Sire will decide.

कञ्चुकीति । अन्तःपुरचरास्तु नियुक्तो वृद्धो ब्राह्मणः कञ्चुकीति कथ्यते । 'अहो' खेदे । 'इदृशीमवस्थाम्' एवंविधां दशां 'प्रतिपन्नोऽस्मि' प्राप्तोऽस्मि । जरायत्त इति खेदः ।

आचार इति । अन्वयः—राज्ञः अवरोधगृहेषु आधिकृतेन मया आचार इति या वेत्रयष्टिः गृहीता, सा एव बहुतिथे काले गते प्रस्थानविक्लवगतेर्मम अवलम्बनार्था जाता व्याख्या—'राज्ञः पौरवस्य नृपतेः 'अवरोधगृहेषु' अन्तःपुरमन्दिरेषु 'आधिकृतेन' नियुक्तेन मया आचार इति आधिकारानुरूपमिति कृत्वा ( इति कृत्वा अव्ययम् ) "या वेत्रयष्टिः" वेत्रदण्डः 'गृहीता, स्वीकृता, रक्षाकर्मणि नियुक्तो जनो दण्डं गृह्णीयात् इति कृत्वा यो दण्डो मया गृहीतः सा एव आचारगृहीता यष्टिः, बहूनां पूरणे 'बहुतिथे' [ पूरणे डट् । तिथुगागमश्च ] 'काले गते अतीते सति अद्य जरसा प्रस्थाने गमने गमने विक्लवा, विह्वला 'गतिः' पादक्षेपो यस्य तथाविधस्य 'मम अवलम्बनं धारणं पतननिवारणमित्यर्थः, 'अर्थः' प्रयोजनं यस्याः तथाविधा 'जाता' । प्राक् आचारार्था अद्य तु अवलम्बनार्था इत्याशयः म् । [ "आधिकृतेन" ( क॰ ब॰ )—"अवहितेन" (र॰ कि॰

[ म- ) ॥　"अवलम्बनार्थी ( रा-, वि )—'अवलम्बनार्थम्' (म)—"अवलम्बनाय" ( स, व्या- ) ] ॥ 'भो' इति लोत्यहीन' संबोधनम्। धर्मकार्य्य' दिवस' राज्ञ: ( "क्रत्वानां कर्त्तरि वा" इति षष्ठी ) अतिपातेन कालक्षेपेण योजयितुमशक्यम् 'अनतिपात्यं कामम्' इत्यभ्युपगन्तव्यम्। राज्ञ: सम्बन्धे धर्मकार्य्यं विलम्बं न सहते इति सत्यम्। 'तथापि' अनतिपात्यत्वेऽपि 'इदानीमेव अचिरमेव 'धर्मासनात्' विचारासनात् 'उत्थिताय अस्मै पुन: उपरोधकारि' पीड़ाकरं कण्वशिष्यागमनं निवेदयितुं न 'उत्सहे' न शक्नोमि। अथवा' पक्षान्तरे 'अयं लोकस्य भुवनस्य तन्त्र' धारणं, रक्षा इत्यर्थ: ( तत्रि. कुटुम्बधारणे इति चुरादिषु ) स एव 'अधिकार:' नियोग:', स: अविद्यमानो विश्रमो' निर्व्यापारस्थिति: यस्मिन् तथाविधो भवति ("नोदात्तोपदेशस्य मान्तस्यानाचमे:" इति श्रमे: घञि वृद्ध्यभाव:) [ 'आवश्रम: ( रा-, वि- )—'अविश्राम:'' (म-)—"कुतो विश्रामो लोकपालानाम' ( स-, व्या, ] ॥

भानुरिति। अन्वय:—भानु: सकृद्युक्ततुरङ्ग एव। गन्धवह: रात्रिन्दिव' प्रयाति। शेष: सदैवाहितभूमिभार:। षष्ठांशवृत्तेरपि एष धर्म:। व्याख्या—'भानु:' दिवाकर: 'सकृत' एकवारं युक्ता: रथे व्यापारिता: 'तुरङ्गा' अश्वा यस्य तादृश 'एव' भवति। सतत रथस्थ एव लोकान् प्रभाभिर्भासयति क्षणमपि न विश्राम्यति। 'गन्धवह:' वायु: 'रात्रौ च दिवा च' ("अचतुरविचतुर—" इति निपात: ) अविश्रान्त प्रयाति' प्रवहति। 'शेष. नागराज: 'सदैव अविरतमेव 'आहित:' स्थापितो 'भूमे: पृथिव्या 'भार' यस्मिन् तादृशो भवति! 'षष्ठांश:' षष्ठो भाग: 'वृत्ति:' जीवनोपायो यस्य राज्ञ: 'अपि एष: अनन्तरोक्त: शेषस्य 'धर्म:'। राजापि 'सदैवाहितभूमिभार:' इत्यर्थ:। ( अत्र गन्धवहशब्देन वायो: षष्ठांशवृत्तिशब्देन च राज्ञो निर्द्देश: अकिञ्चित्कर:' इत्यर्थ:। गन्धवह इति कथञ्चिल्लोकोपकारप्रतीति: स्यात्। षष्ठांशवृत्तिरिति तु आत्मोपकार: स्फुट एव। तत्र लोकतन्त्राधिकारप्रस्तावे अप्राकरणिकम्। प्रक्षिप्तोऽयं श्लोक. ? ) 'नियोगम्' आत्मकर्म कण्वशिष्यागमननिवेदनम् इत्यर्थ: 'यावदनुतिष्ठामि' करोम्येव ( यावत्पुरानिपातयोर्लट्, तद्योगे च लट )।

प्रजा इति। अन्वय:—एष दैव: स्वा: प्रजा: इव प्रजा: तन्त्रयित्वा श्रान्तमना: विविक्त: स्थानम् दिवा सत्त्वार्थे रावप्रतत: (सन्) शीत स्थानमिव विविक्तं निषेवते। व्याख्या—'एष देव:' राजार्थं स्वामी 'स्वा प्रजा इव' निजापत्यानि अपत्यानि 'प्रकृती:

'तम्मयित्वा' धारयित्वा विवादश्रमनादिभिः संरक्ष्य 'आत्ममनाः' आत्मपीताः सन् द्विपेन्द्रः गजराजः 'दिवा' दिवसे ( सप्तम्यर्थप्रधानमव्ययम् ) 'यूथानि' गजसमूहान् 'सघार्म्य' इत्यर्थमितस्ततश्चारयित्वा 'रविणा' हेतुना 'प्रतप्तः' अतिपीडितः सन् 'शीतं' प्रच्छाय-शीतलं स्थानमिव 'विविक्तं' विजनदेश 'निषेवते' भजते । [ 'आत्ममना' ( त , वि-, म, व्या- )—'अश्रान्तमनाः' ( रा- ) ॥ 'दिवा' ( रा-, वि-, म ) 'गुहा' ( त-, व्या ) ] ॥

अयमिति । 'अयतु' प्रकर्षं लभताम ( अयमकर्मकः ) । 'एते' इति असन्नि-हितेऽपि द्वयो कालसाम्निध्ये प्रयुक्तः अचिरप्राप्तिं व्यनक्ति । हिमप्रधानो गिरिः 'हिमगिरिः' ( शाकपार्थिवादिः ) तस्य हिमालयस्य 'उपत्यकायाम्' आसन्नभूमौ (उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः) यत 'अरण्यं' तदावासिनः तपस्विनः 'कायापसा सन्देशं वाचिकम् 'आदाय' गृहीत्वा 'सस्त्रीकाः' स्त्रीसमेताः 'सम्प्राप्ताः' आगताः । 'श्रुत्वा एतां विज्ञप्तिमाकर्ण्य 'देवः प्रमाण' कर्तव्यनिर्णेता भवति । [ 'हिमगिरेः' ( रा-, त-, व्या- ) 'हिमवतो गिरेः' ( वि- म- ) ] ।

## NOTES

1. (a) कञ्चुकी—कञ्चुकः वस्त्रमस्य अस्ति अतिशयेन इति कञ्चुक + इनि अति-शयार्थे । It seems a कञ्चुकिन् has to wear extremely loose-fitting garments [ अतिशय ] so much so that in the रत्नावली a dwarf hides himself in the ample folds of the Kanchukin's garments —'अन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः' । 'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥' Also 'ये नित्यं सत्त्वसम्पन्नाः कामदोषविवर्जिताः ज्ञानविज्ञानकुशलाः काञ्चुकीयास्तु ते स्मृताः ।' (b) अहो—Indicates खेद । नु a प्रश्न (to himself) and खलु अवधारण । अवस्थाविषयं अवधारणम् ।

2. (a) आचार—Compare 'तां सैव वेत्रग्रहणे नियुक्ता'—Raghu. (b) अधिकृतेन—अधि + कृ + क्त + कर्मणि = अधिकृतः employed. अधिकारत्वेन नियुक्तः । His अधिकार (juridisction) being अवरोधगृह । Hence the latter has सप्तमी । Compare "नैवाधाकारिष्वाह वेदतत्"(Bhatti II) "प्रज्ञा तु मन्त्रेष्वधिकृता न शौर्यम्' (Bhatti XII) &c. (c)* अवलम्बनार्थो

Adopted by Prof. Gajendragadkar

—Raghava takes it as meaning अवलम्बनाय । नित्यसमास by the Varttika "अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या" । But that does not properly bring out the helplessness. It is better to say the only object ( अर्थ—प्रयोजन ) is to save the fall ( अवलम्बन ) ।
(d) Reading—* अधिकृतेन is preferable because the आधार is for the अधिकृत only. Also the सप्तमी in अवरोधगृहेन is better explained with अधिकृत । For the readings अवलम्बनाय and अवलम्बनार्थम् see note (c) above.

3. (a) अनतिपात्यम्—अति + पत + णिच यत् कर्मणि = अतिपातनीय fit to be delayed. न अतिपात्यम् । (b) कामम् तथापि—I admit religious duties brook no delay, yet &c.

4. अविश्रम—On the reading अविश्राम, see notes on विश्रमम्, Act II. But it should be noted that the Vrittikara does not recognise वृद्धि in the case of श्रम । He says—"सूत्रं विश्रामा भूमिः इत्येवमादिकं प्रयोगम् अन्याय्यमेव मन्यन्ते" ।

5. (a) सकृद् &c.—तुरेण वेगेन गच्छति इति तुर + गम + खच कर्तरि = तुरङ्ग or तुरङ्गम् by the Varttika "खच्च वा डित्वक्तव्यः" । (b) रात्रिन्दिवम्—A द्वन्द्व is of words in the प्रथमाविभक्ति । Here the वाक्य has सप्तमी । Hence. and also to change रात्रि into रात्रिम् the necessity of निपातन । See Tika ; also our notes under नक्तन्दिवम् in Kirata I sl. 9. and Pratima.

6. Remark—In the Tika, I have commented adversely on षष्ठांशवृत्ति । This is on the supposition that the अलङ्कार is प्रतिवस्तूपमा ( see under शुद्धान्तदुर्लभम &c. Act I ) as stated by Raghava. A defence, however, can be given if we reject Raghava's interpretation. Thus we have first the general statement—'अविश्रमोऽयं लोकतन्त्राधिकारः'। This is established (साधन) by examples—(i) the case of भानु (ii) that of गन्धवह, (iii) that of शेष । Next comes the application of the general proposition to the case of षष्ठांशवृत्ति । Every अधिकार has a वृत्ति attached to it. लोकतन्त्राधिकार has षष्ठांश for the वृत्ति । So room is made for the application of the general preposition. Thus—(a) यथा यथा

* Adopted Prof. by Gajendragadkar.

शीघ्रतमाधिकारः तथा तथा अविश्रमः। (b) तथा—भागी:, गन्धवहसा, शेषसा। (c) षष्ठांशवृत्तिः लोकतन्त्राधिकारः। (d) षष्ठांशवृत्तिः अविश्रमः। If this is allowed in the Tika for 'अनन्तरोक्तः शेषस्य धर्मः' read 'अविश्रमः' and omit 'राजाधि···इत्यर्थः'। The proposition षष्ठांशवृत्तिः अविश्रमः of course leads to the conclusion दृष्टमस्य अविश्रमः which is not stated. As the matter is explained now, the अलङ्कार is अर्थान्तरन्यास। [See आपरितोषात् &c. Act. I].

7. [a] निर्विशते—"परिनिविश्य: सेवित—" इति पत्नम्। [ स्वात्ममनाः— This is more expressive than the reading अस्वात्ममनाः:]। (e) दिवा— In the day time.* This is necessary for in night feeding, रविज्ञतः become out of place. Elephants graze usually at night.

8. (a) एते—'सन्निकृष्टमिदमो विषयः समीपतरवर्ति चैतदो रूपम्। अदसस्तु 'विप्रकृष्टं तदिति परोक्षं विजानीयात्।' Here एतद् expresses कालसामीप्य and thus shows that the visitors have just come. Compare 'इदानीमेव—' above. (d) प्रमाणम्—Always neuter singular c. f. "वेदाः प्रमाणम्"।

राजा ( सविस्मयम् )—किं काश्यपसन्देशहारिणः सस्त्रीकास्तपस्विनः ?

KING [Surprised)—What ! Ascetics with woman ! Bearing Kasyapa's message ?

कञ्चुकी—अथ किम् ?

CHAMBERLAIN—Yes.

राजा—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति। अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि।

KING—Well, then let Professor Somaratha be informed

---

* Adopted by Prof. Gajendragadkar.

in my name that it behoves him personally to introduce those dwellers of the hermitage after having honoured them with Srauta rites. I too go to a spot here fit for visit of ascetics, and wait.

कञ्चुकी—यदाज्ञापयति देवः। ( निष्क्रान्तः )

CHAMBERLAIN—What Sire commands [Exit],

राजा ( उत्थाय )—वेत्रवति, अग्निशरणमार्गमादेशय।

KING—[Rising]—Vetravati, show me the way to the fireroom.

राजेति। 'विश्रयेन सह' यथा तथा। सस्त्रीका इति विश्रयः। काश्यपस्य सन्देशं साधु 'हरन्ति' वहन्ति ये तादृशाः (साधुकारिणि णिनिः)। ['सविस्मयम्' (त-, का-) "सादरम्" (रा-, वि- म-)॥ काश्यपसन्देश ( रा- वि- म- ) कण्वसन्देश (त- का-)॥ 'सस्त्रीकास्तपस्विनः' ( त- का- ) महादिभिरपठितमेतत् ]॥

राजेति। 'तेन हि' यतः सस्त्रीकाः ततः 'मद्वचनात् उपाध्यायः आचार्यः 'सोमरातः विज्ञाप्यताम् आवेद्यताम्। किं विज्ञाप्यताम् इत्याह—'अमून्' [ विप्रकृष्टे अदस्शब्दप्रयोगः ] 'आश्रमवासिनः' सस्त्रीकास्तपस्विनः' [स्त्रीसाहचर्यात् आश्रमवासिन इत्युक्तम् अन्यथा तपस्विन इत्येव ब्रूयात् ] 'श्रौतेन' श्रुतिसम्मतेन 'विधिना' वेदविधिना 'सत्कृत्य' संपूज्य 'स्वयमेव' न तु प्रतीहारीद्वारा 'प्रवेशयितुमर्हति इति विज्ञाप्यताम्। 'तपस्विनां दर्शनस्य उचिते' योग्ये 'प्रदेशे' पवित्रे स्थले 'स्थितः' सन् प्रतिपालयामि तान् प्रतीक्षे।

राजेति। 'वेत्रवती' इति प्रतीहारीनाम। 'अग्निशरणस्य' वैतानिकगृहस्य ("शरणं गृहरक्षित्रोः;" इत्यमरः ) 'मार्गं' वर्त्म 'आदेशय अग्रतो गत्वा दर्शय।

## NOTES

1. काश्यप &c.—This is more respectful than "कण्वसन्देश—"।

2. (a) मद्वचनात्—मद्वचनम् अवलम्ब्य इति ल्यब्लोपे कर्मणि पञ्चमी। (b) उपाध्यायः—उपेत्य अधीयते अस्मात् इति उप + अधि + इङ् + घञ् अपादाने by the rule 'इङश्च' which bars अच्। The feminine is उपाध्याया, उपाध्यायी, उपाध्यायानी।

3. अग्निशरण &c.—The three sacred fires have to be kept constantly fed by householders of first three classes—

"दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः" इत्यमरः।

प्रतीहारी—इदो इदो देव [ इत इतो देवः ]।

WARDER—This way, Sire, this way.

राजा—( परिक्रामति। अधिकारखेदं निरूप्य )—सर्वः प्रार्थितमर्थमधिगम्य सुखी सम्पद्यते जन्तुः। राज्ञान्तु चरितार्थता दुःखोत्तरैव।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥५॥

KING [Goes round. Acting fatigue from work]—Everyone becomes happy having attained tha desired object. But the achievement of the King's end is mainly for trouble. Success removes anxiety merely. The effort to guard what is acquired indeed worries. A kingdom, like an umbrella is not so much for the removal of fatigue as for fatigue when the Danda is held on one's own hand.

राजेति। 'परिक्रामति' इतस्ततः परितो भ्रमति (मन्ये अपपाठोऽयम्। परिक्रम्य इति ल्यबन्तो निर्देशः साधीयान्। 'राजरूपस्य' पात्रस्य अभिनेतव्यक्रियायाः तदा अनिवृत्तेः।) 'अधिकारस्य' आत्मनियोगस्य राजकार्यस्य इत्यर्थः यः 'खेदः' क्लान्तिः तम् अधिकारगतक्लमं करणखेदं 'निरूप्य' अभिनीय॥ 'सर्वो जन्तुः प्रार्थितम् अर्थं' वस्तु 'अधिगम्य' प्राप्य 'सुखी सम्पद्यते'। 'राज्ञान्तु' किन्तु भूपालानां 'चरितार्थता' इष्टलाभः राज्यप्राप्तिरिति यावत् 'दुःखम् उत्तरं' प्रधानं यस्याः तथाविधा दुःखबहुला 'एव' अल्पं तत्र सुखं दुःखमिव भूरि इत्यर्थः।

औत्सुक्येति। अन्वयः—(राज्ञां तु) प्रतिष्ठा औत्सुक्यमात्रम् अवसाययति। लब्ध-

परिपालनवृत्तिः क्लिश्नात्येव । राज्यम् आतपत्रमिव स्वहस्तधृतदण्डं श्रमापनयनाय न अति यथा श्रमाय । व्याख्या—राज्ञां तु ( इति पूर्वोक्तं सम्बध्यते ) प्रतिष्ठा' प्रतिष्ठितत्वं राज्यलाभः इत्यर्थः औत्सुक्यमेव' (मयूरव्यंसकादिः । नित्यश्च समासः ) 'अवसादयति' खण्डयति अन्तयति ( षो अन्तकर्मणि दिवादिः । आत्वम् । णिच् । पुक् च ) औत्सुक्यावसानमात्रं करोति इत्यर्थः । 'लब्धस्य' प्राप्तस्य 'परिपालनवृत्तिः रक्षाव्यापारः 'क्लिश्नात्येव' नूनं क्लेशं जनयति । यावदलब्धं तावत् कदा मे राज्यं स्यात् इत्युत्कण्ठा । लब्धमात्रे सा उत्कण्ठा निवर्तते । ततः परं पालनक्लेशः । तदाह—'राज्यं' राजत्वम् ; आतपात् त्रायते इति 'आतपत्रमिव' ( सुपीति योगविभागात् कः ) छत्रमिव 'स्वहस्तेन धृतः' रक्षितः 'दण्डः' व्यवहाराधिकारो यस्मिन् स्वयंकृतविचारम् इत्यर्थः । छत्रपक्षे 'स्वहस्तेन धृतः दण्डो यस्य तथाविधं सत् श्रमापनयनाय खेदनोदनाय (तादर्थ्ये ४र्थी ) 'न अति न प्रशस्तः 'यथा श्रमाय' खेदकरणाय, प्रशंसायामतिः ( 'अतिशब्दः प्रशंसायां लङ्घनेऽपि च' इति विश्वमेदिन्यौ )। लब्धे राज्ये यदि मन्त्रिषु रक्षाभारो निधीयते तदैव सुखं नान्यथा । अत्र दण्डशब्दो द्व्यर्थः । राज्यपक्षे दण्डो दमनं दुष्टदमनम । आतपत्रपक्षे—दण्डः प्रकाण्डः ("दण्डो दमने सैन्ये इति हलायुधः । दण्डोऽस्त्री लगुडे पुमान् । व्यूहभेदे प्रकाण्डे च इति मेदिनी ) [ 'अवसाययति ( रा- वि- ) "अवसादयति ( त-, म, व्या )॥ "वृत्तिरेव ( त-, वि- म- व्या-)—"वृत्तिरेनत्" ( रा- )॥ "यथाश्रमाय" ( त-, वि- व्या- )—"न च श्रमाय' ( रा- म- ) ]॥

NOTES

1. चरितार्थता—चरितः कृतः लब्ध इत्यर्थः प्रयोजनं येन स चरितार्थः one who has attained his object. तस्य भावः ।

2. (a) औत्सुक्यमात्रम् – This refers to the anxiety caused by the eagerness of expectation before one becomes a king. (b) प्रतिष्ठा—प्रति + स्था + अङ् भावे = प्रतिष्ठा, attainment of success. This refers to the candidate's establishment on the throne. Raghava takes प्रतिष्ठा = गौरव । (c) अति—Raghava compounds it. Other follow him. Thus 'अत्यन्तं' यः श्रमः तदपनयनाय"—Raghava. (d) दण्ड —Note the double sense. Both राज्य and आतपत्र are स्वहस्तधृत-

दण्ड। With the former, दण्ड = distribution of justice; and with आतपत्र it means the handle.* A राजा brings ease when the ministers look to the government (परिगृहीतदण्ड) and an umbrella is comfortable when another man holds it over you.

( नेपथ्ये ) वैतालिकौ—विजयतां देवः।

(In the dressing room)—TWO BARDS—Let Sire prosper (or—be victorious).

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥६॥

FIRST—Thou toilest for the world every day, thoughtless of thy own comfort. Or, such is thy way indeed. Veirly the tree feels with its head the fierce solar rays and relieves with the shade the agony of its refugees.

स्वसुखेति। स्वसुखनिरभिलाषः प्रतिदिनं लोकहेतोः खिद्यसे। अथवा एवंविधैव ते वृत्तिः। पादपो हि मूर्ध्ना तीव्रमुष्णमनुभवति, छायया संश्रितानां परितापं शमयति। व्याख्या—'स्वस्य' आत्मनः सुखे निरभिलाषः' निःस्पृहः त्वं लोकस्य' भुवनस्य 'हेतोः' लोकार्थमित्यर्थः 'खिद्यसे' खेदमनुभवसि ( दैवादिकात् कर्तरि लट )। 'अथवा' पक्षान्तरे-एवंविधा' ईदृशी 'एव ते वृत्तिः' व्यापारः। 'पादपो हि' वृक्षः किल 'मूर्ध्ना' स्वशिरसा तीव्रं कठोरम् 'उष्णम्' आतपम् ("उष्णं स्यादातपे ग्रीष्मे" इति विश्वः) "अनुभवति" तदनुभवकाले एव 'छायया' करणेन ''श्रितानां' सम्यक् श्रितानाम् आश्रितानामित्यर्थः: 'परितापं' परिगतं तापम् अन्यत्र आतपखेदं 'शमयति' क्षपयति [ घटादित्वात् मित्त्वे ह्रस्वः ]। इति राज्ञः अधिकारखेदं प्रति प्रीतसाह्नोक्तिः।

* Adopted by Prof. Gajendragadkar.

# NOTES

1. वैतालिको—विविधास्तालाः वितालाः, various measures of music. वितालशब्दं शिल्पमस्योः इति विताल + ठञ् = वैतालिकौ। Here विताल stands for वितालवादन ( वादना ) just as मृदङ्ग stands for मृदङ्गवादन in the compound मार्दङ्गिक। "मृदङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति। शिल्पं तद्विषयतावगमयति"—Vritti. Bhanuji has 'विविधेन तालेन शब्देन चरति इति ठक् स प्रयोजनमस्य इति ठञ वा"। But in the sutra referred to, चरति means "to eat" or 'to wander' 'चरतिर्भक्षणे गतौ च वर्तते' —Vritti. In the other alternative the ठक् is a slip for ठञ्। The word here means bards in general though Amara restricts वैतालिक to those only who rouse the king in the morning.

2. (a) खिद्यसे—खिद ( दिवादि )+लट् से कर्त्तरि। Raghava takes it कर्मकर्त्तरि। This is after Vamana"खिद्यते इति च प्रयगो दृश्यते सोऽपि कर्मकर्त्तर्य्येव द्रष्टव्यः, न कर्त्तरि। अदैवदिकत्वात् खिदेः" – Kavyalamkara. So the reason for taking it कर्मकर्त्तरि, is खिद he believes is not दिवादि। But Madhava has it in the दिवादि list, Kalapa, Mugdhabodha &c also read it there. It is therefore beter taken as कर्त्तरि। (b) लोकहेतोः—लोककारणात्—Raghava, हेतौ षष्ठी। Compare—शकुन्तलाहेतोः Act. IV—Ante. (c) अथवा—This introduces आक्षेप of the thought preceeding. It is a pity 'thou toilest.' Or [ अथवा ] why pity [ आक्षेप ], such is your duty or nature." The अलङ्कार is defined by दण्डिन् as 'प्रतिषेधोक्तिराक्षेपः'। [d] अनुभवति &c—Here the वृत्ति of दुष्यन्त is explained by example [ दृष्टान्त ]। The example ends in establishing resemblance of दुष्यन्त and पादप [ उपमापर्य्यवसान ]। Hence as Dandin does not recognise दृष्टान्त as an अलङ्कार, his followers have to class this under उपमा (See प्रतिवस्तूपमा under गृहान्तदुर्लभम् &c.)

द्वितीयः—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।

अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥७॥

SECOND—Weilding justice, thou curbest those that have gone astray, allayest strife, and becomest bent on (or—becomest capable towards) protection. Be there kinsmen when means are not meagre but in thee are fully found the friendly services with regard to the subject.

राजा—एते क्लान्तमनसः पुनर्नवीकृताः स्मः । (परिक्रामन्ति) ।

KING—Here wearied in mind as we were, we are become refreshed, (Goes round the stage)

नियमयसीति । अन्वयः = आत्तदण्डः विमार्गप्रस्थितान् नियमयसि, विवादं प्रशमयसि, रक्षणाय कल्पसे । प्रजानां ज्ञातयो विभवेषु अतनुषु सन्तु नाम, बन्धुकृत्यं तु त्वयि परिसमाप्तम् । व्याख्या— 'आत्तः' गृहीतः 'दण्डः' दुष्टदमनव्यापारः येन तथाविधः सन् [ 'अच उपसर्गात् तः' इति दत्तादेशः ] 'विपरीतेन मार्गेण' वर्त्मना 'प्रस्थितान्' चलितान् विपथगामिनो जनान् 'नियमयसि' निरुध्य भूयोऽपि प्रतिष्ठापयसि 'विवादम्' अर्थिप्रत्यर्थिनोर्वादप्रतिवादं 'प्रशमयसि' निवारयसि, 'रक्षणाय' रक्षितुं पालयितुं [कल्पतेः प्रवर्त्तनार्थत्वे हि 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । अत्र 'क्लृपि सम्पद्यमाने' इति वार्त्तिकं न युज्यते । यद्वा = कुबेरत्व अलमर्थकत्वे 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति ४र्थी ] 'कल्पसे' प्रवर्त्तसे वा प्रभवसि, प्रजानां 'ज्ञातयः' बान्धवाः 'विभवेषु' 'अतनुषु' अक्षयेषु प्रभूतेषु सत्सु 'सन्तु' तिष्ठन्तु 'नाम' कुत्सितं किल तत् [ नाम कुत्सायाम् ] 'नाम' ('नामाकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः ) 'बन्धूनां कृत्य' कर्म 'तु' बान्धवकार्यं पुनः 'त्वयि' भवति 'परितः' सर्वतः सम्यक् 'आप्तम्' अधिगतम् । हे नरनाथ स्वकर्त्तव्यं धारयित्वा ज्ञातयः सन्ति किन्तु भुवि तस्य फलम् । पश्य, प्रजा नियोज्यन्ते, प्रबोध्यन्ते, पालिताश्च भवन्ति । किं बहुना सर्वं बान्धवकार्यं ताः त्वयि एव प्राप्नुवन्ति । तदिदं मा विषीदतु लोकोपकारक चेदं बहुमन्यतां भवान् इति भावः ।

राजेति । 'क्लान्तमनसः' कार्यचर्याभिः खिद्यमाना वयम् ( बहुत्वविवक्षया बहुवचनम् । 'एकस्मिन् तु 'अस्मदो द्वयोश्च' इति प्राप्नोति ) 'पुनर्नवीकृताः' एतेन उत्साहवाक्येन समर्पिताः जाताः स्थापिता वा ।

1. (a) नियमयसि—We have ऋत in stead of यामि in connection with नियम by the rule 'नितां ऋतः' । यम परिवेषणे वेष्टने च छिन्दिमित्यादि पक्षे—नियमं ('नियमयुक्त') करोषि इति नियमयसि ('तत्करोति—' इति णिच्)। (b) विमार्ग &c.—विपरीतो विरुद्धो वा मार्गः विमार्गः wrong course, प्रादितत्— । तेन प्रस्थिताः । तान् । प्रशमयसि = See शमयसि । The प्र is emphatic. It implies thoroughness ( प्रकर्ष ) of the शमनक्रिया । (c)* नाम—Implies कुत्सा । How disgusting ( कुत्सा ) that kinsmen crowd round one in affluence, (d) परिसमाप्त बन्धु—परि means समन्तात् । You render the services of a friend in every way परि and throughly सम् । (e) बन्धु कृत्यम्—The services of a friend. These are well summarised in the sloka—'उत्सवे व्यसने चैव दुर्भिक्षे शत्रु-निग्रहे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥"

2. श्रमनयतः = Here the king speaks of himself. The plural is inadmissible. The rule 'अस्मदो द्वयोश्च' is barred by the Varttika 'सविशेषणानां प्रतिषेधः' । We have to say either that the poet does not recognise the Varttika or that for some reason, or other Dushyanta speaks of himself in plural (including others).

प्रतीहारी—एसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिद-होमधेणू अग्गिसरणालिन्दो । आरुहदु देवो [ एषः अभिनव-सम्मार्जनसश्रीकः सन्निहितहोमधेनुः अग्निशरणालिन्दः । आरो-हतु देवः ] ।

WARDER—Here is the entering gate of the fire—house beautiful with recent brushing and having the sacrifice-promoting cow close by. Let Sire ascend.

राजा ( आरुह्य परिजनांसमवलम्ब्य तिष्ठन् )—वेत्रवति, 

किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ?

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं

धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।

आहो स्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधाम्
इत्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥८॥

KING—[Ascending and standing supported by the shoulder of the attendant]—Vetravati, with what object could the ascetics be sent to me by venerable Kasyapa ? It is indeed that the penance of those who have taken some vow and commenced austerities, has been defiled by obstructors ? Or is some evil attempted by some one on animals grazing in the holy forest ? Or is the produce of the creepers stopped by my misconduct ? Having thus entered several conjectures my mind remains perplexed through in-conclusion.

प्रतिहारीति। 'अभिनवेन' अचिरवृत्तेन 'सम्मार्जनेन' मार्जनव्यापारेण 'सश्रीकः' शोभनः ('शेषाद्विभाषा' इति कप्) 'सन्निहिता' आसन्ना 'होमार्था धेनुः' यस्य तथाविधः 'अग्निशरणस्य' वैतानिकगृहस्य 'अलिन्दः' बहिर्द्वारप्रकोष्ठ ('प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः)। 'आरोहतु' सोपानमार्गेण अध्यास्य तिष्ठतु देवः'।

राजेति। 'परिजनस्य' वेत्रवत्याः 'अंसे' स्कन्धम् 'अवलम्ब्य तिष्ठन्' न तूपविष्टम् ऋषीणां सस्त्रीकागमनात् विस्मितः तदेव ध्यायन् निर्णेतुमसमर्थः वेत्रवतीं पृच्छति किमु द्दिश्य प्रेषिताः स्युः' इति (सम्प्रश्ने लिङ्)।

किमिति। अन्वयः—किं तावत् व्रतिनाम् उपोढतपसां तपः विघ्नैः दूषितम्। उत धर्मारण्यचरेषु केनचित् असत् चेष्टितम्। आहो स्वित् वीरुधां प्रसवः मम अपचरितैः विष्टम्भितः। इति आरूढबहुप्रतर्कं मे मनः अपरिच्छेदाकुलम्। व्याख्या—किं प्रश्ने, तावत् परिच्छेदे, निश्चिते हि अपरिच्छेदं गमयित्वा प्रतर्कमात्रमुत्थापयतः। 'व्रतं' सङ्कल्पः—येषामस्ति तेषां व्रतिनाम्' अतएव उपोढं' धृतं 'तपः' व्रतसाधनयोग्यं कृच्छ्रं यैः तेषां 'तपः विघ्नैः' व्रतविघातकैः राक्षसादिभिः 'दूषितं' विघ्नितम् उत' अथवा 'धर्मारण्यं' तपोवने 'चरन्ति' ये (ट-प्रत्ययः) तेषु 'प्राणिषु' हरिणादिषु (विषये सप्तमी) 'केनचित्' जनेन 'असत्' असाधु 'चेष्टितम्' आचरितम्। 'आहो' विकल्पे। 'स्वित्' प्रश्ने। अथवा किं 'वीरुधां' लतानाम् (रुहेः क्विप् सति 'व्यञ्जनादेशकार' इति हकारस्यधकारः उपसर्गदीर्घश्च) प्रसवः' पुष्पफलोद्गमः 'मम' राज्ञः 'अपचरितैः' अपचारैः (अपराधैः) 'विष्टम्भितः' निरुद्धः अवखित इत्यर्थः: ('सर्गः' इति पलम्)।

'इति प्रकारेण आरूढाः' अधिगताः 'बहवः प्रतर्काः' ऊहा येन तथाविधं 'मे मनः अपरिच्छेदेन' अनिश्चयेन 'आकुलं' चञ्चलं जातम्। आत्मकृताभिज्ञानात् पृच्छायाः ज्ञानमविचार्य अप्रतिज्ञायाः मन्मनः।

NOTES

1. ऊहः—The king deliberates and cannot decide. H संप्रश्नं लिङ्।

2. (a) व्रतिनाम्—व्रत is a vow—The making up of the mind to do a particular thing—say to perform अग्निष्टोम or ज्योतिष्टोम। व्रत + इनि मत्वर्थे = व्रतिनः। (b) उपाढ़तपसाम्—उप + वह् + क्त कर्मणि = उपोढम् commenced प्रारब्धम्। Raghava explains उपोढ़ as अधिक excessive. But compare 'उपोढ़शब्दा न रथाङ्गनेमयः' (Act VII) where उपोढ़ = प्रारब्ध। The तपस् here is not penance in general as Raghava understands, but those particular observances that go to qualify the ascetic for the व्रत he has then in view. This makes व्रत the principal and तपस् the subodinate and not the reverse as Prof. Gajendragadkar has it. If the तपस् is defiled (दूषित) the व्रती becomes disqualified for the व्रत। (c) अपचरितैः—अप + चर + क्त भावे = अपचरितानि failings. The king's misdeeds are supposed to affect the produce of the soil &c. 'राज्ञोऽपचारात् पृथिवी स्वल्पसस्या भवेत् किल'—Raghava. अनुक्तं कर्त्तरि तृया। (d) अपरिच्छेद &c.—परि + छिद् + घञ् भावे = परिच्छेदः Separation of a part from the whole; hence, decision.

प्रतीहारी—सुचरिदणन्दिनो इसीओ देवं सभाजइदुं आअदे त्ति तक्केमि। [सुचरितनन्दिनः ऋषयो देवं सभाजयितुमागता इति तर्कयामि]।

WARDER—I guess that the sages who rejoice in good deeds, have come to congratulate Sire.

(ततः प्रविशन्ति गौतमीसहितो शकुन्तलां पुरस्कृत्य काश्यपशिष्यौ पुरश्चैषां कञ्चुकी पुरोहितश्च)। कञ्चुकी—इत इतो भवन्तः।

(Then enter the two disciples of Kanva with Gautami placing Sakuntala in front, preceding them, the chamberlain and the family priest). CHAMBERLAIN—The way, tbis way, your honours.

प्रविशन्तीति । सुचरितेन' सत्कार्येण नन्दन्ति' प्रीयन्ते ये ताहृशा 'सुजनः' अथवा: सत्कार्य्यं परम्परया प्रीताः सन्तः 'देवं समाजयितुम् 'आगताः इति तदर्थानि' ऊह्इ ।

तत इति । [ "प्रविशन्ति" ( रा-, वि-, म- )—'प्रविशतः' ( त-, न्या- ) ॥ 'गौतमीसहितौ' ( त-, न्या- )—गौतमीसहिताः' ( रा-, वि-, म- ) ॥ शकुन्तलां पुरस्कृत्य'' ( रा- वि-, म- )—'शकुन्तलामादाय' ( त- न्या- ) ॥ 'कण्वशिष्यौ' ( त- न्या- )—'मुनयः' ( रा- वि- म- ) ।

'शकुन्तलां पुरस्कृत्य अग्रे स्थापयित्वा 'गौतमीसहितौ' कण्वशिष्यौ, एषां चतुर्णां 'पुरः' अग्रतः 'कञ्चुकी पुरोहितश्च' इति षट् 'प्रविशन्ति' । प्रथमं कञ्चुकी, ततः पुरोहितः ततश्च शकुन्तला, तदनु शिष्यौ पश्चात् गौतमी इत्येष प्रवेशक्रमः—'अवगुण्ठनवती अचिरं तपोधनानाम्' इत्यनन्तरोक्तैरनुमीयते ।

NOTES

1. सुचरित &c.—चर + क्त भावे—चरितानि deeds. सु शोभनानि चरितानि सुचरितानि good deeds. तैः साधु नन्दन्ति इति सुचरित + नन्द् + णिनि साधुकारिणि कर्त्तरि = सुचरितनन्दिनः । Those who rejoice at good deeds. The सुचरित is the king's. This is antithetic to अपचरित—misdeed of the sloka preceding. The king apprehends condemnation for misdeeds (अपचरित) the warder suggests commendation for good deeds ( सुचरित ) । (b) समाजयितुम्—समाज चरादि + णिच् स्वार्थे + तुमुन् ।

2, Note the order of entry—कञ्चुकी, पुरोहित शकुन्तला शार्ङ्गरव, शारद्वत, गौतमी । See also Tika.

शार्ङ्गरवः—शारद्वत,

महाभागः कामं नरपतिरभिन्नस्थितिरसौ

न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।

तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥८॥

SARṄGARVA—Saradvata, it is true that this king, who has never transgressed social limits is supremely gifted; that not even the meanest of any of the classes follow an evil course. Yet with my mind ever accustomed to solitude I deem this place, teeming with men, like a house enveloped in flames.

महाभागेति। अन्वयः—अभिन्नस्थितिः असौ नरपतिः महाभागः, वर्णानामपकृष्टोऽपि कश्चित् अपथं न भजते, कामम्। तथापि जनाकीर्णमिदं शश्वत्परिचितविविक्तेन मनसा हुतवहपरीतं गृहमिव मन्ये। व्याख्या—'अभिन्ना स्थितिः' मर्यादा येन तथाविधः स्थितेरभेत्ता 'असौ नरपतिः' राजा दुष्यन्तः 'महाभागः अप्राकृतस्वरूपः 'वर्णानां' ब्राह्मणादीनां चतुर्णाम् (शेषे षष्ठी। अत्र निर्द्धारणमाणादिविषयाभावात् निर्द्धारषष्ठी न युक्ता) 'अपकृष्टोऽपि' हीनोपि 'कश्चित् जनः 'अपथं'' विमार्गम् ['नञस्तत्पुरुषात्' इति निषेधे 'पथो विभाषा' इति अप्रत्ययः समासान्तो वा। 'परवल्लिङ्गं' द्वन्द्वतत्पुरुषयोः' इति पुंस्त्वे प्राप्ते 'अपथं नपुंसकम्' इति नपुंसकलिङ्गम्] न भजते' न गच्छति 'कामं सर्वमेतत् अनुमन्ये', सत्यमेवैतत्, 'तथापि' एवमपि, राजा च अप्राकृतः प्रजाश्च सद्वृत्ताः इति स्थितेऽपि (गर्हायामपि:) 'जनैः' मानवैः 'आकीर्णं'' व्याप्तम् 'इदं दृश्यमानमेतन्नगरम् ['इदन्' इति हस्ताभिनयेन दर्शनम्] 'शश्वत्' सर्वदा 'परिचितं' दृष्टं 'विविक्तं'' निर्जनं येन तथाविधेन मनसा' करणेन 'हुतवहेन अग्निना 'परीतं'' व्याप्तं 'गृहमिव' सञ्ज्वलितं 'मन्ये' सम्भावयामि। ['स्थितिरसौ' (ठ०, न्या० म०)—"स्थितिरहो' (रा०, वि०)] ॥

NOTES

1, (a) महाभागः—महान् भागः औदार्यादिगुणसमुदायो यस्य सः। This is inferred because the king is अभिन्नस्थितिः। स्थिति is the apportionment of dues according to merit. The king was supernaturally endowed [ महाभाग ], so he never erred in [ अभिन्न ] estimating the merits of the men under him. [b] कामम्—This indicates admission, कामं नरपतिः महाभाग.—I admit the king is supernaturally endowed. Raghava explains कामम् अतिशयेन महा-

भाग: । [c] अपथम्—पथिन् is मार्ग track, course : i.e. the right course. न पन्था: &c. see Tika. obj. of मन्ये [d] इदम्—This. Here the sperker points at the city with his finger [ अंगुलिनिर्देश: ] । [e] अग्रत्—Always. Qual. परिचित । Not necessarily compounded. [f] मनसा—करण तृतीया । करण is मननक्रिया [ मन्ये ] । [g] हुतवहपरीतम् —Note the propriety of an ascetic calling fire by the name हुतवह in preference to अग्नि, दहन, &c,

Remarks.—*Sarnagava deems the placs a house in flames which has to be forthwith shunned. He gives two strong roasons against such a thought—(i) The king is an extraordinary personage which should create a liking for the place. (i) The people are all indeed very well behaved which is a great attraction. Yet the thought overpowers him, because (i)—His mind is परिचितविविक्त and (i)—The place is जनाकीर्ण ।

शारद्वत:—स्थाने भवान् पुरप्रवेशादित्थम्भूतः संवृत्त: । अहमपि—

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥१०॥

SARADVATA—Rightly art thou become like that through entering the town. I too deem the pleasure seeking people here as the bathed deem the anointed ; the pure deem the impure ; the awake doem the asleep ; one with free motion deems the fettered.

शकुन्तला ( निमित्तं सूचयित्वा )—अम्महे किं मे वामेदरं णअणं विप्फुरदि [ अहो किं मे वामेतरं नयनं विस्फुरति ] ।

SAKUNTALA—(Acting the feeling of an omen )—Oh ! Why does my right eye quiver ?

---

* Adopted by Prof. Gajendragadkar.

with oil. This refers of [illegible]. (b) [illegible] &c.—The reference is to मनःपदि। (c) प्रभुत &c.—Refers to [illegible]। (d) [illegible] &c.—Refers to बलिश। See Tika.

गौतमी—जादे पड़िहदं अमङ्गलं। सुहाइं देमत्तुकुल-देवदाओ वितरन्दु [जाते प्रतिहतममङ्गलम्। सुखानि ते भर्तृकुलदेवता वितरन्तु]। (परिक्रामति)।

GAUTAMI—My child, the evil is averted. May the deities of your husband's family grant you joy. (Walks round).

पुरोहितः (राजानं निर्दिश्य)—भो भोस्तपस्विनः, अमा-वत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपाल-यति। पश्यतैनम्।

THE PRIEST (Pointing to the king.)—O ye asetics. There, His Highness the protector of the castes and class having even before hand quitted his seat, is awaiting you. Behold him. Comment on

शार्ङ्गरवः—भो महाब्राह्मण, काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः। कुतः— [illegible]

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्॥१२॥

SARNAGARVA—O great Brahman, this is certainly praiseworthy, yet in this matter we are indifferent. (You ask) why?—Trees become bent by the advent of fruits, clouds hang far down by new rain, good men become the reverse of the haughty by riches. Such indeed is the nature of the benefactors of others.

[illegible]। '[illegible]' [illegible], [illegible] [illegible] [illegible] [illegible] [illegible]

तव, ...शिषं निरुद्धं आशीर्षि । इदम् आशाद्यमानं दुर्निमित्तं जाते सुखानि वितरन्तु इत्यर्थः । न हि वस्तुतस्तदनिष्टं प्रतिहतम् ।

पुरोहित इति । दूरस्थं 'राजानं' निर्दिश्य तपस्विभ्यः प्रदर्श्य आह 'असौ भगवान् वर्णानां ब्राह्मणादीनां चतुर्णाम् 'आश्रमाणां' गृहस्थादीनाञ्च चतुर्णां 'रक्षिता अतएव महाभागो दुष्मन्तः, तपस्विगौरवात् 'प्रागेव' भवतां प्रवेशात् पूर्वमेव 'मुक्तासनः' आसनं परित्यज्य स्थित एव 'वः प्रतिपालयति' अपेक्षते । पुरुषमीदृशस्य दर्शनं तत् 'एतं पश्यत' ।

शार्ङ्गरवेति । 'भो महान् ब्राह्मणः', तत्सम्बोधने । हे द्विजवर राजपुरोहित [ किञ्चिदिव सोल्लुण्ठनमेतत् ] राज्ञा अनुष्ठितमिदम 'अभिनन्दनीयं' स्तुत्यं 'काम' सत्यम् । 'तथापि अत्र' अस्मिन् विषये 'वयम् [ 'अस्मदो द्वयोश्च' इति बहुवचनम् ] 'मध्यस्थाः' उदासीनाः । वयन्तु मन्यावहे नात्र काचित् स्तुतिः वा निन्दा । 'कुतः' किं कारणमिति पृच्छसि चेत् शृणु ।

भवन्तीति । अन्वयः—तरवः फलागमैर्नम्रा भवन्ति । घना नवाम्बुभिर्दूरविलम्बिनो ( भवन्ति ) । सत्पुरुषाः समृद्धिभिरनुद्धताः ( परोपकारिणां स्वभाव एव एषः । व्याख्या—'तरवो' वृक्षाः 'फलागमैः प्रसवोद्गमैः हेतुभिः 'नम्रा' आनता 'भवन्ति येन पथिकाः फलानि सुखेन गृहीत्वा तृप्ता भवेयुः । घनाः मेघाः 'नवाम्बुभिः' प्रथम-जलागमैः वर्षारम्भैः इत्यर्थः 'दूरे' गगनाग्रात् दूरे भूतलसमीपे 'विलम्बिनो' लम्बमाना भवन्ति येन वर्षणात् निदाघतप्तास्तृप्ता भवेयुः । 'सत्पुरुषाः' सुजनाः समृद्धिभिः' ऐश्वर्योत्कर्षैः 'अनुद्धताः' उद्धतप्रतिद्वन्द्विनः अभिगम्या इत्यर्थः [विरोधार्थे नञ] भवन्ति येन अर्थिनः आगत्य प्रार्थितं लब्ध्वा तृप्ता भवेयुः । 'परोपकारिणां' परार्थघटकानां 'स्वभाव एव एष' यत् ते सुखेन लभ्या भवन्ति । प्रकृत्या यत् कृतं तत्र का स्तुति-र्दुष्मन्तस्य इति भावः ।

1. प्रतिहतम् &c.—The quiver of the right eye portends evil. This frightened Sakuntala. Gautamí comforts her. The evil won't come, it is averted (प्रतिहतम्) ; and, over and above that you may expect good instead ( सुखानि वितरन्तु ) । वितरन्तु इति आशिषि लोट ।

2. [a] वर्णाश्रमाणाम्—षष्ठी । [b] रक्षिता—रक्षतीति इति तृच

+ इन् साधुकारिणि कर्त्तरि । Hence कर्मण्याचाम् cannot have ग्रहीतैः कर्त्तरि षष्ठी because 'न लोकाव्ययनिष्ठा खलर्थतृनाम्' prohibits षष्ठी with इन् ।

3. [a] "महाब्राह्मण—महान् ब्राह्मणः—a great Brahman—it is slightly taunting here. You have not much of a Brahman in you! You see things in one light we in another. We are indifferent [ मध्यस्थ ] to this humility of the king, though you take it as a great merit ; also cf 'प्रसीदतु महाब्राह्मणः'—in Swapna. (b) मध्यस्थाः—मध्ये वादिप्रतिवादिनोर्मध्ये तिष्ठन्तीति मध्य + स्था + क कर्त्तरि Lit, an arbitrator ; hence उदासीन indifferent. वयं न स्तुमः न वा निन्दामः ।

4. (a) फलागमैः, नवाम्बुभिः, समृद्धिभिः—इत्थंभूते तृतीया । (b) दूर &c. —दूरं साधु विलम्बन्ते इति दूर + वि + लम्ब + णिनि साधुकारिणि कर्त्तरि = दूरविलम्बिनः hanging low down. i e. near the harizon.

5. (a) अनुद्धताः—ऊर्ध्वं गता इति उद् + हन गतौ + क्त कर्त्तरि = उद्धताः puffed up, न उद्धताः not puffed up, i e. they come low. (b) एषः —This i.e. accessibility. (c) परोपकारिणाम्—परेषामुपकारः परोपकारः । स अस्ति एषामिति परोपकार + इनि = परोपकारिणः । Or परेषामवश्यम् उपकुर्वन्ति इति पर + उप + कृ + णिनि आवश्यके = परोपकारिणः those who are destined to come to the use of others.

6 Remark.—The verse is a piece of condensed reasoning Thus—(Sarnagarva)—दुष्यन्त is अनुद्धत । (Purohita) Why so ? [S] Because दुष्यन्त is a सत्पुरुष and अनुद्धताः सत्पुरुषाः समृद्धिभिः । [P] Is not this to the credit of a सत्पुरुष ? [S] Not so, because he is forced to this by स्वभाव—nature. If he could avoid it and yet did it of choice that would be some credit. [P] That is bold statement. What proofs ? [S] Look at the tree—भवन्ति नम्रास्तरवः फलागमैः । They are forced to this by nature. [P]. But sastras say trees have life. This may be as much a case of choice with them [S] Take then the clouds—नवाम्बुभिर्दूरविलम्बिनो घनाः । There can be no question of choice here. No, they are powerless. It is nature (स्वभाव) that rules them. स्वभाव एवैष परोपकारिणाम् । These

---

* Adopted by Prof. Gajendragadkar.

and everything else that is destined by nature to come to the use of other, are bound to be accessible. Otherwise nature's design will be frustrated. The figure is, therefore अर्थान्तरन्यास । Again भवन्ति has to be taken with all except the last line to complete the sense. So we have क्रियादीपक also "जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना । सर्ववाक्योपकारश्चेत् तमाहुर्दीपकम् –" Dandin.

प्रतीहारी— देव पसण्णमुहवण्णा दीसन्ति । जाणामि विस्सद्धकज्जाओ इसीओ [ देव, प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विस्रब्धकार्या ऋषयः ] ।

WARDER—Sire, pleased expressions of face are visible. I believe the sages have business of an assuring character.

राजा ( शकुन्तलां दृष्ट्वा )– अथात्रभवती—

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।

मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥१३॥

KING—(Gazing at Sakuntala)—Well, among the hermits who could be this noble lady veiled with the charm of her person not much disclosed, like a fresh bud among brown leaves ?

प्रतीहारीति । 'प्रसन्नाः' प्रीता 'सुखवर्णा' सुखाकारा 'दृश्यन्ते' । 'विस्रब्धं' विश्वासयुक्तं 'कार्य्यं' येषां तथाविधाः । यस्मयीक्तं सुचरितनन्दिनः समाजयितुमागता ऋषय इति नूनं तदेव ।

केति । अन्वयः—अथ तपोधनानां मध्ये, पाण्डुपत्राणां मध्ये किसलयमिव, अवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या अत्रभवती इयं का । व्याख्या—'अथ' संशये । शकुन्तलां दृष्ट्वा संशयः [ "अथाथो संशये स्याताम्" इति मेदिनी] 'तपोधनानां' तापसानां 'मध्ये' अग्रतः पुरोहितः पश्चात् शार्ङ्गरवशारद्वतौ तन्मध्ये इत्यर्थः पाण्डूनां तापसानां जीर्णपर्णानां 'मध्ये' 'किसलयमिव' नवपत्रमिव 'अवगुण्ठनवती' शिरोवस्त्रावरणवती अतएव 'नातिपरिस्फुटम्' अनतिप्रकटम् [ नञर्थेन नशब्देन 'सह सुपा' इति समासः ] 'शरीरलावण्यं' देहशोभा यस्याः तथाविधा 'अत्रभवती' मान्या 'इयं' दृश्यमाना 'का' इति संशयः । ['केयम्' ( क०, बौ० )—'का स्वित्' ( रा० वि०, म० )] ॥

1. (a) प्रसन्नमुखवर्णाः—वर्ण is रूप appearance, "वर्णः स्याद् रूपभेदयोः" इति शाश्वतः। मुखानां वर्णाः expression of their faces. प्रसन्नाः मुखवर्णाः: pleased expression &c. कर्मधा—। Here pleasure in the individual is attributed to the expression of his face. Or प्रसन्नानां मुखवर्णाः: expression of face as are seen in pleased persons. (b) विश्रब्धकार्याः:—वि + श्रम्भ + क्त + कर्तरि = विश्रब्धम् assuring विश्वासकरम् i.e. अनुद्वेगकरम्। तादृशं कार्यं येषाम् whose business is not of a disturbing character. They do not come to report anything unpleasant. Both विश्रब्ध and विस्रब्ध are correct.

2. केयम्—The verse has to be construed with अथावभवती preceding. The reading का स्वित् thus introduces a difficulty. स्वित् implies deliberation' or 'question'. 'स्वित् प्रश्नवितर्कयोः' इति हैमः। But प्रश्न is already expressed by का and वितर्क by अथ। One of the three अथ, का, स्वित् becomes redundant. Again अवभवती seems to require इयम् for specification ( निर्देश )। I think का स्वित् must make room for केयम्।

प्रतीहारी—देव, कुतूहलगब्भो पहिदो ण मे तक्को पसरदि। णं दंसणीआ उण से आकिदी लक्खीअदि [ देव कुतूहलगर्भः प्रहितो न मे तर्कः प्रसरति। ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ]।

WARDER—Sire, my deliberation directed with curiosity does not advance. But her person indeed appears worth looking at.

राजा—भवतु। अनिर्वर्णनीयं परकलत्रम्।

KING—Well another's wife is not to be scrutinised.

शकुन्तला ( हस्तमुरसि कृत्वा आत्मगतम् )—हिअअ किं एव्वं वेवसि। अज्जउत्तस्स भावं ओधारिअ धीरं दाव होहि

[ हृदय किमेवं वेपसे। आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव ]।

SAKUNTALA—(Laying her hand on her chest ; aside) – O Heart, why does thou throb so ? Be calm considering the affection of my husband.

प्रतीहारोति। कुतूहल'' कौतुकं 'गर्भे' अभ्यन्तरे यस्य तथाविधः ( 'सप्तमी-विशेषणे—" इति पूर्वनिपातने प्राप्ते गड्वादेराकृतिगणत्वात् परनिपातः ] मे तर्कः ऊहः 'प्रहितः प्रेरितः कोयमिति निश्चयकर्मणि नियोजितः 'न प्रसरति' नोपसर्पति। निर्णेतुमसमर्थोहम् 'अस्या आकृतिः पुनः' आकृतिस्तु 'दर्शनीया ननु' सुदर्शना एव 'लक्ष्यते'। ("प्रहितः" ( वि )—'प्रतिहतः' ( त- न्य- म- )—प्रतिहितः ( न )— "उपहितः" ( रा- )॥ "ननु दर्शनीया" ( र-, म- )—'दर्शनीया' (त- वि- न्या) ॥

राजेति। 'परकलत्रं' परस्त्री ['कलत्रं श्रोणिभार्ययोः' इत्यमरः] 'अनिर्वर्णनीयं' निर्वर्णनं निपुणदर्शनं न अर्हति। [ 'अनिर्वर्णनीयम' ( रा-, वि- म- )—'अनि-वर्ण्यम् ( त न्या- ) ॥

शकुन्तलेति। 'उरसि कृत्वा' वक्षसि निधाय [ सर्वधात्वार्थानुवादः करोतिना भवति ]। 'वेपसे कम्पसे। 'भावं' प्रीतिम् 'अवधार्य निश्चित्य 'धीरं तावत् भव'। तादृशी प्रीतिर्न विकल्पते, तत् का ते चिन्ता।

NOTES

1. (a) प्रहितः—The readings प्रतिहतः प्रतिहितः, उपहितः do not give good sense. (b) ननु—Implies अवधारण। (c) पुनः—Implies भेद। I cannot say who ( का ) she ( इयम् ) is, but ( पुनर् ) this much I can say with certainly ( ननु ) that she has a fair presence.

2. भवतु—An अव्यय। Implies disapproval ( निषेध )। 'अस्तु इति निषेधासूयास्वीकारयोः। भवतु इत्यस्तुवत्'—Ganakara.

पुरोहितः—( पुरो गत्वा ) एते विधिवदर्चितास्तपस्विनः। कश्चिदेषामुपाध्यायसन्देशः। तं देवः श्रोतुमर्हति।

PRIEST ( Advancing )—Here are the ascetics duly honoured. ( There is ) some message from their preceptor. Please Sire, to hear it.

राजा—अवहितोऽस्मि ।

KING – I am attending.

ऋषयः ( हस्तमुद्यम्य )—विजयस्व राजन् ।

SAGES—(Raising their hands)—Do you prosper, O King.

राजा—सर्वानभिवादये ।

KING—I salute you all.

ऋषयः—इष्टेन युज्यस्व ।

SAGES—Be provided with the wished for.

राजा—अपि निर्विघ्नतपसो मुनयः ।

KING—Have the ascetics their penance unobstructed ?

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १३ ॥

SAGE—You protecting whence is obstruction of the religious rites of the good ? The sun shining how will darkness appear.

पुरोहित इति । 'एते' उपस्थिता इमे 'विधिवदर्चितास्तपस्विनः' । 'उपाध्यायस्य' आचार्यस्य कण्वस्य 'सन्देशो' विज्ञप्तिः 'कश्चित्' अस्ति ।

ऋषय इति । 'विजयस्व' जययुक्तो भव, वर्द्धस्व । [ अकर्मकोऽयं जयतिः प्रकर्ष-प्राप्तौ वर्तते । "विपराभ्यां जेः" इत्यात्मनेपदम् ] ।

इष्टेनेति ; 'इष्टेन' प्रार्थितेन सह [ इति सहार्थे तृया ] 'युज्यस्व' युक्तो भव [ कर्मकर्तरि लोट् ] । ( इष्टेन = यज्ञकर्मणा च ) ।

राजेति । 'निर्गता विघ्नाः येभ्यः तथाविधानि 'तपांसि' येषां तथाविधाः किं मुनयः । अपि प्रश्ने । प्रधानत्वादादौ धर्मविषये एव प्रश्नः ।

कुत इति । अन्वयः—त्वयि रक्षितरि सतां धर्मक्रियाविघ्नः कुतः । घर्मांशौ तपति

तमः कथमाविर्भविष्यति । व्याख्या—'त्वयि' भवति कीदृशे 'रक्षितरि' साधु रक्षणम् कुर्वति सति ( साधुकारिणि तृन् ) 'सतां' साधूनां 'धर्मक्रियासु' तपोऽनुष्ठानेषु 'विघ्नः' अन्तरायः कुतः' कथमिव स्यात् । पक्षे—'घर्मांशौ' तीव्रतापे रवौ (तीव्रत्वात् 'तमो:'-रूपस्य शत्रोर्भयम् ) 'तपति' तापेन पीडयति सति [ पीडितत्वात् शत्रोः पलायनम् ] 'तमः' ध्वान्तरूपः शत्रुः 'कथं' केन प्रकारेण 'आविर्भविष्यति' प्रकाशं गमिष्यति । न कथमपि इत्यर्थः ।

## NOTES

1. (a) *सताम्—Construe with धर्मक्रिया not with रक्षितरि, because that would imply the existence of असत also. But the spirit of the sloka seems to be that Dushyanta being रक्षिता, all धर्मक्रिया was free from molestations Not that विघ्न was removad but none appeared even ( कुतो विघ्नः ? )। The दृष्टान्त makes this clear (b) तपति—He does not say घर्मांशौ स्थिते but तपति। By his उदयाचलस्थिति the sun removes the darkness that was. But when he is तपति darkness does not appear at all ( कथमाविर्भविष्यति ) ? The अलङ्कार is दृष्टान्त according to the moderners but दण्डिन् calls is प्रतिवस्तूपमा ।

राजा—अर्थवान् खलु मे राजशब्दः । अथ भगवान् लोकानुग्रहाय कुशली काश्यपः ?

KING—Verily my title Rajan has now become significant. Is his Reverence Kasyapa enjoying health to favour the world ?

शार्ङ्गरवः—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

SARNAGARVA—The possesors of spiritual power have health at their command. He with the preliminary enquiry after thy welfare. says this to thee.

* Adopted by Prof. Gajendragadkar.

राजा—किमाज्ञापयति भगवान् ।

KING—What does his reverence command ?

राजेति । 'राजशब्दः' राजा इति संज्ञा । 'अर्थवान्' अन्वर्थः एव । राजते शोभते सुष्ठु राजकर्मकरणात् इति राजा । अहम् तथा । अथवा । "राजा प्रकृतिरञ्जनात्" इति रक्षितेषु तापसेषु यथार्थमेवाहं राजा । 'लोकानामनुग्रहाय' भुवि स्थित्वा लोकानुग्रहकरणाय कुशली' कल्याणवान् ['ब्राह्मणं कुशलं पृच्छेत्" इति कुशलप्रश्नः ।] 'अथ' प्रश्ने ।

शार्ङ्गरव इति । 'सिद्धिमन्तः' अणिमादिसिद्धिसमन्विता योगीश्वराः 'स्वाधीनं' स्वायत्तं 'कुशलं' येषां तथाविधा भवन्ति । तदसौ कुशली किमु वक्तव्यम् । 'अनामयप्रश्न' अरोगस्य प्रश्नपूर्वकं प्रथममनामयप्रश्नं कृत्वा ['चत्वन्यु मनामयम्' इति अनामयप्रश्नः]

NOTES

1 [a] अर्थवान् &c.—From your description, I find I am doing my work well, hence rightly am I called 'राजन्'। [b] लोकानुग्रहाय—लोकानुग्रहं कर्तुम् इति "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । This is in courtesy, Good souls all exist for परानुग्रह । Elewhere the poet says—"तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः", "वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना", 'विदितं वा यथास्वार्था न मे काश्चित् प्रवृत्तयः", &c.

2. आज्ञापयति—आ + ज्ञा + णिच् + लट् ति commands. Note the humility of the king. He expects आज्ञा ।

शार्ङ्गरव—यस्मिथुः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः—

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १४ ॥

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

SARNGARAVA – Through mutual agreement you married this daughter of mine. That act of you two is approved by me with pleasure. (You ask) Why? Thou art reckoned by us moving at the fore of the worthy, and Sakuntala is worship embodied. Bringing together a bride and a bridegroom of equal excellence, Prajapati has after a long time avoided censure. So let her, now quick with child be accepted for the practice of virtue together. This [is what he says]

यन्मिथ इति। 'मिथः' अन्योऽन्यं 'समयात्' शपथाचारात् ['समयाः शपथाचार-कालसिद्धान्तसंविदः' इत्यमरः] गान्धर्वेण विवाहेन इत्यर्थः [ 'गान्धर्वः समयान्मिथः' इति याज्ञवल्क्यः] 'भवान् मदीयां दुहितरम् उपायंस्त' उदवोढ़["उपाद्यमः स्वकरणे" इत्यात्मनेपदम्] इति 'यत् युवयोस्तत्' मिथः समयकरणं प्रीतिमता मया अनुज्ञातम्'।

त्वमिति। अन्वयः—त्वं अर्हतां प्राग्रसरः स्मृतोऽसि। शकुन्तला च मूर्त्तिमती सत्क्रिया। प्रजापतिः तुल्यगुणं वधूवरं समानयन् चिरस्य वाच्यं नगतः। व्याख्या— 'त्वं नः' ('क्तस्य च वर्त्तमाने' इत्यनुक्ते कर्त्तरि षष्ठी) 'अर्हतां प्रशस्यानां पात्राणाम् (प्रशंसायां शतृ) 'प्रकर्षेण अग्रसरः' पुरोगामी 'स्मृतोऽसि' वयं त्वां सत्पात्राणामग्रणीं मन्यामहे। शकुन्तला च मूर्त्तिमती धृतदेहा 'सत्क्रिया' सत्कारः, अर्चना नः स्मृता। प तः' ब्रह्मा, तुल्या गुणा यस्य तादृशं वधूश्च वरश्च 'वधूवरं' वरवध्वौ [ "सर्वो द्वन्द्वो विभाषा एकवद्भवतीति वाच्यम्" इत्येकत्वम्। यद्वा—भाव्यमान समाहारमाश्रित्य एकत्वम् ] समानयन्' समाहरन् एकत्र कुर्वन् चिरस्य' बहोः कालात् ( 'चिराय चिररात्राय चिरस्येति चिरार्थकाः' इत्यव्ययवर्गे अमरः ) वाच्यं 'निन्दां न गतः' न प्राप्तः उत्कृष्टया अपकृष्टः पुमान्, उत्तमेन च अधमा स्त्री मिलति इत्येव निन्दा विधेर्व्यवस्था। अद्यतु युवां मेलयित्वा विधिरनिन्द्य इति भावः, तदिति। यतोऽहमनुमन्ये 'तत्' तस्मात् 'सत्व' प्राणिनं गर्भस्थमित्यर्थः आपन्ना प्राप्ता गर्भिणीति यावत् "प्राप्तापन्ने च द्वितीयया', इति समासः। बहुव्रीहिर्वा ] इयं 'सह' एकत्र 'धर्मचरणाय' [तादर्थ्ये चतुर्थी ] 'प्रतिगृह्यताम्'] इति स भगवान् आह। युक्तमेव यत् अर्हति सत्क्रिया। तत् अर्हन् भवान् सत्क्रियां शकुन्तलां गृह्णातु।

## NOTES

1. (a) अर्हताम्—अर्ह + शतृ प्रशंसायाम् = अर्हन्तः the deserving तेषाम्

निर्द्धारे षष्ठी। (b) प्रायसरः—अग्रे पुरः सरन् गच्छति इति अग्र+सृ+ट कर्त्तरि बाहुलकात्=अग्रसरः leader. प्रकर्षेण अग्रसरः the very first प्रादिवत्। (c) ऋतः—is पूजार्थं। Hence ऋ+क्त कर्त्तरि वर्त्तमाने ऋतः। (d) नः=कर्त्तरि षष्ठी। See Tika. (e) सत्क्रिया—सत्+कृ+श भावे honour आदरकरणम्। सत् is a गति in this sense by the rule 'आदरानादरयोः सदसती'। 'Honour' (सत्क्रिया) is done to the deserving ( अर्हत् )। You are the best of the deserving and शकुन्तला is 'Honour' presonified. Hence, I approve of your union.* (f) प्रजापतिः—All credit ( वाच्यं न गतः ) is due to प्रजापति। Because, though प्रजापति presides over all matches he employs relatives of the parties as instruments. In this case. I did absolutely nothing, प्रजापति alone brought about the union.

2. सहधर्मचारणाय—धर्मस्य चरणम्। सह धर्मचरणम्, सुप् सुपा। 'सस्त्रीको धर्ममाचरेत्' इति वचनात्। तादर्थ्ये ४र्थी।

गौतमी—अज्ज किं वि वत्तुकामम्हि। ण मे वअणावसरो त्थि। कहं त्ति [ आर्ये, किमपि वक्तुकामास्मि। न मे वचनावसरोऽस्ति। कथमिति ]?

GAUTAMI—Honoured Sir, I wish to say something. There is no scope for my say. (Do you ask) How?

णावेक्खिदो गुरुअणो इमाए ण तुए वि पुच्छिदो बन्धु।
एक्कक्कस्स च चरिए भणादु किं एक्क एक्कस्सिं॥
[ नापेक्षितो गुरुजनोऽनया न त्वयापि पृष्टो बन्धुः।
एकैकस्य च चरिते भणतु किमेक एकस्मिन्॥ ]

Superiors were not regarded by her, nor by you too were her kinsmen consulted. In a matter done singly by each what should another say to either?

शकुन्तला ( आत्मगतम् )—किं णु क्खु अज्जउत्तो भणादि [ किं नु खलु आर्यपुत्रो भणति ]।

* Adopted by Prof. Gajendragadkar.

SAKUNTALA—(Aside)—What indeed would my lord reply ?

राजा—किमिदमुपन्यस्तम् ।

KING—What is this presented ?

गौतमीति । 'किमपि' यत् किञ्चित् 'वक्तुकामा' [illegible] 'अस्मि' । मे अर्थवती च अयं प्रस्तावो नास्ति' । [illegible] तत्र मे वचनमनवकाशः । 'कथम्' अप्रसक्तः 'इदि' चेत् तत्र ।

* नेति । अन्वयः—अनया गुरुजनो नापेक्षितः, त्वया अपि बन्धुजनः पृष्टः । एकैकस्य च चरिते एकः एकस्मिन् किं भणतु । व्याख्या—'अनया' शकुन्तलया 'गुरुजनः' कण्वप्रमुखः न अपेक्षितः' गुरुजनापेक्षा न कृता स्वयमेव कर्तव्यं निर्णीतम् । 'त्वया अपि बन्धुः' बन्धुबान्धवजनः 'न पृष्टः' शकुन्तलार्थे न याचितः । इत्यम् इतरेतर-पेक्षस्य 'एकैकस्य च' एकस्य एकस्य एव चरिते कृते कर्मणि तादृशं कर्म अधिकृत्य 'एकः' अन्यः माहृशतीसर्यो जनः ('एकेमुख्यान्यकेवलाः' इत्यमरः) एकस्मिन्' अनयोर्द्व-योरन्यतरस्मिन् किं भणतु कथयतु । न किमपि । "अस्मिन् मे मनः विश्वसिति तत् शीघ्रयतु भवाननेन माम्" इति न शकुन्तला गुरुजनं नापि त्वया स्वस्या बन्धुजनो याचितः । अपि तु द्वावपि भवन्तौ तृतीयमनावेद्य कर्म कृतवन्तौ । तदधुना तृतीयस्य कथाया नास्त्यवकाशः । [ मूलम् ( त. व्या. )—'...'न खलु पृष्टश्च...परस्परस्मिन्नेव चरिते भणामि किमेकैकम्' ( रा. )—एकैकमेव चरिते किंभणतुं क एकस्य" (म)— "...त्वया पृष्टो बन्धुः, एकैकमेव चरिते भणामि [illegible]" ( वि. ) ॥

शकुन्तलेति । उपन्यस्तं समीपे निक्षिप्तम् उपस्थापितम् । [illegible] सर्वमिदं दुरवबोधं मन्यते ।

NOTES

1. वक्तुकामा—See वक्तुकामः, Ante.

2. (a) एकैकस्य—एकस्य एकस्य implies वीप्सा । The whole is treated as a बहुव्रीहि by the rule 'एकं बहुव्रीहिवत्' । The word is सर्वनाम because the prohibition 'न बहुव्रीहौ' applies to बहुव्रीहि only

---

* Adopted by Prof. Gajendragadkar.

and not also to those that are बहुव्रीहिवत् । 'एकैकस्य । न बहुव्रीहि इति प्रतिषेधो न भवति'—Vritti. (b Remark—In the other readings एकैकम्=एकम एकम् समासि in Raghava, in monier-Williams &c. it is क्रियाविशेषण, qualifying चरित which is hardly defensible.

3. किमिदम् &c.—This is not repudiation of marriage. It merely implies that something, unpleasant to the king has happened.

**शकुन्तला ( आत्मगतम् )—पावओ क्खु वअणोवण्णासो [ पावकः खलु वचनोपन्यासः ] ।**

SAKUNTALA [ Aside ]—The presentation of the words is fire indeed.

**शार्ङ्गरवः—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।**

**सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते ।**
**अतःसमीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥१६॥**

SARNAGARVA—How is this ? You are surely very well versed in the ways of the world. Though chaste, people deem otherwise one who having the husband living has one's kinsmen's house as the only resort Hence favourite or not favourite a woman is wanted by her relatives to be near her husband.

शकुन्तलेति । 'वचनस्य' किमिदमुपन्यस्तमिति वाक्यस्य 'उपन्यास.' उपस्थानम् उपस्थितमेतद्वाक्यमित्यर्थः 'पावकः खलु' अग्निरिव मां दहत्येव ।

शार्ङ्गरव इति । 'इदम्' एष विस्मयप्रकाशः 'कथं नाम' इति क्रोधोपगमे कुत्सने वा [ 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः ] । भवन्त एव, भवादृशा जना एव, न मादृशाः 'सुतराम्' अतिशयेन 'लोकवृत्तान्ते' जनचरिते 'निष्णाताः' कुशलाः । कस्मिन् विषये लोकः किं वदति, भवन्त एव जानन्ति । तथापि अजानता इव कथमुच्यते किमिदमुपन्यस्तमिति ।

सतीमिति। अन्वयः—ज्ञातिकुलैकसंश्रयां भर्तृमतीं सतीमपि जनः अन्यथा विशङ्कते। अतः स्वबन्धुभिः प्रमदा प्रिया अप्रिया वा परिणेतुः समीपे इष्यते। व्याख्या —'ज्ञातीनां' बान्धवानां 'कुलं' गृहम् ['कुलं जनपदे गृहे' इति विश्वः] 'एकः' केवलः संश्रयः' आश्रयस्थानं यस्याः तथाविधां 'भर्तृमतीं' सधवाम् ['विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ" इति वामनः] 'सतीमपि' साध्वीमपि 'जनः' लोकः 'अन्यथा' अन्य-प्रकारेण असतीत्वेन 'विशङ्कते' सम्भावयति, असतीमिति मन्यते। अथ लोकवृत्तान्तो विदितस्ते। अतो हेतोः लोकवादभयात् 'स्वस्य बन्धुभिः' स्त्रिया ज्ञातिभिः 'प्रमदा' तरुणी स्त्री 'प्रिया' भर्तुरभिमता वा 'अप्रिया' अनभिमता 'वा परिणेतुः' वोढुः 'समीपे इष्यते' प्रार्थ्यते। शकुन्तला तव प्रिया वा अप्रिया वा, तवैव समीपे तिष्ठतु। अन्यथा लोकापवादः स्यात्। त्वमपि एतज्जानासि। तथापि किमात्थ 'किमिदमुपन्यस्तमिति' ['प्रियाप्रिया वा' ( रा- त-, न्य- )—'तदाप्रियापि' ( वि-, म- ) ] ॥

NOTES

1. वचनोपन्यासः—उपन्यस्तं वचनमित्यर्थः। भावानयने द्रव्यानयनम्। पावको वचनोपन्यासः—The utterance of words is fire i.e. words uttered burn me like fire.

2. लोकवृत्तान्त &c. – नि + स्ना + क्त कर्तरि = निष्णाताः or नि + स्नाताः। The former implies कौशल and takes षत्व by the rule 'निनदीभ्यां स्नातेः कौशले"। The latter means कृताभिषेक and has the dental स। लोकानां वृत्तान्तः। तस्मिन् निष्णाताः।

3. (a) ज्ञातिः &c.—ज्ञा + क्तिच् कर्तरि = ज्ञातिः kinsmen (masculine). (b) प्रियाप्रिया वा—The reading तदाप्रियापि has तद् superfluous. अप्रियापि implies परिणेतुः अप्रियापि। प्रियाप्रिया वा occurs in the Sahitya-darpana also. (c) Sarngarva takes it that the king does not like that his wife Sakuntala should be near him just now.

राजा—किमत्रभवती मया परिणीतपूर्वा।

KING—On the other hand has this lady been married by me previously ?

शकुन्तला (सविषादमात्मगतम्)—हिअअ सम्पदं दे आसङ्का [ हृदय, साम्प्रतं ते आशङ्का ]।

SAKUNTALA ( Sorrowfully—Aside )—O Heart, your apprehension is justified.

शार्ङ्गरवः—

किं कृतकार्य्यद्वेषाद्धर्मं प्रतिविमुखतोचिता राज्ञः ।

SARNGARAVA—Is disinclination towards duty through dislike for deed done, proper for a king ?

राजा—कुतोऽयमसत्कल्पनाप्रसङ्गः ।

KING—Whence is this occasion for this unfair assumption ?

शाङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ।

SARNGARVA—These perversities usually appear in those that are giddy with power.

राजेति । 'च' पक्षान्तरे ["च पादपूरणे पक्षान्तरे हेतौ विनिश्चये" इति विकाण्डशेषः]। इयं पूर्वं परिणीता 'परिणीतपूर्वा' ['भूतपूर्वे चरट्' इति ज्ञापकात पूर्वशब्दस्य परनिपातः] 'किम्' ?

शकुन्तलेति। 'ते आशङ्का' किं वा स्यात् इति सन्देहः 'साम्प्रत' युक्ता [ युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः ]।

शार्ङ्गरव इति। अन्वयः—कृतकार्य्यद्वेषात् धर्मं प्रति विमुखता राज्ञः उचिता किम्। व्याख्या—'कृतं' प्रथममनुष्ठितं यत् 'कार्य्यं' तस्मिन् द्वेषात् अरुचिवशात् 'धर्मं प्रति' कर्त्तव्यं प्रति 'विमुखता' अरुचिः राज्ञः' सम्बन्धे लोकशिक्षकस्य इत्यर्थः उचिता किम्'। यद्भवान् गूढ़मूढ़वान् इमां तत्र नास्ति सन्देहः। अधुना च भवानस्यां वितृष्णः। तथापि अस्या ग्रहणं ते धर्मः। यदि राजा सन् इमां त्यक्त्वा स्वयमधर्मं चरसि धर्मविप्लवः प्राप्तः। [ मूलम् ( त-, वि-, व्या-, म- )—'किं कृतकार्यद्वेषो धर्मं प्रतिविमुखता कृतावज्ञा' ( रा- ) ]।

राजेति। 'असती' असाध्वी असद्भूता या कल्पना,' कार्यं कृतं द्वेष, विमुखता चास्त्येवंरूपा, तस्याः 'प्रसङ्गः' प्रस्तावः कुतः। केन प्रसङ्गेन भवत एतदनुमानम्।

शार्ङ्गरव इति । अन्वयः—ऐश्वर्यमत्तेषु प्रायेण अमी विकाराः मूर्च्छन्ति । व्याख्या—ऐश्वर्येण प्रभुत्वेन मत्तेषु सदसद्विवेकविहीनेषु 'प्रायेण अमी विकाराः' चेतोविकाराः अनार्यकार्येष्वपि आर्यचरिताभिमानरूपाः 'मूर्च्छन्ति' प्रसरन्ति [ 'मत्तेषु' ( रा-, वि-, म- )—'मत्तानाम्' त-, व्या- ) ] ॥ प्रायेण—प्रकृत्यादित्वात् ।

NOTES

1. असत्कल्पना &c.—The unfair assumption is that Sarngarava supposes ( कल्पना ) (i) that the king did marry Sakuntala ( कृतकार्य ), ( ii) that he now dislikes ( द्वेष ) her (iii) and is therefore unwilli[ng] [विमुख] to recognise her. With the reading असत्कल्पनाप्रश्नः explain असत्कल्पनामूलकः प्रश्नः a question [i.e. किं कृतकार्य &c. ] based upon wrong assumptions.

2. अमी विकाराः—Refers to perversities (विकार—'feigning surprise when reminded and such like. In the present instance we have a secret marriage, its repudiation, feigning surprise when told of it, and so forth. In a word विकार here living a wicked life and yet professing piety.

राजा—विशेषेणाधिक्षिप्तोऽस्मि !

KING—I am seriously insulted.

गौतमी (शकुन्तलां प्रति)—जादे मुहुत्तअं मा लज्ज अवणइस्सं दाव दे ओउण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि [जाते मुहूर्तकं मा लज्जस्व । अपनेष्यामि ते अवगुण्ठनम् ततस्त्वां भर्त्ता अभिज्ञास्यति ] । ( तथा करोति ) ।

GAUTAMI (Toward Sakuntala)—Child, for a moment, discard bashfulness. I will remove your veil, your lord will then recognise you. (Does the same).

राजा ( शकुन्तलां निर्वर्ण्य आत्मगतम् )

इदमुपनतमेवं रूपमक्लिष्टकान्ति

प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् ।

भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् ॥१९॥
( विचारयन् स्थितः ) ।

KING—(Having gazed at Sakuntala—Aside)—Notcoming to a decision whether previously accepted ornot, I am indeed unable at once to enjoy or again to renounce this beauty thus arrived with its charms unfaded, like a bee the Kunda at dawn with dew inside, (Remains deliberating).

राजेति । 'विशेषेण' सुतराम् 'अधिक्षिप्तः भर्त्सितः ["अधिक्षिप्तौ निहितभर्त्सितौ" इति हैमः ] ॥

गौतमीति । 'अवगुण्ठनं' वस्त्रावरणम् । 'अभिज्ञास्यति' स्मरिष्यति । [ 'तथा' तद्वत् अपनीतावगुण्ठनामित्यर्थः 'करोति' ] [ "शकुन्तलां प्रति" (त-, न्या — दय एतन्न पठन्ति ] ॥

राजेति । 'निर्वर्ण्य' निपुणं दृष्ट्वा ।

तदिमिति । अन्वयः—प्रथमपरिगृहीतं स्यान्न वा इति अव्यवस्यन् ( अहम् एवम् उपनतम् इदम् अक्लिष्टकान्ति रूपं विभाते भ्रमरः अन्तस्तुषारं कुन्दमिव, सपदि खलु न भोक्तुं नापि मोक्तुं शक्नोमि । व्याख्या—'प्रथमं पूर्वं परिगृहीतं पत्नीत्वेन स्वीकृतं [ "पत्नी परिजनादानमूलशापाः परिग्रहाः" इत्यमरः ] 'स्यात न वा' स्यात् 'इति' एतत् अव्यवस्यन्' अन्यतरपक्षत्वेन निश्चयम् अभजमानः अहम् 'एवम्' अनेन प्रकारेण, अस्मरपत्यावस्थया ( सुखेन इति प्राचः ) 'उपनतम्' उपस्थितम् 'इदम् अक्लिष्टकान्ति' अम्लानलावण्यं 'रूपं' सौन्दर्यं 'विभाते' प्रभाते अनुदिते भास्करे भ्रमरः 'अन्तस्तुषारं' नीहारगर्भं 'कुन्दमिव' मिषिविकाशिपुष्पभेदमिव, 'सपदि खलु' तत्क्षणमेव प्राप्तिमात्रमित्यर्थः, 'न भोक्तुं' स्वीकर्तुम् राजपक्षे सगर्भायाः प्राक्परिग्रहनिश्चयाभावात— भ्रमरपक्षे अन्तस्तुषारसद्भावात्) 'नापि भोक्तुं' ( उभयत्र अक्लिष्टकान्तित्वेन लोभात) शक्नोमि' पारयामि । ("वेत्यव्यवस्यम्" (म)—'वेत्यव्यस्यन्' ( त-, न्या )—वेत्यौ व्यवस्यन्' ( रा, वि ) । "विभाते" ( रा-, वि- म- )—"निशान्ते" ( त- न्या ) ॥ 'न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्" ( त- न्या- —"न च खलु परिभोक्तुं नैव शक्नोमि हातुम्" ( रा-, वि )—"न खलु च" इत्यादि (म) ॥

## NOTES

1. विशेष—वि+शष+घञ् कर्मणि = विशेषः that which is singled out, special. शेन। Specially, i.e. severely. Qual अविशमृतः। द्वतीया कारवे। 'क्रियाविशेषणानां द्वचित् कारकम्''।

2. एवम्—Thus in this state, i. e. With child. This is necessary for the comparison with अमानुषाणम्। Raghava explains एवमुपगतम्। But that the king is thinking of the child in the womb is clear from his reply 'कथमिमाम् अभिव्यक्तसत्वलक्षणां... प्रतिपत्स्ये।''—(See next page). She has come thus (एवम् i. e. सगर्भा), hence the supreme necessity of deciding प्रथमपरिगृहीतं स्यान्न वा।

But I am unable to decide because the testimonies are conflicting. While I do not remember the marriage the sage testifies to it.

If wedded by me (परिगृहीतम्) I must own her, it is my duty to do so. In this case 'नापि शक्नोमि मोक्तुम्'।

If not wedded by me (न परिगृहीतम्) the child in the womb declares that she is another's wife and I cannot accept her, for by accepting her I become a क्षेत्रिक (See next page). In this case 'न खलु सपदि मोक्तुं ...शक्नोमि'।

Hence I am in a fix ; there is danger in both accepting and rejecting her All this because उपनतमेवम्। If she were not उपनतमेवम् no difficulty would arise, because I could then treat the story of her marriage with one as originating in some misapprehension on the part of her relatives and could accept her just as I could any other acceptable virgin offered to me.

Later in the Act, king himself describes his predicament thus—

"मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।

दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥"

[King to Purohita] (b) व्यवसायम्—वि+अव+सो+घञ = व्यवसायम् making up the mind i.e. deciding. न व्यवसायम्।

(a) विभाते—In the morning; that is the only time

when अन्तस्तुषारकुन्द can be found. Also later in the day, कुन्द becomes क्लिष्टकान्ति by the sun. अन्तस्तुषारम्—अन्तः मध्ये तुषारो यस्य तत् having due inside, बहु—। Or अन्तर्गतः तुषारो यस्य तत्। कुन्द referring to the flower ( प्रसव ) is neuter. (c) भोक्तुम्—Cannot enjoy because there is dew in the कुन्द and foetus in the रूप। (d) मोक्तुम्—cannot abandon because of the अक्लिष्टकान्तित्व।

4. Remark (a) With the reading व्यवस्यन् explain इति। व्यवस्यन् विचारयन्—Thus deliberating, (b) "न खलु परिभोक्तुं, नैव शक्नोमि हातुम्" has न खलु एव which are not easily explained.

प्रतिहारी—( स्वगतम् )—अह्णो धम्मावेक्खिदा भट्टिणो। ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि [ अहो धर्मावेक्षिता भर्तुः। ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कः अन्यो विचारयति ]।

WARDER (Aside)—Oh ! our lord's regard for virtue ! Who else indeed hasitates having noticed such beauty easily arrived

शार्ङ्गरवः—भो राजन्, किमिति जोषमास्यते।

SARNGARAVA—O king, why are you keeping silent thus ?

राजा—भोस्तपोधनाः चिन्तयन्नपि न खलु स्वीकरणमत्र-भवत्याः स्मरामि। तत् कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रियमाशङ्कमानः प्रतिपत्स्ये।

KING—O sages, even though searching my memory, I do not recollect the wedding of this lady. How then can I accept her suspecting myself to be an adulterer as she bears manifest signs of being with child ?

प्रतीहारीति। 'अहो आश्चर्यं'। 'धर्ममवेक्षते' पालनत्वेन अनुसरति इति 'धर्मावेक्षी'। तस्य भावः, धर्मपरत्वम् इत्यर्थः। 'ईदृशं सुखेन' अनायासेन 'उपनतं' 'प्राप्तं रूपं दृष्ट्वा को नाम अन्यः' कः खलु अपरः 'विचारयति' यः कश्चिदन्यः पूर्व-मूढमनूढं वा इत्यविचारयन्नेव आददीत।

## NOTES

शार्ङ्गरव इति। 'किमिति' कथं 'जोषं' तूष्णीम् [ अव्ययम्। "तूष्णीमर्थे सुखे जोषम्' इत्यमरः ] 'आस्यते' स्थीयते भवता।

राजेति। चिन्तयन्नपि बहु ध्यायन्नपि 'अत्रभवत्याः स्वीकरणम्' उपयमनं 'न स्मरामि'। तत् अभिव्यक्तं प्रकटं सत्त्वलक्षणं गर्भचिह्नं यस्याः तथाविधाम्' अतएव परपरिगृहीतां 'प्रति' [इत्यभूताख्याने कर्मप्रवचनीयत्वाद्द्वितीया] आत्मानं मां 'क्षेत्रियं परदारप्रवृत्तम् ( 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' इति घच् प्रत्ययः परशब्दलोपश्च निपात्यते ) 'आशङ्कमानः 'कथमिमां प्रतिपत्स्ये' ग्रहीष्यामि। मया ऊढा इति नास्ति निश्चयः अथ च गर्भिणीयम्। एवमस्या ग्रहणे परस्त्रीस्पर्शशङ्का अस्ति, अतो न गृह्णामि इत्यर्थः। ("क्षेत्रियम्" (पि-)—'क्षेत्रिणम्' (रा- वि- म-) = 'अक्षेत्रियम्' (त-, न्या ) ॥ "आशङ्कमानः" (रा, वि- म- ) = 'मन्यमानः' ( त- न्या-) ) ॥

1. (a) चिन्तयन्नपि ··· स्मरामि—So she is not my wife. (b) अभिव्यक्तसत्त्वलक्षणा—And as she is enciente, the is another's wife. Had she not been with child I could have assumed her to be a maiden accepted her even though she story of marriage seems suspicious. But now it is a different thing. (c) क्षेत्रियम् क्षेत्र is कलत्र wife. 'क्षेत्रं कलत्रे केदारे' इति कोषः। परस्य क्षेत्रं परक्षेत्रम् another's wife. तत्र चिकित्स्यः दण्डादिना निग्रहीतव्य इति परक्षेत्र + घच = क्षेत्रियः। One deserving chastisement in the matter of another's wife. The word पर disappears by निपातन। 'घच्प्रत्ययः परशब्दलोपश्च निपात्यते'—Vritti.

2 Reading—क्षेत्रिय is the Bengali reading as given by Pischel. The Devanagari reading is क्षेत्रिणम्, though Raghava recognises the variant क्षेत्रियम्। 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः। यत् इयं गर्भिणी मया क्षेत्रभुजा प्रतिगृह्यते, अहं क्षेत्री स्यां न तु बीजी। अतः तज्जातापत्यं न औरसम् अपि च क्षेत्रजम् तच्च औरसात् हीनम् इति शङ्का"। The reading is not worthy of Dushyanta. It supposes शकुन्तला to be his wife seeking recognition after having publicily come with a child in the womb by another person, and Dushyanta hesitating

whether to accept her or not !! Besides, in the first part of the speech the king openly repudiates marriage. He does not at all remember the marriage ; the idea of becoming a चेविन् cannot therefore occur to him. Hence चेविन् cannot be the poets reading here There now remains the other alternative, viz. Sakuntala is another's wife, but wants to be accepted by him. चेविन् suits this case admirably.

शकुन्तला ( अपवार्य )—अज्जस्स परिणए एव्व सन्देहो। कुदो दाणिं मे दूराहिरोहिणी आसा [ आर्यस्य परिणये एव सन्देहः। कुतः इदानीं मे दूराधिरोहिणी आशा ]।

SAKUNTALA ( Aside)—Even in the marriage, the noble sir has his doubts. Where now is my high soaring hope ?

शाङ्गरव – मा तावत्।

कृताभिमर्शामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः।
मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन ॥१८॥

SARNGARAVA—Indeed dont do so ! Approving the daughter unto whom dishonour was done ( i e. approving the dishonour done unto his daughter) the sage really deserves to be insulted—the sage by whom, urging to accept his own property that was stolen, you are, like a robber, converted into a worthy receipient.

शकुन्तलेति। 'आर्यस्य मान्यस्य अस्य 'परिणये एव सन्देहः' ( अतएव 'आर्यस्य' इत्याह न तु 'आर्यपुत्रस्य' इति )। 'दूरम्' अत्युच्चम् 'अधिरोहति' तादृशी 'मे आशा' भङ्गगच्छिणी भविष्यामि, चक्रवर्तिनं पुत्रं निवेश्य अनेन सह वनं प्रत्यागमिष्यामि, इत्येवं विधा 'कुतः' कुत्र गता।

शाङ्गरव इति। 'मा तावत्' प्रतिपद्यस्व। इयमप्रतिपत्तिः सदृशी एव ते। अन्वयः—कृताभिमर्शां सुतामनुमन्यमानो मुनिः त्वया विमान्यो नाम, येन मुष्टं स्वमर्थं प्रतिग्राहयता दस्युरिव पात्रीकृतोऽसि। व्याख्या—'कृतः अभिमर्शः' आमर्शनं धर्षण-

मिश्रकैः अत्र तादृशीं श्रुतां प्रत्युत्तराम् [ श्रुतामिति कोपकारकोपश्याय: ] 'अनुमन्यमानः' अनुमोदमानः, इतं सुताभिमर्शमनुमन्यमान इत्यर्थः: 'मुनिः' कण्वः, मद्वपि कोपकारके न केवलमकुप्यन्, अपि तदेव कोपस्थानं प्रशंसन् अतिस्वदरधो 'त्वया' धृष्टेन 'विमान्यो नाम अवश्यं य एव। 'येन' मुनिना 'मुष्ट'' चोरित' (मुषितमितियुक्तम्। यद्वा "आदितश्च" इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् इट्न)। निजम् 'अर्थ' वित्तं कन्यारूपं 'प्रतिग्राहयता' प्रतिग्राह्यत्वेन स्वीकारं त्वमेव बोधयता सता 'दस्युरिव' चौर इव त्वम् अपात्रं 'पात्र' सम्पाद्यमानः 'कृतः असि'; यद्यधुना शकुन्तलां प्रतिपद्य मुनिं सम्भावयसि तदा 'स्तुभे वत्यवस्मातः' इति शास्त्रं मिथ्या भवति। सम्भा तावत् प्रतिपदस्व इत्यतिवक्रा कोपकलुषोक्तिः। ( 'अभिमर्शम्' (न)— 'अभिमर्षम् ( रा०, वि० )—'अवमताम्' ( त० न्या )॥ मुष्टमिति भागमशासनित्यत्वाद्वा (समादेयम्। मन्ये 'मृष्टम्' ( बलात् गृहीतम् from मृशक इति ) इति पाठ आसीत् ]।

1. (a) आर्यस्य—She does not say आर्यपुत्रस्य because the marriage is doubted. (d) कृतः—किम + सप्तम्यासम् स्वार्थे। आद्यादि। (c) दूराधिरोहिणी—दूर + अधिरुह + णिनि कर्त्तरि साधुकारिणि ( स्त्रियाम् )।

2. मा तावत्—This is an answer to the king's, कथप्रतिपत्स्ये" (How can I accept) above. Forsooth (तावत) don't ( मा ) accept. This looks like approval. But it is ironical and is really strong condemnation of the king's non-acceptance. The irony continues throughout the verse following.* See Tika on the verse.

3. (a) कृताभिमर्शाम्—अभि + मृश + घञ् भावे = अभिमर्श outrage c. f. 'पराभिमर्शो न तवास्ति'—Kumara. Now see Tika. Avoid अभिमर्ष with a cerebral. (b) नाम —Implies अभ्युपगम approval. 'नाम प्राकाश्यसम्भाव्यकोधाभ्युपगमेषु च' इति विश्वः। The 'approval is ironical, and becomes disapproval here. (c) विमान्यः—वि + मान + णिच् + यत् कर्मणि deserving insult. त्वया विमान्यो नाम is exactly like युक्तं नाम ते later on. त्वया (by thee) is significant. This is just like you त्वया )। By so doing you have proved yourself true to your character ( धृष्ट as you are).

4. (a) प्रतिग्राहयता—त्वं मुष्टं प्रतिगृह्णासि = मुनिः त्वां or त्वया मुष्टं प्रति-

* Adopted by Prof. Gajendragadkar.

याचयति। The अधिकर्ता takes तृतीया because याचि is not included in the rule 'गतिबुद्धिप्रत्यवसानार्थ='। Or अधिकर्ता as कर्म takes द्वितीया supposing याचि to mean 'बोधन' (बुद्ध्यर्थ)। (b) येन does not require the mention of तच्छब्द। "उत्तरवाक्यगतत्वेनोपादानात् तच्छब्दस्य आर्थत्वम्"।

5, *Remarks—This is ironical. 'You are a robber; you have stolen the sages property. He takes no offence but on the contrary makes you a present of it. He deserves contempt and you have served him right by refusing to accept his gift.

शारद्वतः—शार्ङ्गरव: विरम त्वमिदानीम्। शकुन्तले, वक्तव्यमुक्तमस्माभिः। सोऽयमत्रभवानेवमाह। दीयतामस्मै प्रत्ययप्रतिवचनम्।

SARADVATA—Sarngarava, do you stop now Sakuntala, what we had to say, has been said by us This his respected self here, says this. Give him a reply of recognition

शकुन्तला (अपवार्य)—इमं अवत्थन्तरं गदे तारिसे अणुराए किंवा सुमराविदेण। अत्ता दाणिं मे सोहणीओ त्ति ववसिदं एदं [इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन। आत्मा इदानीं मे शोचनीय इति व्यवसितमेतत्]। (प्रकाशम्) अज्जउत्त—[आर्यपुत्र—] (अर्धोक्ते) संसइदे परिणए ण एसो समुदाआरो। पोरव तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं इमं जणं समअपुव्वं पदारिअ ईदिसेहिं अक्खरेहिं पच्चाक्खादुं [संशयिते परिणये न एष समुदाचार:। पौरव, युक्तं नाम ते तथा पुरा आश्रमपदे स्वभावोत्तानहृदयम् इमं जनं समयपूर्वं प्रतार्य ईदृशैरक्षरैः प्रत्याख्यातुम्]।

* Adopted by Prof. Gajendragadkar.

**SAKUNTALA** (Aside)—Such a love having reached so different a state, what possible can be gained by reminding? The attempt is made because my own self has to be cleared. (Aloud) My husband—(Having half uttered) Marriage being doubted this is not the proper form. Paurava! it is (Or—is it) indeed proper for you after having previously deceived this naturally open hearted person with oaths in the hermitage, to disown her with such words.

आरहत इति। 'विरम' निवृत्तो भव, मातःपरं ते वक्तव्यमस्ति [ 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ]। 'वक्तव्यं यत् कण्वेन वक्तुम् उपदिष्टा वयं तत् 'उक्तम-स्माभिः'। 'सः' अस्मद्वचनविषयः 'अयमत्रभवान्' मान्यो राजा 'एवमाह' अस्मदुक्तं विप्रतिपन्नः परिणयमेव अपलपति। 'प्रत्ययवाक्' प्रत्यभिज्ञानसमर्थं प्रत्युत्तरम् "अस्मै दीयताम्"।

शकुन्तलेति। 'तादृशे' अतिशयिते 'अनुरागे इदम्' एतत् 'अवस्थान्तर' अन्याम-वस्थां रूपविपर्य्ययम् [ अन्तरशब्दो भिन्नवाची। नित्यसमासो मयूरव्यंसकादित्वादन्तर-शब्दस्य च परनिपातः ] 'गते' प्राप्ते सति 'स्मारितेन' स्मारणेन ( भावे क्तः ) 'वा किम्' न किमपि फलम् स्यात् ! तथापि 'इदानीम् आत्मा' निजस्वरूपं मे 'शोधनीयः' कलङ्कात् मोचनीय 'इति' हेतोः 'एतत् व्यवसितम्' प्रारब्धं मया, एष मे उद्यमः। 'आर्य्यपुत्र' इति परिणेतुरेव सम्बोधनम्। 'परिणये सन्दिग्धे' जातसन्देहे सति ('सन्दिग्धमज्ञातम्— इति हलायुधः ) एष समुदाचारः' सम्यगाचारः 'न' न हि युक्तमेतत् सम्बोधनम्। 'पुरा' पूर्वम् 'आश्रमपदे स्वभावेन' प्रकृत्या 'उत्तानम्' अगभीरम् अकपटमित्यर्थः 'हृदयं' यस्य तथाविधं निसर्गसरलाशयम् 'इमं जनं' मद्रूपं 'समयपूर्वकं' शपथैः ( समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः ) 'तथा प्रतार्य्य' वञ्चयित्वा अधुना 'ईदृशैः अक्षरैः' विसंवादिवचनैः 'प्रत्याख्यातुं' निराकर्त्तुम्( अर्हार्थोपपदे तुमुन् )'युक्तं नाम' क्तमेव। यद्वा—युक्तं नाम युक्तं किम् ? प्रतारको वाऽजनसुलभ्या प्रत्याचष्टीति इत्येव युज्यते। 'पौरव' इति गोत्राभिख्यः अभिजननापि न सदृशमेतदिति दर्शयितुम् ('शोध-नीयः' (त-, व्या,)—'शोचनीयः' ( रा- म- )—'मोचनीयः' ( वि- )॥ "युक्तम्" ( त- वि-, व्या- )—"न युक्तम् ( रा- म- )।

1, (a) अर्थे—सम्प्रदाने चतुर्थी as in "कश्चिकोपाध्यायस्यार्थं चपेटां ददाति' —Bhashyam. (b) प्रत्यय &c.—आत्मपारिग्रहादि। See Tika,

*2 (a) इदम्—Implies the immensity of the change. (b) तादृशं—Refers to the intensity of the love.

3. शोचनीय &c.—The treatment is so mean that it is beneath my dignity to take any notice of it at all. But a slur is caste in my character, and I condescend to say some thing in reply ( प्रत्ययप्रतिवचनम् ) only to clear my own self, not because I now care for the acceptance of me ( किं वा स्मारितेन ) by such a wretch.

4. युक्तं नाम &c.—An irony exactly like Sarnagarava's कृताभिमर्शाम् &c.—Ante.*She means this—You are a deceiver. Your professions of love were false. I was a simpleton to be taken in. The declaimer now is quite in keeping with ( युक्तं नाम ) the previous duplicity. Your apprehension of my being another's wife is a myth.

राजा ( कर्णौ पिधाय )—शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमञ्च पातयितुम् ।

कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तटतरुञ्च ॥ १८ ॥

KING—(Covering his ears)—Let sin stop. Why dost thou seek to sully your family and degrade this person too, as a stream, that rends its banks,does of her pure water and of the tree on the bank ?

शकुन्तला—होदु जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं ता अहिण्णाणेण इमिणा तुह आसङ्कं अवणइस्सं [ भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वया एवं प्रवृत्तं तदभिज्ञानेन अनेन तव आशङ्कामपनेष्यामि ]।

* Adopted by Prof. Gajendragadkar

SAKUNTALA—Well, if really deeming me as another's wife such a course is adopted by you, then I will remove your suspicion with this token of recognition.

राजेति। 'कर्णौ' पिधाय' इत्यत्रापिशब्दस्य ( 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अकारलोपः। पक्षे अपिधाय )। पापश्रवणनिवारणार्थमेवम्। ( राघवादिभिर-पठितमेतत् ) 'पापं' दुष्कृतम्, वचनमा पापोक्तिः 'शान्तं' निरस्तं भवतु। नैवं वद इत्यर्थः। अन्वयः—किं कूलङ्कषा सिन्धुः प्रसन्नमम्भः तटतरुच इव, व्यपदेशमाविलयितुम इमं जनं पातयितुञ्च ईहसे। व्याख्या—'किं' किमर्थं 'कूलं' तटं 'कषति भिनत्ति या तादृशी ( कूलोपपदात् कषेः खच् ) तटप्रपातिनी 'सिन्धुः' नदी 'प्रसन्नम्' अनाविलम् 'अम्भः' प्रवाहं यथा आविलयति 'तटतरुच इव' तीरस्थं तरुच यथा पातयति तथा 'व्यपदेशं' कुलम् ( करणे घञ् ) 'आविलयितुं कलुषयितुं 'इमं' मद्रूपं जनं' पातयितुञ्च' धर्मात् पतितं कर्त्तुञ्च 'ईहसे'। पापा इयं चेष्टा शान्ता भवतु। ('किमीहसे जनमिमञ्च पातयितुम्' (रा-, वि-, म-)—"समीहसे माञ्च नाम पातयितुम्' ( त-, न्या- )॥ "अम्भः" ( रा-, वि, म- )—'ओघम्' ( त-, न्या- )।

शकुन्तलेति। 'भवतु' अस्तु तावत् प्रतारणा ते नाभिप्रेता यदि परमार्थतः यथार्थमेव परपरिग्रहम्' अन्यकलत्रं शङ्कसे' यस्मात्कारणात् त्वया एवं प्रवृत्तम् ( भावे क्तः ) परदारशङ्कया एव तेऽयमीदृशी प्रवृत्तिर्मयि, न च वञ्चनमुच्छया तत्' तदा अनेन' मदङ्गुलिस्थेन अभिज्ञानेन अङ्गुलीयकरूपेण तव आशङ्काम् अपनेष्यामि'। [ "प्रवृत्तम्" ( त- वि- न्या- म- )—"वक्तुं प्रवृत्तम्" ( रा- )॥ "अभिज्ञानेन अनेन ( रा- म- )—'अभिज्ञानेन केनापि' ( त-, न्या ) ]॥

NOTES

1. शान्तम्—शम् + णिच् + क्त कर्मणि = शान्तम् or शमितम्।

2. (a) व्यपदेशम्—व्यपदिश्यते अनेन इति वि + अप + दिश घञ् करणे = व्यपदेशः designation, race, तम्। (b) आविलयितुम्—आविल is कलुष stained (for कुल), muddy for ( अम्भस् )। आविलं करोतुम् इति आविल + णिच् + तुमुन् = आविल (नामधातु) + तुमुन् = आविलयितुम् to sully. (c) पातयितुम्—to degrade ( जन ), to cause to fall ( तरु )। (d) कूलङ्कषा—कूल + कष + खच् कर्त्तरि स्त्रियाम् by the rule 'सर्वकूलाभ्रकरीषेषु कषः'। (e)

अयः—The Beng. Rec reads कीयम् which agrees better with अपरिकम् in the masculine.

3. (a) भवतु—See भवतु अभिव्यक्तोयम् &c.—Ante. Here it means अनुयाक्गीकार reluctant admission—admission for argument's sake.

राजा—उदार: कल्प: ।

KING—A good proposal.

शकुन्तला ( मुद्रास्थानं पदामृश्य )—हद्धी, हद्धी, अङ्गुलीअ-असूण्णा मे अङ्गुली [ हा धिक् हा धिक्, अङ्गुलीयकशून्या मे अङ्गुलिः ]। ( सविषादं गौतमीमुखमीक्षते )।

SAKUNTALA ( Feeling the place of the ring )—Alas! Alas! my finger is void of the ring (Sorrowfully stares at Gautami's face).

गोतमी—णूणं दे सक्कावदारब्भन्तरे सचीतीथसलिलं वन्दमाणाए पब्भट्टं अङ्गुलीअयं [ नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ]

GAUTAMI—Your ring must have supplied as you were doing obeisance to the waters at Sachi Tirtha in Sakravatara.

राजा ( सस्मितम् )—इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

KING (Smilling)—Here it is what is called 'Women are ready-witted'.

राजेति। 'उदार: कल्पो' मुख्यो न्याय: ( कल्प: स्यात् प्रलये न्याये' इति विश्व: ) इति राघव:। यद्वा—'उदारो' महान् उत्तम इत्यर्थ: कल्प:' सङ्कल्प: साधु रेव प्रस्ताव: यदभिज्ञानेन महाम् प्रतनेष्यसि ।

शकुन्तलेति। मुद्र्यते अनया इति मुद्रा' उत्कीर्णमङ्गुलीयकम् ( करणे अप्रत्यय: स्त्रियाम् )। 'तस्या स्थानम्' अङ्गुलिमूलं परामृश्य स्पृष्ट्वा ( गौतमी मुखमीक्षते ( तन्म-)—गौतमीं वीक्षते" ( रा-वि-म )॥

[illegible]मिति। अवतरणम् अवतारः' (प्रायाणुहतं स्वमावासमपि [illegible] भावे)। शक्रावतारः' शक्रावतारः तदाख्यया तदुपलक्षितो देशः। तस्य अभ्यन्तरे' मध्ये शचीतीर्थस्य सलिलं वन्दमानायाः' तव अञ्जलिं ददत्याः (इतो मानय) ते अङ्गुलीयकं प्रभ्रष्टं' करात् च्युतम्। अञ्जलिदानं प्रभ्रंशहेतुः।

राजेति। स्त्रैणं' स्त्रीसमूहः स्त्रीजातिरित्यर्थः प्रत्युत्पन्ना' तत्क्षणलभ्या मतिः' यस्य तथाविधं भवति इति यत् उच्यते' पण्डितैरित्यर्थः तत् इदम्। "तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता' इति राघवभट्टधृतसुधाकरवचनम्। स्त्रीजातिः प्रत्युत्पन्नमति इति गौतमीवचनात् प्रत्यक्षं ज्ञायतेऽस्माभिः इति सोल्लुण्ठनोक्तिः।

## NOTES

1. (a) स्त्रैणम्—स्त्रीणां समूहः इति स्त्री + नञ् = स्त्रैणम् स्त्रीसमूहः i.e. स्त्रीजातिः the woman kind. (b) इद तत् &c.—This is an instance of the saying 'women are ready witted,' This is a flign at Gautami. By your ready explanaticn, you furnish an illustration of the saying.

शकुन्तला—एत्थ दाव विहिणा दंसिदं पहुत्तणं। अवरं दे कहिस्सं [अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि]।

SAKUNTALA—Verily predominance has been shown by Fate here. Another (token of recognition) I will relate to you.

राजा—श्रोतव्यमिदानीं संवृत्तम्।

KING—Now has come (the turn of) what is to be heard.

शकुन्तला—णं एकस्सिं दिअहे वेदसलदामण्डवे णलिणी-पत्तभाअणगदं उअअं तुह हत्थे सण्णिहिदं आसि [ननु एकस्मिन् दिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितम् आसीत्]।

SAKUNTALA—One day in the cane-bower water placed in a cup of lotus-leaf was taken up in your hand.

राजा—शृणुमस्तावत् ।

KING—We are listening indeed

शकुन्तलेति । 'एक दिवसम्' ... [illegible] ... तावत् दर्शितम् । विश्वस्तवान् इति एतदभिज्ञान मे ... [illegible] ... 'ते कथयिष्यामि' ।

राजेति । 'इदानीं श्रोतव्यं संवृत्तम्' पूर्वं तु द्रष्टव्यमासीत ... [illegible] ... वस्तुतस्तु सर्वं मिथ्या, ... [illegible] ।

शकुन्तलेति । 'ननु' वाक्यारम्भे [ "नन्वाक्षेपे परिप्रश्ने ... [illegible] ... " इति हैम ] ... [illegible] ... 'गतम्' तदर्थमित्यर्थः उदकं तव हस्ते ... [illegible] ... त्वं हस्ते कृतवान् । [ "वेतसलतामण्डपे" ( त-, व्या- ) — "... [illegible] ... मण्डपे" ( रा, वि-, म- ) ] ॥

## NOTES

1. *श्रोतव्यम्—The proof could be seen at first ; it is now to be heard. Presently it will vanish altogether ! The whole story is false ; hence it can leave no sort of proof behind द्रष्टव्य or श्रोतव्य ।

2. वेतसलता &c – Refers to the bower वेतसपरि... [illegible] ...मण्डपे spoken of in Act III. This is the bower where the lovers used to meet. Compare 'लतावलय···[illegible]···' — Act III. So reject नवमालिकामण्डपे ।

3. *शृणुमस्तावत्—The king's mind is a perfect blank owing to शाप । He is naturally surprised at the opening words of the story, and exclaims, "Ah ! what a fine story ! We are listening indeed ! How can we not listen. It is so interesting !"

---

* Adopted Prof. by Gajendragadkar.

शकुन्तला—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिदो [तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः]। तुए अअं दाव पढमं पिअदु त्ति अणुअम्पिणा उवच्छन्दिदो उअएण, ण उण दे अपरिचआदो हत्थब्भासं उवगदो [त्वया अयं तावत् प्रथमं पिबतु इत्यनुकम्पिना उपच्छन्दित उदकेन, न पुनस्ते अपरिचयात् हस्ताभ्यासम् उपगतः]। पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ। [पश्चात्तस्मिन्नेव मया गृहीते सलिले अनेन कृतः प्रणयः]। तदा तुमं इत्थं पहसिदोसि—सव्वो सगन्धेसु विस्ससदि दुवे वि तुम्हे आरण्णओत्ति [तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति, द्वावपि युवाम् आरण्यकौ इति]।

SAKUNTALA—At that instant my adopted child, the little fawn nam d Dırghapanga approached. He was entreated with water by thee pitying and saying—"Let him drink first, but hrough unfamiliarity he did not venture near your hand. Afterwards the same water being taken up by me approach was made by him. Then you taunted thus—All eonfide in relatives, both of you are foresters.

शकुन्तलेति। 'तत्क्षण' तस्मिन् क्षणे 'मे पुत्रकृतकः' कृत्रिमः पुत्रः [ व्याख्यातं प्राक् ] 'दीर्घापाङ्गो नाम मृगपोतकः' हरिणशिशुः 'उपस्थितः' समागतः। 'अयं तावत् एव जलमिदमेव प्रथमं पिबतु इति' अनेन प्रकारेण 'अनुकम्पिना' दयमानेन त्वया उपच्छन्दितः' अभिलाषानुरूपं प्रार्थितः। जलार्थमागतः जलमिव त्वम् अतः इति छन्दानुवर्तनम्। 'अपरिचयात्' परिचयाभावात् अज्ञातत्वात् 'न पुनर्ते हस्ताभ्यासं' हस्तसमीपम् 'उपगतः' प्राप्तः। 'पश्चात्' अनन्तरं 'तस्मिन्नेव सलिले मया गृहीते' सति अनेन' कर्मविधुना प्रणयः' याच्ञा 'कृतः'। 'तदा त्वम् इत्थम्' अनेन 'प्रकारेण' प्रह-

द्वितीयेऽपि प्रहार्थे सगन्धयोरपि [ "सनन्तकत्वात् कर्त्तरि क्तः ]—'सर्वः समानसमानेषु" गन्धेषु [ योगविभागात् समानस्य स-भावः ] तुल्यसम्बन्धेषु [ "गन्धः सम्बन्धः मयोः" इति हैमः] आत्मीयेषु इत्यर्थः 'विश्वसिति'—'द्वावपि युवाम् आरण्यकौ' अरण्यसम्बन्धेन तुल्यसम्बन्धौ [ शकुन्तलापक्षे "अरण्यान्मनुष्ये" इति वुञ्। मृगपक्षे शैषिके अणि आरण्यः। ततः स्वार्थे अनुकम्पायां वा कन् ]। [ "द्वावपि युवाम" ( त-, न्या- )— "द्वावप्यत्र" ( रा-, वि-, म- ) ]॥

NOTES

1. (a) तत्क्षणम्—This is कर्म of उपस्थित: though स्था is अकर्मक। "देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्"। (b) उपच्छन्दितः—उपच्छन्दन is प्रार्थना solicitation. Compare "तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम्" – Raghu. (c) प्रहसितः—हस is अकर्मक here. Hence प्र + हस + क्त कर्त्तरि। (d) सगन्धेषु—गन्ध is सम्बन्ध relation. समानः गन्धः एषाम् इति सगन्धाः equally related i. e. both related to अरण्य। Here समान becomes स by योगविभाग in the rule "समानस्य छन्दस्यमूर्ध-प्रभृत्युदर्केषु"। समानस्य इति योगविभागः इष्टसिद्ध्यर्थः क्रियते"—Vritti. The commentator Haradatta prefers to derive such cases from सह in the sense सदृश and gives अस्वपदविग्रह। Thus समानः गन्धः अस्य is the वाक्य of a समास between सह and गन्ध giving the forms सह-गन्ध and सगन्ध। "समाना जातिरस्य नोपसर्जनस्य इति सभावः। समानशब्दस्य तु समानजातीय इत्यादि भवति। योगविभागे तु तस्य नित्यत्वात्, न तत् सिध्यति। अतएव भाष्यवार्त्तिकयोर्योगविभागस्य नोपन्यासः"—Padamanjari. (e) आरण्यकौ —अरण्यस्य अयं जनः इति अरण्य+वुञ्=आरण्यकः refer to शकुन्तला। Also अरण्यस्य अयं मृगः इति अरण्य+अण=आरण्यः। स एव इति आरण्य+कन् स्वार्थे=आरण्यकः See Tika. आरण्यकश्च आरण्यकश्च आरण्यकौ two souls ( जनौ ) belonging to the forest. एकशेषः। विशेष to जनौ understood.

2. Reading—युवाम्...स च त्वम् युवाम् you. Qualifies जनौ understood. The Dev. Nag reading अत्र avoids a grammatical difficulty. The reference being to मृग and शकुन्तला the common attributives should be in the neuter सामान्ये नपुंसकम् giving द्वे and आरण्यके। But युवाम् has the merit of referring pointedly to

शकुन्तला at whom the joke is directed. The grammar is safe too if जनो be understood. With अत्र [ here, or in this matter] also we require जनो ।

राजा—एवमादिभिरात्मकार्य्यनिर्वर्त्तिनीनां मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः ।

KING—By such sweet false words of women bent upon achieving their own ends are sensual people attracted.

गौतमी—महाभाअ, णारिहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो अणभिण्णो अअं जणो कइदवस्स [ महाभाग, नार्हसि एवं मन्त्रयितुम् । तपोवनसंवर्द्धितः अनभिज्ञः अयं जनः कैतवस्य ] ।

GAUTAMI—Great Sir, it behoves thee notto say so. Reared in a hermitage, this person is ignorant of deceit.

राजा—तापसवृद्धे,

स्त्रीणामशिक्षितपटुत्वममानुषीणां
सन्दृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात् स्वमपत्यजातम्
अन्यैर्द्विजैः परभृताः किल पोषयन्ति ॥ २० ॥

KING—Pious Matron, untaught skill is seen even of females other than human, what then of those that possess knowledge. The female cuckoo is known to get her offspring reared by other birds before flight in the air.

राजेति । 'आत्मकार्य्य' स्वकार्य्यम् अपेक्ष्य 'निवर्त्तयन्ति याचमानाम्' [ आत्मनो भिन्नः ] । 'एवमादिभिः' ईदृशाभिः 'मधुराभिः' मिथ्यावचनैः 'विषयिणः' इन्द्रियपरायणा जना 'आकृष्यन्ते' विमार्गं नीयन्ते । [ "मधुराभिरनृतवाग्भिः" ( त०, व्या० ) —इ "अनृतमयवाङ्मधुभिः" ( रा०, वि, म० ) ] ॥

गौतमीति। 'तपोवनसंवर्धितः अयं' अकृत्रिमस्वरूपः 'जनः' 'कैतवस्य' वञ्चनाया 'अनभिज्ञः'।

राजेति। वृद्धा तापसी 'तापसवृद्धा' वृद्धतापसी वा ("कडाराः कर्मधारये" इति विशेषणस्य परनिपातो वा)। ततसंबुद्धौ। अन्वयः—अमानुषीणाम् अपि स्त्रीणाम् अशिक्षितपटुत्वम् सन्दृश्यते, याः प्रतिबोधवत्यः (तासां) किमुत। परभृताः स्वम् अपत्यजातम् अन्तरिक्षगमनात् प्राक् अन्यैः द्विजैः पोषयन्ति किल। व्याख्या—'अमानुषीणां' मानुषव्यतिरिक्तानामपि 'स्त्रीणाम् अशिक्षितेषु अनुपदिष्टेषु विषयेषु 'पटुत्वं' नैपुण्यम्—यद्वा—'अशिक्षितम्' अनुपदिष्टं 'पटुत्वं सन्दृश्यते' लक्ष्यते। 'याः स्त्रियः 'प्रतिबोधवत्यः', विवेकवत्यः तासां 'किमुत' किं वक्तव्यम्। 'परैः' काकादिभिः भृताः' पुष्टाः 'परभृताः' कोकिलाः 'स्वम् अपत्यजातम्' अर्भकसमूहम् 'अन्तरिक्षगमनात् प्राक्' (अञ्चूत्तरपदयोगे पञ्चमी) यावदाकाशगमनं न शक्यते तावत् 'अन्यैः' कोकिलाभिन्नैः 'द्विजैः' पक्षिभिः काकैरित्यर्थः (प्रथममण्डरूपेण ततोऽर्भकरूपेण जन्म तेन च पक्षिणां द्विजत्वम्)। 'पोषयन्ति किल' वर्धयन्त्येव। यद्येवं तर्हि आश्रमवर्धितापि इयं कैतवं जानाति इति किमत्र चित्रम्। [ "अमानुषीणाम्" (त, न्या-)—"अमानुषीषु" (रा-, वि-, म-)। "किल" (त-, न्या-)—"खलु" (रा-, वि-, म-) ]।

## NOTES

1. Reading—अनृतमयवाङ्मधुभिः means "honey of speech full of lies." This requires विषयिन् to be taken as भ्रमर। But then आत्मकार्यनिर्वर्तिनी remains disjoined. The metaphor becomes faulty. This reading is therefore avoided.

2. (a) अमानुषीणाम्—मनोरपत्यानि जातिः इति मनु + अञ् स्त्रियाम् मानुष्यः women. The ष comes in here by the rule "मनोर्जातावञ्यतौ षुक् च" giving two forms मानुष (अञ्) and मनुष्य (यत्)। Fem. of मानुष is मानुषी and of मनुष्य is मनुषी। न मानुष्यः अमानुष्यः। तासाम्। Qual. स्त्रीणाम्। (b) प्रतिबोधवत्यः—प्रतिबुध्यते अनेन इति प्रति + बुध् + घञ् करणे प्रतिबोधः intellect. स अस्त्यासाम् इति प्रतिबोध + मतुप् स्त्रियाम् Those who are endowed with intellect, i. e. the females of Man.

3. Reading—अमानुषीषु will have आधारे सप्तमी। अमानुषीषु मध्ये

वा क्रियः शाखाम् is then the sense. But all are स्त्री among the अमानुषी। Hence the statement is meaningless. अमानुषेषु might do, but अमानुषीषु will not. अमानुषीणाम्—qualifying स्त्रीणाम् – is much better. For a similar idea compare—"स्त्रियो हि नाम खल्वे-तन्निसर्गादेव पण्डिताः।"—Mriehchhakatika.

4. (a) अन्तरिक्ष &c.—The usual form is अन्तरीक्ष। अन्तः द्यावा-पृथिव्योर्मध्ये ईक्ष्यते इति अन्तर् + ईक्ष् + घञ् कर्मणि = अन्तरीक्षम्। Or अन्तर्मध्ये ऋक्षाणि नक्षत्राणि अस्य इति अन्तर ऋक्ष = अन्तरिक्षम् (पृषोदरादि)। (b) द्विजैः—द्विर्जाताः इति द्वि + जन + ड कर्तरि = द्विजाः birds. See Tika. (c) परभृताः—The word is परभृता in the feminine. (d) किल—ऐतिह्ये—such is the story.

5. *Remark—Here अमानुषी may mean अप्सरस्। द्विज also means ब्राह्मण। परभृताः is परैः पुरुषैः विषयिभिरित्यर्थः भृताः पालिताः maintained by others, i. e. गणिकाः who are often mistresses of the rich; किल refers to tradition. Thus Sakuntala might take it as a grossly rude reference to her own birth story. मेनका is अमानुषी and a परभृता। शकुन्तला is her स्वमपत्यम्। On leaving विश्वामित्र and before going back to her celestial abode प्रागन्तरिक्षगमनात् she left her अपत्य for पोषण with a द्विज Kanva who was अन्य (विश्वामित्रव्यति-रिक्त) i. e. पर to her. This is the story किल। Also herself a परभृता the mother makes a परभृता of her अपत्य too, might be taken as broad hint at the suspected unchastity of शकुन्तला।

शकुन्तला (सरोषम्)—अणज्ज, अत्तणो हिअआणुमाणेण पेक्खसि। को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तुह अणुकिदिं पडिवज्जिस्सदि [अनार्य, आत्मनो हृदयानुमानेन प्रेक्षसे। क इदानीम् अन्यो धर्मकञ्चुकप्रवेशि-नस्तृणच्छन्नकूपोपमस्य तव अनुकृतिं प्रतिपत्स्यते]।

SAKUNTALA—(angrily)—Ignoble man, judgest thou after the measures of thy own heart? Who else will undertake to

---

* Adopted by Prof. Gajendragadkar.

imitate thee that, wearing the cloak of virtue, resemblest a well, covered up with grass.

अकृतज्ञेति । हे 'अनार्य' आर्याचारविवर्जित 'आत्मनो हृदयम् अनु' हृदयानुरूपं यत् 'मानं' मितिः तेन 'प्रेक्षसे' जानासि (ईदृशमेव जानमासि) यथा ते हृदयं तथा सर्वस्य मन्यसे । 'क इदानीमन्यः' त्वद्व्यतिरिक्तो जनः (इदानीमिति वाक्यालङ्कारे) 'धर्मस्य कञ्चुकं' प्रावरणं 'प्रवेष्टुं' शीलं यस्य तथाविधस्य अतएव 'तृणैः छन्नः' आच्छादितः (छन्न विकल्पः'। अनिटपक्षे छिलुक्) यः 'कूपः' तेन सह 'उपमा' तोलनं यस्य तादृशस्य 'तव अनुकृतिम्' अनुकरणं 'प्रतिपत्स्यते' करिष्यति । यथा गभीरोऽपि कूपः तृणैराच्छादितमुखः समतल इव लक्ष्यते, तथा पापात्मा त्वं धर्मकञ्चुकं प्रविष्टो धार्मिक इव लक्ष्यसे । नाहमीदृशी । किं बहुना, भवानिव शठो द्वितीयो न स्यात् ।

NOTES

1. हृदयानुमानेन—or अनुगतं मानम् अनुमानम् similar measure, प्रादि तत्—हृदयस्य अनुमानं ; तेन—with the standard of your own heart, ३या करणे । Cf.—"यादृशः पुरुषस्यात्मा तादृश स प्रभाषते"—Mahabharata.

राजा (आत्मगतम्)—वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते । तथाहि—

न तिर्यगवलोकितं भवति चक्षुरालोहितं
वचोऽपि परुषाक्षरं न च पदेषु संसज्जते ।
हिमार्त्त इव वेपते सकल एष बिम्बाधरः ।
स्वभावविनते भ्रुवौ युगपदेव भेदं गते ॥ २१ ॥

सन्दिग्धबुद्धिं मां कुर्वन् अकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया—

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २२ ॥

( प्रकाशम् ) आर्ये, प्रथितं दुष्यन्तस्य चरितम् । प्रजास्वपीदं

KING—(Aside) The anger of this lady seeems unfeigned, but through residence in the forest. Thus there is no side-look ; the eyes become deep red ; the speech too has very harsh words and does not falter in the periods ; the whole of the Bimba-like lower lip quivers like one frost bitten ; the eyebrows naturally arched, have become crooked even simultaneously. Her engar, making me undecided in mind, seems like unfeigned. Thus it is as if I, in fact with a terrible attitude of mind from the loss of recollection not acknowledging the love tha happened in secret, byher mightily incensed and excessively red in the eyes. Cupid's bow is snapped through the contraction of her bent eyebrows. (Aloud) Noble lady, Dushyanta's deeds are public. Such a thing is not seen even among the subjects.

राजेति । 'अत्रभवत्याः'—शकुन्तलायाः 'कोपः वनवासात्' तपोवने स्थितत्वात्, नागरकजनसंसर्गाभावात् इत्यर्थः 'अविभ्रमः' विलासवर्जितः तात्त्विकस्तथा सात्त्विको जातः'। यद्यपि इयमिति कोपकारणमस्या नास्ति, तथापीयमधुना परमार्थतः कुपितेव प्रतिभाति, तत्र कारणं कृत्रिमकोपः कथमभिनयसदेषा न जानातीति ।

अन्वयः – अवलोकितं तिर्यक् न । चक्षुः आलोहितं भवति । वचोऽतिपरुषाक्षरं पदेषु न सज्जते च । सकल एष बिम्बाधरः हिमार्त इव वेपते । स्वभावविनते भ्रुवौ युगपदेव भेदं गते । व्याख्या—'अवलोकितम्' अवलोकनम् दृष्टिः ( अपि तु: ) तिरः वक्रम् अञ्चतीति 'तिर्यक्' वक्रम् [ अञ्चतेः कर्त्तरि क्विन् ] 'न' । क्रुद्धो मदभिमुखी दृष्टिरस्याः कृतककोपे तु दृष्टिर्वक्रा भवति । 'चक्षुः आ' सम्यक् 'लोहितं रक्तं' भवति कृतककोपे नैवं विपदमिव तिष्ठति । 'वचः' मां प्रति प्रयुक्ता वाक् 'अतिपरुषाणि' अतिकठोराणि 'अक्षराणि यस्मिन् तादृशं' 'पदेषु' वाक्यघटकेषु शब्देषु 'न संसज्जते' च 'नापि स्खलितं भवति । मिथ्याकोपे तु स्खलमानैव वाक् प्रतिहता भवति । 'सकलः समग्र एव आभ्यन्तरो बिम्बाकारः अधरः ( आकृतिविशिष्टः ) 'हिमार्तः' शीतपीडितः

इव वेपते जम्भते। कुटिलकोपं भारतकेनी नैव बाधते कटिन् कोपकत्: निपुण-
तया मध्ये वा कोपमार्गे वा स्यात्। 'स्वभावेन जल्पा 'विनते' कर्णे 'भ्रू वी कुटपदेव'
समकालमेव 'भेदं गते' भग्ने। अत्र तु यौगपद्यं ज्ञातकोपात् भेदं सूचयत्यलङ्कार:।
एवं तात्त्विकलक्षणे संस्थितोऽपि कोपो मिथ्या एव, लक्षणानि तु वनवासात् उपस्थितानि।
["अतिपरुषाक्षरम्" ( व्या- )—"अपि परुषाक्षरम्" ( त-, पि- )॥ "संगच्छते"
( पि- )—संगच्छते' ( त-, व्या- )॥ "सकल एव" ( पि- )—"सकल एव"
( त-, व्या- )॥ "स्वभावविनते" [ पि-, ]—"प्रकामविनते" [ त-, व्या ]॥ श्लोकोऽयं
राघवादिभिरपठित: ]।

सन्दिग्धेति। मां सन्दिग्धा संशयिता, अहं वा विस्मृत: स्वयं वा मिथ्यावादिनी
इति जातसंशया 'बुद्धि:' यस्या तथाविधं कस्मिन् अस्या: कोप: अविद्यमानं 'कैतव'
शाठ्यं यस्मिन् तथाविध 'इव लक्ष्यते'। ( पूर्वोक्तिविरुद्धमेतत्। अकैतवत्वं तत्र वनवासो
हेतुरुक्त:। तदयुक्त: सन्देह:। वस्तुतस्तु इदं वा पूर्वं वा प्रक्षिप्तम्। पूर्वमेव प्रामाणिकं
प्रतिभाति। ]

अन्वय:—विस्मरणदारुणचित्तवृत्तौ मयि एव रहो वृत्तं प्रणयम् अप्रतिपद्यमाने, अतिरुषा
अतिलोहिताक्ष्या अनया भ्रुवो: भेदात् स्मरस्य शरासनं भग्नम् इव। व्याख्या—'विस्मरणेन'
विस्मृत्या स्मृतिलोपात इत्यर्थ: 'दारुणा' अतिकर्कशा 'चित्तवृत्ति:' यस्य तस्मिन् 'मयि एव
रह:', विजने 'वृत्तं' निष्पन्नं 'प्रणयं' स्नेहम् 'अप्रतिपद्यमाने' अस्वीकुर्वति अनङ्गीकुर्वति
सति 'अतिरुषा' प्रबलेन कोपेन 'अतिलोहिताक्ष्या' आरक्तलोचनया 'अनया भ्रुवो: भेदात्'
भङ्गात्, भेदं विधाय इत्यर्थ: (ल्यब्लोपे कर्मणि पञ्चमी) स्मरस्य शरासनं धनु: 'भग्नमिव
मन्ये' इयमेव सत्यं वदति अहमेव प्रणयं विस्मृत:। तेन कोपादनया न हि भ्रूयुगम्
अपि तु कामस्यैव धनुर्भग्नम्। मदनतस्य स्नेहस्य जलाञ्जलिर्दत्त: इत्यर्थ:। [ मय्येव
विस्मरण" ( रा- वि- म- )—"मय्येवमस्मरण" ( त-, व्या- ) ]॥

प्रकाशमिति। 'प्रकाशं' स्पष्टमाह—'दुष्यन्तस्य चरितं वृत्तं 'प्रथितं' सर्वत्र प्रका
शितं' तत्र किञ्चिदपि नास्ति, अतस्तु अप्रकृतपदस्येव तस्य कृतिनं वा इति लोको वदतु
मया तत्र किमुच्यताम्। परन्तु 'इदं ब्रह्मचर्यसत्कृतपदस्य' 'प्रजास्वपि किं पुन: प्रजा-
पालके न दृश्यते'। ['प्रजास्वपीदं न दृश्यते" ( त-, व्या- )—"अप्यापीदं न लक्ष्यते"
( त-, पि- म- ) ]॥

## NOTES

1. Remark—This passage is very obscure. The second verse plainly states that the king is almost convinced of Sakuntala's innocence and the truth of the story told by her. If so, it is difficult to explain what follows from आर्ये प्रथितम् &c. to दारपरित्यागः ।

Again "भर्त तव स्वाशया: कोपो लक्ष्यते । तथाहि" is a poor paraphrase of "अविभ्रम: पुनरस्मभवत्या: कोपो लक्ष्यते । तथाहि" with words repeated exactly in the same order. The same person, with any pretentions as a writer, would not have probably written both. Lastly, the plain भद्राः as a substitute for भवभवत्याः seems to be a breach of decorum even though आत्मगत । This coupled with the incongruity of the verse, seems to raise grave suspicious about the authenticity of the text, from भद्गिम्धबुद्धिम् to भारता, notwithstanding that Bhoja quotes the verse मय्ये व &c. in the Kanthabbharana.

On the other hand, note how minutely and faithfully the working of anger are painted in the first verse how skillfully the metre is handied, how dignified the diction, and last though not least how happily सहस्रते appears in the आत्मनेपद as is usual with Kaldasa, Vyasa, and Valmiki. ( It is significant that an attempt has been made to alter संसहते into संगच्छते ) । The verse ( न तिर्य क &c. ) cannot be spurious.

If then भद्गिम्धबुद्धिम्—भारत्य be omitted ; the passage left has to be explained differently from what appears in the Tika, Thus—विभ्रम is हाव or शोभा । "अथ विभ्रमः । शोभायां संभ्रमे हावे" इति हैमः । अविभ्रमः unadorned i. e. plain, natural ; without the softening feature which society and etiquette impart. She makes no attempt to control or conceal her anger. This is due to forest life ; she has not seen society, 'पापा ·स्वम्—आम्नातेति'' in the Tika has to be omitted. Also omit "एव' तथिव ...उपस्थितामि" । The king believes that she is really offended ;

but this does not lend colour to her story .She is angry no because she has been disbelieved ; but owing to the unkind remark "स्त्रीणामशिक्षित—"।

शकुन्तला—सुठ्ठु दाव अत्त सच्छन्दचारिणी किदम्हि जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअविसस्स हत्थब्-भासं उवगदा। [ सुष्ठु तावत् अत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयविषस्य हस्ताभ्यासमुप-गता ]। ( पटान्तेन मुखमावृत्य रोदिति )।

SAKUNTALA—Well am I here represented as a hariot —I who through confidence in Puru's line, had got into the clutches of the person, with honey in the mouth and poison in the heart (Hides her face with her skirt and weeps).

शार्ङ्गरवः—इत्थमात्मकृतमप्रतिहतं चापलं दहति।
अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥ २३॥

SARNGAVA—Thus does unchecked rashness of one's self burn. Hence secret union has to be made after having specially tested (each other). Friendship does in this manner become enmity in those whose hearts are unknown (to each other).

शकुन्तलेति। 'अत्र' एव देशे सुष्ठु, अतिशयेन 'स्वच्छन्देन' आत्ममत्या 'चरति' या तादृशी, यथेच्छाविहारिणी 'कृतास्मि' प्रतिपन्ना भवामि 'या अहम्' [ उत्तरवाक्यगत-स्य योगादानात् तच्छब्दापेक्षा ] 'पुरुवंशे' यः प्रत्ययः' विश्वासः तेन 'मुखे मधु यस्य तादृशस्य 'हृदये विषं यस्य तादृशस्य च [ 'सप्तमीविशेषणे—" इति ज्ञापकात् व्यधि-करणपदो बहुव्रीहिः ] 'अस्य जनस्य' हस्ताभ्यासं करसमीपम् 'उपगता प्राप्ता। पौरवो ऽयं पापेन कुत्सितेन रूपेण गता, सम्प्रति मोच्याऽहमित्यर्थः। [ 'हृदयविषस्य' ( स-व्या- )—'हृदयस्थितविषस्य' ( रा-, वि-, म- ) ]॥

पटान्तेन वसनस्य अन्तेन प्रान्तेन मुखमावृत्य 'रोदिति'।

माद्यतीति। 'अप्रतिहतम्' अनियन्त्रितम् 'आत्मकृतं' निजानुष्ठितं 'चापलं' चपलता 'इत्थम्' अनेन प्रकारेण 'दहति' परितापयति। अविमृश्यकारिता त्वया कृता, तत्फलमधुना भुङ्क्ष्व। अन्वयः—अतः रहः सङ्गतं विशेषात् परीक्ष्य कर्तव्यम्। अज्ञातहृदयेषु सौहृदम् एवं वैरीभवति। व्याख्या—'अतः' अस्मात् हेतोः यतश्चापलं दहति ततः 'रहः' विजने यत् 'सङ्गतं' समागमः तत् 'विशेषात्' विशेषाभ्युपगमेन न तु सामान्यदृष्ट्या [ विशेषमवलम्ब्य इति ल्यब्लोपे कर्मणि ] परीक्ष्य विमृश्य 'कर्तव्यम्'। अन्यथा अनिष्टमाह—'अज्ञातं हृदयं' मनो येषां तेषु जनेषु सुहृदयस्य भावः 'सौहृदं' मैत्री [ सुहृदयशब्दात् युवादित्वात् अण्। हृद्भावः। आदिवृद्धिः ] 'एवम्' अनेन प्रकारेण शकुन्तला-दुष्यन्तगतरीत्या अवैरं वैरं सम्पद्यमानं भवति इति 'वैरीभवति' शत्रुता सम्पद्यते। सामान्यतः पौरवोऽयम्, इति न पर्याप्तम्, विशेषेण आत्मना पुनरयं कीदृश इत्यपि ते चिन्तनीयमासीत् इति भावः [ "इत्थमात्मकृतम्" (रा-, वि-, म-)—'इत्थम्' ( त-, व्या- ) ॥ "अप्रतिहतम्" ( न-, व्या- म- )—"परिहतम्" ( रा-, वि- ) ] ॥

NOTES

1. हृदयविषमा—In हृदयस्थितविषमा the word स्थित is superfluous Besides the compound does not harmonise with मुखमधो:।

2. इत्थम् etc —Raghava reads परिहतम and explains "आत्मकृतं चापलं कदाचित् दैवानुकूल्येन सम्यक् तथा परिणमति (sometimes succeeds by chance); परिहतं केनचित् कष्टं सत् दहति (but obstructed, as it usually is, it brings remorse).

3. अतः etc,—Raghava construes "सङ्गतं परीक्ष्य कर्तव्यम्" (Union should be made after test); रहः सङ्गतम् विशेषात् (secret union should be after special tests).

4. (a) एवम्—अनेन प्रकारेण i.e, as it has become in this case of दुष्यन्त and शकुन्तला। (b) सौहृदम्—See under जननान्तरसौहृदानि।

राजा—अयि भोः किमत्रभवतीप्रत्ययादेवास्मान् संयुतदोषाक्षरैः क्षिणुथ।

KING—O, why do you, merely through trust in this lady, goad me with words, implying a host of sins.

शार्ङ्गरव (सासूयम्)—श्रुतं भवद्भिरधरोत्तरम्—

आजन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य।
परातिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः॥२४॥

SARNGARAVA (With scorn)—Did you notice the preposterous suggestion? The statement of a person who from birth has not practised deceit is no authority; and of creditable testimony, forsooth be those by whom the cheating of others is studied as a science!

राजेति। 'अत्रभवत्याः' शकुन्तलायाः यः प्रत्ययः' मत्वा तस्मात् 'एव तन्मात्रमव-लम्ब्य 'किमस्मान् संयुता' समासोक्ता 'दोषा' येषु तैः 'संयुतदोषैः' बहुदोषारोपकैः 'भवद्भिः' स्वपक्षपोषकैः। *कैतवेन अस्याः विश्वासोत्पादनमेको दोषः ततस्तदपलापो द्वितीयः इयमपि अस्याः एव वचनप्रामाण्यात् मयि आरोपितम्। अस्याः वादे एव-मादिष्टः प्रतिवादो मे इति इत्ययुक्तं वः।

शार्ङ्गरवेति। 'असूयया' दोषोद्घाटनेन सह, सकोपमित्यर्थः। 'अधरम्' अनूर्ध्वम् ["अनूर्ध्वे हीनेऽधरोऽस्त्रियाम्" इति विश्वः]। 'उत्तरम्' ऊर्ध्वम् ["उत्तरं प्रवरोर्ध्वयोः" इति हैम.]। यदेव अधरं तदेव उत्तरम् 'अधरोत्तरम्' अधःस्थायिनः ऊर्ध्वे स्थितिः। ततश्च गौण्या वृत्त्या—विपर्यासः। 'अधरोत्तरं' विपर्यासः 'श्रुतं' किम्? इति काकुः।

तदेव स्पष्टयति। अन्वयः—यः आ जन्मनः शाठ्यम् अशिक्षितः तस्य जनस्य वचनम् अप्रमाणम्। यैः परातिसन्धानं विद्येति अधीयते ते किल आप्तवाचः सन्तु। व्याख्या—'यः' शकुन्तलारूपो जनः 'आ जन्मनः' जन्मनः प्रभृति अद्य यावत् 'शाठ्यं' कैतवम् "अशिक्षितः" शिक्षितुं न आरब्धवान् (आदिकर्मणि कर्तरि क्तः.) 'तस्य जनस्य वचनम् अप्रमाणं' प्रमाणत्वं प्रत्ययानर्हम् इति राजोक्तं श्रुतं भवद्भिः। 'परेषाम्' अन्येषाम् 'अतिसन्धानं' वञ्चनं 'विद्या' इति मत्वा 'यैः' दुष्यन्तादिभिः 'अधीयते' नियमपूर्वकं गुरुमुखात् पठ्यते 'ते किल'। किल इत्यरुचौ। 'आप्ता' प्रत्ययिता 'वाक्' येषां तादृशाः प्रत्ययितवचनाः 'सन्तु' इत्यपि च तेन नोक्तं श्रुतम्। विश्वासयोग्ये अप्रत्ययम् अविश्वासयोग्ये च प्रत्ययम् आकाङ्क्षता अधरोत्तरमुपस्थापितम्।

---

* Adopted by Prof. Gajendragadkar.

## NOTES

1, संयुत &c.—सम् is एकत्र together. संयुत is सम्मिलित concurrent Hence it means—A speech that charges me with more than one offence. See Tika. Raghava has सम सम्यक् throughbly "सम्यक् न तु ईषत्, युक्तः संयुक्त मत् स्पष्टः" । He makes it mean—A speech directly accusing me with an offence.

2. अधरोत्तरम्—Anything prepo-terous. See Tika. Or thus —अधर is low. उत्तर is high. अधरश्च उत्तरश्च अधरोत्तरम or अधरोत्तरे high and low द्वन्द्व । The एकत्व is optional by the rule 'विभाषा वृक्ष मृग तृण धान्य व्यञ्जन पशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' Here mark the low, means mark how what ought to be high in now low Similarly high becomes noteworthy when what should be low is placed high. Hence Sarngarva wants the audience to note how the undeserving ( दुष्यन्त ) appears deserving and the deserving शकुन्तला as undeserving.

2. किल —Implies disappoval. ते आप्तवाच किल—That they are truthful is ridiculous. Raghva has सम्भावनायां किल ।

राजा—भो सत्यवादिन, अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसन्धाय लभ्यते ।

KING—O ! Truth-teller, all this is indeed admitted by us. But what is gained by deceiving this person ?

शार्ङ्गरवः— विनिपातः ।

SARNAGARAVA—Downfall.

राजा—विनिपातः पौरवैः प्रार्थ्यते इति न श्रद्धेयमेतत् ।

KING—It is not an acceptable statement that down-fall is desired by the Pauravas.

शारद्वतः—शार्ङ्गरवः किमुत्तरेण । अनुष्ठितो गुरुनियोगः । प्रतिनिवर्तामहे वयम् । (राजानं प्रति )—

*. Adapted by Prof. Gajendragadkar

तदेषा भवतः पत्नी त्यज वैनां गृहाण वा
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २५ ॥
गौतमि, गच्छाग्रतः । ( प्रस्थिताः ) ।

SARADVATA—Sarngarava, no use replying. The preceptor's order is executed. We go back. To the king—Well then ; This is your wife. Abandon her or accept. Authority over wives is indeed allowed to be all-embracing. Gautami, go you in front (They start).

राजेति । भवतु भवन्त एव सत्यवादिनः न पुनर्मादृशाः एवं तावत् भवद्भिः 'अभ्युपगतं स्वीकृतम् । किन्तु न हि निष्प्रयोजना लोके काचित् प्रवृत्तिः । ब्रूहि 'पुनरेनाम् अतिसन्धाय' वञ्चयित्वा किं लभ्यते किं प्रयोजनं सिध्यति नः ।

शार्ङ्गरवेति । 'विनिपातः' नरके पतनमेतेन लभ्यते ।

राजेति । 'विनिपातः' नरके पतनं 'पौरवैः' राजभिः 'प्रार्थ्यते' इष्यते 'इति एतत् न श्रद्धेयं' न आदरणीयम् ।

शारद्वत इति । 'उत्तरेण' प्रतिवचनेन किम् । राज्ञा सह वादप्रतिवादेन अलम् । 'गुरोः नियोगः' शासनम् 'अनुष्ठितः' शकुन्तला राजसकाशमानीता । वादाय नादिष्टा वयम् । सम्प्रति 'वः' प्रतिनिवर्त्तामहे' आश्रमं प्रतिगच्छामः । अन्वयः—तत् एषा भवतः पत्नी । एनां त्यज वा गृहाण वा । हि दारेषु सर्वतोमुखी प्रभुता उपपन्ना ।

व्याख्या—'तत्' इत्युपसंहारे इति राघवभट्टः । वितर्कामुपसंहरति । 'एषा' इयं शकुन्तला भवतः पत्नी, यथाशास्त्रं परिणीता दाराः । 'एनाम्' [ अन्वादेशे एनादेशः ] 'त्यज वा' त्यक्तुं मिच्छसि चेत् त्यज, 'गृहाण वा गृहीतुं यदि वाञ्छसि गृहाण । 'हि' यतः' दारेषु' कलत्र विषये [ दारशब्दो बहुत्वे अभिधेयाम् ] सर्वतः सर्वासु दिक्षु मुखं यस्याः प्रवृत्तिः यस्याः तादृशी सर्वाकारा इत्यर्थः [ अत्र मुखशब्दस्य स्वाङ्गवाचित्वाभावे ङीषभावः युक्तः । किन्तु एवंविधप्रयोगाः अभियुक्तप्रयोगात् साधवः । यद्वा 'हि दारेषु (प्रभोः) सर्वतोमुखी प्रभुता उपपन्ना' इत्यन्वयदारा एवंविधस्थले गौणतया मुखशब्दस्य स्वाङ्गवाचित्वं प्रकल्प्य सर्वतःशब्दस्य दिग्वाचित्वं स्वीकृत्य "दिक्पूर्वपदान्ङीप्" इति ङीप् ] 'प्रभुता' स्वतन्त्रता 'उपपन्ना युक्ता । अत्र तत्र पथ्या वक्त्रलक्षणञ्च, तत् पूर्वोक्तमत्रावर्त्तस्व । [पत्नी' (व, न्या )—'कान्ता' (र-, वि-, म-) ॥ उपपन्ना' (रा-, वि-, म-)—'उपपन्नः (त-, न्या) ॥ 'सर्वतोमुखी' ( र, वि, म )—"विश्वतोमुखी' ( त, न्या- )— ॥

## NOTES

1. किमिपातः—&c.—"किं लभते (what is the reward) is the king's query. Sarnagarava retorts 'किमिपातः' (Ruin is your reward). The king rejoins—As 'Ruin' cannot be an object of desire, so 'I cheat her with a view to gain ruin' is ridiculous.

2. पत्नी—Duly wedded wife. 'पत्युर्नो यज्ञसंयोगे' इति पाणिनिः 'जायापती' इति कोषः। 'कान्ता' is प्रिया a darling. The epithet is unsuitable here, because the king has not shown any evidence of the affection towards her. (b) दारेषु—दारयन्ति भ्रातॄन् इति दाराः इति ... + णिच् + घञ् कर्मणि। घञ् is not usually available in the कर्मवाच्य। But this case has been specially provided for by दारजारौ कर्तरि णिलुक् च'। (c) प्रभुता—The प्रभुता is conferred by the sacrifice performed during marriage. It exists in case of a पत्नी—and not of that of mere कान्ता। Hence prefer the reading पत्नी।

शकुन्तला—कहं इमिणा किदवेण विप्पलद्धम्हि तुम्हे वि मं परिच्चअह [कथमनेन कितवेन विप्रलब्धास्मि यूयमपि मां परित्यजथ]। (अनुप्रतिष्ठते)।

SAKUNTALA—How is that I have been cheated by this deceived and you too forsake me? [Follows].

गोतमी (स्थित्वा)—वच्छ सङ्गरव, अणुगच्छदि कलुणपरिदेविणी सउन्दला। पच्चादेसपरुसे भत्तरि किं वा मे पुत्तिआ करेदु [वत्स शार्ङ्गरव, अनुगच्छति नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा पुत्रिका करोतु]।

GAUTAMI (stopping)—My son Sarngarava, Sakuntala is following us with piteous words. What else could my poor child do, the husband becoming cruel by forsaking her?

शकुन्तलेति। 'अनेन' कितवेन शठेन 'विप्रलब्धा' वञ्चिता अस्मि. 'यूयमपि मां' त्यजथ इति 'वाक्यम्' एतत्। अनुप्रतिष्ठते पश्चात् गच्छति [सम्बद्धमिमाः पाः ... ]।

गौतमीति। 'स्थित्वा' गमनाद्विरता भूत्वा। 'करुणं' आर्तं यथा तथा 'परिदेवयते' विलपति या तादृशी सती [ "विलापः परिदेवनम्" इत्यमरः ] 'नः' अस्मान् 'अनुगच्छति'। 'भर्त्रा प्रत्यादिष्टेन' निराकरणेन परुषे, रूक्षे कठोरे सति इत्यर्थः 'किं वा' अन्यत् 'मे पुत्रिका' अनुकम्पिता दुहिता 'करोतु'। अस्मदनुगमनं विना किमन्यदस्याः शरणम् ? तदस्यै मा कुप्य।

NOTES

1. करुण &c.—करुण + परि + दिव ( कूजने-चुरादि ) or ( देव भ्वादि ) + णिनि ( or णिनुण् ) साधुकारिणि कर्त्तरि।

शार्ङ्गरवः ( सरोषं निवृत्य )—किं पुरोभागे स्वातन्त्र्यमवलम्बसे। ( शकुन्तला भीता वेपते )।

SARNAGARVA—( Turning back angrily )—What! O wicked one, assumest thou independence? (Sakuntala is frightened and trembles.)

शार्ङ्गरवः—शकुन्तले—

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २६ ॥

तिष्ठ, साधयामो वयम्।

SARNGARAVA—Sakuntala, if thou art as the lord of the earth says, what has thy father to do with thee that transgressed the family-tie? But if thou knowest thy vow as pure even servitude suits thee in the house of thy husband. Do stay here and we retire.

शार्ङ्गेति। अाः 'पुरोभागे' दोषैकदृक् ["दोषैकदृक् पुरोभागी" इत्यमरः] दोषमात्रदर्शिनि, गुणविमुखि 'स्वातन्त्र्यं' स्वेच्छाचारम् 'अवलम्बसे किम्' इति काकुः पुनः पुनर्दोषमेव त्वं भजसि। पूर्वं बन्धुजनमनावेद्येदं गता इत्येको दोषः, अधुना च स्त्री भूत्वा स्वाम्याचारं प्रवर्तसे इति द्वितीयः। 'वेपते' कम्पते। अन्वयः – क्षितिपो यथा

यदि यदि त्वं तथा असि, उत्कुलया त्वया पितुः किम् ? अथ तु आत्मनो व्रतं शुचि वेत्सि, पतिकुले दास्यमपि तव क्षमम् । व्याख्या—'क्षितिपो' भूपतिर्दुष्यन्तः 'यथा वदति' आक्षिपति 'यदि त्वं तथा' तादृशी 'असि' यदि त्वं तथैव एव असि, तदा 'उत्कुलया' कुलं या तथाविधया [प्रादितत्पुरुषः] कुलटया 'त्वया पितुः' कण्वस्य 'किं' प्रयोजनं विद्येत न किमपि। तत् प्रत्यागमनमयुक्तम्। 'अथ तु' पक्षान्तरे यदि 'आत्मनो व्रतं स्वधर्मं, पातिव्रत्यमित्यर्थः 'शुचि' अनघम् अस्खलितं 'वेत्सि' मनसि जानासि तदा 'पतिकुले' भर्तृगृहे 'दास्यमपि' दासीभावोऽपि 'तव क्षमम्' उचितम्। ततश्च अयुक्तं प्रतिगमनम्। एवं पक्षद्वये प्रतिप्रयाणे अयुक्ते सति 'तिष्ठ' इहैव आस्स्व 'वयं' साधयामो' गच्छामः। [ "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने" इति दर्पणः ]।

## NOTES

1. (a) पुरोभागी—पुरस् is first. In a search after दोष and गुण in this world, we meet with दोष almost at every step. So few are the instances of गुण, that these are found out last, after those of दोष have been singled out. Thus दोष is पूर्व and गुण is पर। Hence पुरः पूर्वः दोषपक्ष इत्यर्थः भागो यस्य. सः पुरोभागी one who always 'chooses the first (i. e. दोष)। तत्सक्तः। Cp. "अहो खलु पुरोभागिता'—in Swapna. (b) स्वातन्त्र्यम्—तन्त्र is प्रधान prominent. "तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे" इत्यमरः। स्वः आत्मा तन्त्रं यस्य तत् स्वतन्त्रम्। तस्य भावः। Cp. "न स्त्री स्वातन्त्र्यमर्हति" इति मनुः।

2. (a) उत्कुलया—उत्क्रान्ता कुलम् or उत्क्रान्ता कुलात्। प्रादितत्—। (b) *Remarks—(i) Two alternative occur—(i) What the king says is true, (ii) You are speaking the truth. In the first case—you must not go back to your father, wherever else you like you may go. In the second case, you must not leave the hearth of your husband. In either case, it is useless to follow us. In tha first half we have क्षितिपः instead of पतिः and in the second half पतिकुले occurs and not क्षितिपकुले। This is as it should be. The first half assumes the truth of the king's

---

* Adopted by Prof. Gajendragadkar.

statement, so he cannot be referred to as the पतिः of Sakuntala. The second half assumes that Sakuntala is speaking the truth ; hence the चितिपतुः become पतिः ।

राजा—भोस्तपस्विन्, किमत्रभवतीं विप्रलभसे ?

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २७ ॥

KING—O hermit ! why do you delude this lady ? The moon opens lilies only, the sun lotuses alone ; the disposition of the self-restrained is indeed averse to contact with another's wife.

शार्ङ्गरवः—राजन्, अथ पूर्ववृत्तं व्यासङ्गाद्विस्मृतं भवेत् तदा कथमधर्मभीरोर्दारपरित्यागः ।

SARNGARAVA—King, if it be that what happened before is now forgotten through diverted attention, then apprehensive of sin as thou art, how is this renunciation of wife ?

राजेति । 'किं' किमर्थं 'विप्रलभसे' छलयसि । अन्वयः—शशाङ्कः कुमुदान्येव सविता पङ्कजान्येव बोधयति । वशिनां, वृत्तिः परपरिग्रहसंश्लेषपराङ्मुखी हि । व्याख्या —'शशाङ्कः' चन्द्रः 'कुमुदान्येव' न पुनः पङ्कजानि, सविता सूर्यः 'पङ्कजान्येव' पद्मान्येव न तु कुमुदानि 'बोधयति' विकाशयति । दृष्टान्ताभ्यां जानीहि 'वशिनां' जितेन्द्रियाणां 'वृत्तिः' व्यापारः परेषाम्, अन्येषां 'परिग्रहाः' भार्य्याः [“पत्नीपरिजनादानमूलशापाः परिग्रहाः” इत्यमरः] तासां 'संश्लेषः' संस्पर्शः [ कर्त्तरि कर्मणि वा कृद्योगे षष्ठी] तत्र 'पराङ्मुखी हि' अलसा एव । वशिषु मामपि गणय, तस्मादहमेनां युष्माभिरत्र त्यक्तामपि गृहीत्वा अधर्मं चरिष्यामि ।

शार्ङ्गेति । 'अथ' पक्षान्तरे 'पूर्वम्' इतः पूर्वम् आश्रमे यत् 'वृत्त' जातं तत् 'व्यासङ्गात्' विषयान्तरव्यापृतत्वात् 'विस्मृतं त्वया इति यदि 'भवेत्' तदा अधर्मभीरोः' तव, सम्प्रति शकुन्तलायाः प्रत्यादेशात् 'दारपरित्यागः' प्राप्नः । एतत् 'कथं' कीदृशं कथय । अथ यदप्त वृत्तं तत भवान् मन्यते 'इतकुत्या शकुन्तला' इति, एषा च न

"विस्मर्ता भवान्" इति। परन्तु शकुन्तला पूर्वं [illegible] इति वतीयोऽपि पक्षः सम्भवति। यदि स एव तादृशकल्पः तोषः पक्षः तदा सम्प्रति दारत्यागेन धर्मात् च्युतोऽसि इति शार्ङ्गरवानुयोगतात्पर्यम्।

NOTES

1. (a) परपरिग्रह &c.—Raghava takes सम् with पराङ्मुख। Thus सम्यक् अपरपराङ्मुखी स अपरपराङ्मुखी। cp. "पराङ्मुखी विषयजः प्रवृत्तिः"—K. III. (b) The अलङ्कार is अर्थान्तरन्यास। The general statement "वशिनां हि &c."—is supported (साधन) by specific instances कुमुदान्येव &c. and सविता &c. Lastly the general statement "वशिनां हि &c." is applied to his own case by implication For a similar sentiment, cp. "रघूणां वशिनां मनः हि परस्त्रीविमुखप्रवृत्ति"—Raghu.

2. राजन् &c.—Sarangarava suggests that it is possible that Sakuntala was indeed married by the king; but the king has now forgotten all about the marriage. In that case the repuditation becomes a sin. This places the king in a fix and he refers to Purohita in bewilderment.

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः॥ २८॥

KING—In this matter, to you I ask the greatness and lightness. Might I be dazed or could this lady be telling a lie—such being the doubt am I to be the renouncer of my wife or a sinner by touch of another's wife?

पुरोहितः—(विचार्य)—यदि तावत् एवं क्रियताम्।
PRIEST (Reflecting)—Well; let it be managed thus.

राजा—अनुशास्तु मां भवान्।
KING—Let your reverence command me.

पुरोहितः—अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु।
PRIEST—Let her ladyship stay in my house until delivery.

राजा—कुत इदम् ।

KING—Why this ?

राजेति । पुरोहित प्रत्याह । 'अत्र' अस्मिन् विषये 'भवन्तमेवगुरु च लघु च 'गुरुलघु' ("विप्रतिषिद्धञ्चानधिकरणवाचि" इति एकत्वविकल्पः) गुरुलघुनो भावः, 'गुरुलाघवम्' [ अपिपूर्वपदवृद्धौ प्राप्तायां भाष्यप्रयोगप्रामाण्यात् उत्तरपदवृद्धिः इति दुर्घटवृत्तिः । "गुरुलाघवादिषूत्तरपदस्य" इति पद्मनाभः ] को वा 'गुरुः को वा लघुः इति 'पृच्छामि' । पक्षद्वयमाह—अन्वयः—'अहं मूढः स्याम्' वा "एषामिथ्या वदेत्" इति स संशयी, दारत्यागी भवामि, आहो परस्त्रीस्पर्शपांशुलो भवामि । व्याख्या—'अहं मूढः' पूर्ववृत्तान्तस्मरणः 'स्याम् वा'-अथवा 'एषा' शकुन्तला 'मिथ्या वदेत् (सम्प्रश्ने लिङ्) 'इति' एवं विधे 'संशये' सम्प्रश्ने जाते, निजमूढत्वे एनां त्यक्त्वा 'दारत्यागी (दारोपपदात् त्यजेः णिनुः) भवामि, 'आहो' अथवा अस्याः मिथ्यावादित्वे एनां गृहीत्वा 'परस्त्रीस्पर्शेन पांशुलः' कलङ्की भवामि इत्यत्र निर्णयं भवान् वदतु ।

पुरोहितेति । 'यदि तावत्' । तावदिति वाक्यालङ्कारे । 'एवं क्रियतां, इत्य' विधीयताम् ।

राजेति । 'भवान्' माम् अनुशास्तु कर्तव्यम्

पुरोहित इति । 'अत्रभवती तावत्' । तावदित्यवधारणे । 'आ प्रसवात्' प्रसव-पर्यन्तम् ("पञ्चम्यपाङ्परिभिः" इति पञ्चमी ) "अस्मद्गृहे" मद्भवने 'तिष्ठतु' ।

## NOTES

1. *गुरुलाघवम्—An irregular form, because ष्यञ् should cause आदिवृद्धि resulting in गुरुलघु + ष्यञ् = गौरुलाघवम् । But गुरुलाघव is common with the older writers such as वाल्मीकि, व्यास, मनु, चरक &c. The form however, is not inadmissible. In the Vritti we find "कायकृतस्य गुरुलाघवम्"; the Bhashya has 'पर्यायशब्दानां गुरुलाघवचिन्ता नास्ति" (See also Tika) । Some suppose गुरु = गौरव by transference of epithets ( लक्षणा ), and then गुरु च लाघवञ्च. इन्द्र which is optionally singular—( see दुर्घटवृत्ति ). Such defence are quite uncalled for ; the adoption of the form by the भाष्यकार etc. being defence enough

* Adopted by Prof. Gajendragadkar

2. (a) शुद्धः सामदम्—This is Sarngarava's suggestion (b) कथं वा वदिष्यथा—This is his own impression.

पुरोहितः—त्वं साधुभिरुद्दिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति। स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, ततः अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि। विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव।

PRIEST—You were declared by the sages that the very first you will beget, will be a son who will lord it over the circles. If that son of the Muni's daughter be endowed with those signs, having congratulated her you will cause her to enter the royal apartments. The reverse happening taking her back to her father is of course understood.

राजा—यथा गुरुभ्यो रोचते।

KING—As pleases my preceptor

पुरोहितः—वत्से, अनुगच्छ माम्।

PRIEST—My child follow me,

शकुन्तला—भअवदि, वसुहे देहि मे विवरं [भगवति वसुधे, देहि मे विवरम्]। (रुदती प्रस्थिता। निष्क्रान्ता सह पुरोधसा तपस्विभिश्च। राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति)।

SAKUNTALA—O mighty Earth, allow me a hole. (Proceeds weeping. Exit with the Priest and the ascetics. The king with his recollectisn barred by the curse, continnes musing about Sakuntala).

पुरोहित इति। 'प्रथममेव' त्वं 'चक्रे' राजमण्डले 'वर्त्तयति' वर्तयति इति 'चक्रवर्तिनं' भाविसम्राजं 'पुत्रं' जनयिष्यसि' उत्पादयिष्यसि 'इति साधुभिः' सत्पुरुषैः 'उद्दिष्टः' अभिहितोऽसि। प्रथमतनयः ते पुत्रो भविता स च एव तल्लक्षणलक्षितशरीरः

इति वर्णीया सांभूमिरस्ति । 'स: चस्या अभिरक्षमाणो 'सुनैर्दीक्षित: चेत् यदि 'तस्य लक्षणै:' चक्रवर्त्तिचिह्नै: 'उपपन्न:' पुत्रो 'भविष्यति तत: अभिनन्द्य सादरं सत्कृत्य 'एनां शुद्धान्तम्' अवरोधं 'प्रवेशयिष्यसि' । 'विपर्यये तु चन्यथा पुन:, यदि एषा पुत्रं न जनयति, पुत्रं वा चक्रवर्त्तिलक्षणहीनं तदा 'चस्या: पितु: समीपनयनम् अवस्थितं निर्धारितम् 'एव' ।

शकुन्तलेति । 'भगवति वसुधे' एवं भर्त्रा शङ्किता कथं लोकलोचनगोचरा भवेयं, तत् 'मे' मह्यं विवरं बिलं 'देहि' तव चान्तर्हिता वसेयम् । 'रुदती' रोदनपरा 'प्रस्थिता' प्रस्थातुमारब्धा [ आदिकर्मणि क्त: ] । 'रुदती निष्क्रान्ता सह पुरोधसा' इत्यादि गोक्तम् । उक्ते तु सहशब्देन किं पुरोहितादयोऽपि रुरुदु: इति सन्देह: स्यात् ॥ 'राजा शापेन' दुर्वाससः शापेन व्यवहिता तिरोधापिता 'स्मृति:' यस्य तादृश: सन् शकुन्तलां गत तद्विषयमेव चिन्तयति ध्यायति ।

## NOTES

1. (a) चक्रवर्त्तिनम्—चक्रे चवाप्यं वर्त्तते इति चक्र + वृत + णिनि कर्त्तरि चावश्यके । (b) तल्लक्षण &c —Compare कथं चक्रवर्त्तिलक्षणम् &c. Act. VII

2. गुरुभ्य:—"रुच्यर्थानां प्रीयमाण:" इति सम्प्रदाने चतुर्थी ।

**नेपथ्ये** – आश्चर्यमाश्चर्यम् ।

IN THE DRESSING ROOM—Strange ! Strange !!

**राजा** ( आकर्ण्य ) किं नु खलु स्यात् ।

KING—(Listening)—What indeed could have happened ?

( प्रविश्य ) **पुरोहितः** ( सविस्मयम् —देव, अद्भुतं खलु संवृत्तम् ।

(Entering) PRIEST (In wonder)--Sire, a strange thing has indeed happened.

**राजा** – किमिव ।

KING—Ay, what ?

**पुरोहितः**—देव, परावृत्ते षुकण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला।
बाहूत्क्षेपं क्रन्दितुश्च प्रवृत्ता ॥

PRIEST—Sire Kanva's disciples having turned back, she blaming her luck, began to wail by tossing up her arms—

राजा—किञ्च।

KING—and what?

पुरोहितः—

स्त्रीसंस्थानश्चाप्सरस्तीर्थमारा-
दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ २८ ॥

( सर्वे विस्मयं रूपयन्ति )।

PRIEST—And a light too in the shape of a woman, having lifted her up afar, went towards the Apsarastirtha.

(All act wonder).

नेपथ्ये इति। 'आश्चर्यम्' अद्भुतं वृत्तम् ("आश्चर्यमनित्ये" इति निपातः। अर्थ्यमी विचक्रम्)।

राजेति। 'किं नु' इति वितर्कगर्भः प्रश्नः। 'खलु' इति अवधारणे। वृत्तमेव किंचित, किं वा तत्?

किमिति। 'किं' प्रश्नः। 'च' समुच्चये। निजितम् अज्ञातजिज्ञासायाम्। "किञ्चिद हि मधुराणां मण्डनं नाकृतीनाम्" इत्यादिषु यथा।

पुरोहित इति। अन्वयः—हे देव कण्वशिष्येषु पराङ्गतेषु सा बाला स्वानि भाग्यानि निन्दन्ती बाहूत्क्षेपं क्रन्दितुं प्रवृत्ता च—

पुरोहित इति। अन्वयसमाप्तिः—स्त्रीसंस्थानम् एकं ज्योतिः आरात् एनामुत्क्षिप्य अप्सरस्तीर्थं जगाम च। व्याख्या—हे 'देव' राजन् 'कण्वशिष्येषु' शार्ङ्गरवप्रभृतिषु 'पराङ्गतेषु' आश्रमं प्रति प्रयातेषु 'सा बाला' अप्रगल्भा शकुन्तला 'स्वानि भाग्यानि' निजानि भागधेयानि 'निन्दन्ती' सती 'बाहू उत्क्षिप्य' ऊर्ध्वं क्षिप्त्वा इति 'बाहूत्क्षेपं' (स्वाङ्गे ध्रुवे इति—णमुल्) 'क्रन्दितुम्' उच्चैः विलपितुं 'प्रवृत्ता च' प्रवृत्तवती [illegible]

'स्त्रियाः संस्थानम्' आकृतिरिव संस्थानं यस्य तथाविधम् 'एकं ज्योतिः' किञ्चित् तेजः-स्वरूपम् 'आरात्' दूरात् ( "आराद्दूरसमीपयोः" इति दूरार्थे अव्ययम् ) 'एनां बालाम् उत्क्षिप्य' उत्तोल्य 'अप्सरस्तीर्थं' तदभिमुखमित्यर्थः 'जगाम च'। 'सर्वे' अभिनेतारः 'विस्मयं रूपयन्ति' नाटयन्ति। विस्मिता इव तिष्ठन्ति।

NOTES

1. (a) बाहूत्क्षेपम्—बाहू उत्क्षिप्य इति बाहु + उद् + क्षिप + णमुल् भावे = बाहूत्क्षेपम् having thrown up her arms. The rule is 'स्वाङ्गे ध्रुवे' णमुल् is attached to roots with a द्वितीयान्त word as उपपद that means a limb the loss of which does not necessarily cost life "यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तत् ध्रुवम्"—Kasika. (b) स्त्रीसंस्थानम्—संस्थीयते अनेन इति सम् + स्था + ल्युट करणे = संस्थानम् shape आकृतिः। "संस्थानमाकृतौ मृतौ" इति विश्वः। स्त्रियाः संस्थानं स्त्रीसंस्थानम्। स्त्रीसंस्थानमिव संस्थानं यस्य तत्। "सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः" इति बहु— (c) आरात्—She was lifted up from a distance ( आरात् ) hence the lifter could not be seen clearly but was noticed merely as a mass of light in the female form (d) जगाम—Went towards the अप्सरस्तीर्थं। The अप्सरस्तीर्थं was near Dushyanta's capital (See Ante and infra).

राजा – भगवन्, प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव। किं वृथा तर्केणान्विष्यते। विश्राम्यतु भवान्।

KING—Mighty Sir, even before that thing was indeed discarded by us. Why is it being uselessly pursued with conjectures? Do you rest thyself.

पुरोहितः ( विलोक्य )—विजयस्व। ( निष्क्रान्तः )।

PRIEST (Staring)—Do thou prosper. (Exit).

राजा – वेत्रवति पर्य्याकुलोऽस्मि। शयनभूमिमार्गमादेशय।

KING—Vetravati, I am perplexed. Show me the way to the bed-chamber.

प्रतीहारी—इदो इदो देवो [ इत इतो देव ]। (प्रस्थिता)।

WARDER—This way, this way let sire proceed (Moves on).

राजेति। 'प्रागपि' इत: पूर्वमपि, यदासौ सुलभ आसीत् तदापि 'स: अर्थ:' कन्यारूपेण मत्सकाशमागतं किमपि मायामयंवस्तु अस्माभि: प्रत्यादिष्ट एव' निराकृत: खलु। अधुना प्रनष्ट: स: 'तर्क्य' किं वासीत तत्, कुत्र वा गतम् इत्येवंविधेन विमर्शेन 'किमन्विष्यते। यातु तत्, अलं तच्चिन्तया श्रान्तो 'भवान् विश्राम्यतु' (श्रमुदिवादि + लोट्)। पुरोहित इति। 'विलोक्य' एतेन अलौकिकेन गाम्भीर्येण विस्मितो राज्ञो मुखं दृष्ट्वा आह 'विजयस्व' जयोऽस्तु ते ("विपराभ्यां जे:" इत्यात्मनेपदम्)।

राजेति। 'पर्य्याकुल:' उन्मना अस्मि'। 'शयनस्थभूमि:' स्थानं शय्यागृहमित्यर्थ: तस्य 'मार्गं' पन्थानम् 'आदेशय' दर्शय मे अहं विश्रामामि।

NOTES

1. विलोक्य—The king's indifferent reply surprises the पुरोहित and he stares (विलोक्य) at him, and then utters 'विजयस्व' to the king.

राजा—( परिक्रम्य स्वगतम् )—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।

बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम्॥ ३०॥

( निष्क्रान्ता: सर्वे )।

KING (Going round—Aside)—True, the discarded daughter of the sage I do not remember as wife But my intensely aching heart as it is were convinces me. (exeunt all).

## पञ्चमोऽङ्क:—(FIFTH ACT).

काममिति। अन्वय:—प्रत्यादिष्टां मुनेस्तनयां परिग्रहं न स्मरामि कामम्। हृदयं तु बलवत् दूयमानं (सत्) मां प्रत्याययतीव। व्याख्या—प्रत्यादिष्टां' निराकृतां मुनेस्तनयां कण्वस्य कन्यकां 'परिग्रहं' पत्नीं 'न स्मरामि कामम्' अभ्युपगच्छाम्येतत् यत् पूर्वं परिणीता पत्नी इयं मे इति मया न स्मर्यते (अभ्युपगमे काममित्यव्ययम्)। पक्षान्तरे हृदयं तु चेत: पुन: 'बलवत्' अत्यर्थं 'दूयमानं' सत् मां प्रत्याययतीव' पत्नीत्वं ज्ञातप्रत्ययं कारयतीव। इत्यार्या वृत्तम्। [बोधनार्थत्वात् "णौ गमिरबोधने" इति न गमिभाव:)

सत्यमिमां विवाहितां न स्मरामि, किन्तु गुर्वी हृदयवेदनां ज्ञात्वा मन्ये पत्नी एव कृ'त्वा मया प्रत्यादिष्टा [ "माम्" ( त०, न्या० म० )—"मे" ( रा०, वि० ) ]।

NOTES

1. (a) कामम्—Implies admission wtih disapprobation (अनिच्छास्वीकार)। "काममिति स्वाच्छन्द्येऽनिच्छास्वीकारे च" इति गणकारः। True I do not remember (अङ्गीकार) but that does not matter (अनिच्छा:)। (b) परिग्रहम्—परिगृह्यते इति परि + ग्रह + अप् कर्मणि = परिग्रहः wife तम। I do not remember her as wife. (c) प्रत्याययति—प्रति + इ + णिच् + लट् ति। The sense is बोधन to convince; hence इ does not become गम (see Tika). (d) माम्—अणिकर्तृ: कर्म संज्ञा by the rule "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ"। इ is बुद्ध्यर्थ here thus the rule applies. अहं प्रत्येमि ( अणिचि )—हृदयं मां प्रत्याययति ( णिचि )। (e) हृदयम्—My heart convinces me. The heart remembers what I have forgotten. This is like चेतसा स्मरति नूनमबोधपूर्वम्"—Ante.

# षष्ठोऽङ्कः

प्रवेशकः।

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च )। रक्षिणौ ( पुरुषं ताडयित्वा )—अले कुम्भीलआ कहेहि कहिं तुए एशे महामणिभाशुले उक्किण्णणामाक्खले लाअकीए अङ्गुलीअए शमाशादिए [ अरे कुम्भीरक, कथय कुत्र त्वया एतत् महामणिभासुरम् उत्कीर्णनामाक्षरं राजकीयमङ्गुलीयकं समासादितम् ]।

(Then enter the Superintendent of the City Police - the king's brother-in-law—and behind him two guards leading a

man fettered) GUARDS (Striking the man)—Ah ! You thief, answer where was intercepted by thee this royal ring shining with great gems and having the name engraved on.

पुरुषः ( भीतिनाटितकेन )—पसीदन्तु भावमिस्से ण हगे ईदिशकम्मकाली [ प्रसीदन्तु भावमिश्राः। नाहमीदृशकर्मकारी ] ।

MAN (With the acting of fright)—Please your honours, I did not do such act.

तत इति । नगरे नियुक्तः रक्षाविधानार्थम् इति 'नागरिकः' । कोट्टपाल इति राघवभट्टः । 'श्यालः' राज्ञः श्यालः ।

अरे इति । 'कुम्भीरक' चौर [ "कुम्भीरकौ नक्रपदस्तस्करश्च मलिम्लुचः" इति भट्टोजिता नाममाला ] । 'महता' महार्घेण 'मणिना भासुरम्, 'उज्ज्वलम्' 'उत्कीर्ण' चोदित 'नामाक्षरं' राजनाम यस्मिन्, अतएव राजकीयमङ्गुलीयकं समासादितं प्राप्तम् ॥ दाक्षिणात्यमागधी भाषा । [ 'कुम्भीरक' (रा,)—'कुम्भीलक' ( त-, ग्या-, वि-, म ) ] ॥

पुरुष इति । 'भीतेः' भयस्य 'नाटितम्' अभिनयः ( भावे क्तः ) । तदेव 'भीतिनाटितकम् ( स्वार्थे कन् ) । तेन सह । 'भावमिश्राः' मान्या भवन्तः 'प्रसीदन्तु' ईदृशं कर्म चौर्यं करोति यः सः चौर इत्यर्थः । पुरुषस्यापि मागधी भाषा ।

## NOTES

1. Summary—ततो गच्छति काले शकुन्तलाहस्तच्युतं तदङ्गुलीयकं रोहितमत्स्योदरे केनचित् धीवरेण समासादितं राजसकाशश्च प्रापितं राजपुरुषैः । तद्दृष्ट्वा तत्क्षणमेव राज्ञो निवृत्तः शापः अभिज्ञाता, यदृच्छया चासौ महता अनुतापेन । गुरुणा तु अनुशयदुःखेन विषयेषु विरक्तः प्रनष्टप्रियजनस्य ध्यानेन आलिख्यचित्र कथा मित्र कथञ्चित् कालमनैषीत् । अथैकदा शकुन्तलाप्रसङ्गेन आत्मनः अनपत्यतया दूयमानं तं मातलिरागत्य दिवौकसामसुरोपद्रवम् वेद्य दानवजयाय देवेन्द्रभवनं निनाय ।

2. नागरिकः—नगरं रक्षति or नगरे नियुक्त इति नगर + ठक् ।

3. कुम्भीरकः—कुम्भो अस्य अस्ति इति कुम्भ + इनि मत्वर्थे = कुम्भी an elephant. कुम्भिनम् ईरयति कुम्भिन् + ईर + अण् कर्तरि = कुम्भीरः an alliga-

* Adopted by Prof. Gajendragadkar.

tor. Elephant avoid drinking at places where alligatoes abound. कुम्भीर एव इति कुम्भीर+कन स्वार्थे=कुम्भीरकः। By transference of epithets this means a thief. तत्सम्बन्धी। The reading कुम्भीलक means the same. कुम्भीलः स्यालकी चौरे झीकच्छायाहरे झषे" इति विश्वः। स्वार्थेकः। (b) महामणि &c.—भास+घुरच् कर्तरि=भासुरम् resplendent. महान् मणिः महामणिः briliant gem. तेन भासुरम्। इतत्—। (c) उत्कीर्ण &c.—नाम: अक्षराणि नामाक्षराणि। उत्कीर्णानि नामाक्षराणि यस्मिन्। (d) राजकीयम्—राज्ञ इदम् इति राजन्+छ=राजक+ईय=राजकीयम् royal. Here राजन् becomes राजक by the rule 'राज्ञः क च'। It is known to be royal because उत्कीर्णनामाक्षरम्।

4, भावमिश्राः—भाव is बुध a sage, 'भावः सत्तास्वभावाभिप्रायचेष्टात्म' जन्मसु। क्रियालीलापदार्थेषुविभूतिबुधजन्तुषु॥" इति मेदिनी। भावश्च ते मिश्राश्च &c.—See our भावमिश्र Act I.

प्रथमः—किं खु सोहणे बह्मणेत्ति कलिअ रण्णा पडिग्गहे दिण्णे [ किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ]!

FIRST—Was indeed a gift bestowed by the king taking thee for an auspicious Brahmana ?

पुरुषः—शुणुध दाणिं। हगे शक्कावदालवाशी धीवले [शृणुत इदानीम्। अहं शक्रावतारवासी धीवरः ]।

MAN – Now listen. I am a fisherman, living at Sakravtara.

द्वितीयः—पाडच्चला, किं अम्हेहिं जादी पुच्छिदा [पाटच्चर, किमस्माभिर्जातिः पृष्टा ]।

SECOND—Thief, was the caste enquired into by us ?

श्यालः—सूअअ, कहेदु सव्वं अणुक्कमेण। मा णं अन्तरा पडिबन्धह [ सूचक, कथयतु सर्वमनुक्रमेण। मा एनमन्तरा प्रतिबध्नीत ]।

Coment. G.V

SUPERINTENDENT—Suchaka let him tell all in order. Do not interrupt him in the middle.

प्रथम इति। 'शोभनः' सन् ब्राह्मणः' सत्पात्रमिति यावत् 'इति कृत्वा' त्वां सत्पात्रं मत्वा इत्यर्थः 'राज्ञा' स्वयं दुष्यन्तेन 'प्रतिग्रहः खलु' दानमेव दत्तः किम्। यदि नैतत् चोरितं त्वया, मन्ये राज्ञा एव सत्पात्राय दत्तं इत्युपहासः।

पुरुष इति। 'इदानीम्' इति वाक्यभूषायाम्। 'शक्रावतारे' तदाख्ये प्रदेशे 'वसति' यस्तादृशो 'धीवरः' मत्स्याजीवः। ["शक्रावतार" ( त०, न्या )—"शक्रावताराभ्यन्तर" ( रा०, वि०, म० ) ]॥

द्वितीय इति। रे 'पाटच्चर' चौर [ "चौरैकागारिक" इति प्रस्तुत्य "पाटच्चर-मलिम्लुचाः" इत्यमरः; ] "अस्माभिः' त्वदीया जातिः पृष्टा। 'किं' नैव पृष्टा। तत् किं जातिं कथयसि।

श्याल इति। 'सूचक' इति द्वितीयस्य नाम। 'अनुक्रमेण यथाक्रमं सर्वं कथयतु' एषः। 'एनम् अन्तरा' मध्ये, कथामध्ये इत्यर्थः 'मा प्रतिबधान' मा रुन्धि ( मा अन्तरोऽय तेन नलुक् )। अस्य तु भाषा विदूषकादीनामिव शौरसेनी ?

NOTES

1. (a) शोभनः—शोभते इति शुभ+युच् कर्त्तरि। Worthy. (b) कृत्वा—An अव्यय। Or कृत्वा = मत्वा because कृ can take the meaning of all roots—सर्वधात्वर्थानुवादः करोतिना भवति। (c) प्रतिग्रहः—प्रति-गृह्यते इति प्रति+ग्रह+अप् कर्मणि A gift.

2. शक्रावतार &c.—अवतरति अस्मिन् इति अव+तॄ+घञ् अधिकरणे = अवतारः a sacred place तीर्थम्। "अवतारस्तु नद्यादितीर्थेऽवतरणेऽपि च" इति हैमः। अप् is barred by the rule "अवे तॄस्त्रोर्घञ्"। शक्रस्य अवतारः। A नित्यसमास because शक्रावतार is a संज्ञा। It has no विग्रहवाक्य। न हि वाक्येन संज्ञा गम्यते।

3. पाटच्चर—पाटयन् चरति व्यवहरति इति पाटयत्+चर+अच् कर्त्तरि should give पाटयच्चरः but we get पाटच्चरः; (यलोप)। पृषोदरादि।

श्यालः—अं आवुत्ते आअवेदि। कहेहि। [ यदावुत्त आज्ञा-पयति। कथय ]।

BOTH—As brother in-law commands, Go on.

पुरुषः—अहके जालुग्गालादोहिं मच्छबन्धणोवाएहिं कुटुम्बभलणं कलेमि [ अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ]।

MAN—With nets and other means of catching fish I achieve the maintenance of my family.

श्यालः ( विहस्य )—विसुद्धो दाणिं आजीवो [ विशुद्ध इदानीमाजीवः ]।

SUPERINTENDENT—(Laughing)—A pure livelihood indeed.

पुरुषः—भट्टा, मा एवं भण [ भर्तः, मा एवं भण ]।

सहजे किल विनिन्दिए णहु दे कम्म विवज्जणीअए।
पशुमालणकम्मदालूणे अणुकम्पामिदुए वि श्रोत्तिए ॥१॥
[सहजं किल यद्विनिन्दितं न हि तत्कर्म विवर्जनीयम्।
पशुमारकर्मदारुणोऽनुकम्पामृदुरपि श्रोत्रियः ॥]

MAN—Say not so, Master. The despised occupation which is indeed born with one is surely not to be discarded. The practiser of vedic rites though tender with pity has to be heartless in the act of killing animals.

उभाविति। 'आवुत्तः' भगिनीपतिर्भवान् (प्रसादनोक्तिरेषा। नागो वस्तुत एव तयोर्भगिनीपतिः। "भगिनीपतिरावुत्तः" इत्यमरः) 'यदाज्ञापयति' तदेव कुर्वः। नागः मध्ये प्रतिवचनीवः। 'कथयं यथावच्चि वद इति पुरुषं प्रति।

पुरुष इति। उद्गिलति एतमिति 'उद्गालः' बडिशम् (गृ इत्येतस्य घञि रूपम्। पक्षे उद्गारः)। 'जालम् उद्गालश्च आदि' येषां तैः 'उपायैः कुटुम्बानाम्' आत्मीयानां 'भरणं' वर्त्तनं 'करोमि'।

श्याल इति। इदानीं वाक्यमूचावाम्। 'विशुद्धः' 'हिंसादिदोषवर्जितः' 'आजीवः' जीवनोपायः? उपहास एषः। हिंसाभिर्दुष्ट आजीव इत्यभिप्रायः।

पुरुष इति । हे भक्त: आविम् नगरवाल 'एव मां भव' अवश । भाषीय मा निन्द: । अन्वय:—यत् किल विनिन्दितं कर्म सहजं, तत् न हि विवर्जनीयम्, श्रोत्रियः पशुकम्पामृदुरपि पशुमारणकर्मदारुणः । व्याख्या—यत् किल विनिन्दितं यस्य कर्म सहजं जन्मना सहजात, जातिनिष्ठमित्यर्थः 'तत् न हि' नैव विवर्जनीयं त्याज्यम् । 'श्रोत्रियो' वैदिकः, वेदोक्तकर्मनिरतो ब्राह्मण इत्यर्थः 'अनुकम्पया' करुणया 'मृदुरपि' कोमलोऽपि सन् 'पशूनां' प्राणिनां' यत् 'मारणं' घात: यज्ञे वध: तेन 'कर्मणा' तदनुष्ठानेन 'दारुणः' घोरो भवति । यथा श्रोत्रियेण जातिधर्मता पशुहत्या निन्दितापि न त्यज्यते तथा मयापि मत्स्यबन्धनम् । एतेन नाप्यसौ निन्द्य: न चाहम् । ["मृदुरपि" ( त०, वि०, व्या—"मृदुरेव" ( रा०, म० ) ] ॥

NOTES

1. जालोद्गाल &c.—उद् + गॄ + घञ् कर्मणि = उद्गाल:, or उद्गार:, a hook. अप् is barred by the rule "उन्नोर्गः" । र becomes ल optionally by the rule "अचि विभाषा" । जालानि च उद्गालाश्च जालोद्गालम् nets and books द्वन्द्वैकत्वम् by the rule 'जातिरप्राणिनाम् । जालोद्गालम् आदिर्येषां ते: ।

2. (a) सहजम्—सह एकत्र जातम् इति सह + जन् + ड कर्त्तरि inborn, (b) श्रोत्रिय:—श्रोत्रिय: is obtained as a substitute for the वाक्य "छन्द: अधीते" by निपातन in the rule श्रोत्रियंश्छन्दोऽधीते" । No प्रत्यय is needed. Some however, interpret the rule as directing छन्दस् to be replaced by श्रोत and घन् attached to it Thus छन्द घन् = श्रोत + घन् = श्रोत्रिय: by the निपातन above. 'छन्दसो वा श्रोत्रभाव: तदधीते इति घन् प्रत्यय:" Vritti. (c) Remark—The Sloka is a defence of Vedic rites against the attacks of Buddhism. The Buddhists denounce ( विनिन्दित ) sacrifices as horrid (पशुमारणकर्मदारुण) । But whatever they are, they must not be abandoned विवर्जनीय ) because this is the work allotted to them (श्रोत्रिय ) by nature ( सहज ) । Had it not been so the practice of such rites would have been heartless. Such however is not the fact. A श्रोत्रिय is the kindest of kind beings living ( अनुकम्पामृदु ) । Cp. "श्रेयान् स्वधर्मो विगुण: परधर्मात् स्वनुष्ठितात्"—Gita.

श्याल:—सद्दोलद्दो [ तत्स्तत: ] ।

SUPERINTENDENT—Then what then ?

पुरुषः—एकस्सिं दिअसे खण्डसो लोहिअमच्छो मए कप्पिदे [एकस्मिन् दिवसे खण्डशो रोहितमत्स्यो मया कल्पितः] जाव तस्स उदलब्भन्तले पेक्खामि दाव एदं महालअणभासुलं अङ्गुलीअअं पेक्खिदे [यावत् तस्य उदराभ्यन्तरे प्रेक्षे तावत् एतत् महारत्नभासुरमङ्गुलीयकं प्रेक्षितम्]। पच्छा अहके शे विक्कयाथं दंशअन्ते गहिदे भावमिश्शेहिं [पश्चादहम् अस्य विक्रयार्थं दर्शयन् गृहीतो भावमिश्रैः]। मालेध वा कुट्टेध वा अअं शे आअमवुत्तन्ते [मारयत वा कुट्टयत वा अयमस्य आगमवृत्तान्तः]।

MAN—One day I cut up a Rohita fish to pieces. No sooner I looked into the inside of its belly than was seen this ring glittering with bright gems. Afterwards showing it for sale I was arrested by your honoured selves. Kill me or cut me up, this is the story of its acquisition.

एकस्मिन्निति। 'मया रोहितमत्स्यः खण्डशः' खण्ड खण्डम् [खण्डस्य एकत्वमाश्रित्य वीप्सायां शस्] 'कल्पितः' सम्पादितः। 'यावत् यत्काल 'तस्य उदरस्य अभ्यन्तरे' मध्ये 'प्रेक्षे' पश्यामि [यावद्योगे भविष्यदर्थे वर्त्तमानः] 'तावत्' तत्कालम् एतत् 'महारत्नेन रत्नोत्तमेन 'भासुर' दीप्तिमत् 'अङ्गुरीयक प्रेक्षित'' दृष्टम्। 'पश्चात्' अनन्तरम् 'विक्रयार्थं विनिमयार्थम् 'अस्य' अङ्गुरीयकस्य [गम्यमानगुणादापेक्षया षष्ठी] 'दर्शयन्' पश्यत अङ्गुरीयकसौन्दर्य्यं, चिन्तयत रत्नस्य तस्य अनर्घत्वं, विभावयत रत्नसंस्थापनने-पुण्यम् इत्येवं वर्णयन् 'भावमिश्रैः' मान्यैर्भवद्भिरहं 'गृहीतः' बद्धः। 'मारयत प्राणैर्वियोजयत 'वा कुट्टत' प्राणविमुक्तैः परं खण्डशो 'वा' कुरुत सर्वमनवधित्वा ब्रवीमि 'अयमस्य' अङ्गुरीयकस्य आगमः प्राप्तिः तस्य वृत्तान्तः 'वार्त्ता। ["प्रेक्षे तावत्" —इत्यादिमूलम् (त-, व्या-)—"एतद्रत्नभासुरमङ्गुलीयकं दृष्टम्" (रा-, वि-, म-)॥ "कुट्टयत" (व्रा-, व्या) "कुट्टयत" (रा-, वि-, म-)]॥

NOTES

1. तत: तत:—The repetition shows the impatience of the superintendent to avoid the awkward retort, which is too much for his wit to meet.

2. अस्य—The construction is अस्य दर्शयन् which is elliptical for अस्या गुणान् दर्शयन्। See Tika. Or construe अस्या विक्रयार्थम् एतत् दर्शयन् showing it ( एतत् ) for its ( अस्या ) sale.

**श्याल:—जाणुअ, विस्सगन्धो गोहादी मच्छबन्धो एव्व णिस्संसअं। अङ्गुलीअअदंसणं से विमरिसिदव्वं। राअउलं एव्व गच्छामो [ जानुक, विस्रगन्धो गोधादी मत्स्यबन्ध एव नि:संशयम्। अङ्गुलीयकदर्शनमस्य विमर्ष्टव्यम्। राजकुलमेव गच्छाम: ]।**

SUPERINTENDENT—Jannka, this follow smelling of raw meat, is surely a Godha-eating fish-catcher. His coming by of the ring has to be investigated. We will go to the king's residence,

श्याल इति। 'विस्रस्य' आमगन्धस्य गन्ध: अस्ति यस्मिन् तथाविध: एव नि:संशयं नूनं गोधामपि खादति य: स 'गोधादी' गोधाभोजनशील: 'मत्स्यं बध्नाति' य: स 'एव' धीवर एव। अन्यथा कथमस्य मांसगन्ध: तदयं आत्मंनि सत्यमिवाह। 'अस्य अङ्गुलीयकदर्शनं विमृष्टव्यं' विचारणीयम् तदपि सत्यं न वा इत्यालोचनीयम्। 'राजकुलमेव' राजभवनमेव 'गच्छाम:'। स्वामिने निवेदयामि स एव विमृशतु सत्यं न वेति।

NOTES

1. (a) विस्रगन्धो—विस्र is आमगन्धि, i. e. anything smelling like raw meat. "विस्रं स्यादामगन्धि यत्" इत्यमर:। तस्य गन्ध: विस्रगन्ध: i. e. आमगन्ध:। स: अस्य अस्तीति विस्रगन्ध + इनि मत्वर्थे। This is round about in sense. आमगन्धो expresses the idea more simply. Perhaps in the days of Kalidasa विस्र meant आम, and in time, by transference of epithets, came to mean आमगन्धि when Amara lived.

(b) गोधादि—गोधा (fem.) is the guana. गोधामम्नं शीलमस्य इति गोधा + अद + णिनि कर्तरि ताच्छील्ये । विट् is barred by णिनि when habit (ताच्छील्य) is implied. Hence we do not get गोधाद् like क्रव्याद् । But there is another difficulty. The rule for णिनि is "सुप्यजातौ णिनिस्ताच्छील्ये" । So we must not have a जातिवाचक word for उपपद with णिनि implying ताच्छील्य । Yet here there is णिनि with गोधा (जातिवाचक) as उपपद । (c) मत्स्यबन्धः—मत्स्यान् बध्नाति इति मत्स्य + बन्ध + अण् कर्तरि । (d) विमष्टव्यम्—वि + मृश + तव्य कर्मणि = विमर्ष्टव्यम् or विम्रष्टव्यम् । अम् comes in optionally by the rule "अनुदात्तस्य च र्दुपधस्यान्यतरस्याम्" । (e) *Remark—The gist is this—This fellow has spoken the truth about his profession. He is indeed a fisher man who is an inveterate Godha-eater as is evident from the stench he is giving out. One part of his statement having turned out to be true, I cannot summarily reject the other part It has to be scrutnised. But I shall leave the scrutiny with better hands than mine, I must see the king about it.

रक्खिणो - तह । गच्छ अले गण्ठिभेदअ [ तथा । गच्छ अरे ग्रन्थिभेदक ] । ( सर्वे परिक्रामन्ति ) ।

GUARDS—As you say. Proceed you knot-cutter. (All go round the stage).

श्यालः—सूअअ, इध पुरदुआरे अप्पमत्ता पडिवालेह मं जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि [ सूचक, इह पुरद्वारे अप्रमत्तौ प्रतिपालयतं यावदिदम् अङ्गुलीयकं यथागमनं भर्त्रे निवेद्य ततः शासनं प्रतीष्य निष्क्रामामि ] ।

SUPERINTENDENT—Suchaka. here at the city gate you two wait for me without carelessness, until I come out

* Adopted by Prof. Gajendragadkar.

having reported to sire this ring exactly as it has come to us and having obtaind orders from him.

उभौ—पविशदु आवुत्ते शामिपशादस्स [ प्रविशतु आवुत्तः स्वामिप्रसादाय ]। ( निष्क्रान्तः )।

BOTH—Let brother-in-law enter to receive Sire s favours, (Exit Superintendent).

सूचकः—जाणुअ, चिलाअदि क्खु आवुत्ते [जानुक, चिरायते खलु आवुत्तः ]।

SUCHAKA—Januka, Brother-in-law is indeed delaying.

रक्षिणाविति। 'ग्रन्थेः' वस्त्रग्रन्थेः 'भेदकः' छेदकः। कस्यचिदेतत् वसनाञ्चले बद्धमासीत्, बन्धनं छित्वापहृतं त्वया इत्यभिप्रायः।

श्याल इति। 'यावत्' यत्कालम् 'इमम् अङ्गुलीयकम्' आगमनस्य आगमनवृत्तान्तस्य अनतिक्रमो 'यथागमनम्' [ अव्ययीभावः ]। तदस्ति यस्मिन् कर्मणि तत् यथातथा [मत्वर्थीयः अच्। निवेदनक्रियाविशेषणम् ] 'भर्त्रे' स्वामिने दुष्यन्ताय 'निवेद्य ततः' भर्तुः 'शासनम्' आज्ञां 'प्रतीष्य गृहीत्वा 'निष्क्रामाभिः' तावत् 'इह पुरद्वारे अप्रमत्तौ' अवहितौ भूत्वा 'मां प्रतिपालयत' प्रतीक्षेथाम्।

उभाविति। 'स्वामिनः प्रसादः' अनुग्रहः तस्मै [ "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ] 'प्रविशतु'।

सूचक इति। 'चिरायते' विलम्बते। [चिर इति प्रातिपदिकं कालविप्रकर्षे वर्तते। उपचारात् चिरयुक्तोऽपि चिरः, अर्श आद्यच् वा। स इव आचरति इति क्यङ्]। ["चिरायते" (रा-, वि-,)—"चिरायति" (स-)—"चिरयति" ( त-, का ) ]॥

## NOTES

1. (a) अप्रमत्तौ—प्र + मद् + क्त कर्तरि = प्रमत्तौ careless. The rule "श्वीदितो निष्ठायाम्"... "ध्या-ख्या-पॄ मूर्च्छिमदाम्" prohibits the form प्रमन्न। न प्रमत्तौ not careless, i. e. watchful. (b) प्रतिपालयतम्—प्रतिपालि is सकर्मक and means प्रतीक्षा 'to wait.' (c) भर्त्रे—"कर्मणा यमभिप्रैति स सम्प्रदानम्" इति

सम्प्रदाने चतुर्थी। Here अङ्गुलीयकेन (करणेन) मनोरथम् अभिप्रैति ; Hence the rule applies. The वृत्ति here restricts the rule to दा धातु। But the भाष्य is opposed to it. The वृत्ति must not be allowed to overrule the भाष्य। (d) प्रतीष्य—प्रति + इष means ग्रहण। Compare "प्रतीष्टनीवाररसाभिः"—Act IV. (e) निष्क्रामामि—निस् + क्रम + लट् मिप = निष्क्राम्यामि, निष्क्रामामि। क्रम becomes क्राम in the परस्मैपद।

3. स्वामि &c.—The sense is स्वामिप्रसादं लब्धुं प्रविशतु। Hence "क्रियार्थोप—" इति चतुर्थी। Sire will be pleased to see this rare gem restored to him by your efforts, and will certainly reward you.

4. चिरायते – चिर is long time. चिरम् अस्यास्ति इति चिर + अच् मत्वर्थे चिरः one who makes delay. Or by transference of epithets, चिर means चिरयुक्त। चिर इव आचरति इति चिर + क्यङ् = लट् ते। The reading चिरायति seems bad in grammar, चिरयति may be defended by तत्करोतिणिच्।

जानुकः— णं अवसलोवसप्पणीया लाआणो [ननु अवसरोपसर्पणीया राजानः]

JANUKA—Well kings are to be approached at opportunities.

सूचकः— पुरुन्ति मे हत्था इमस्स वहस्स सुमणो पिणद्धुं [स्फुरतो मे हस्तौ अस्य वधस्य सुमनसः पिनद्धुम्]। (पुरुषं निर्दिशति)।

SUCHAKA—My hands quiver to tie the garland for his death, (Points the fisherman).

पुरुषः—णालिहदि भावे अकालणमालणे भविदुं [नार्हति भावः अकारणमारणो भवितुम्]।

MAN—It behoves not your honour to become a slayer without reason.

जानुकः (विलोक्य)—एसो अम्हाणं सामी पत्तहत्थो लाअसासणं पडिच्छिअ इदोमुहो देक्खोअदि। गिद्धवली

हुविस्ससि सुणो मुहं वा देक्खिस्ससि [ एषः अस्माकं स्वामी पत्रहस्तः राजशासनं प्रतीष्य इतोमुखो दृश्यते। गृध्रबलि-र्भविष्यसि शुनोमुखं वा द्रक्ष्यसि ]।

JANUKA (Espying)—Here our master, having obtained royal orders, appears facing this way with letter in his hand. Thou wilt become an offering to the vultures or wilt see the jaws of a dog.

जानुक इति। 'ननु' आक्षेपे। 'अवसरे' काले, योग्ये इत्यर्थः उपसर्पणीयाः' उपगम्याः। आर्त्ता लब्धा राजानं पश्यति जनः न हि यथारुचि। अतो विलम्बः।

सूचक इति। 'अस्त्र' यो 'वधः' हननं, तस्य सुमनसः' पुष्पं पुष्पमाल्यमित्यर्थः ["आपः सुमनसो वर्षा अप्सरस्सिकताः समाः। एते स्त्रियां बहुत्वे सुवेकत्वेऽप्युत्तर-त्रयम्॥"] "पिनद्धं" बद्धं ["वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यल्लोपः। पक्षे अपिनद्धम्] 'मे हस्तौ स्फुरतः' स्पन्देते।

पुरुष इति। 'भावः' मान्यो भवान् 'अकारणे' कारणाभावे 'मारणः' हन्ता 'भवितु' न अर्हति।]

जानुक इति। "अस्माकं स्वामी नगरपालः 'पत्र हस्ते' यस्य तादृशः सन् 'राज-शासनं' राज्ञः शासनम् आज्ञां 'प्रतीष्य' गृहीत्वा 'इतः' अस्यां दिशि 'मुखं' यस्य तादृशो, दृश्यते'। मन्ये त्वं 'गृध्रेभ्यो बलिः उपहारो 'भविष्यसि' गृध्राः ते मांसं भक्षयिष्यन्ति 'वा' अथवा 'शुनः कुक्कुरस्य 'मुखं' दर्शनार्थं व्यात्तं मुखं 'द्रक्ष्यसि'। राजाज्ञया शूलस्थं मृतं वा त्वां गृध्राः, आकण्ठं भुवि 'निखातं जीवितं वा कुक्कुराः खादिष्यन्ति।

## NOTES

1. सुमनसः—सुमनस् is usually plural. The Medini sanctions the singular also. "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः" इति मेदिनी। The custom in those days was to garland with करवीर and other flowers the victim condemned to death. Compare "रक्त करवीरदामा"—Mrichhakatika.

2. अकारण &c.—अविद्यमानं कारणं यस्मिन् तत् अकारणम् causeless. मारयति इति मृ + णिच् कर्तरि, बाहुलकात् = मारणः destroyer. Now see Tika.

3. पवहण:—The सम्बन्ध word इमे does not lead. This is like गड्डकच्छ, कमण्डलुपाणि &c.

4. (a) गृध्रबलि:—गृध्रेभ्यो बलि: a चतुर्थी तत्—by the rule 'चतुर्थी तदर्थार्थं बलिहितसुखरक्षितै:। This refers to death by the stake ( शूल )। (b द्रक्ष्यसि = Will see. Refers to execution in which the condemned man is buried up to the neck under ground and dogs are then let loose to tear him up. The victim can see ( द्रक्ष्यसि ) the dogs coming because he is not dead yet. But in the other case death is instantaneous and the dead man forthwith becomes meat for the vultures ( गृध्रबलि )।*

( प्रविश्य ) श्यालः—सूअअ मुञ्चेदु एसो जालोवजीवी उववण्णो क्खु अङ्गुलीअअस्स आअमो [ सूचक, मुच्यतामेष जालोपजीवी। उपपन्नः खलु अङ्गुलीयकस्य आगमः ]।

(Entering) SUPERINTENDENT—Suchaka, let this fisher—man be realeased. The acquisition of the ring is indeed consistent.

सूचकः—जह आवुत्तो भणादि [ यथा आवुत्तो भणति ]। एसे जमसदणं पविसिअ पड़िणिउत्तो [ एष यमसदनं प्रविश्य प्रतिनिवृत्तः ]। ( पुरुषं मुक्तबन्धनं करोति )।

SUCHAKA—As brother-in-law directs. This fellow has come back after having entered the abode of death (Releases the man).

पुरुषः ( श्यालं प्रणम्य )—भट्टा, अह कीलीशे मे आजीवे [ भर्तः, अथ कीदृशो मे आजीवः ]।

MAN (Bowing the Superintendent)—Now, Master, how is to be my livelihood (to day) ?

श्याल इति। जालेन उपजीवति जीविकां वर्तयति इति जालोपजीवी धीवरः 'मुच्यताम्'। 'उपपन्नः' युक्तः। 'आगमः' प्राप्तिकृत्तान्तस्त्वर्थः।

* Adopted by Prof. Gajendragadkar.

सूचक इति। 'यमस्य सदन'' गच्छ्म्। 'प्रतिनिवृत्त:' प्रत्यागत: [मृत: पुनर्जीवित इवायम् इत्यर्थ: ]। 'मुक्तानि' अपनीतानि 'बन्धनानि' यस्य तथाविधं 'करोति'।

पुरुष इति। हे 'भर्त:' स्वामिन् 'अद्य' पृच्छामि 'मे आजीव: अद्य जीवन' 'कीदृश:' किंविध:। गतो मत्स्यो गतश्चाङ्गुरीयकं तदद्य केनोपायेन जीविकां करोमि इति विद्यासागरपादा:।

NOTES

1. कीदृश:—What shall I eat to day ? The fish is gone, and I have lost the ring too. I do not know how to maintain myself to day. This is Vidyasagara's explanation. Some take this as a sarcastic retort to the Superintendent's 'विशुद्ध इदानीमाजीव:। This is not consistent with the reply of the श्याल following. Nor can such a taunt to the head of the Police be expected from simple folks like the fisherman. This is perhaps the reason why Pandit Vidyasagara rejects the explanation and suggests the one above. Prof. Gajendragadkar, however defends the old explanation thus :—(1) The following speech of the श्याल is not a reply to the fisherman at all; the श्याल simply ignores the fisherman's retort because he finds he has no suitable answer to it. The second speech of the श्याल is a mere continuation of his first speech . (2) In the verse सहजे किल &c. the fisherman has shown that he is not afraid of the श्याल and is quite capable of making a sarcastic retrot like this.

As to (1) we observe— (a) If the श्याल had no words to say to reply to the taunt, he would have replied with a kick ! (b) If the श्याल had not definitely finished his speech to सूचक then the latter would not have taken the speech as finished and replied आवुत्तो भणति। This sort of a reply from a subordinate suits only the conclusion of his superior's speech. (c) सूचक accepts the command, complements the fisherman saying एष यमसदनम् &c. and released him. The fisherman now bows to the श्याल and makes his remark.

It is absurd to suppose that all this while the श्याल was waiting with his message unfinished.

Regarding [2] it should be remembered that सहजं किल &c. was uttered in defence of his profession ; but the taunt is an attack, which is quite different. The grit of the fisherman is evident from the fact that a mere look [ असूयया पश्यति, below ] from Januka prostrates him and he buys his safety by parting with half the king's reward !!

Hence the defence of the old explanation is untenable.

Prof. G also attacks Vidyasagara's explanation thus—"The fish is not gone. He probably has sold it or it is lying at home." The fact is Vidyasagara's explanation has to be slightly modified ; fish was not caught that day at all. The fisherman says एकस्मिन् दिवसे—on a certain occasion—not अद्य to-day. We have therefore to suppose that the fisherman had not gone out with his net etc that day, but was wandering over the market place for a buyer for the ring. Thus if the ring is gone, he has nothing to live upon that day. Hence his query—भर्त: अद्य &c.—What shall I eat. The reply of the श्याल follows quite naturally.

श्यालः—एस भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पसादो वि दाविदो [एष भर्त्रा अङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः ] । (पुरुषाय अर्थं प्रयच्छति ) ।

SUPERINTENDENT—Here, a gift too commensurate to the value of the ring, is caused to be given by sire. [Gives money to the man].

पुरुषः ( सप्रणामं प्रतिगृह्य )—भट्टा, अणुग्गहिदम्हि [भर्त: अनुगृहीतोऽस्मि ]।

MAN—(Accepting with a bow)—Master, I am favoured.

सूचकः—एसो णाम अणुग्गहो जो सूलादो अवदारिअ हत्थि

स्कन्धे पडिट्ठाविदे [ एष नाम अनुग्रहः यत् शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ]।

SUCHAKA—Such indeed is the favour that, taken down from the stake, you are seated on the neck of the elephant.

जानुकः—आवुत्त पारिदोसिए कधेदि महारिहरदणेण तेण अङ्गुलीअएण सामिणो बहुमदेण होदव्वं त्ति [ आवुत्त, पारितोषिकः कथयति महार्हरत्नेन तेन अङ्गुलीयकेन स्वामिनो बहुमतेन भवितव्यमिति ]।

JANUKA - Brother in law, the gift shows that the ring with its priceless gems must be very acceptable to Sire.

श्याल इति। 'अङ्गुलीयकस्य मूल्येन संमितः' तुल्यः 'प्रसादः' प्रीतिदानम्।

सूचक इति। मरणं ते ध्रुवमासीत् किन्तु राजानुग्रहेण न केवलं प्राणैरवियुक्तः अपि तु अर्थेन पूजितः। तन्मन्ये शूलाद् गत्वा अपो हस्तिस्कन्धे आरोपितः।

जनुक इति। 'महार्हं' महामूल्यं रत्नं यस्मिन् तथाविधेन 'तेन अङ्गुलीयकेन स्वामिनो बहुमतेन सम्मतेन 'भवितव्यम्'। रत्नं दृष्ट्वा भर्त्ता अङ्गुलीयकम् आहृतवान् 'इति पारितोषिकः' पुरस्कारः 'कथयति'। पुरस्कारेणाहमेवं मन्ये।

NOTES

1. (a) अङ्गुलीयक &c.—इतत्—and इतत्—। See Tika. मूलेन आनाम्यम् शोधकरणीयम् इति मूल + यत् = मूल्यम् that from which the cost ( मूल ) is to be deducted to calculate the profit, i. e. the price. (b) प्रसाद—प्र + सद् + घञ् भावे = प्रसादः or प्रासादः। The former means pleasure ( प्रीति ) and the latter a royal mansion. The gift is not pleasure ( प्रीति ) but only the sign of pleasure. By transference of epithets प्रसाद ( प्रीति ) is here used for प्रीतिदान। (c) दापितः—दा + णिच् + क्त कर्मणि।

2. प्रतिष्ठापितः—प्रति + स्था + णिच् + क्त कर्मणि। We have षत्व by the rule "उपसर्गात् सुनोति सुवति स्यति स्तौति स्तोभति स्था सेनय सेध सिच् सञ्जस्वञ्जाम्"।

3. पारितोषिक:—परितोष' प्रयोजनमस्य इति परितोष+ठञ् reward.

श्यालः—ण तस्सिं महारिहं रदणं भट्टिणो बहुमदं त्ति तक्केमि। तस्स दंसणेण भट्टिणो अभिमदो जणो सुमराविदो। मुहुत्तअं पकिदिगम्भीरो वि पज्जस्सुणअणो आसि [ न तस्मिन् महार्हं रत्नं भर्तुः बहुमतमिति तर्कयामि। तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्य्यश्रुनयनः आसीत् ]।

SUPERINTENDENT—I guess (it is) not the invaluable gems in it that are acceptable to Sire, some person dear to Sire was reminded by its sight. Though naturally self-possessed, for a moment he remained with tearful eyes.

सूचकः—शेविदं णाम आवुत्तेण [ सेवितं नाम आवुत्तेन ]।

SUCHAKA—Service indeed has been rendered by Brother-in-law.

जानुकः—णं भणादि इमस्स कए मच्छअत्तुणो त्ति [ ननु भण अस्य कृते मत्स्यघातोरिति ]। (पुरुषमसूयया तथा पश्यति)।

JANUKA—Well say that for the sake of this fish-killer. (Eyes the man with envy).

श्याल इति। 'तस्मिन्' अङ्गुलीये स्थित महार्हं रत्नं भर्तुः न बहुमतम् इति तर्कयामि मन्ये। किन्तु 'तस्य' अङ्गुरीयकस्य 'दर्शनेन अभिमतः' प्रियो जनः स्मारितः ततः पारितोषिकः। प्रियजनस्मरणचिह्नमपि अत—प्रकृत्या' स्वभावेन 'गम्भीरोऽपि' मनुभावोऽपि पर्य्यश्रुणी' सवाष्पे 'नयने' यस्य तथाविधो 'मुहूर्त्तम् आसीत्'।

सूचक इति। 'आवुत्तेन सेवितं नाम यथार्थमेव भर्त्तुः सेवा कृता।

जानुक इति। 'ननु' आक्षेपे। 'अस्य मत्स्यानां घ्नतोः' धीवरस्य कृते तदर्थम् [ कृते इत्यव्ययं निमित्तार्थे ] सेवितमावुत्तेन इति भण'। सेवालब्धं धीवरस्य जातं तत् श्रेयं सेवा इति 'पुरुष' धीवरम् 'असूयया' होषाविष्करणेन सह 'पश्यति'।

## NOTES

कर्त्ता । Thus [illegible] (non-

)—दर्शनेन अभिमतो जनः स्मारितः (causative). [b] मनुः—
is the कर्त्ता of मननक्रिया in अभिमत । "क्तस्य च वर्त्तमाने" इति अनुक्त कर्त्तरि षष्ठी । [c] अभिमतः—अभि + मन + क्त कर्मणि वर्त्तमाने by the rule "मतिबुद्धिपूजार्थेभ्यश्च" । स्मारितः—स्मृ + णिच् + क्त कर्मणि । स्मृ + णिच् gives स्मारि or स्मरि । The latter means "anxious recollection"(आध्यान [d] पर्य्यश्रु &c.—परिगतानि अश्रुणि ययोः ते पर्य्यश्रुणी । See now Tika.

2. मत्स्यावशी:—* With the reading मात्स्यिकभर्त्तः: expound म'-त्स्यान घ्नन्ति इति मत्स्य + टक् = मात्स्यिकाः fish-killers, i e. fisher-men. तेषां भर्त्ता स्वामी । Raghava explains "मत्स्येन जीवन्ति मात्स्यिकाः तेषां भर्त्तः" । But the sense 'जीवति" goes with words of the वेतनादि class and a few others only (Pan. 4. 4. 12.—14). मत्स्य is not included therein Besides for the word मत्स्य special provision is made by the rule "पक्षिमत्स्यमृगान् हन्ति" ( Pan. 4. 4. 35 ). Raghava's explanation is therefore suspicious.

पुरुषः—भट्टालके, इदो अद्धं तुम्हाणं शुमणोमुल्लं होदु [ भट्टारक, इतः अर्द्धं युष्माकं सुमनोमूल्यं भवतु ] ।

MAN—Master, let half of this be as price of flowers for you.

जानुकः—एत्तके जुज्जइ ( एतावद्युज्यते ) ।

JANUKA—This much is proper.

श्यालः—धीवर, महत्तरो तुमं पिअवअस्सओ दाणिं मे संवुत्तो कादम्बरीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदि । ता सोण्डिआवणं एव्व गच्छामो [ धीवर, महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तत् शौण्डिकापणमेव गच्छामः ) । ( निष्क्रान्ताः सर्वे ) ।

---

* Adopted by Prof. Gajendragadkar.

SUPERINTENDENT—Fisher-man, you are noble and have become a dear friend to me. Our friendship is desired to have liquor for witness. So to a wine seller's shop we go. (Exeunt all).

## प्रवेशकः—PRELUDE

पुरुष इति। हे 'भट्टारक' स्वामिन् 'इतः' प्रसादप्राप्तात् अर्थात् 'अर्धं' कुसुमानां 'सुमनसाम्' अर्चनायोग्यानां पुष्पाणां 'मूल्यं' भवतु। अद्य प्राणप्रदा भवन्तः अर्चनीया मे न चात्र सन्निहितानि अर्चनपुष्पाणि। तत् पुष्पमूल्यमिदं मया वो दीयते स्वसुखं इत्यस्य भीतस्येयं प्रसादनोक्तिः।

जानुक इति। 'एतावद्युज्यते—युक्तमेवैतत्।

श्याल इति। महत्तरः' अतिशयेन महान् [इतरापेक्षया अतिशयः] 'त्वम् इदानीं 'मे' प्रियवयस्यकः' [स्वार्थे कन्] संवृत्तः। अस्माकं प्रथमं सौहृदं सौहृदारम्भः मैत्रीस्थापनमित्यर्थः [अपि हृदयस्य हृद। आदिवृद्धिः। अनपि हृद्भावे तु सौहार्द-मित्युभयपदवृद्धिः स्यात्] 'कादम्बरी' मदिरा 'साक्षिणी' प्रत्यक्षदर्शिनी यस्मिन् तथाविधम् ["साक्षाद्द्रष्टरि संज्ञायाम्" इति इनिः] 'इष्यते' प्रार्थ्यते मया। 'शुण्डा' मदिरा पण्यं यस्याः तस्याः 'आपणं' पण्यशालां गच्छामः'।

प्रविशन्ति इति 'प्रवेशकः' नीचपात्रप्रयुक्तः भाविभूतार्थसूचकः अङ्कसन्धिविशेषः।

NOTES

1. भट्टारक—This is complementary. The epithet applies to the king. "राजा भट्टारको देवः" – Darpana.

2 [a] महत्तरः—There is mental comparison with other dear friends; hence the comparative degree. Or, the comparison need not be with friends only (See Tika). In this case this is attributive and प्रियवयस्यक is predicative. The meaning is—Noble as you are I do not hesitate to call you a friend though your origin is low; you deserve my friendship by the large-heartedness so uncommon among people of your class.

* Adopted by Prof. Gajendragadkar.

[b] कादम्बरी &c.—अम्बर is garment. कुत्सितमम्बरमस्य इति कादम्बरः a name of बलराम who wore blue garments (नीलाम्बरः)। तस्य इयम् इति कादम्बर + अण् + ङीप् स्त्रियाम् = कादम्बरी wine मदिरा। "गन्धोत्तमाप्रसन्नेराका- दम्बर्यः परिस्रुता। मदिरा—"इत्यमरः। सा साक्षिणी यस्मिन्। बहु—। In the बहु—the form should have been कादम्बरसाक्षिणीकम् because कादम्बरी should have पुंवद्भाव and पुंवद्भाव of साक्षिणी is not available. The difficulty may be avoided supposing साक्षिन् to be in the neuter (सामान्ये नपुंसकम्)। Thus कादम्बरी साक्षि यस्मिन् तत्। स्वार्थे कन्। [c] प्रथम &c.—for सौहृद see Tika and जननान्तरसौहृदानि, Act. V: [d] शौण्डि- कापणम्—शुण्डा सुरा पण्यमस्य इति शुण्डा + ठक् = शौण्डिकः wine-seller. आ सम्यक् पणन्ते व्यवहरन्ति अस्मिन् इति आ + पण (व्यवहारे) + घ अधिकरण संज्ञायाम् = आपणः a shop. Now see Tika.

5. प्रवेशकः—प्रवेशयति इति प्र + विश + णिच् + ण्वुल् कर्त्तरि। This differs from a विष्कम्भक in as much as it is acted by inferior characters only. "यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः॥"—Sudhakara, quoted by Raghava See also our Swapna-vasavadattam Act II.

(ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः)। सानु मती—णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थ- सण्णिज्झं जाव साहुजणस्स अभिसेअकालोत्ति संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं (निर्वर्तितं मया पर्याय- निर्वर्तनीयम् अप्सरस्तीर्थसान्निध्यं याव साधुजनस्याभिषेक- कालः इति साम्प्रतमस्य राजर्षेः उदन्तं प्रत्यक्षीकरिष्यामि। मेणआसम्बन्धेण सरीरभूदा मे सउन्दला! ताए दुहिदुणि मित्तं आदिट्ठपुव्वम्हि (मेनकासम्बन्धेन शरीरभूता मे शकुन्तला। तया च दुहितृनिमित्तम् आदिष्टपूर्वास्मि)। (समन्तादवलोक्य) किं णु क्खु उदुच्छवे वि णिरुच्छवारम्भं विअ राअउलं दीसदि। अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं किन्दु सहीए

आदरो मए माणइदव्वो ( किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किन्तु सख्या आदरो मया मानयितव्यः । ) होदु इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपरिच्छण्णा पस्सपरिवत्तिणी भविअ उवलब्भिस्सं ( भवतु अनयोरेव उद्यानपालिकयोः तिरस्करिणीपरिच्छन्ना पार्श्वपरिवर्तिनी भूत्वा उपलप्स्ये । ) ( नाट्येनावतीर्य स्थिता ) ।

[Then enter by aerial flight a nymph named Sanumati]

SANUMATI—Presence at Apsarstirtha. which has to be observed by me, by turns while it is bathing time for the sages, has been observed by me; so I shall witness with my own eyes the facts of this royal sage. Through her connection with Menaka, Sakuntala has become like my own self By her too for the sake of her daughter, I was previously requested. (Looking all round) Why indeed, even in the Spring festival does the royal house-hold appear as if without the commencement of festivities ? I have the power to know all by meditation. But my affection for my friend has to be respected by me. Well, shrouded in the veil of disappearance I will ascertain, having become a constant mover by the sides of these keepers of the garden themselves.

(Stands having acted descent).

ततः 'आकाशेन' यत् 'यानं' गमनं तेन [भावे ल्युट् । आख्यप्रयोगात् 'अप्सराः' इत्यत्रापि ] ।

सानुमतीति । 'यावत् यत्कालं 'साधुजनस्य' सत्पुरुषाणाम् 'अभिषेककालः' स्नानसमयः तावत् 'पर्य्यायेण' यथाक्रमेण 'निर्वर्त्तनीयं' करणीयम् 'अप्सरस्तीर्थं' हस्तिनापुरसमीपस्थं तीर्थविशेषं यत् 'सान्निध्यम्' उपस्थितिः तत् 'मया निर्वर्त्तितं कृतम् 'इति' अतः हेतोः 'साम्प्रतम्' अधुना 'अस्य राजर्षेः' उदन्तं वृत्तान्तम् [''वार्त्ता प्रवृत्तिर्वृत्तान्त

साधुजनः कार्यं] इत्यतः] 'प्रत्यक्षीकरिष्यामि' [अव्ययीभावे टच् समासान्तः । ततः अच् मत्वर्थीयः । ततश्चि:] । 'मेनकायां यः 'सम्बन्धः' शकुन्तलायाः तेन 'शकुन्तला मे शरीर-भूता' अशरीरं शरीरं 'भूता' आत्मा [अर्श आदिषु शरीरमित्यपठितमपि कविना दृश्यते] तदस्ति दुष्यन्तचरितपर्यवेक्षणे मदीयः स्वार्थः । न केवलं स्वार्थ एव—'तया' मेनकया 'च दुहिता' शकुन्तला निमित्तं प्रयोजनं यस्मिन् कर्मणि तत् यथा तथा 'पूर्वम् आदिष्टा' ["भूतपूर्वे चरट्" इति ज्ञापकात् पूर्वशब्दस्य परनिपातः] 'अस्मि'—इति मेनकाया आदेशोऽपि अत्र कारणम् । 'समन्तात्' सर्वासु दिक्षु 'अवलोक्य' । 'किं' प्रश्ने ; 'नु' वितर्के' । मिलिते वितर्कगर्भः प्रश्नः । 'खलु' अवधारणे । ऋतुः प्रधानतया वसन्तः । 'ऋतुप्राप्तौ य उत्सवः' तस्मिन् [शाकपार्थिवादिः] समागतेऽपि [भावे सप्तमी] 'राजकुलं' भूपतिभवनं 'निर्गतः उत्सवारम्भो' यस्मात् तादृशं दृश्यते [उत्सवारम्भा-भावे निश्चयः । तत्कारणं प्रति वितर्कगर्भः प्रश्नः ] । प्रणिधानेन समाधिना 'सर्वं' परिज्ञातुं मे विभवः सामर्थ्यम् अस्ति' । अत्र स्थितः एव ततत्यं सर्वं ज्ञातुं शक्यते मया 'किन्तु सख्याः शकुन्तलायाः सम्बन्धेयो मे आदरः स्नेहः स 'मया मानयितव्यः' पूजयितव्यः स्नेहात् प्रत्यक्षं ज्ञातुमुचितं मे । ध्यानेन ज्ञाते तु स्नेहस्य सदृशं न स्यात् । 'भवत् इति तत्तथाभूते सङ्कल्पे अव्ययम् । 'तिरस्करिण्या' अदर्शनविद्यया 'प्रतिच्छन्ना' गूढविग्रहा सती अनयोः दृश्यमानयोः 'उद्यानपालिकयोः' प्रमदवनरक्षिण्योः 'पार्श्वे' समीपे परिवर्त्तिनी सञ्चारिणी 'भूत्वा तयोः सलापात् 'उपलप्स्ये ज्ञास्यामि सर्वम् । "नाट्येन अवतीर्य भूतलावतरणं नाटयित्वा इत्यर्थः 'स्थिता उद्यानपालिकयोः पार्श्वे स्थिता ।

1. [a] साधुजनस्य—जातावेकवचनम् । Or जन means समूह and gives the plural idea. [b] इति—This expresses हेतु ।* Because (इति) I have done my duty and have leisure so now I will watch &c. [c] प्रत्यक्षी &c.—अक्ष्णः प्रति = प्रति + अक्षि + टच् समासान्त by the नवसूत्र "प्रतिपर (?) समनुभ्योऽक्ष्णः" = प्रत्यक्षम् direct vision, अव्ययी—। तत् अस्ति अस्य इति प्रत्यक्ष + अच् मत्वर्थे = प्रत्यक्षः that which is seen. Refers to उद्यान । अप्रत्यक्षं प्रत्यक्षं करिष्यामि इति प्रत्यक्ष + च्वि + कृ + लृट स्यामि । [d]

* Adopted Prof. by Gajendragadkar.

शरीरभूता—By the rule "श्रेण्यादयः कृतादिभिः" here शरीर is compounded with भूत and gives the sense of च्वि to the compound, i. e. expresses अभूततद्भाव । "श्रेण्यादिषु च्व्यर्थवचनम्"—Katyayana. But though भूत is of the कृतादि class, शरीर is not श्रेण्यादि । The Samasa strictly therefore seems unavailable. Mallinatha however in Kirat III under एकीचभूतम् takes श्रेण्यादि as आकृतिगण (an open list) on the authority of Sakatayana, and poets also seem to favour the view. See निवासभूता below and एकीचभूत above etc. The sense may also be got by taking भूत = सम । Thus शरीरेणभूता (सुपसुपा) [or—शरीरस्यभूता, शेषे षष्ठी] । Or शरीरेण तुल्या or शरीरमिव इति नित्यवत् । [Cf —"मातृभूत इत्यत्र भूतशब्दस्य उपमानार्थत्वम् कैयटकारेण व्याख्यातम्" —चारित्रवर्धन], as dear to me as my own body; or—शरीरस्य तत् भूतञ्च etc. There are however instances in which this mode of proce —dure does not well apply. Witness निवासभूता in "सा दैवकी सर्वजगन्निवासभूता नितरां न रेजे"—Bhagavata, I think the more reasonable way of dealing with such compounds is to treat them as सुप् सुपा or शिष्टप्रयोग । (e) Remark—Two reason are here given for going to the place. (i) Love for Sakuntala (शरीरभूता शकुन्तला), (ii) Menaka's command (तया आदिष्टपूर्वा) ।

2. (a) किं नु खलु—We have here प्रश्न (किम्), (नु), and निश्चय (खलु) । निश्चय is about the absence of festivities, and the वितर्कगर्भ प्रश्न relates to the cause for the absence. (b) सख्याः—This is ambiguous. The षष्ठी may be शेषे or कर्तरि प्रयोगे See—next. Note that the सखी is शकुन्तला not मेनका । Comp. 'आमे सखी अपणो मे वर्त्तते", "यो यः प्रदेशः सख्या मे अभिमतः" &c. infra. [c] आदरः—आ + दृ + अप् भावे । सख्याः आदरः—Esteem for my friend (शेषे षष्ठी), or Friend's request (कर्त्तरि षष्ठी) । The former is perferable, because she mentions only two reasons for going to the place. If Sakuntala had requested her, she would have referred to that too. [d] तिरस्कारिणी &c. - तिरस्करोति इति तिरस् + कृ + णिनि कर्त्तरि स्त्रियाम् – तिरस्कारिणी । We do not get तिरस्कारिणी because as Bhanuji remarks "निपातनात् इत्वाभावः ।

संज्ञापूर्वकत्वात्" । I have not been able to verify the निपातन । By संज्ञापूर्वक &c. he refers to the परिभाषा—"संज्ञापूर्वको विधिरनित्यः" । Now वृद्धि is a संज्ञा, hence rules prescribing वृद्धि have violations. This is an instance of such violation. Again by the rule "तिरसोऽन्यतरस्याम्" we get विसर्ग optionally giving the alternative from तिरःकरिणी । प्रति + छद + णिच् + क्त कर्मणि = प्रतिच्छन्ना or प्रतिच्छादिता veiled i. e. rendered invisible. Now see Tika.

( ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः ) । प्रथमा—

आतम्महरिअपण्डुर वसन्तमासस्स जीअसवस्स ।
दिट्ठोसि चूअकोरोअ उदुमङ्गल तुमं पसाएमि ॥
[आताम्रहरितपाण्डुर वसन्तमासस्य जीवसर्वस्व ।
दृष्टोऽसि चूतकोरक ऋतुमङ्गल त्वां प्रसादयामि । ]

(Then enters a maid-servant gazing at the mango-blossom and another behind her). FIRST—Copper-coloured green and pale, each in a slight measure, the all-in-all of the life of the first spring month, O Mango-blossom the auspicious opener of the season, thou art seen. I propitiate thee.

द्वितीया—परहुदिए किं एआइणी मन्तेसि [ परभृतिके किमेकाकिनी मन्त्रयसे ] ।

SECOND—Parabhritika, why (Or—what) art thou muttering alone ?

प्रथमा—महुअरिए, चूअकलिअं देक्खिअ उन्मत्तिआ परहुदिए होदि [ मधुकरिके, चूतकलिकां दृष्ट्वा उन्मत्ता परभृतिका भवति ] ।

FIRST—Madhukarika, Parabhritika becomes mad on seeing the mango-blossom.

'चूताङ्कुरम् अवलोकयन्ती' नवोद्गतत्वात् सादरं पश्यन्ती । 'चेटी' परिचारिका । 'पृष्ठतः' पश्चात् । द्वे चेट्यौ प्रविशतः इत्यर्थः । एते एव उद्यानपालिके ।

आताम्रेति। अन्वयः—हे आताम्रहरितपाण्डुर, वसन्तमासस्य जीवसर्वस्व, ऋतुमङ्गल चूतकोरक, दृष्टोऽसि, त्वां प्रसादयामि। व्याख्या—हे आ' ईषत् 'ताम्र' ताम्रवर्ण 'हरित' श्यामल 'पाण्डुर' शुभ्रै स्त्रिभिरपि वर्णैः खचित मिश्र इत्यर्थः 'वसन्तमासस्य' प्रथमस्य वासन्तिकमासस्य फाल्गुनस्य 'जीवस्य' जीवनस्य 'सर्वस्व' सारभूत 'ऋतो'—

वसन्तस्य 'मङ्गल' प्रथमसूचकत्वात् मङ्गलारम्भभूत 'चूतकोरक' आम्रमुकुल, त्वं 'दृष्टोऽसि। अतएव त्वां प्रसादयामि। प्रसन्नो भव यथा आश्मन् वसन्तेऽहं सुखं वसेयम्।

द्वितीयेति। हे 'परभृतिके' [परभृतिका इति प्रथमाया नाम] 'किं कथम् एकाकिनी' असहाया 'मन्त्रयसे जल्पसि।

प्रथमेति हे 'मधुकरिके' [मधुकरिका इति द्वितीयाया नाम] 'चूतकलिकां' आम्रमुकुलं 'दृष्ट्वा परभृतिका' कोकिला उन्मत्ता भवति'। उन्मत्ता एकाकिनी मन्त्रयते एव, तव कारणं न प्रष्टव्यम्। प्रथमां प्रति द्वितीयाया ऋजुः प्रश्नः। कौतुकप्रिया प्रथमा तु परभृतिका इति श्लेषमालम्ब्य कोकिलापक्षे नीतवती।

## NOTES

1. आताम्र &c —पाण्डु + र मत्वर्थे = पाण्डुरः grey. ताम्रः गुणः अस्य अस्ति इति ताम्र + मतुप = ताम्र। Copper—coloured मतुप् disappears by the Varttika - "गुणवचनेभ्यो मतुपो लुगिष्टः"। Similarly हरित + मतुप् = हरित green. हरितश्चासौ पाण्डुरश्च हरितपाण्डुरः। कर्मधा— ताम्रश्चासौ हरितपाण्डुरश्च ताम्रहरितपाण्डुरः। कर्मधा—। We compound by parts to avoid a त्रिपदतत्पुरुष which is not usually allowable. आ ईषत् ताम्रहरितपाण्डुरः। सहसुपेति समासः। Qual. चूतकोरक।

2. परभृतिके—परैर्भृतः a cuckoo. स एव इति परभृत + कन् स्वार्थे = परभृतकः। स्त्रियाम् परभृतिका = a female cuckoo. Here, it is the proper name of the maid.

3. मधुकरिके —मधुकर + कन् स्वार्थे ; ततः स्त्रियां टाप as in परभृतिका मधुकरिका is a female bee. This is the name of the second maid

4. Remark—The first maid puns on her own name. She pretends not to have understood the question as meant for her, but as addressed to female cuckoos in the garden. The reply is then evident—the cuckoo is mad with joy on seeing the tree in blossom. The lunatic talks to himself who ever asks him the reason ?

द्वितीया ( सहर्षं त्वरया उपगम्य )—कहं उवट्ठिदो महुमासो [ कथमुपस्थितो मधुमासः ] ।*

SECOND (Hastily approaching with joy)—How so has the spring month come ?

प्रथमा—महुअरिए, तव दाणिं कालो मदविब्भमगीदाणं [ मधुकरिके, तव इदानीं काल एष मदविभ्रमगीतानाम् ] ।

FIRST—Madhukarika, yours now the time for humorous songs through intoxication (or—intoxication and amorous songs).

द्वितीया—सहि, अवलम्ब मं जाव अग्गपादट्ठिता भविअ चूतकलिअं गेह्णिअ कामदेवच्चणं करेमि [ सखि, अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ] ।

SECOND—Friend, support me while with balance on the forepart of the foot and having plucked the mango-blossom I perform the worship of Kamadeva.

द्वितीयेम । 'हर्षेण सह त्वरया' द्रुतम् 'उपगम्य' प्रथमायाः समीपस्था भूत्वा । 'कथम् इति आश्चर्ये । 'मधोः' वसन्तस्य [ मधुशब्दो वसन्ते पुंसि ] मासः' कालः 'उपस्थितः' प्राप्तः किम् ?

प्रथमेति । 'हे मधुकरिके' [भ्रमरि इति श्लेषः ] 'एष इदानीं तव' भ्रमरकामिन्याः 'मदेन' मत्ततया यानि 'विभ्रमगीतानि' विलासगानानि तेषां कालः' समयः आगतः वसन्ते कुसुमितासु वनराजिषु त्वं गायसि, स एष समयस्ते प्राप्तः ।

द्वितीयेति । हे 'सखि यावत्' यत्कालम् 'अग्रयोः पादयोः स्थित्वा गुल्फे स्थितया दुरापत्वात् अङ्गुलिषु स्थिता सती [ "इस्तायायहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः ] प्रांशुलभ्यां चूतकलिकां गृहीत्वा कामदेवस्य अर्चनं करोमि तावत् 'माम् अवलम्बस्व' धारय ।

NOTES

**1. मधुकरिके &c.—Another pun. Note the poet's choice of contrary character. The minds are of different tempera-**

ment—one simple and the other full of fun. His 'disciples' ( Sarangarav and Sardvata ) his 'friends' ( Anasuya and Priyamvada ) are chosen on the same basis. (b) मद &c.— विभ्रम is विलास grace. विभ्रमयुक्तानि गीतानि विभ्रमगीतानि । शाकपार्थिवादि । मदजानि विभ्रमगीतानि । शाकपार्थिवादि । तेषाम् ।

2. अग्रपादस्थिता—The foot is here mentally divided into three portions अग्र, मध्य, पश्चात् । अग्रौ च तौ पादौ च अग्रपादौ the fore-part of the feet, i.e. the toes कर्मधा—। पादाग्र means the same, but is षष्ठीतत्—। See also Tika and Act IV ante. तयोः स्थिता ।

प्रथमा—जइ मम वि कखु अद्धं अच्चनफलस्स [यदि ममापि खलु अर्धम् अर्चनफलस्य ]।

FIRST—Provided mine too is assuredly half the fruit of the worship.

द्वितीया—अकच्छिदे वि एवं संवज्जइ। जदो एकं एव्व णो जीविदं दुधाट्ठिदं सरीरं ( अकथितेऽपि एतत् संपद्यते। यत् एकमेव नौ जीवितं द्विधास्थितं शरीरम् । (सखीमवलम्ब्य चूतप्रसवं गृहीत्वा ) अए अप्पबुद्धोऽवि चूअप्पसवो बन्धणभङ्गसुरभी होदि ( अये अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभिर्भवति )। ( कपोतहस्तकं कृत्वा )।

अरिहसि मे चुअङ्कुर दिण्णो कामस्स गहीअधनुअस्स ।
पहिअजणजुअइलक्खो पञ्चब्भहिओ सरो होदुं ॥
( अर्हसि मे चूताङ्कुर दत्तः कामस्य गृहीतधनुषः ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम् ॥ )
( चूताङ्कुरं क्षिपति )।

SECOND—That is secured without being said ; for our life is but one, body stands in two places. (Having leant on

the friend and plucked the mango blossom). Ah ! though not full-blown, the mango-blossom becomes fragrant by the severing of the stalk, (Joining the palms). Offered by me O mango blossom it behoves thee to become, with the young mistress of the travelling folk for your aim, the most excellent arrow of the five of Kama who has taken up his bow, (Tosses the mango-blossom).

प्रथमेति। 'यदि खलु' निश्चित ममापि अस्वेनफलस्य अङ्कं भवति' तदा अवलम्ब मान्यथा !

द्वितीयते। 'अकथिते' त्वया मया वा अनुक्ते 'अपि एतत्' अर्द्धलाभ: 'सम्पद्यते' सिध्यति। कारणमाह—'यतो यस्मात् 'नौ शरीरे द्विधा स्थितं' जीवितं' प्राणा: 'एकमेव'। 'अये' इत्याश्चर्य्ये। 'चूतप्रसव:' आम्रकलिका 'अप्रबुद्धोऽपि अविकसितोऽपि बन्धनभङ्गेन' वृन्तच्छेदेन 'सुरभि:' घ्राणतर्पणो भवति। कपोतहस्त: इति संज्ञाशब्द: करतलयो: सर्वाङ्गसंश्लेषे वर्त्तते। तमेव [ स्वार्थे कन् ] 'कृत्वा' अञ्जलिं बद्धा इत्यर्थ:। अन्वय:—हे चूताङ्कुर, मे दत्त: ( सन् ) गृहीतधनुष: कामस्य पथिकजनयुवतिलक्ष्य: पुष्पाभ्यधिक: शरो भवितुमर्हसि। व्याख्या—हे 'चूताङ्कुर' सहकारप्रसव 'मे मया [अव्ययमेतत्] 'दत्त:' सन् गृहीत: धनुर्येन तस्य [ धनुषश्च'' इति नित्योऽप्यनङ् कविविवक्षया अकृत:। यद्वा—"गृहीतधनुकस्य'' इत्येव पाठ:। तत्र धनुशब्दो न सकारान्त: किन्तु उकारान्त:। स्वार्थे कन्] 'कामस्य पथिकजनानां' पान्थानां' या 'युवतय:' तरुण्यो भार्या: प्रोषितपतिका या रमण्य: ता एव लक्ष्या:' शरव्यं तथाविध: 'पञ्चसु' प्रसिद्धेषु शरेषु अभ्यधिक:' श्रेष्ठ: [ निर्द्धारणाभावात् षष्ठीसमासो वा ] 'शरो भवितुं' अर्हसि युज्यसे। इत्युक्त्वा कन्दर्पमुद्दिश्य 'चूताङ्कुरं' भूमौ 'क्षिपति'।

## NOTES

1. (a) अप्रबुद्धोपि—प्र + बुध + क्त कर्त्तरि = प्रबुद्ध lit.—One who has awaked from sleep. The opening of the petals of a flower is likened to the opening of the eyes at the cessation of sleep. Hence प्रबुद्ध means here विकसित full blown, न प्रबुद्ध:। (b) बन्धन etc.—बन्धन is वृन्त the stalk, तस्य भङ्ग:। तेन सुरभि:।

2. कपोतहस्तकम्—This is the technical name of the usual salute by joining the palms कपोतोसौ करौ तत्र श्लिष्टमूलाग्रपार्श्वकौ। प्रणामिगुरुसम्भाषे—"Sangita-retnakara quoted by Raghava.

3. (a) भर्दसि मे—Raghava reads त्वमसि मया ;—also कामाय &c, —for कामस्य &c. and भव for भवितुम्। The construction is—हे चूताङ्कुर त्वं गृहीतधनुषे कामाय दत्तः असि। पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकशरो भव। (b) कामस्य—The construction is not कामस्य दत्तः but कामस्य शरः। See Tika. (c) गृहीतधनुष.—गृहीतधन्वन: is expected with the अनङ् (समासान्त) attached. But धनुस् frequently appears without it. Compare "स्वलावण्याशंसा धृतधनुषमङ्गाय तृणवत्", "धृतधनुषं रघुनन्दनं स्मरामि" &c. Or the Prakrit गहीअधनुअस्स = गृहीतधनुकस्य which is perfectly legitimate. In this धनु is उकारान्त meaning "bow" 'धनुशब्दः पियालाद्रौ राशिभेदे धनुष्यपि" इति हेमः। Compare, "धनुवंशविशुद्धोऽपि निर्गुणः किं करिष्यति"। (d) पञ्चाभ्यधिकः—The five arrows of Cupid are अरविन्दमशोकञ्च चूतञ्च नवमल्लिका नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥" तेषु or तेषाम् अभ्यधिकः। There is no necessity for avoiding the षष्ठीतत्—because according to Kaiyyata there is no निर्धारण here. निर्धारण is possible only when the object singled out the class from which selected and the basis of selection are present. This is not the case here. Hence we may have पञ्चानाम् अभ्यधिकः—the prohibition "न निर्धारणे" being in applicable. Or expounding पञ्चानामभ्यधिकः call it a सुप् सुपा॥ Or—पञ्चभ्यः अभ्यधिकः ( अतिरिक्तः श्रेष्ठः )। See Sv. IV.

**(प्रविश्यापटीक्षेपेण कुपितः) कञ्चुकी—मा तावदनात्मज्ञे ; देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे ?**

(Entering without removing the curtain the enraged)

CHAMBERLAIN—That must not be, O thou that knowest not thyself. Commencest thou plucking mango-blossoms even though the spring festival is prohibited by Sire ?

**उभे ( भीते )—पसीदतु अज्जो। अगहीदत्थाओ वअं [ प्रसीदतु आर्यः। अगृहीतार्थे आवाम् ]।**

BOTH—(Frightened)—Let noble sir be pleased, we are uninformed of the matter.

पविश्येति। 'अपटीक्षेपेण' नेपथ्यरङ्गमञ्चयोरन्तराले दत्तं पटम् अनपसार्य्य इति प्राक् व्याख्यातम्। आत्मानं न जानाति तत्सम्बुद्धौ हे 'अनात्मज्ञ' अविमृश्यकारिन् इत्यर्थः 'मा तावत्' एवं कार्षीः। देवेन 'दुष्यन्तेन मधूत्सवे' वसन्तोत्सवे [भावे क्तो] 'प्रतिषिद्धेऽपि' सति 'चूतकलिकाया भङ्गम् आरभसे' प्रक्रमसे। अधुनैव दृश्यते तथा उभे इति। "आर्य्य!" मान्यो भवान् 'प्रसीदतु' प्रसन्नो भवतु, कोपं त्यजतु। 'न गृहीतः ज्ञातः 'अर्थः' उत्सवप्रतिषेधरूपं वस्तु याभ्यां तथाविधे 'आवाम्'। अज्ञानादपराद्धं' मृष्यतामावयोरित्यर्थः।

NOTES

1. (a) अपटी &c.—Explained in Act IV. (b) अनात्मज्ञ—One that does not know himself (i. e, his position) is अनात्मज्ञ। One in the position of a servant cannot act against the orders of the king himself. If he does, he is अनात्मज्ञ—he does not know what he is.

कञ्चुकी—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च। तदाहि—

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः

सन्नद्धं यदपि स्थितं कुरबकं तत् कोरकावस्थया।

कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं

शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम्॥

CHAMBERLAIN—No! By you two (alone) has not indeed been heard Sire's command which has been obeyed even by the vernal trees and the birds that resort to them! Thus—the blossom of the mangoes, though issued long ago, does not show its own pollen; the Kuravaka, even that which is arrayed, stands in the state of the bud; the note of the

male Cuckoo, though the winter has passed, falters in the throat. Methinks, even Smara [cupid], startled, countermands the arrow halfdrawn from the quiver.

चतुकीति। 'यत् शासनम्' आज्ञा वासन्तिकैः वसन्तकालीनै पुष्पादुमिः [ ठञ् ] 'तरुभिरपि' पादपैरपि 'तात्' तदन् 'आश्रयम्' थै तैः 'पक्षिभिश्च' पक्षिभिश्च 'प्रमाणीकृतं पालितं' तत् शासनं 'युवाभ्यां न किल श्रुतम्'। किल इत्यरुचौ। नाहं श्रद्दधे अश्रुतं शासनमिति। तरुपक्षिभिः प्रमाणीकरणं प्रपञ्चयति 'तथाहि' इति—

अन्वयः—चूतानां कलिका चिरनिर्गतापि स्वं रजो न बध्नाति। कुरवकं यदपि सन्नद्धं तत् कोरकावस्थया स्थितम्। पुंस्कोकिलानां रुतं शिशिरे गतेऽपि कण्ठे स्खलितम्। शङ्के स्मरोऽपि चकितः तूणार्धकृष्टं शरं हरति। व्याख्या—चूतानां कलिका' आम्रमञ्जरी [जातावेकवचनम्] 'चिरं निर्गता प्रकटिता 'अपि स्वम् आत्मीयं 'रजः' परागं 'न बध्नाति' धत्ते कुरवकं' कुरुवककुसुमं 'यदपि' यच्च 'सन्नद्धं विकासं' प्रति सज्जीभूतं तत् कोरकस्य अवस्थया' मुकुलरूपेणैव 'स्थितम्'। 'पुंसां कोकिलानां' कोकिलानाम् [संयोगान्तलोपः। रुत्वसत्वे। अनुमासिकत्वं पुंस्कोकिलानां इत्यपि] रुतं' रवः 'शिशिरे हिमे 'गतेऽपि' हिमावसानेऽपि कण्ठेषु स्खलितं प्रतिहत कण्ठपर्यन्तमायातं न तु बहिर्निःसृतं सत् स्रुतम्। शिशिरात्ययेऽपि, इत्थमप्रवृद्धे चूतकोरके अप्रफुल्ले कुरवके, संयते च कोकिलालापे 'शङ्के मन्ये 'स्मरोऽपि' भगवान् मन्मथोऽपि, किं पुनः पक्षिणः पादपा वा 'चकितः' दैवाज्ञया विचलितः सन् 'तूणात् अर्धाकृष्टं' शासनघोषणात् प्राक् निष्काशितप्रायं 'शरं संहरति श्रुतादेशस्तूणं प्रतिप्रवेशयति॥ प्रहर्तुमना एवासीत् स्मरः। कथमन्यथा निर्गता चूतकलिका, सन्नद्धं कुरवकं, रुतनिरतश्च कोकिलः। परन्तु दैवादेशात् न प्रहरति। तादृशोऽप्यादेशो युवाभ्यां न श्रुतः। बुध्यते एवं तत् इति वक्रोक्तिः ["कुरुबकम्" (रा॰)—"कुरवकम्" ( त॰, वि॰, श्या॰, म॰ ) ]॥

## NOTES

1. वासन्तिकैः—वसन्ते पुष्प्यन्ति इति वसन्त+ठञ् वासन्तिकाः: those that flower in the spring. This is a वैदिक usage. In भाषा the proper affix is अण् by the rule "सन्धिवेलादि ऋतु नक्षत्रेभ्यः अण्" which bars ठञ्। The ठञ् comes in as a प्रतिप्रसव in the Vedas

only by the rule "वसन्ताच" on which the Vritti remarks "छन्दसि इत्येव। वसन्तशब्दात् छन्दसि विषये ठञ् भवति वैषिक:—Kasika.

2. (a) कलिका, कुरवकम्, वृतम्—जातावेकवचनम्। (b) स्वम्—Their own. Hence what is natural, and therefore expected has not taken place. (c) सन्नद्धं यदपि &c.—As a rule they are not सन्नद्ध। Even (अपि) those that (यदपि) are सन्नद्ध show no further development (b) Remark—The अलङ्कार is उत्प्रेक्षा as indicated by शङ्के। It concerns three facts—(i) स्मरेण शरस्य अर्द्धाकर्षणम्; (ii) ततः शरसंहारः। (For iii see below). The bases of the उत्प्रेक्षा are—(a) चूतकलिकानिर्गमः, कुरवकसन्नाहः पुंस्कोकिलरवः which lead to the surmise (i) (b) The second surmise also arises because चिरनिर्गतापि रजो न बध्नाति, सन्नद्धमपि कोरकावस्थया स्थितम्, गतेऽपि शिशिरे कण्ठेषु स्खलितम्। Facts (i) and (ii) being established, a third surmise follows, viz, (iii) देवादेशात् स्मरस्य चकितत्वम्। Raghava has स्वभावोक्ति and विशेषोक्ति in the first three lines. The विशेषोक्ति is, according to the modern view "सति हेतौ फलाभावे विशेषोक्तिः"—Darpana. चिरनिर्गम &c. are हेतु and रजोबन्धन &c. are the फल which is here absent. Dandin, however would not allow the विशेषोक्ति। He defines—"गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम्। विशेषदर्शनायैव सा विशेषोक्तिरिष्यते॥" Here वैकल्य is फलप्रति विकलता। Hence his definition applies to those cases only where the फल is there, but the usual हेतु is insufficient (विकल), the फल being brought about by something special (विशेष)। In our case रजसामबन्धनम् etc. are the फल we see, but without any हेतुवैकल्य। Thus this is not a case of विशेषोक्ति as Dandin defines it. (c) Reading—The reading कुरवक is here preferred, because though commentators of Amara recognise the varient कुरबक, the poet writes कुरवक elsewhere—'कुरवका रवकारणतां ययुः—Raghu.

**सानुमती—णत्थि सन्देहो महाप्पहावो राएसी [ नास्ति सन्देहः। महाप्रभावो राजर्षिः )।**

**SANUMATI—There is no doubt. The royal sage is of great prowess.**

प्रथमा—अज्ज कति दिअहाइं अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलं पेसिदाणं [आर्य कति दिवसानि आवयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः]। एत्थ अ णो पमदवणस्स पालणकम्म समप्पिदं। ता आअन्तुअदाए असुदपुव्वो अम्हेहिं एसो वुत्तन्तो [अत्र च नौ प्रमदवनस्य पालनकर्म समर्पितम्। तदागन्तुकतया अश्रुतपूर्व आवाभ्यामेष वृत्तान्तः]।

FIRST—Noble Sir a few days only have passed unto us sent near the feet of Sire by Mitravasu the king's brother-in-law. And here the work of keeping the pleasure garden was placed with us. Thus through our being strangers this matter was not heard by us before.

सानुमतिरिति। अरेऽपि चकित् इत्यादि यत् शङ्कते तत 'सन्देहो नास्ति।' 'राजर्षिः' दुष्यन्तः 'महाप्रभावः प्रबलप्रतापः। तत् चकित एव अरः शासनसङ्कमशङ्कया [मूलम् (त-, न्या-)—। राघवादीनान्तु उद्यानपालिकयोरियमुक्तिः]॥

प्रथमेति। हे 'आर्य राष्ट्रियेण नगरपालेन राजश्यालेन 'मित्रावसुना भर्तुः' स्वामिनः 'पादमूलं चरणसमीपं 'प्रेषितयोः आवयोः कति' स्वल्पानि दिवसानि' [पुंस्त्वे चास्य भूरिप्रयोगः] गतानि। 'अत्र च' इह नगरे च नो प्रमद मदजननम् [एवन्ताद च् कर्त्तरि] 'वन' तस्य विहारवनिकाया इत्यर्थः 'पालनकर्म समर्पितम्। तत् तस्मात 'आगन्तुकतया' अचिरागमनेन हेतुना एष वृत्तान्तः' वसन्तोत्सवप्रतिषेधः 'आवाभ्याम् अश्रुतपूर्वः' इतः पूर्वं न श्रुतः।

## NOTES

1. नास्ति सन्देहः &c.—Raghava ascribes this to the maids. But then they would not have referred to the king as राजर्षिः। Besides, the tone is not that of frightened people, as they persumably were. Moreover, one of them ( प्रथमा ) continuing to speak, it seems queer that the other should cease. What

purpose is served by the two beginning the speech together and one alone finishing it ?

2. (a) कति—किम+डति। (b) दिवसानि is अर्द्धर्चादि, hence both masculine and neuter. (c) राष्ट्र is राज्य। राष्ट्रे अधिकृत इति राष्ट्र+घ=राष्ट्रिय the guardian of the peace of the kingdom; the head of the police. The king's brother-in-low is usually appointed to the affice. "राजश्यालस्तु राष्ट्रियः" इत्यमरः। (d) आगन्तुक-तया—आ+गम+तुन् कर्त्तरि (औणादिक)=आगन्तुः a guest, a newcomer. "आवेशिक आगन्तुरतिथिर्ना गृहागते" इत्यमरः। आगन्तुरेव इति कन् स्वार्थे। The gist is—We are new comers here. Only other day the Superintendent of police procured us from the moffusil and made a present of us to Sire who kindly employed us to look after this garden.

कञ्चुकी—भवतु, न पुनरेवं प्रवर्त्तितव्यम्।

CHAMBERLAIN—Well, this must not be done again.

उभे—अज्ज कोदूहलं णो, जइ इमिणा जणेण सोदव्वं कहेदु अज्ज किं णिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो [ आर्य्य कौतूहलं नौ, यदि अनेन जनेन श्रोतव्यं, कथयतु आर्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ]

BOTH—Noble Sir, curiosity (is excited); if it may be heard by people like us, let your honour tell us for what reason is the vernal festival prohibited by Sire.

सानुमती—उस्सवप्पिआ क्खु मणुस्सा। गुरुणा कारणेण होदव्वं ( उत्सवप्रियाः खलु मनुष्याः। गुरुणा कारणेन भवितव्यम् )।

SANUMATI—Men are indeed fond of festivities. The reason has to be grave.

कञ्चुकी—बहुलीभूतमेतत् किं न कथ्यते। किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम् ?

CHAMBERLAIN – It is as thoroughly spread, why can it not be told? Has not the scandal of Sakuntala's renunciation reached your ears here?

कञ्चुकी । 'भवतु' यातु तत् । पुनः' भूयोऽपि 'एवं न प्रवर्त्तितव्यं'' चूतकलिकाभङ्गादिभिरुत्सवारम्भो न कर्त्तव्यः ।

उभे इति । 'नौ' आवयोः 'कौतूहलं' कुतूकम् 'अस्ति' अस्मिन् विषये । यदि अनेन जनेन नीचेन चेटीजनेन 'श्रवणयोग्य' तदा किं निमित्तं केन हेतुना भर्त्रा वसन्तोत्सवः प्रतिषिद्धः' तत् आर्य्यः कथयतु ।

सानुमतीति । 'मनुष्याः उत्सवप्रियाः' प्रियोत्सवाः 'खलु', तथापि उत्सवः प्रतिषिद्धः । तत् मन्ये 'गुरुणा कारणेन भवितव्यम्' ।

कञ्चुकीति । 'बहुलीभूतं' बहुकर्णगतम् 'एतत्' उत्सवप्रतिषेधनिमित्तं किं न कथ्यते' । यत् सर्वैः श्रुतं तस्य श्रवणे को दोषः । 'अत्र' अस्मिन् नगरे इहागमनात् परमित्यर्थः शकुन्तलायाः प्रत्यादेशात् निराकरणात् यत् 'कौलीनं' राज्ञो लोकवादः [ "स्यात् कौलीनं लोकवादे" इत्यमरः ] तत् 'किं भवत्योः कर्णपथं न आयातम्' भवतीभ्यां न श्रुतम् ?

## NOTES

1. किं निमित्तम्—Almost all the विभक्ति are allowable in connection with निमित्त, कारण, हेतु &c. Hence किं निमित्तम्, केन निमित्तेन, कस्मिन् निमित्ते &c. are correct. The Varttika is "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" ।

2. उत्सवप्रियाः—प्रियः उत्सवो येषां ते । The पूर्वनिपात of प्रिय is optional by the rule 'वा प्रियस्य' । Hence प्रियोत्सवाः is also correct.

3. (a) बहुलीभूतम्—अबहुलं बहुलं भूतम् इति बहुल + च्वि + भू + क्त कर्त्तरि has become many, i. e. has spread. प्रततम्—। c. f., "पौरेषु सोऽहं बहुलीभवन्तम्" &c. (b) कुलीनता &c.—कुले भवः इति कुल + ख = कुलीनः noble. तस्य भावः इति कुलीन + अण् कौलीनम् primarily कुलीनत्वम्; secondarily—That which has to be concealed (गुह्य), i. e. a scandal, "कौलीनं स्यात् कुलीनत्वे गुह्ये—" इति विश्वः । Now see Tika.

उभे—सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं। [ श्रुतं राष्ट्रियमुखात् यावदङ्गुलीयकदर्शनम् ]।

BOTH—Heard from the mouth of the Gevernor up to the seeing of the ring,

कञ्चुकी—तेन हि अल्पं कथयितव्यम्। यदैव अङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मे तत्रभवतीरहसि शकुन्तला मोहात् प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः। तथाहि—

रम्यं द्वेष्टि यथा पुराप्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्त्तनै र्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीड़ाविलक्षश्चिरम्॥

CHAMBERLAIN—Then indeed little has to be told. When at the sight of the ring it was remembered by Sire that her ladyship Sakuntala was really married previously in secret and discarded through delusion, since that very moment Sire has been feeling remorse. Thus—He shuns the delightful; he is not attended by ministers daily as before. He passes the nights even without a wink by tossing about at the edge of the bed. And when through affability he gives a suitable reply to the inmates of the harem, then making slips in the names he remains long perplexed through shame.

उभे इति। अङ्गुलीयकस्य "दर्शनं यावत्" तत्पर्यन्तं सर्वं 'राष्ट्रियस्य मुखात्' [ अपादाने पञ्चमी ] 'श्रुतम्'।

कञ्चुकीति। 'यदैव अङ्गुलीयकस्य' दर्शनात्—तत्रभवती मान्या शकुन्तला सत्यं तथ्यम् एव [अव्ययमेतत्] 'मे' मया रहसि' विजने पूर्वं म ऊढ़ा 'ऊढ़पूर्वा' विवाहिता मोहात्" मतिभ्रमात् 'प्रत्यादिष्टा' निराकृता—'इति देवेन अनुस्मृतम्' अभिज्ञातं 'तदा' तत्काले

'प्रभृतिः' चादिर्द्विजन् कर्मणि तत् यथा तथा [विद्या—प्रभृति इत्यव्ययम्], 'देवः पश्चात् तापम् उपगतः' प्राप्तः । अन्वयः—रम्यं द्वेष्टि । यथा पुरा प्रकृतिभिः प्रत्यहं न सेव्यते । उन्निद्र एव शय्याप्रान्तविवर्तनैः क्षपा विगमयति । यदा दाक्षिण्येन अन्तःपुरेभ्यः उचितां वाचं ददाति, तदा गोत्रेषु स्खलितः (सन्) चिरं व्रीडाविलक्षो भवति च । व्याख्या— 'रम्य' काम्यं वस्तु यदितः पूर्वं प्रीतिकरमासीत् तत् सर्वमित्यर्थः 'द्वेष्टि' अप्रीतिकरमिति त्यजति । रतेषु विरतो देवः । 'यथा पुरा प्रागिव 'प्रकृतिभिः' अमात्यैः 'प्रत्यहं' प्रतिदिन [ अहनि अहनि इति वीप्सायाम् अव्ययीभावः । "नपुंसकादन्यतरस्याम्" इति विकल्पे टच् समासान्तः । पक्षे प्रत्यहः ] 'न सेव्यते' । सम्प्रति कदाचित् प्रकृतिभिः सेवामनुमोदते न प्रत्यहम् । उत्क्रान्ता 'निद्रा' यस्य तादृश 'एव' आपदेव 'शय्यायाः प्रान्तयोः' यानि 'विवर्तनानि दक्षिणे पार्श्वे शयितः सन् दक्षिणप्रान्ते ततश्च खिन्नः वामपार्श्वपरिवर्तनमिच्छन् वामप्रान्ते, भूयश्च दक्षिणप्रान्ते, ततोऽपि पुनर्वामप्रान्ते इत्येवं क्रमेण यानि परिवर्तनानि तैः 'क्षपाः निशाः [ निशि निशि एव उक्तत्वात् बहुवचनम् ] 'विगमयति' अतिवाहयति । एवं विवर्तनपरो माऽङ्गनीभिः प्रार्थितः 'यदा दाक्षिण्येन' उदारतया न तु कामितया 'अन्तःपुरेभ्यो' माऽङ्गनीभ्यो [ उपचारात् अन्तःपुर इति अन्तःपुरस्थवाचि] 'उचितां' प्रार्थनानुरूपां वाचं ददाति, तदा गोत्रेषु, नामसु 'स्खलितः' भ्रष्टः सन् शकुन्तलामयहृदयः शकुन्तलाशब्दमेव उच्चारयन् 'चिरं' दीर्घकालं 'व्रीडया' लज्जया 'विगतं' लक्ष्यं लक्ष्य । यस्य तथाविधो विह्वल इत्यर्थः 'भवति च' तिष्ठत्यपि । [ 'शय्याप्रान्त'—व्रीडाविलक्ष" ( रा-, वि-, म- )—"शयनपान्त"—"व्रीड़ावनम्रः" ( त , न्या- ) ] ।

## NOTES

1. तदा प्रभृति—प्रभृति as अवधिवाची gives पञ्चमी as in शैशवात् प्रभृति ; if आरम्भवाची it gives सप्तमी as here.

2. क्षपाः—अधिकरण : कर्मसंज्ञा because वि + गम is अकर्मक here ।

3. स्खलितः—स्खल् + क्त कर्त्तरि having made a slip, गोत्र name. "गोत्रं नाम्नि तथान्वये" इति हलायुधः ।

4. Readings—(a) शय्याप्रान्त means practically the same as शयनपान्त । (b) व्रीडावनम्रः is व्रीडया अवनम्रः । But अवनम्र applies better to one standing than to a person lying down. व्रीडाविलक्षः is better.

सानुमती—पिअं मे [ प्रियं मे ]।

SANUMATI—Joy to me!

कञ्चुकी—अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

CHAMBERLAIN—From this overpowering distraction the festival is prohibited.

उभे—जुज्जइ [ युज्यते ]।

BOTH—Quite proper.

नेपथ्ये—एदु एदु भवं [ एतु एतु भवान् ]।

IN THE DRESSING ROOM—Proceed, let Your Majesty proceed.

कञ्चुकी ( कर्णं दत्वा )—अये इत एवाभिवर्त्तते देवः। स्वकर्मानुष्ठीयताम्।

CHAMBERLAIN (Listening)—Ah! Sire is coming this very way. Let your own work be attended to.

उभे—तह [ तथा ]। ( निष्क्रान्ते )।

BOTH—As you say, Sire, [Exeunt).

अस्मादिति। प्रकर्षेण भवतः 'प्रभवतः' प्रबलात् 'अस्मात्' विमनसः अभिभूतस्य भावः, "वैमनस्य" मनस्तापः तस्मात् [ हेतौ पञ्चमी ] उत्सवः प्रत्याख्यातः।

अये इति। 'इत एव' अस्यामेव दिशि [ सम्भ्रमोक्तिः। आद्यादिः ] 'अभिवर्त्तते' आगच्छति। 'स्वकर्म' आत्मकार्य्यम् 'अनुष्ठीयतां भवतीभ्याम्।

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतिहारी च )। कञ्चुकी ( राजानमवलोक्य )—अहो सर्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम्। एवमुत्सुकोऽपि प्रियदर्शनो देवः। तथाहि—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं

बिभ्रत् काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।

चिन्ताजागरणप्रताम्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६॥

(Then enter the King, dressed as in remorse, the Vidhushaka and the Warder).

CHAMBERLAIN (Beholding the king)—Oh! the loveliness of excellent features in all circumstances. Hence sire, is lovely though agitated. Thus, with special decorations discarded, wearing only one golden bracelet placed on his left forearm with the lower lip parched by sighs, with his eyes extremely distressed through care and vigil, he though wasted is not noticed as such owing to the virtue of his own lustre, like a great gem scratched by the polisher's file.

तत इति । पश्चात्तापस्य सदृश. वेषः सज्जा यस्य तथाविधः ।

कञ्चुकीति । 'अहो' विस्मये । 'आकृतिविशेष' अतिशय । उपचारात् तद्वान् । 'आकृतिविशेषाणां' विशिष्टाकृतीनां 'सर्वासु अवस्थासु रामणीयकं' रमणीयत्वम् [योपधलक्षणो वुञ्] । [ "रामणीयकम्" ( त-, न्या- ] "रमणीयत्वम् ( रा-, वि , म- ] ॥ 'एवम् इत्यम् 'उत्सुकोऽपि उन्मना अपि 'प्रियदर्शनो देवः' । अन्वयः—प्रत्यादिष्टविशेषमण्डनविधिः वामप्रकोष्ठार्पितम् एकमेव काञ्चनं वलयं बिभ्रत्, श्वासोपरक्ताधरः, चिन्ताजागरणप्रताम्तनयनः ( देवः ) क्षीणोऽपि संस्कारोल्लिखितो महामणिरिव आत्मनस्तेजोगुणात् न आलक्ष्यते । व्याख्या—'प्रत्यादिष्टः' परित्यक्तः 'विशेषेण मण्डनस्य' हारकेयूरकुण्डलादिभिरलङ्करणस्य 'विधिः' अनुष्ठानं येन तादृशः अतएव वामे प्रकोष्ठे मणिबन्धादूर्ध्वप्रदेशे 'अर्पितं' दत्तम् 'एकमेव काञ्चनं' सौवर्णं 'वलयं बिभ्रत् धारयन् निराभरणत्वे दोषं पश्यन् एकमात्रवलयं दधत् इत्यर्थः 'श्वासेन' शोकोत्थेन निःश्वासवायुना 'उपरक्तः' अतिरक्ततामापन्नः 'अधरो' यस्य तादृशः, 'चिन्तया' शकुन्तलागतया यत् 'जागरणं' रात्रौ अनिद्रा, तेन 'प्रताम्ते' अतिखिन्ने' [कर्त्तरिक्तः] 'नयने यस्य तथाविधो देवः एवं प्रजागरादिभिः 'क्षीणोऽपि' संस्काराय' अङ्गरागाय 'उल्लिखितः' उत्कीर्णः अतएव शाणघर्षणकृशः 'महामणिरिव' मणिराज इव, हीरक इव इत्यर्थः 'आत्मनस्तस्य 'तेजसो गुणात् प्रभावात् तेजस्वितया इत्यर्थः 'न आलक्ष्यते' क्षीणतया न परिज्ञायते । [ "प्रकोष्ठार्पित" ( रा-, वि-, म- )—"प्रकोष्ठे श्लथ" ( त-, न्या- )

"आसौपरक्त:" ( रा-, त-, न्या-, )—"श्वासापरक्त:" ( वि-, म- ) ॥ "प्रताम्र" (रा-, वि-,—"प्रताम्' ( ता-, न्या, म- ) ॥ "तेजोगुणात्" ( रा-, वि-, म-, )—"तेजोगुणै: ( म-, न्या- ) ] ॥

## NOTES

1. पश्चात्ताप &c.—पश्चात् means पश्चाज्जात: । तादृश: तापो यस्य स पश्चत्ताप: penitent. Or पश्चात् ताप: पश्चात्ताप: कर्मधा—। तेन or तस्य सदृश: । तादृशो वेषो यस्य । बहु— ।

2. रामणीयकम्—रम + णिच + अनीयर् कर्त्तरि बाहुलकात् = रमणीय: lovely. अनीयर is usually attached in the कर्म or भाववाच्य । Here by the rule "कृत्यलुटो बहुलम्" we have it कर्त्तरि । Then रमणीयस्य भाव: इति रमणीय + वुञ् । It is more poetic.

3. (a) प्रत्यादिष्ट &c.—विशेषेण मण्डन विशेषमण्डनम् । तस्य विधि: &c. See Tika. (b) वाम: प्रकोष्ठ: । तत्र अर्पित: । It is difficult to see why वाम and not दक्षिण is chosen (c) एकम—Sakuntala too wears only one bracelet when love-sick (Act III) (d) श्वासेप &c.—उपरक्त is deep red. अपरक्त means colourless. But hot breath is likely to deepen the colour. उपरक्त therefore seems better. Prof, Gajendragadkar prefers अपरक्त । Against उपरक्त and for अपरक्त he remarks—"Kalidasa does not believe that hot breath deepens the colour". In support he cities "नि:श्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम्" from Meghaduta. This does not seem to offer much support. भिन्नवर्ण rendered विच्छाय by Mallinath, is not necessarily अपरक्त । Even conceding that Kalidasa wants to have colourlessness here अपरक्त is not a happy word to express it. अपरक्त Primarily means bloodless. Colourlessness has to be inferred here from bloodlessness, This is against nature. It is colourlessness which people observe and thence thy infer bloodlessness. But let that go. In a case like this any one would prefer a direct statement than inference. अपराग would serve the purpose very well. श्वासापरागाधर: keeps the metre intact improves the diction and avoids the word रक्त in the

sense of blood which is rare with Kalidasa. Indeed everything seems to go against and nothing in favour of the reading अपरक्त। (e) चिन्ता &c.—प्र + तम( = ग्लानि) + क्त कर्त्तरि = प्रतान्त distressed. प्रताम्र deeply copper coloured. Slightly copper-coloured eyes are a महापुरुषलक्षण—c. f. 'रक्ताक्षो दुन्दुभिस्वनः''—Ramayana. Prof. G mis-understands me, I do not reject the reading प्रताम्र। My 'sightly' and 'deeply' simply note the change. Both प्रतान्त and प्रताम्र suit the context and are good.

सानुमती ( राजानं विलोक्य )—ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला किलम्मदि [ स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लाम्यति ]।

SANUMATI (Beholding the king)—Rightly indeed does Sakuntala though disgraced by rejection pine for this person.

राजा ( ध्यानमन्दं परिक्रम्य )—

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥ ७ ॥

KING—(Going round the stage slowly in deep meditation)—Previously asleep though being roused by my fawn-eyed darling for remorse has this wretched heart now awaken.

सानुमतीति। 'प्रत्यादेशेन' प्रत्याख्यानेन 'विमानिता' अवमानिता 'अपि शकुन्तला अस्य' दुष्यन्तस्य 'कृते' दुष्यन्तार्थम् इत्यर्थः [ कृते इत्यव्ययम्] 'क्लाम्यति' दुःखं भजते इति 'स्थाने खलु' युक्तमेव [''युक्ते द्वे साम्प्रतं स्थाने'' इत्यमरः]। अर्हा नुरूपम् इति भावः।

राजेति। 'ध्यानेन' चिन्तया मन्दं' मन्थरं यथा तथा 'परिक्रम्य'। अन्वयः—प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् इदं हतहृदयं सम्प्रति अनुशयदुःखाय विबुद्धम् ॥ व्याख्या—''प्रथमं 'पूर्वं' प्रत्यादेशकाले 'सारङ्गस्य' मृगस्य अक्षिणी इव अक्षिणी नयने यस्या तया विधया मृगलोचनया [''सप्तम्युपमान—'' इति बहुव्रीहिः। स्वाङ्गात् षच्। षित्वात् ङीष ] प्रियया शकुन्तलया 'प्रतिबोध्यमानमपि' आगदमानमपि 'सुप्तं' निद्रितम् 'इदं मे 'हतं' निन्दितं 'हृदयं' मानसं सम्प्रति' अधुना 'अनुशयस्य' पश्चात्तापस्य

["अनुशयो द्वेषो पश्चात्तापानुबन्धयोः" इति मेदिनी ] यत् दुःखं तदर्थं [ तादर्थ्ये चतुर्थी ] विबुद्ध" जागरितम्। कर्तव्ये जागरणे नैव जागरितम्, अकर्तव्ये तस्मिन् जागरितम् इति दुष्टता हृदयस्य। तदाह—हतहृदयमिति।

## NOTES

1. (a) सारङ्गाक्ष्या = With such eyes she was incapable of guile. Hence उचित आसीत् प्रतिबोधः। (b) प्रियया—She was my darling अतः स्वापोऽनुचित आसीत्। (c) *प्रतिबोध्यमानम् &c.—Slept though aroused. प्रिया सा तथापि सुप्तम् अधश्च स्वयमबुद्धम्, प्रतिबोधितमपि न विबुद्धम्। This is what happened in the first ( प्रथम ) instance. But the wretched thing does not continue to sleep. Now ( सम्प्रति ) it is विबुद्धम् and for what ? अनुशयदुःखाय। This is the climax of perversity ( हतहृदयम् )।

सानुमती—णं ईदिसाणि तवस्सिणीए भाअहेआणि [ ननु ईदृशानि तपस्विन्या भागधेयानि ]।

SANUMATI—Well, such is her destiny—poor thing.

विदूषकः ( अपवार्य )—लङ्घिदो एसो भूओवि सउन्दलावाहिणा। ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति [ लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना। न जाने कथं चिकित्सितव्यो भविष्यतीति ]।

VIDUSHAKA (Aside)—Yet again he is overcome by the Sakuntala-sickness. I do not know how he is to be treated.

कञ्चुकी (उपसृत्य)—जयतु जयतु देवः। देवः प्रत्यवेक्षिताः प्रमदवनभूमयः। यथाकाममध्यास्तां विनोदस्थानानि देवः।

CHAMBERLAIN (Advancing)—Prosper, let sire prosper ! Sire, the grounds of the pleasure-grrden have been inspected. Let Sire occupy the sites of recreation at pleasure.

---

* Adopted Prof. by Gajendragadkar.

सानुमतीति। 'तपस्विन्या' दीनायाः अनुकम्प्यायाः वा शकुन्तलायाः [ "तपस्वी तापसे दीने" इति हैमः। "अनुकम्प्योस्तपस्वी स्यात्" इति त्रिकाण्डशेष ] 'भागधेयानि भाग्यानि 'ईदृशानि ननु'। दीनां प्रति वामे विधौ एवमसदृशमनुभूत इत्यर्थः।

विदूषक इति। 'एषः भूयोऽपि शकुन्तलाजनितेन शकुन्तलानिमित्तेन वा व्याधिना' रोगेण [ शाकपार्थिवादिः ] 'लङ्घितः' अभिभूतः। 'कथं' केनोपायेन 'चिकित्सितव्यः' प्रतिकर्त्तव्यः 'भविष्यति इति न जाने' [ कित इत्यस्मात् व्याधिप्रतिकारार्थे स्थितात् स्वार्थे सन्, ततः तव्यः कर्मणि ]।

कञ्चुकीति। 'प्रमदवनस्य भूमयः' ते ते प्रदेशाः 'प्रत्यवेक्षिताः' निपुणदर्शनेन अनीप्सितापसारणात् शोधिताः [ "कार्येष्वनविशोधनमादौ" इत्युक्तेः ]। 'विनोदस्थानानि' रम्यास्तास्ता भूमयः 'यथाकाम'स्वेच्छया, निर्भयम् इत्यर्थः अध्यास्ताम्' अधितिष्ठतु 'देवः' [ "अधिशीङ्स्थासां कर्म" इत्यधारस्य कर्मता ]।

NOTES

1. चिकित्सितव्यः--कित व्याधिप्रतीकारे + सन स्वार्थे + तव्य कर्मणि। The सन् is attached स्वार्थे not इच्छार्थे by the rule "गुप्तिज्किद्भ्यः सन" on which the Vritti remarks—"निन्दाक्षमाव्याधिप्रतिकारेषु सन्निष्यते, अन्यत्र यथाप्राप्तं प्रत्यया भवन्ति"। Hence when कित means 'to remedy, a disease' ( व्याधिप्रतिकार ) it takes सन् स्वार्थे otherwise not. Here Bhattoji differs slightly and gives a few other senses also.

राजा—वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि—चिरप्रबोधान् न सम्भावितमस्माभिरद्य धर्मासनमध्यासितुम्। यत् प्रत्यवेक्षितं पौरकार्यमार्येण तत् पत्रमारोप्य दीयतामिति।

KING—Vetravati tell my minister the noble Pisuna in my words this— Through late rising it is not possible for me to occupy the judgment-seat today. Let the affairs of the citizens that have been examined by his noble self be forwarded after they have been put on paper."

प्रतीहारी—जं देवो आणवेदि [ यत् देव आज्ञापयति ]। ( निष्क्रान्ता )।

WARDER—What sire commands. (Exit).

राजा—वातायन, त्वमपि स्वं नियोगमशून्यं कुरु।

KING—Vatayana, you too do not vacate your place.

कञ्चुकी—यदाज्ञापयति देवः। (निष्क्रान्तः)।

CAAMBERLAIN—As Sire commands, (Exit).

राजेति। 'मद्वचनात्' मद्वचनमालम्ब्य [ल्यब्लोपे कर्मणि पञ्चमी] 'आर्य्यं माम्य' पिशुनं' तदाख्याम 'अमात्य' मन्त्रिणं 'वृद्धि'—चिरं च' दीर्घकालेन प्रबोधात्' जागरणात्, वेलातिक्रमादित्यर्थः 'अद्य अस्माभिः धर्मासन'' विचारासनम् 'अध्यासितुम्' आरोढुं 'न सम्भावित' धर्मासनारोहणमसम्भवमित्यर्थः [अलमर्थयोगात् तुमुन्]। 'पवमारोप्य' पवस्थं कृत्वा [अधिकृत्ः कर्म कृत्वा] दीयताम्।

वातायनेति। 'स्वं'' नियोगम्' आत्माधिकरणम्, अन्तःपुररक्षाकर्म इत्यर्थः 'अशून्यं कुरु' स्वोपस्थित्या पूर्ण'' विधेहि।

NOTES

1. (a) सम्भावितम्—सम + भू + णिच् + क्त कर्मणि। Primarily it means पूजित; thence युक्त, समर्थ &c. (b) अध्यासितुम्—तुमुन् is in connection with सम्भावित which is अर्होर्थ or अलमर्थ। Or after the भाष्यकार by the maxim "अव्ययकृतो भावे" we have अध्यासितुम् = अध्यासनम् and धर्मासनम् अध्यासितम्—धर्मासनस्य अध्यासनम्। The construction then is अस्माभिः धर्मासनस्य अध्यासनम् न सम्भावितम्।

2. वातायन &c—Vatayana is the name of the कञ्चुकिन्। त्वमपि &c. occurs also in Act. II,

विदूषकः—किदं भवदा निम्मच्छिअं। सम्पदं सिसिरादवच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि [कृतं भवता निर्मक्षिकम्। साम्प्रतं शिशिरातपच्छेदरमणीये अस्मिन् प्रमदवनोद्देशे आत्मानं रमयिष्यसि]।

VIDUSHAKA—You have rendered the place free of flies even. You will now soothe thyself in this region of the

pleasure garden which is lovely in the interval between winter and summer.

राजा ( निःश्वस्य )—वयस्य यदुच्यते रन्ध्रोपनिपातिनोऽनर्था इति तदव्यभिचारि वचः। पश्य—

मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः॥ ८॥

KING—(Sighing)—Friend, that is an unfailing statement which is expressed by - Unwelcome things crowd at loopholes Behold—O friend this mind of mine too is left by the gloom that obstructed the recollection of the wooing of the sage's daughter the shaft of the mango-blossom too is placed on the bow by Cupid about to strike

विदूषक इति। भवता निर्मक्षिकं कृतम्' इति व्याख्यातं प्राक्। इतरे जना त्वया अपसारिता इत्यर्थः। 'साम्प्रतम्' अधुना [''साम्प्रतन्त्विदानीमधुना'' इति हैम.] 'शिशिरः' शीतः, आतपो ग्रीष्मः इति द्वौ ऋतू। तयोः 'छेदः' अन्तरालं वसन्त इति यावत्। तस्मिन् 'रमणीये' पुष्पपल्लवोद्गममनोहरे। यद्वा 'शिशिरस्य आतपस्य च छेदात् अभावात् 'रमणीये' मनोहरे 'अस्मिन् प्रमदवनस्य उद्देशे' प्रदेशे आत्मानं रमयिष्यसि'। रम्याणि कुसुमानि रम्याणि च पल्लवानि दृष्ट्वा विनोदं लप्स्यसे इत्यर्थः।

राजेति। 'अनर्थाः' अनिष्टानि 'रन्ध्रे' छिद्रे दुःसमये इत्यर्थः 'उपनिपतन्ति' समीपस्था भवन्ति 'इति यदुच्यते' लोकैः 'तत् वचः' वाक्यम् अविद्यमानो व्यभिचारः अनित्यता यस्मिन् तादृशम् इत्यर्थः [न व्यभिचरतीति णिनिः]। सदैव सत्यं तद्वचनम्।

अन्वयः—हे सखे मुनिसुताप्रणयस्मृतिरोधिना तमसा मम इदं मनो मुक्तञ्च, प्रहरिष्यता मनसिजेन धनुषि चूतशरो निवेशितश्च। व्याख्या—हे 'सखे पश्य तस्य वचसो नित्यतामवलोकय। 'मुनेः' कण्वस्य 'सुतायां शकुन्तलायां यः प्रणयः' अभिलाषः तद्विषयिणी प्रार्थना इत्यर्थः तस्य या 'स्मृतिः' तां 'रुणद्धि' यत् तेन स्मृतिलोपिना 'तमसा' मोहेन 'मम इदं मनः मुक्तञ्च त्यक्तञ्च, इत्येकोऽनर्थः, तत्क्षणमेव 'प्रहरिष्यता' प्रहर्तुमिच्छता 'मनसिजेन' आत्मभुवा कामेन [बहुलग्रहणात् अलुकि मनसिजः।

कश्चिद् किं मनोज इत्यपि ] 'धनुषि चूतशरः' आम्रमुकुलाख्यः पञ्चाभ्यधिको बाणः 'निवेशितश्च' योजितश्च द्वौ चकारौ यौगपद्यं गमयतः। यदि मूढ़ एव तिष्ठेयं कोऽप्यनर्थो न स्यात्। प्रबुद्धोऽधुना दुःखमनुभवामि इत्येकोऽनर्थः। तदैव दुःखवर्धयन् प्राप्तो वसन्त इति द्वितीयस्तावानर्थः। तदव्रवीमि अव्यभिचारि वच इति।

NOTES

1. (a] कृत भवता &c.—See Act II. (b) शिशिर &c.—We take छेद—interval, Raghava explains नात्यत्यन्तं शिशिर नात्यातपः" taking छेद = cessation.

2. रन्ध्र &c —Compare "छिद्रेष्वनर्था बहुलीभवन्ति"।

3. मुनिसुता &c.—मुनेःसुता। तस्यां प्रणयः। तस्य स्मृतिः। तां साधु करु तु इति माधुकारित्व विधानः।

विदूषकः—चिट्ठ दाव याव इमिणा दण्डकट्ठेन कन्दप्पबाणं णासेमि [तिष्ठ तावत् यावदनेन दण्डकाष्ठेन कन्दर्पवाणं नाशयामि] ( दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति )।

VIDUSHAKA—Well wait till I destroy Cupid's arrow with this staff (Raising his staff wishes to bring down mango-blossoms)

G. N.

राजा ( सस्मितम् )—भवतु दृष्टं ब्रह्मवर्चसम्। सखे क्वोपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विलोभयामि।

KING ( With a smile )—Very well, the Brahmanical prowess is seen Friend, where seated shall I regale my sight among the creepers that slightly imitate my darling ?

विदूषकः— णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा माहवीमण्डवे इमं वेलं अदिवाहिस्सं, तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहि त्ति [ ननु आसन्नपरिचारिका चतुरिका भवता संदिष्टा—माधवी-

मण्डपे इमां वेलाम् अतिवाहयिष्ये, तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिम् आनय इति[1]।

VIDUSHAKA—Well you have told your maid at hand Chaturika this—I will pass this part of the day in the Madhavi-bower; bring there the portait of her ladyship Sakuntala which is on the painting board drawn with my own hand.

विदूषक इति। 'यावत्' यत्कालम् 'अहमनेन दण्डस्य' मदीयाया यष्टेः 'काष्ठेन कन्दर्पस्य वाणं 'नाशयामि तावत्' तत्कालं 'तिष्ठ' स्थिरो भव।

राजेति। 'ब्रह्मणो' 'ब्राह्मणस्य' 'वर्चः' तेजः [ "तेजः पुरीषयोर्वर्चः" इत्यमरः ] 'ब्रह्मवर्चसं' ब्रह्मतेजः [ अच् समासान्तः ] तत् 'दृष्टं' विदितं मे तत्स्वापनेनालम् बहुपहासः। सखे क 'उपविष्टः' सन् प्रियायाः किञ्चित् ईषत् न सम्यक् अनुकारिणीषु' तत्सदृशीषु [ तात्कालिक्यामिति ] 'लतासु दृष्टिं' विलोभयामि विमोहयामि दर्शनसुखमनुभवामि। दर्शनात् स्मृतिः ततः सुखमिति द्रष्टव्यम्।

विदूषक इति। 'ननु' आक्षेपे। 'आसन्ना' समीपवर्तिनी 'परिचारिका' चेटी। 'चतुरिका' इति परिचारिकानाम। इमां वेला' प्रातःकालम् 'अतिवाहयिष्ये'। 'चित्रस्य फलकः पट्टः चित्रलेखनपट्ट इत्यर्थः तं 'गतां' चित्रफलकस्थां 'स्वहस्तेन लिखिताम्। सादृश्यदर्शने लतासु प्रतिकृतिदर्शने फलके इति परमं विरहिरमणं माधवीमण्डपे भविता इतिभावः।

## NOTES

1\. (a) यावत्-तावत्—These here refer to the instant when the arrow is destroyed Hence being असत्त्ववचन' they are अव्ययs। (d) नाशयामि—Present for the future by the rule "यावत्पुरा निपातयोर्लट्" as seen before.

2\. ब्रह्मवर्चसम्—The अच् as a समासान्त is guided here by the rule "ब्रह्महस्तिभ्यां वर्चसः" giving ब्रह्मवर्चस instead of ब्रह्मवर्चस्। (c) विलोभयामि—वि + लुभ (विमोहने) + णिच् लट् मिप्। विमोहन is आकुलीकरण to disturb. Sight (दृष्टि) being disturbed will be deceived by

the resemblance with Sakuntala and feel the pleasure of actually seeing her. Sanskrit writers mention four means of solace left to the विरहिन् in the absence of the beloved, viz, (1) sight of objects that resemble the beloved. (2) sight of portrait of the beloved. (3) meeting in dreams. (4) touch of thing that approach after contact with the beloved. Thus the सुधासारा quoted by Mallinatha under Raghu VIII. 92— "वियोगेऽयोगे वा प्रियजनसदृशानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः॥" Here the first of these four is mentioned सादृश्यदर्शन। See also Tika and Meghaduta, sl. 89.

3. प्रतिकृतिम् आनय—This refers to the second means of solace— प्रतिकृतिदर्शन। अतिवाहयिष्ये—"विवस" इत्यात्मनेपदम्।

राजा— ईदृशं हृदयविनोदस्थानम्। तत्तमेव मार्गमादेशय।

KING—Such now are the means of my heart's diversion. So show me that very way.

विदूषकः—इदो इदो भवं (इत इतो भवान्)।

VIDUSHAKA—This way your Highness this way.

(उभौ परिक्रामतः—सानुमत्यनुगच्छति)। विदूषकः—एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उवहाररमणिज्जदाए अ साअदेण विअ पडिच्छदि तुमं! ता पविसिअ णिसीदटु भवं [एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया च स्वागतेन इव प्रतीच्छति त्वाम्। तत् प्रविश्य निषीदतु भवान्]। (उभौ प्रविश्योपविष्टौ)।

(The two go round the sage—Sanumati follows).

VIDUSHAKA—Here the Madhavi-bower, being provided with a rock crystal-slab and owing to the loveliness of its offerings receives you with welcome as it were. So having entered you sit down. (Both enter and are seated).

राजेति । 'ईदृशं' 'सादृश्यप्रतिकृतिदर्शनात्मकम् । 'हृदयस्य' तस्य हृदयस्य 'विनोदस्थानं खेदोपशमोपायःस्यात् । 'तमिव मार्गं माधवीमण्डपमार्गम् 'आदेशय' दर्शय ।

विदूषक इति । 'एष माधव्याः लतायाः 'मण्डपः मणिशिलायाः मणिमयशिलायाः 'पट्टकेन' फलकेन 'सनाथः' युक्तः सन् 'उपहारस्य' उपायनस्य लतया आत्मनः कुसुमाद्यैः 'रमणीयतया च' माधुर्येण च हेतुना 'स्वागतेन' शोभनागमनं ते, इत आगम्यताम् अत्र कुसुमसौरभमनुभूयताम्, इति स्फुटेन वचसा 'त्वां प्रतीच्छति इव' प्रत्युद्गमनं च सम्भावयति इव । 'तत्' तस्मात् 'प्रविश्य निषीदतु' उपविशतु भवान् ।

NOTES

1. *ईदृशम्—The original ( शकुन्तला ) is lost, and I have to divert myself with her resemblance in creepers and her image in the canvas. In such (ईदृशम) now lies my solace. Of the four ways of diverting one's attention in the absence of the beloved the pcet here speaks of the first two only and ignores the third and the fourth. The reasons are (i) The third - meeting in a dream—is not available because as he explains later he cannot sleep at all ( प्रजागरात् खिलीभूतः &c ) (ii) The fourth is not possible because he has no knowledge of her whereabouts.

Here Prof. Gajendragadkar takes ईदृशम as refering to the माधवीमण्डप । In that case इदम is the right word not ईदृशम् । Besides that ignores the pcet's art in such cases. Thus here two means are available and the poet speaks of two only In the case of Aja after the loss of Indumati three are available and the pcet mentions the three ( सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च" ) ! While speaking of the यक्ष separated from his beloved all the four are mentioned because all are available. Thus सादृश्य in 'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातम्' etc.—(U. Megha 43) प्रतिकृति in "त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्" etc.—(U. Megha 44) स्वप्नसमागम in "मामाकाशप्रणिहितभुज'

* Adopted by Prof. Gajendragadkar.

-निद्दिष्टाशुचहितो: (U. Megha 45), कल्पवृक्ष in "भित्त्वा सद्यः किसलय-पुटान् देवदारुद्रमाणाम्' etc (U. Megha 46) and the four occur in four successive verses which is significant.

The तत् following ought not to present any difficulty and is easily explained thus—सादृश्य and प्रतिकृति will comfort me and you say the प्रतिकृति will be taken to the Madhavi bower so (तत्) lead me there. Some say माधवी is a variety of Jasmine.

2 (a) मणिशिला etc.—पट्ट एवपट्टकः। मणिमयी शिला मणिशिला। नाथेन सह सनाथ. provided with a protector. The secondary sense is युक्त provided with, मणिशिलाया: पट्टकः। तेन सनाथः &c. उपहार etc. —The creeper is in blossoms. The blossoms are supposed to be so many bouquets presented (उपहार) to the king by the bower.

3. (a) स्वागतेन इव—करणे तृया। The words "स्वागतं ते" are of course not heard but from the nice presents and the inviting crystal slab the bower seems as if it has actually pronounced them. (b) प्रतीच्छति—प्रति + इष means here 'to recive."

सानुमती—लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिदिं तदो से भत्तुणो बहुमुहं अणुराअं निवेदइस्सं (लतासंश्रिता द्रक्ष्यामि तावत् सख्याः प्रतिकृतिम्। ततस्तस्यै भर्तुर्बहुमुख-मनुरागं निवेदयिष्यामि) (तथा कृत्वा स्थिता)।

SANUMATI—Betaking to this creeper I will see my friend's picture, I will then report to her, husband's over-flowing affection. (Stands having done as described)

राजा—सखे, सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथम-वृत्तान्तम्। कथितवानस्मि भवते च। स भवान् प्रत्यादेश-समये मत्समीपगतो नासीत्। किन्तु पूर्वमपि न त्वया

कदाचित् सङ्कीर्तितं तत्रभवत्या नाम। कच्चिदहमिव विस्मृतवानसि त्वम्।

KING—Friend, I now remember the whole early history of Sakuntala. I related it to you also. That self of thine was not present with me at the time of her repudiation. But even before, her lapyship's name was never mentioned by you. Could it be, that, like me, you forgot it?

सानुमतीति। 'लता लतायां वा संश्रिता' आश्रिता लतालीना भूत्वा। 'बहूनि मुखानि यस्य तादृशं, शतधारं स्रवन्तमित्यर्थः 'अनुरागम्' इति।

राजेति। 'शकुन्तलायाः प्रथमवृत्तान्तम्' आश्रमे परिचयादिकम्। 'सः' विदितसर्ववृत्तान्तो 'भवान् प्रत्यादेशस्य' परित्यागस्य 'समये' हंसपादिकासकाशं प्रेषितः मत्समीपगतो नासीत्। समीपे यदि भवानभविष्यः नूनं मामबोधयिष्यः। 'किन्तु पूर्वमपि' प्रत्यादेशात् प्रागपि 'त्वया कदाचित् तत्रभवत्याः' शकुन्तलायाः 'नाम न सङ्कीर्तितं' सम्बन्धितम् उच्चारितम्। 'कच्चित्' इह प्रश्नमात्रे। त्वमपि विस्मृतवान् किम् अन्यथा कथम् ईदृशं मौनम्।

NOTES

1, (a) मत्समीप &c.—Vidushaka was sent to Hamsapadika just before Sakuntala's arrival before the king (see Act V.) This assures प्रत्याख्यान and prepares for all these scenes. (b) भवते—इति सम्प्रदाने ४र्थी।

विदूषकः—न विसुमरामि। किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं परिहासविजप्पओ एसो ण भूदत्थो त्ति। मए वि मिप्पिण्डबुद्धिणा तह एव्व गहिदं। अथवा भविदव्वदा क्खु बलवदी [ न विस्मरामि। किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया भणितं परिहासविजल्प एष न भूतार्थ इति। मया अपि मृत्पिण्डबुद्धिना तथा एव गृहीतम्। अथवा भवितव्यता खलु बलवती ]।

VIDUSHAKA—I do not forget. But having told all, it was again remarked by you, at the end that this was a story in joke, not truth; and by me, with an intellect like a lump of clay, it was indeed taken as such. Or, verily, destiny is powerful.

सानुमती—एव्वं ण्णेदं ( एवं नु एतत् ) ।

SANUMATI—So it is indeed.

राजा—( ध्यात्वा ) - सखे त्रायस्व माम् ।

KING—(Meditating)—Friend, save me !

विदूषक इति । 'अवसाने' वाक्यशेषे । 'परिहासेन' परिहासस्य वा विजल्पः, विविधो जल्पः मिथ्यारचना 'एव न भूतः' सत्यः 'अर्थः । 'परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः'' इति 'भणित' कथितम् त्वया ( द्वितीयाङ्के )। 'मृद्पिण्डः' चयः इव तत्त्वदर्शनविमूढा 'बुद्धिः यस्य तथाविधेन जड़मतिना 'मया अपि तथैव परिहासविजल्परूपेणैव, 'गृहीतं' ज्ञातम् । 'अथवा पश्चात्तरे किमनया पर्यालोचनया । अत्र विषये 'भवितव्यता' अवश्यम्भावरूपपदार्थस्य शक्तिः 'बलवती खलु' । एवमेव भवितव्यमित्येवं भूतम् ।

सानुमतीति । 'एतत्' अत्रालोच्यमानं वस्तु एवं नु' इदृशमेव, भवितव्यतानिबन्धनमेव ।

NOTES

1. भवितव्यता—भू + तव्य भावे = भवितव्यम् sure happening. तस्य भावः inevitability, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" ; hence भवितव्य is द्रव्यवत् and as such, there is no incongruity in attaching a भावतद्धित to it. This thing was predestined to happen, and it has happened Cp —"नियतिः खलु प्रतीप गच्छति' ।

विदूषक—भो किं एदं । अनुववण्णं क्खु इदिसं तुह । कावि सप्पुरिसा सोअवत्तव्वा ण होन्ति णं पमादे वि णिक्कम्पा गिरीओ [ भोः किमेतत् । अनुपपन्नः खलु ईदृशं

त्वयि। कदापि सत्पुरुषा शोकवास्तव्या न भवन्ति। ननु प्रवातेऽपि निष्कम्पा गिरयः ]।

VIDUSHAKA—Hullo; What is this? Such is really un-becoming in thee Good (Wise) men never become the abode of grief. Mountains are certainly quiverless even in a high gale.

राजा—वयस्य, निराकरणविक्लवायाः प्रियायास्तामवस्था-मनुस्मृत्य बलवदशरणोऽस्मि। सा हि—

इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्॥ ८॥

KING—Friend, recollecting that state of my darling distressed by repudiation, I have become utterly helpless.

Through disowning from hence, she indeed attempted to follow her own people, but stopped on her father's disciple—her father's equal—loudly shouting out 'Stay''—and again cast on my cruel self her look disturbed by the flow of tears. It is all this that burns me like a poisoned shaft.

विदूषक इति। 'ईदृशम्' एवंप्रकारकं वस्तु, कातरभावः इत्यर्थः 'त्वयि ह्यनुपपन्नं खलु' अयुक्तमेव। 'सत्पुरुषाः' साधवः कदापि' महत्यपि' व्यसने इति यावत् 'शोकस्य वास्तव्याः' वासस्थानानि [ बाहुलकादधिकरणे तव्यत्। आदिवृद्धिः ] 'न भवन्ति'। 'प्रवातेऽपि' प्रकृष्टेऽपि वाते गिरयो निष्कम्पा ननु' स्थिरा एव।

राजेति। 'निराकरणेन' प्रत्याख्यानेन 'विक्लवायाः', विह्वलयाः 'प्रियायाः' शकुन्तलायाः 'ताम्' अतिदीनाम् इत्यर्थः 'अवस्थाम् अनुस्मृत्य' ध्यायन् 'बलवत्' अत्यर्थम् 'अशरणः' निराश्रयः विह्वलः 'अस्मि'। अन्वयः—इतः प्रत्यादेशात् हि सा स्वजनमनुगन्तुं व्यवसिता, गुरुसमे गुरुशिष्ये तिष्ठ इति उच्चैः वदति सति स्थिता बाष्पप्रसरकलुषां दृष्टिं पुनः क्रूरे मयि अर्पितवती—(इति) यत् तत् सविषम् शल्यमिव मां दहति। व्याख्या

इतः मम समक्षं यः 'प्रत्यादेशः' निराकरणं तस्मात् हेतोः स्व-

शार्ङ्गरवादिकम् 'अनुगन्तुम्' अनुयातुं 'व्यवसिता' उद्युक्ता । ततः 'गुरुणा'

सगोत्रेण समं' तुल्ये 'गुरोः शिष्ये' कण्वे शार्ङ्गरवे [भावे ७मी] 'तिष्ठ' विरम अनु-

गमनात् 'इति उच्चैः' गभीरं 'वदति' सति 'स्थिता' गमनात् विरता 'बाष्पाणां नेत्र-

जलानां 'प्रसरः' प्रवृत्तिः तेन 'कलुषाम्' आविलां 'दृष्टिं' पुनः' भूयोऽपि 'क्रूरे' निष्ठुरे

'मयि अर्पितवती' मामशरणां प्रति सानुक्रोशा वाधुना इति जिज्ञासया दत्तवती ।

'इति' सर्वं 'यत् सविषं' विषदिग्धं 'शल्यं' शङ्कुः इव 'मां दहति' सन्तापयति ।

मत्तश्च्युता स्वान् गेता, तैरपि त्यक्ता पुनर्मामेव प्राप्ता सा, क्रूरस्तु तथापि विमुख एव

आसम् । अद्य पुनस्तत्सर्वं स्मृत्वा अशरणोऽहम् इत्याशयः । [ "प्रत्यादेशात ( रा-
वि- म-, )—"प्रत्या दृष्टा" ( त-, न्या- ) ॥ "स्थिता" ( त-, न्या- )—"मुहुः" (रा-,
वि-, म- ) ॥ "प्रसर" ( रा-, वि- ) "प्रकर" ( त-, न्या-, म- ) ] ॥

## NOTES

1. शोकवास्तव्याः—उष्यते एषु इति वस + तव्यत अधिकरणे बाहुलकात्—वास्तव्याः abode. We note that वास्तव्य is allowed in the कर्तृवाच्य only by the Varttika "वसेस्तव्यत् कर्तरि णिच्च"—वस may take तव्यत् in the कर्तृवाच्य and then it will act as if it had dropped च i. e. it will cause आदिवृद्धि । But then वास्तव्य will mean that which resides i. e. resident. It thus becomes a विशेषण of शोक and if we make a बहुव्रीहि with the वाक्य—शोको वास्तव्यो येषु the compound will be वास्तव्यशोक instead of शोकवास्तव्य । It seems better to appeal to the rule "कृत्यल्युटो बहुलम्" by which a form which is sanctioned in any given वाच्य with a कृत्य or ल्युट् may be used in any other वाच्य in accordance with शिष्टप्रयोग "कृत्यसंज्ञकाः प्रत्यया ल्युट् च बहुलमर्थेषु भवन्ति यत्र विहितास्ततोऽन्यत्रापि भवन्ति"—Vritti. We may then have वास्तव्य in the अधिकरणवाच्य । शोकस्य वास्तव्याः । Raghava reads शोकवक्तव्याः and explains "शोके जाते अन्येन वक्तव्या न भवन्ति" which is hardly satisfactory. Cf. "सुलभपर्यवस्थानानि महापुरुषहृदयानि"—Swapana Vasavadatam II.

2 (a) इतः—अपादाने पञ्चमी । पञ्चम्यास्तसिल् । (b) प्रत्यादेशात्—हेतौ पञ्चमी । The reading—प्रत्यादिष्टा requires इतः to have तसि in तृतीया ।

स्त: अनेन जनेन मया स्वयं: प्रत्यादिष्टा चिरात्तता । तथि in तृतीया may be defended by classing स्त: with चादि words. But स्त: already occurs in the list with तथि in the सप्तमी as in "प्रयुक्तमप्यस्त्रमितो वृथा स्यात्"। We may have it in तृतीया or सप्तमी but not with both. This is why प्रत्यादिष्टा is rejected, though otherwise it is an excellent reading that give a perfect picture of the "अवस्था" in order of time. Thus first प्रत्यादिष्टा then व्यवसिता next स्थिता and lastly अर्पितवती । (c) व्यवसिता—वि + अव + सो + क्त = कर्त्तरि attempted. (d) स्थिता—मुहु: is not perhaps a happy reading. For गुरुसमी implies obedience and immediate attention to his commands. But मुहु: seems to indicate that his command had to be repeated several times before it was obeyed. The two are not consistent.

3. बाष्प &c.—प्रकर for प्रसर is sanctioned by Bhoja. प्रकरणम् इति प्र + कृ + अप् भावे = प्रकर: scattering, cellection, hence समूह: । बाष्पाणां प्रकर: a flood of tears &c. See also Tika.

सानुमती—अम्महे ईदिशी सकज्जपरदा । इमस्स संदावेण अहं रमामि [ अम्महे ईदृशी स्वकार्य्यपरता । अस्य सन्तापेन अहं रमे ] ।

SANUMATI—Ah ! such is devotion to self-interest ' I am pleased by his affliction.

विदूषक:—भो अत्थि मे तक्को केण वि तत्तहोदी अआस-चारिणा णोदेति [ भो: अस्ति मे तर्क: केनापि तत्रभवती आकाशचारिणा नीतेति ] ।

VIDUSHAKA—Well, I have a guess that her ladyship was carried off by some aeronaut

सानुमतीति । 'स्वकार्य्यपरता' स्वार्थनिष्ठता 'ईदृशी' एतादृशी भवति । तदेव दर्शयति—'अस्य' राजर्षे: 'सन्तापेन' दु:खेन 'अहं' 'रमे' सुखमनुभवामि । शकुन्तलाकृते अस्य दु:खमिव मे तोषाय । 'अम्महे' इत्याश्चर्ये । यदेकस्य दु:खं तदेवान्यस्य सुख-मित्याश्चर्यम् ।

सख्यास्ते जन्मप्रतिष्ठा इति श्रुतवानस्मि। तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते।

KING—Who else could dare touch one to whom the husband is a god? I have heard that Menaka is your friend's place of birth. My heart suspects that your friend was carried off by her companions.

सानुमती—सम्मोहो क्खु विह्मअणिज्जा ण पडिवोहो [सम्मोहः खलु विस्मयनीयः न प्रतिबोधः]।

SANUMATI—The delusion indeed is to be wondered at, nct tbe awakening.

विदूषकः—जइ एव्वं अत्थि क्खु समागमो कालेण तत्तहोदीए। [यद्येवम् अस्ति खलु समागमः कालेन तत्रभवत्या]।

VIDUSHAKA—If so, there is indeed union with her ladyship in time.

राजा—कथमिव।

KING—How so?

राजेति। 'मेनका किल' [किल इत्यैतिह्ये] 'ते सख्याः' शकुन्तलायाः 'जन्मप्रतिष्ठा' जन्मस्थानम् ["प्रतिष्ठा स्थानमात्रके" इति विश्वः] 'इति सखीमुखात् श्रुतवानस्मि'। 'तस्याः' मेनकायाः सहचारिणीभिः सखीभिः अप्सरोभिः 'ते सखी हृता

'भर्तुः' कः 'प्रतिदैवताम्' यस्याः तथाविधां पतिव्रतां न प्राप्स्यसि 'चन्द्रोपरागम्'... [illegible]।

भावानुमतोऽसि। ईदृशस्य अप्रतिमस्य जनस्य 'समीपं खलु' भवितव्यम् एव विस्मयनीयः विस्मययोग्यः 'न प्रतिबोधः'। प्रबुद्ध एवायं सदा, तदस्य ईदृशी यथार्थं बोधे को विस्मयः? किन्तु पुरायमप्रबुद्ध आसीत् इति विस्मयकरम् इति भावः।

## NOTES

1. (a) "प्रतिदैवताम्—It is supposed that by devotion to the husband a woman acquires a majesty that repels evil doers. (b) जनमप्रतिष्ठ —प्रति + स्था + अङ् अधिकरणे = प्रतिष्ठा seat स्थानम्। जनमनः प्रतिष्ठा।

2 कालेन—अपवर्गे तृतीया। Time can do anything with us it is always changing, cp—"उद्दामेव किशोरो नियतिः खलु प्रतीष्टं गच्छति" Mrichacha and घटयति विधिरभिमतम् आभमुखीभूतः"—Rat. etc. So union is possible in future.

विदूषकः—ण क्खु मादपिदरा भत्तुवियोगदुक्खिदं दुहिदरं चिरं देक्खिदुं पारेन्ति [न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं द्रष्टुं पारयतः]।

VIDUSHAKA—Certainly the father and the mother are unable long to see their daughter grieved by separation from her husband

राजा—वयस्य,

स्वप्नो नु माया नु मतिभ्रमो नु क्लिष्टं नु तावत्फलमेव पुण्यम्।
असंनिवृत्त्यै तदतीतमेते मनोरथानामतटप्रपाताः॥ १०॥

KING Friend that thing which has passed never to come back was a dream or a spell of magic or a hallucination, or again merit worn out with only that much of reward. These are the precipices for my wishes to drop from.

Adopted by Prof. Gajendragadkar.

विदूषक इति। 'माता' च 'पिता' च, भर्ता पत्नीसह 'वियोगेन' विरहेण 'दुःखितां दुहितरं द्रष्टुं न खलु पारयतः तस्मात् मेनका स्वयमेव उभयोः युवयोर्योगं विधास्यति।

राज्ञेति। अन्वयः—असन्निवृत्त्यै अतीतं तत् स्वप्नो नु, माया नु, मतिभ्रमो नु, तावत्फलमेव क्लिष्टं पुण्यं नु। हे वयस्य, एते मनोरथानाम् अतटप्रपाताः। व्याख्या —'न सन्निवृत्तिः' पुनरागमनम् 'असन्निवृत्तिः'। तस्यै, अपुनरागमाय 'अतीतं' गतं' तत् पूर्वानुभूतं शकुन्तलासमागमरूपं वस्तु स्वप्नो नु' वा [ नु इति विकल्पे ]। अथवा नाहं तदा सुप्तः कुतः स्वप्नः ? तस्मात् 'माया नु' केनचित् रिपुणा मयि प्रयुक्तम् ऐन्द्रजालं वा, किन्तु सर्वजनप्रियोऽहं नास्ति मे शत्रुः तत नेदं माया। भवतु तर्हि 'मतिभ्रमो नु' बुद्धिविकारो वा, तेन अतत्त्वे शकुन्तलाख्ये पदार्थे तत्त्वभ्रान्तिर्मे जाता। तथा चेत् स्याम् अधुना प्रसन्नायां मतौ मिथ्यारूपेण बोधो जायेत, न च पुनर्जायते। तत् अस्तु 'तावत्' तत्परिमाणं फलं यस्य तादृशमेव अतएव 'क्लिष्टं सम्प्रति क्षीणं 'पुण्यं' नु'। 'तेनाहं' तदा सत्यमेव शकुन्तलया मिलितः इदानीं प्रक्षीणे पुण्ये तया वियुक्तः। एवं चतुर्ष्वपि पक्षेषु तया पुनः समागमोऽसम्भवः। अतएव हे 'वयस्य एते' चत्वारः पक्षाः 'मनोरथानाम्' अभिलाषाणां पुनः समागमाभिलाषाणामित्यर्थः 'अतटरूपाः' तुङ्गशैलाग्ररूपाः 'प्रपाताः' अधःपतनस्थानानि। स्वप्नमायामतिभ्रमैः कृतानां मिथ्यात्वात् तेषां पुनः प्राप्तिः असम्भवा। पुण्यस्य च क्लिष्टत्वात् तथैव। तत् यथा शैलाग्रात् पतितो न प्रत्यावर्त्तते तथैव ममाप्ययं पुनःसमागमाभिलाषो न सम्पत्स्यते। ["क्लिष्टम्" ( रा-, वि-, म- )—"क्लृप्तम्" ( त- न्या-, ) ॥ "पुण्यम्" ( रा-, वि-, म-, )—"पुण्यैः" ( त-, न्या-, ) ॥ "तदतीतमेते" ( रा-, वि- ) "तदतीव मन्ये" ( त-, न्या-, )— "तदतीतमिव" ( म )॥ "—प्रपाताः ( रा-, वि- )—प्रपातम्" ( त-, न्या- ) —"प्रपातः ( म- ) ] ॥

NOTES

1, मातपितरौ = माता च पिता च = द्वन्द्व। मातृ becomes माता by the rule "आनङ् ऋतो द्वन्द्वे"—In a द्वन्द्व compound of ऋकारान्त words the पूर्वपद becomes आकारान्त when the words imply विद्यासम्बन्ध or योनिसम्बन्ध। Again there are optional forms (i) मातरपितरौ by निपातन

in the rule "मातरपितरावुदीचाम्" (ि) पितरौ by एकशेष by the rule "पुमान् स्त्रिया"।

2 (a) Remark—Here are four hypotheses each replacing the previous one (i) The Sakuntala affair was a dream. No it could not be a dream because I was not asleep at the time besides a dream leaves no impression of reality when the sleeper is awake (ii) Possibly it was a spell of magic. But who was the magician to direct it against me? I have no enemy so it was not a magic (iii) I suppose it was a delusion – a hallucination of mind. Well then my mind being clear now it would not have produced in me the idea of actual experience what was it then? (iv) I must have really enjoyed her company but the luck that procured me the felicity having worn out the thing has vanished. Whichever of these be true I cannot hope to see her again. Raghava construes differently thus—तत् असंप्रवर्त्यं अतीतम् (That thing has gone never to come back), स्वप्नो नु मायानु मतिभ्रमो नु, तावत्फलमेव क्लिष्टं पुण्यं नु (Was it a dream or some magic, or a delusion, or merit exhusted bearing only that much of truth), एते मनोरथा नाम तटप्रपाताः (These are the wishes like erosions of river-banks) I leave it to the reader to make sense out of it, (b) क्लिष्टं नु &c,—I did some good work in a prior birth and through the merit thus acquired I was rewarded with the company of Sakuntala. But the merit is now exhusted (क्लिष्टम्)। एव emphasises the quantity Only to that much of reward and no more was my wretched self entitled. (c) असंनिवृत्त्यै—सम + नि + वृत् + क्तिन्भावे = संनिवृत्तिः return. न संनिवृत्तिः। तस्यै। तादर्थ्ये चतुर्थी। (d) एते—Refers to the four—स्वप्न न &c. Raghava has एते मनोरथाः (e) मनोरथानाम्—रथा इव रथा like chariots (लक्षणा)। मनसो रथा मनोरथाः = wishes. Wish is the chariot on which the mind traverses. तेषाम्। Raghava breaks up the last line into मनोरथा नाम तटप्रपाताः and remarks "नाम इत्यव्ययं, अवाप्ता मनोरथा इत्यर्थः"। (f) अतटप्रपाताः—अतट is अत्रु a

precipice. प्रपतन्ति एभ्यः इति प्र + पत + घञ् अपादाने = प्रपाताः stations to leap from. When one leaps from a precipice one is killed. ... are so many precipices for my hopes to leap from ... leave no room for hope to revive.

विदूषकः—मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं अवस्सम्भावी अचिन्तणिज्जसमागमो होदित्ति । मा एवम् । ननु अङ्गुलीयमेव निदर्शनम् अवश्यम्भावी अचिन्तनीयसमागमो भवतीति ] ।

VIDUSHAKA—Do not think so. Why the ring itself is an instance that what is sure to happen may be of inconceivable access [Or that of which the access is inconceivable, happens if destined to happen].

राजा (अङ्गुलीयकं विलोक्य)—अये इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोरमासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ १२ ॥

KING—(Looking at the ring)—Ah! fallen from a not-easily accessible place, this has indeed to be pitied. Surely, by your reward, O Ring your merit too is inferred to be very small : for with a footing secured on her fingers, beautiful on account of the ruddy nails you have become dislodged.

[ विदूषकः । 'एव मा' अत्र 'ननु' इति परमतार्थं पे 'अवश्यम्भावी' अवश्यमेव भविता पदार्थः 'अचिन्तनीयः अप्रतर्क्यः समागमो' लाभो यस्य तादृशो भवति इति' अस्मिन् विषये अङ्गुलीयकमेव निदर्शनं' दृष्टान्तः। यद्वा—अचिन्तनीयसमागमः अवश्यम्भावी' पदार्थः भवति घटते 'इति अत्र विषये 'अङ्गुलीयकमेव निदर्शनम् । नदी पतितस्य मत्स्योदरे अन्विषितस्य अङ्गुलीयकस्य पुनः प्राप्तिः अचिन्तनीयः । किन्तु अवश्यम्भाविनी सा घटिता एव । तेन मन्ये शकुन्तलापि लब्धव्या ते ।

राज्ञेति। 'भये इति श्रुतौ। विदूषकेण अङ्गुलीयकशब्दे उच्चारिते श्रुतिः। अतुलभं' दुष्प्रापं यत् 'स्थानं' शकुन्तलाङ्गुलिः तस्मात् भ्रष्टमसि यत् तादृशम् 'इदं' अङ्गुलीयं 'शोचनीयं' तावत् शोच्यमिव। अन्वयः—हे अङ्गुलीय, फलेन विभाव्यते, तव सुचरितं नूनं मम इव प्रतनु। यत् अरुणनखमनोरमासु तस्याः अङ्गुलीषु लब्धपदं च्युतमसि। व्याख्या = हे 'अङ्गुलीय फलेन' त्वया अनुभूतेन फलेन 'विभाव्यते' अव अनुमीयते—'तव सुचरितं पुण्यं' 'नूनं' निश्चितं 'मम इव प्रतनु' अत्यल्पम्। कुत एवमनुमानम् इत्याह—'यत्' यस्मात् 'अरुणैः' आरक्तैः 'नखैः' मनोरमा 'तस्याः' शकुन्तलाया 'अङ्गुलीषु' [ प्रथममनामिकायां निवेशितमासीद्राज्ञा। ततो दिनेषु गच्छत्सु विरहकृशया तया क्रमात् मध्यमां तर्जनीञ्च नीतम्। इति बहुवचनमङ्गुलीष्विति ] 'लब्धं' प्राप्तं स्थानं येन तथविधं सत् च्युतमसि' भ्रष्टमसि। पुण्यमासीत् ते चरितं तेन तव पदमधाः। परन्तु स्वल्पं तत् पुण्यं ततश्च्युतमसि। अहमपि पुण्येन शकुन्तलया मिलितः, किन्तु क्षीणे पुण्ये त्वमिवाधुना तया हीनः शोच्यः [ "मनेव··· मनोरमासु" ( रा-, वि-, म- )—"कृशेन ·मनोहरासु" ( त-, न्या- ) ]॥

## NOTES

1. (a) निदर्शनम्—निदर्श्यते अनेन इति नि + दृश्—ल्युट् करणे an instance. (b) अवश्यम्भावी—अवश्यम् is a मान्त अव्यय meaning inevitable. inevitably &c according to the context. अवश्यम् भवतीति अवश्यम् + भू + णिनि कर्तरि अवश्यम्भावी that which inevitably happens, i, e., the inevitable (c) अचिन्तनीय &c.—सम् + आ + गम् + अप् भावे = समागमः meeting access, Now वह—See Tika. (d) भवति—is. That which is अवश्यम्भावी is (भवति) अचिन्तनीयसमागमः। Or भवति = Happens That which is अचिन्तनीयसमागम and अवश्यम्भावी too, does happen (भवति), i. e., if a thing is अवश्यम्भावी, it surely happens notwithstanding that it is अचिन्तनीयसमागम।

2. तव सुचरितम् &c.—Here Raghava quotes from the सामुद्र—'नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि। अवक्राः सरला रक्तनखा रक्ततला अपि॥ कोमलाः स्निग्धमृद्वङ्ग्यो भद्रा दोषविवर्जिताः। तादृगङ्गुलयो यस्या सा भवेद्राजवल्लभा॥'

सानुमती—अह अण्णहत्थगदं भवे सच्चं एव्व सोअणिज्जं भवे [ यदि अन्यहस्तगतं भवेत् सत्यमेव शोचनीयं भवेत् ]।

SANUMATI—Had it become lodged in another's hand really it would have been miserable (Or to be pited).

विदूषकः—भो इयं णाममुद्दा केन उद्देसेन तत्तहोदिए हत्थब्भासं पाविदा [भोः। इयं नाममुद्रा केन उद्देशेन यत्रभवत्या हस्ताभ्यासं प्रापिता ]।

VIDUSHAKA—Well, with what object was this signet-ring placed within the reach of that noble lady ?

सानुमती—मम वि कोदूहलेन आआरिदो एसो [ममापि कौतूहलेन आकारित एषः ]।

SANUMATI—This person too has been urged by my curiosity.

सानुमतीति। यथा शकुन्तला रमणीषु रूपेण, तथा दुष्यन्तोऽपि पुरुषेषु। तस्मात् दुष्यन्तस्य अंगुलीयकमधुनापिसुचरितफलं भुञ्जानम् नशोच्यम एव इति भावः।

विदूषक: इति। मुद्यते अनया इति मुद्रा' [ अङ् करणे ]। 'नाम्नो मुद्रा' उत्कीर्णनामाक्षरमङ्गुरीयकं केन उद्देशेन किमुद्दिश्य [ कर्मणि घञ् ] 'तत्रभवत्याः हस्तस्य अभ्यासं समीपम् [ "अभ्यासोऽभ्यसनेऽन्तिके" इति विश्व ] 'प्रापिता' नीता केन प्रयोजनेन तस्यै एतदङ्गुरीयकं दत्तमित्यर्थः।

सानुमतीति। 'एषः' विदूषकोऽपि 'मम कौतूहलेन आकारितः प्रेरितः। अहमपि अङ्गुलीयकदानस्य कारणं ज्ञातुमिच्छामि इत्यर्थः।

NOTES

1. (a) नाममुद्रा—मुद्यते अनया इति मुद् + अङ् करणे = मुद्रा seal. (b) उद्देशेन—हेतौ तृतीया।

2. (a) ममापि—अपि goes with एषः। (b) आकारितः—आ + कारि means "to urge" प्रेरणे। Comp. "आकारय भोजनाय", 'आकारय मृद्दानाय' &c.

राजा — श्रूयताम्। स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति।

KING—Listen. This, with tears darling asked me as I was about to start for my capital—'after what length of time will my husband send me news" ?

विदूषकः—तदो [ ततस्ततः ]।

VIDUSHAKA—Then what then ?

राजा—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता — एकैकमत्र दिवसे दिवसे मदीयं

नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत् प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति॥ १२॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।

KING—Then as this signet ring was being placed by me on her finger she was answered thus—Darling do you count the letters of my name here day by day one at a time. By the time you reach the end the person that will lead you to the entrance of my inner apartments will appear near you—And through delusion that was not done by this cruel-hearted self of mine

राजेति। 'स्वनगराय' स्वनगरं हस्तिनापुरम [पाक्षिकी चतुर्थी। पक्षे द्वितीया]। "प्रस्थितं मां प्रिया सबाष्प' सजललोचनम् 'आह उवाच [आह इत्याचार्थे अव्ययम] किमाह ?—कियत् किं परिमाणं चिरं 'कियच्चिरं' तेन [ अपवर्गे तृतीया ] 'आर्यपुत्रः प्रतिपत्ति' प्रवृत्तिं' वार्त्तामित्यर्थः [ "प्रतिपत्तिः प्रवृत्तौ च ' इति मेदिनी ] 'दास्यति' प्रेषयिष्यति 'इति' आह।

राजेति। 'पश्चात्' तदुक्तेः परम् 'इमां' मुद्रां तस्या अङ्गुलौ निवेशयता' स्थापयता 'मया' सा प्रत्यभिहिता' प्रत्युक्ता। अन्वयः—हे प्रिये, अत्र दिवसे दिवसे एकैकं मदीयं नामाक्षरं गणय। यावत अन्तं गच्छसि तावत् मदवरोधगृहप्रवेशं नेता जनस्तव समीपम् उपैष्यति इति। व्याख्या—हे 'प्रिये' शकुन्तले 'अत्र अस्मिन् अङ्गुरीये 'दिवसे दिवसे

प्रतिदिवसम् [ वीप्सायां द्विर्वचनम्] 'एकम् एकम् "एकैकम्' एकमेव न द्वे त्रीणि वा [स्वार्थे अवधार्यमाणे द्विर्वचनम् । बहुव्रीहिवद्भावः] 'मासम्, अपर, मयम्' । 'यावत्' अधुनापि 'अन्तम्' अपराधामवसान 'गच्छामि [ यावता यार्यं लट ] 'तावत्' तत्कालं 'अमा अवरोधगृहस्य' अन्तःपुरभवनस्य 'प्रवेश ' द्वारं 'नता' प्राप कीजन: [ ताच्छील्ये तृन् । 'न लोक—'इति षष्ठीनिषेधः ] 'तव समीपम्' आगमिष्यति 'उपैष्यति' अभि-गमिष्यति 'इति' एतत् मयाभिहिता इति पूर्वेण सम्बन्धः । भर्तृश्व वार्त्तां लप्स्यसे इति भावः । ["गच्छामि ( त-, वि-, न्या, म- )—"गच्छामि' ( रा- ) ॥ "गृहप्रवेशम्" ( रा-, वि-, म )—"निर्दिशवतो ( त-, न्या- ) ] ॥ तत्र नतप्रत्य 'दारुणात्मना' क्रूरहृदयेन 'मया मोहात् न अनुष्ठितम्' न कृतम् ।

## NOTES

1 (a) एकैकम्—The sense is एकमेव प्रतिदिवसम् Hence there is वीप्सा in दिवस but not in एक । The rule नित्यवीप्सयोः ' applies to दिवस but not to एक । We refer to the Varttika "स्वार्थे अव-धार्यमाणे एकस्मिन् द्वे भवत इति वक्तव्यम्"—repitition may be allowed even when speaking of one thing if the meaning of the word repeated is emphasised—The sense of वीप्सा in both दिवस and एक is not very happy. (b) गच्छामि—"यावत्पुरा निपातयोर्लट्" (P. 2. 3 4) इति लट in a future sense Against this Prof Gajendra-gadkar remarks that यावत् is not a निपात denoting certainty. It need not necessarily denote certainty , it is enough if it is a निपात—(Vide Kasika under 3, 3 4). It is a निपात implying अवधि । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः । The attempt to explain the लट by "वर्तमानसामीप्ये—" is futile, वर्तमानसामीप्य is out of place in 'यावत् स्वपिति तावत् तामसगो भूम "—Panchatantra. "यावत् निरीक्षते तावत् इमः"—Hitopadesa &c, Bhattoji's remark "निपातवेतौ निश्चयं द्योतयत " is with reference to examples given in सि: कौ:, and perhaps because in such cases यावत् and पुरा ulti-mately denote sure completion (निश्चय) of action ; and not that these to give लट should invariably and primarily denote निश्चय । (c) अवरोध etc.—अवरुध्यन्ते अस्मिन् इति अव + रुध + घञ् अधिकरणे अवरोधः harmen. प्रविशन्त्यस्मिन् इति प्र + विश + घञ् करणे = प्रवेशः enteance. अव-रोधस्य गृहम् । तस्य प्रवेशः । तम् । Obj. of नेता । See Tika for gram.

सानुमती—रमणीओ क्खु, अवही विहिणा विसंवादिदो [ रमणीयः खलु अवधिः विधिना विसंवादितः ]।

SANUMATI—An appointment, charming indeed, was by the Ordainer, caused to clash.

विदूषकः—कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तरे आसि [ कथं धीवरकल्पितस्य रोहितमत्स्यस्य उदराभ्यन्तरे आसीत् ]।

VIDUSHAKA—How did it get inside the belly of the Rohita fish cut up by the fisher-man ?

राजा—शचीतीर्थं वन्दमानाया सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम्।

KING—It slipped into the current of the Ganges from the hand of your friend as she was doing obeisance to the Sachi Tirtha.

विदूषकः—जुज्जइ [ युज्यते ]।

VIDUSHAKA—Quite possible.

सानुमती—अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेह आसि अहवा ईदिसो अणुराओ अहिण्णाणं अवेक्खदि कहं विअ पदं [ अतएव तपस्विन्याः शकुन्तलायाः अधर्मभीरोरस्य राजर्षेः परिणये सन्देह आसीत। अथवा ईदृशः अनुरागः अभिज्ञानमपेक्षते कथमिवैतत् ]।

SANUMATI—Hence indeed arose the doubt of this sin-fearing royal sage about the marriage of poor Sakuntala. Or how is this that such an affection awaits a token ?

सानुमतीति । 'रत्नकोष:' प्रतिदिनम् इत्थमङ्गुलीयकं मे व्यापृतत्वात् मनोरम: 'खलु अवधि:' विरहस्य अवधि: सीमा 'विधिना' दैवेन 'विसंवादित:' विसंवादी क्रियत: । न,मामदराणाम् अन्त: नेतुमागमनम्, इत्यविसंवाद:—अत्र पुन: अन्त: प्राप्त: नेता तु नागत: इति विसंवाद: ।

विदूषक इति । 'धीवरेण कल्पितस्य' खस्य: ज्ञातस्य इति विद्यासागरपादा: ।

सानुमतीति । 'अतएव' अङ्गुलीयकप्रणाशादेव । 'अधर्मात्' पापात् 'भीरो: परस्त्रीस्पर्शशङ्कित: 'राजर्षे:, तस्या: परिणये सन्देह आसीत्' । केनचित् सन्देहाय इति मत्वा अनुब्रुवन्ती आह—'अथवा' पक्षान्तरे ईदृश:' सार्वभौम: 'अनुराग: अभिज्ञान' परिचायकमङ्गुरीयादिकम् 'अपेक्षते' काङ्क्षति 'एतत् कथमिव' कीदृशम् ? उत्कठोऽनुराग अवत्यभिज्ञाने नश्यति इति न बुध्यते मया ।

NOTES

1. (a) विसंवादित:—वि + सम् + वद + णिच् + क्त कर्मणि caused do disagree. Or वि + सम् + वद + घञ् भावे = विसंवाद: disagreement. विसंवादेन योजित: इति विसंवाद + णिच + क्त कर्मणि by the Varttika 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" । अनुक्त कर्त्ता is विधिना । Cp. नृशंसेन विसंवादित:—Swapna. (b) अवधि:—अव धा + कि भावे । A limit सीमा i. e., the limit pointed out by the king while giving the ring to Sakuntala.

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

KING—I will surely rebuke this ring.

वदूषक: (आत्मगतम्)— गहीदो णेण पन्था उम्मत्ताणं

[ गृहीतोऽनेन पन्था उन्मत्तानाम् ] ।

VIDUSHAKA (To himself)—The course of the mad is now adopted by him.

राजा—

कथं नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि ।

अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ॥११॥

KING—Why did you get immersed into water having left that hand with soft and beautiful fingers? Or it is possible the inanimate cannot recognise merit; why even by myself was my darling slighted?

राजेति। 'इदमङ्गुलीयकमुपालप्स्ये' भर्त्सयिष्ये 'तावत्'। अङ्गुरीयकमेव अनर्थबीजम्। यदि तत् नाभ्रंशिष्यत शकुन्तलामे नाभ्रंशिष्यत्, तदिदं तिरस्कारमर्हति। इत्युन्मादलक्षणम्।

विदूषक इति। 'अनेन उन्मत्तानां पन्था गृहीतः' उन्मत्तपदवीमारूढोऽयम्। अतः परं मूर्च्छा ततोमरणं भविता।

राजेति। अन्वयः—बन्धुरकोमलाङ्गुलिं तं करं विहाय कथं नु अम्भसि निमग्नमसि। अथवा अचेतनं गुणं नाम न लक्षयेत्। मया एव कस्मात् प्रिया अवधीरिता। व्याख्या—'बन्धुरा' उन्नतानता पर्वसु नताः तन्मध्ये उदरे उन्नता इत्यर्थः 'कोमला' अकर्कशाश्च 'अङ्गुलयो' यस्मिन् अतएव सुलक्षणं 'तम्' अनुभूतस्पर्शं 'करं विहाय' त्यक्त्वा 'कथं नु पृच्छामि भोः केन निमित्तेन 'अम्भसि' जले निमग्नमसि आत्मानं मज्जयसि स्म [लोकोक्तिरियम् सर्वथा विरक्तो हि आत्मनि अनादरो जले मज्जति]। अकारणमयुक्तमाचरितं ते। अथवा' पक्षान्तरे 'अचेतनं चेतनाहीनं वस्तुगुणम्' उत्कर्षं 'नाम' सम्भवनायाम् न लक्षयेत्' द्रष्टुं' नशक्नुयात् [शकिलिङ्]। इत्यचेतनस्य विवेकविमूढ़ता न ते दोषः। सर्वथा वृथा मे त्वयि तिरस्कारः। 'मया एव चेतनेन 'कस्मात्' किं कारणं, 'प्रिया' दयिता अवधीरिता' अवज्ञाय प्रत्याख्याता [अवधीर इति अवज्ञायां चुरादिषु। चेतने यदसम्भवं तद्धि मया आचरितम् [''बन्धुरकोमल" ( रा-, पि, स-, )—"कोमलबन्धुर" ( त, न्या, )॥ 'लक्षयेत' ( रा-, वि-, म- )—'वीक्षते' ( त-, न्या- ) ]।

## NOTES

1. उन्मत्तानाम्—Perhaps there is reference here to the stage of love sickness. "चक्षूरागस्तदनु मनसः सङ्गतिर्भावना च व्यावृत्तिः स्यात् तदनु विषयग्रामतश्चेतसोऽपि। निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं ततोन्मादो मूर्च्छा तदनु

अश्वेऽङ्गुरीयाः प्रकृतेन । The king has reached the stage of उन्माद । Vidushaka has been watching the development with apprehension and says this with a shudder as he knows what will follow next.

2. (a) बन्धुर &c.—बन्धुर is उन्नतानत । A well developed finger is on the inside slightly bulged between the joints ; the joints are slightly depressed. कोमल—soft—because not bony. When once lodged in such a finger, it is not easy to dislodge the ring. बन्धुराः कोमलाः अङ्गुलयो यस्मिन् । बिपदबहुव्रीहिः । Yet it is slipped and dropped into water. How is that ? (कथं नु) – This is the purely physical side of the question. Again बन्धुर is सुन्दर beatiful. 'बन्धुरं सुन्दरे रम्ये'' इति विश्वः । Refers to the shape. कोमल soft, suggests agreeable sensation of touch which is mental. (b) *निमग्नम्—निमज्जन though weight (gravity) is taken as wilful drowning, this raises the उपमा that the slipping of the firmly lodged ring-resembles the suicide by drowning of a person who with all enjoyments at hand becomes all on a sudden unaccountably (कथं नु) disgusted with life. Hence the अलङ्कार is समासोक्ति based to a certain extent upon श्लेष । (c) अवधीरिता—Slighted (d) प्रिया—The ring, which is अचेतन slighted the कर only. I, a चेतन, slighted even the possessor of the कर who was at the same time प्रिया to me. How then उपालभ्ये अङ्गुलीयकम् ? It is myself that is महदुपालम्भपात्रम् ।

विदूषकः ( आत्मगतम् )– कहं बुभुक्खाए खादिदव्वोम्हि [ कथं बुभुक्षया खादितव्योऽस्मि ]

VIDUSHAKA—How so ! I am to be eaten up by hunger !

राजा—अकारणपरित्यक्ता, अनुशयतप्तहृदयस्तावदनुकम्प्यताम् अयं जनः पुनर्दर्शनेन ।

---

* Adopted by Prof. Gajendragadkar.

KING—O. Wantonly discarded-one, let this person, with his heart parched by remorse, be favoured by your sight again.

( प्रविश्यापटीक्षेपेण चित्रफलकहस्ता ) चतुरिका—इअं, चित्तगदा भट्टिणी [ इयं चित्रगता भट्टिनी ] ।

( चित्रफलकं दर्शयति ) ।

(Entering without raising the curtain with the picture board in her hand)

CHATURIKA—Here is mistress in the drawing.

(Points to the picture-board)

विदूषक , 'बुभुक्षया' क्षुधा 'खादितोऽस्मि' । अतिपीडितोऽहं क्षुधा । मन्ये सैव मां खादिष्यति ।

राजेति । 'अकारणं' कारणाभावे 'परित्यक्ता' या ततसम्बुद्धि: हे 'अकारणपरित्यक्ते' [एतेन कोपकारणम्] 'अनुशयम' अनुतापेन तप्तं हृदयं यस्य तादृशः [ एतेन क्षमायोग्यता] 'अयं जनः' अहं मत्यर्थः 'पुनर्दर्शनेन' [करणे तृतीया] 'अनुकम्प्यतां करुणया योज्यताम् । परित्यागात् सापराधोऽहं त्वयि । अधुना तु तापेन दग्धं मां करुणाहं मन्यसे चेत् दर्शनं देहि तेन यदि जीवेयम् इति भावः ।

प्रविश्येति । 'चित्रस्य' शकुन्तलाप्रतिकृतेः फलकं पट्टं 'हस्ते' यस्याः सा । 'अपट्याः' जवनिकायाः 'क्षेपेण' अपसारणेन—यद्वा 'पट्याः' जवनिकायाः 'क्षेपम्' अपसारणम् अकृत्वा—'प्रविश्य' ।

चतुरिकेति । भर्त्र्याः पुनर्दर्शनं वाञ्छति भवान् । इयं चित्रगता' आलिखिता भर्त्री [अनभिषिक्ता राजदारा भट्टिनीति कथ्यन्ते] अस्ति । अतैव तस्याः पुनः उपदर्शनं भवतु ते । इति अङ्गुल्या चित्रफलकं ततस्थां शकुन्तलामूर्त्तिमित्यर्थः दर्शयति' निर्दिशति ।

1. बुभुक्षया &c —The king is mad [c.f., गृहीतोऽसि &c above]. I cannot leave him *I cannot therefore get anything to eat.

Adopted by Prof. Gajendragadkar.

Hunger wants something to eat and, nothing else being available, it will eat me.

2. अकारण &c.—Addressed to the absent Sakuntalā.

3. [a] अपटीक्षेपेण &c.—See also act IV Ante. [b] इय चिवगता &c.—The king prays for meeting. He is forthwith favoured, and sees her though on canvas only. This is a happy augury and indicates speedy re-union. This is technically called पताकास्थान ।

विदूषकः (विलोक्य)—साहु वयस्स, महुरावत्थाणदंसणिज्जो भावाणुपवेसो। खलदि विअ मे दिट्ठी णिम्नाण्णदपदेसेसु। किं वहुणा, सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणअदि [साधु वयस्य, मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलति इव मे दृष्टिर्निम्नोन्नतप्रदेशेषु। किं वहुना, सत्त्वानुप्रवेशशङ्कया आलपनकौतूहलं मे जनयति]।

VIDUSHAKA—(Seeing)—Excellent, my friend! The accession of emotion is visible [Or charming] through exquisite delineation [Or—beautiful posture]. My sight as if stumbles in the high and low places. Not to say much it creates my eagrness for conversation with the impression of infusion of life.

विदूषक इति। 'भावो' मानसो भावः भयादिकृता चेतोविकृतिः। तस्य यः 'अनुप्रवेशः' पात्रे आविर्भावः सः अत्र चित्रे 'मधुरेण' मनोरमेण 'अवस्थानेन' विन्यासेन, कुशलालेखनेन इति यावत् 'दर्शनीयः' सुस्पष्टमालक्ष्यः। दृष्टैव ज्ञायते एका भीता अपरे कौतुकवत्यौ इति। यद्वा—'भावानुप्रवेशः' भयादीनामाविर्भावः 'मधुरेण अवस्थानेन स्थित्या 'दर्शनीयो' मनोहरो जातः। आसाम् अङ्गानां विन्यासविशेषेण अतिसुन्दरं भयादीनां चित्रमालिखितं भवता। न केवलं मानसभावा निपुणमालिखितम् अपि तु कायोऽपि, इत्याह निम्नेषु नीचेषु 'उन्नतेषु उच्चेषु च प्रदेशेषु' शरीरांशेषु मे दृष्टिः स्खलित इव अशङ्कं चलिता दृष्टिः उच्चेषु प्रतिहता निम्नेषु च अधःपतितेव भवति। 'बहुना' उक्तेन 'किं' संक्षेपतो ब्रवीमि चित्रमेतत् 'सत्त्वस्य' प्राणानां यः

'अनुप्रवेशः' आविर्भावः तस्य 'शङ्कया' सत्त्वमितश्चित्रमिति मे मतिमुत्पाद्य इत्यर्थः 'आलपनस्य' सम्भाषणस्य कौतूहलम्' आकाङ्क्षा 'जनयति ["निमन्त्रयत" ( रा-, वि-, म- )—"निम्न ।" ( त-, न्या ) ॥ किं बहुना' इत्यादिमूलम् ( रा-, त-, न्या )—अन्यत्र नास्ति ] ॥

NOTES

1. (a) मधुरा &c.—अव + स्था + ल्युट् भावे = अवस्थानम् fixing, i. e. delineation. Or अवस्थीयते अनेन इति अव + स्था + ल्युट् करणे = अवस्थानम् posture. Raghava makes it आकृति । मधुरमवस्थानम् exquisite delineation (ल्युट् भावे ) or beautiful posture ( ल्युट् करणे ) । Raghava takes it = fine feature दर्शनीयः is द्रष्टुं शक्यः visible ( ल्युट् भावे ) or मनोहरः charming ( ल्युट् करणे ) । (b) भावानु &c —भवत्यनेन इति भू + घञ् करणे, or भवतीति भू + ण कर्तरि = भावः emotion. तस्य अनुप्रवेशः, i. e., अनुप्रविष्टो भावः the emotion that has gained accession. भावानयनं द्रव्यानयनम् । *The sense is—(i). Your wonderful skill has rendered the emotion plainly visible(ल्युट् – भावे) । Or—(ii) Owing to the beautiful posture, the posture of emotion is charming (ल्युट्— करणे). Or—(ii) The accession of emotion has become doubtly charming owing to their (i. e.. of the ladies . fine features ( ल्युट् करणे—Raghava ) "सुन्दराकारतया भावाविर्भावो रम्यतर इत्यर्थः:"—Raghava. I do not think much of Raghava's meaning. It puts the artist's skill to the back-ground. (d) सत्त्वात् &c. —सत्त्व is प्राण life. शङ्का is surmise, impression. ईतीटतीया ।

सानुमती—अम्मो एषा राएसिणो णिउणदा । जाणे सही अग्गदो मे वट्टदित्ति [ अम्मो एषा राजर्षेर्निपुणता । जाने सखी अग्रतो मे वर्तते इति ] ।

SANUMATI—Ha ! Such is the royal sage's skill Methinks my friend is standing before me.

* Adopted by Prof. Gajendragadkar.

राजा—

यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम् ॥ १२ ॥

KING—Whatever may not be right in the picture, all that is being altered. Yet her loveliness is but faintly imitated by the drawing.

सानुमती—सरिसं एदं पच्छादावगरुणो सिणेहस्स अणवलेवस्स [ सदृशमेतत् पश्चात्तापगुरोः स्नेहस्य अनवलेपस्य च ] ।

SANUMATI—This befits love so deep through remorse and his absence of boasting.

सानुमतीति । "अहो इत्याश्चर्ये" अव्ययम् । 'एषा' ईदृशी 'निपुणता' महती निपुणता इति भावः ।

राजेति । अन्वयः—चित्रे यत् यत् साधु न स्यात् तत् तत् अन्यथा क्रियते । तथापि रेखया तस्या लावण्यं किञ्चित् अन्वितम् । व्याख्या—चित्रे मत्कृते आलेख्ये 'यत् यत् यदेवाङ्गमवस्थानं वा साधु' सम्यक्, प्रकृतानुयायि इत्यर्थः 'न स्यात्' चित्रितं न भवेत् [सम्भावनायां लिङ्] 'तत् तत् तदेव, तत्सर्वमित्यर्थः, 'अन्यथा' अन्यप्रकारेण विशोध्य इति यावत् 'क्रियते' विन्यस्यते [ सर्वधात्वर्थानुवादः करोतिना भवति ] । किन्तु अत्र शकुन्तलाया लावण्यं मनसाप्यचिन्तनीयं किं पुनश्चित्रे करणीयम् । तत् 'तथापि कृतेऽपि महति श्रमे रेखया' 'आलेख्येन 'तस्या लावण्यं' कमनीयता 'किञ्चित् ईषत् न तु साकल्येन अन्वितम् । या स्वयं "विधिना चित्रे निवेश्य परिकल्पितसत्त्वयोगा मनसा वा रूपोच्चयेन कृता" सा कथमयत्नेन मया मानुषेण सम्यगालिख्यते । तत् व्यर्थोक्तं ते "साधु वयस्य" इत्यादि इति भावः [ "रेखया" ( रा-, वि-, म- )— "लेखया" [ ता-, न्य- ] ॥

सानुमतीति । 'पश्चात्तापेन' 'गुरोः' प्रबलस्य स्नेहस्य प्रेम्णः 'अनवलेपस्य च' गर्वाभावस्य च 'एतत् एषा राजोक्तिः सदृशं' योग्यम् पश्चात्तापेनास्य शकुन्तलायां नरतिशयः स्नेहो जातः । स्नेहाच्च प्रबलमात्मग्लानम् ततः "सर्वं कान्तमात्मीयं"

वसति" इत्ययं शकुन्तलाया लावण्यम् अधिकमनेन मन्यते। किञ्चिदन्वितं न समग्र इत्यपि गर्वाभावात् विनयोक्तिमात्रम्।

## NOTES

1. रेखया—रेखा is taken by Raghava in the sense of general harmony of the parts of body. "शिरोनेत्रकरादीनामङ्गानां मिथः समम्। कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता॥"—Sangata-ratnakara quoted by Raghava. But रेखा and लेखा may be taken as identical by the maxim रलयोरभेदः। And लेखा is the same as आलेख्य portrait. This is the sense Raghava prefers—रेखया चित्रार्थ तूलिकादिचिह्नतया" (depicted by the touches of the brush).

2. *सदृशम् &c.—The king says that his drawing does not approach the original. Sanumati explains—The King's admiration of Sakuntala is so vastly enchanced by remorse that he now thinks too highly of her beauty. The canvas is an exact reproduction and Sakuntala is not more beautiful than she is painted here. Besides, the modesty of the kink makes him speak deprecatingly of his own skill. Raghava has अनवलेपत्व निर्दोषता स्वाभाविकता इत्यर्थः and construes एतत् शाखाताप्रगुणैः अनवलेपनाय लेखया सदृशम्—This befits his spontaneous (अनवलेपता) affection for her which has now enhanced by remorse.

विदूषकः—भोः दाणिं तिण्णि तत्तहोदीओ दीसन्ति। सव्वाओ अ दंसणीआओ। कदमा एत्थ तत्तहोदी सउन्दला [ भो इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वाश्च दर्शनीयाः। कतमा अत्र तत्रभवती शकुन्तला ]।

VIDUSHAKA—Well, now three fadies are here. All are worthseeing too. Which here is her ladyship Sakuntala ?

सानुमती—अणभिण्णो क्खु, ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो [ अनभिज्ञः खलु ईदृशस्य रूपस्य मोघदृष्टिरयं जनः ]।

---

* Adopted by Prof. Gajndragadkar.

SÀNUMATI—Without experience of such beauty this Person has his sight baffled.

राजा—त्वं तावत् कतमां तर्कयसि ।

KING—Which of these indeed do you guess ?

विदूषकः (निर्वर्ण्य)—तक्केमि जा एसा सिढ़िलबन्धणुव्वन्तकुसुमेण केसन्तेण, उब्भिण्णसेअविन्दुणा वअणेण, विसेसतो ओसरिआहिं वाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चुअपाअवस्स पासे ईसिपरिस्सन्ता विअ आलिहिदा सा सउन्दला इदराओ सहीओ त्ति [तर्कयामि या एषा शिथिलबन्धनोद्वान्तकुसुमेन केशान्तेन, उद्भिन्नस्वेदविन्दुना वदनेन, विशेषतः अपसृताभ्यां वाहुभ्याम्, अवसेकस्निग्धतरुणपल्लवस्य चुतपादपस्य पार्श्वे ईषत्परिश्रान्ता इव आलिखिता सा शकुन्तला, इतरे सख्यौ इति]।

VIDUSHAKA—(Scrutinising) I guess that she who, by the side of a mango-tree, of which the fresh leaves are glossy through watering, is painted as if slightly fatigued, with the tips of her hair having the knot loosened and the flowers dropping, with the face having drops of perspiration formed on it, and with the arms drooping very much, that is Sakuntala the other two are her friends.

विदूषक इति । 'इदानीं वाक्यालङ्कारे ।

सानुमतीति । 'ईदृशस्य' एवंविधस्य रूपस्य 'अनभिज्ञः' अज्ञातस्वरूपः 'अयं जनः' एष विदूषकः 'मोघदृष्टिः' विफलदर्शनप्रयासो जातः । अनुपमं सर्वासामिव कन्याप्रसकन्यकानां रूपम् । अत पुनर्विशेषनिरूपणं निपुणैः रूपाभिज्ञैरेव शक्यम् । विदूषकस्तु अनभिज्ञः सर्वा अपि समाः पश्यति इत्याशयः ।

विदूषक इति । 'निर्वर्ण्य' निपुणं दृष्ट्वा । 'या एषा अवसेकेन' सेचनेन 'स्निग्धाः'

मदृशा: 'नवपल्लवा' नवपत्राणि यस्य तादृशस्य 'चूतपादपस्य' आम्रवृक्षस्य 'पार्श्वे शिथिलं ग्रथं बन्धनं यस्य, अतएव 'उद्वान्तानि च्युतानि कुसुमानि यस्मात् तादृशेन 'केशान्तेन' [ इत्यम्भूतलक्षणे तृतीया ], उद्भिन्ना: सञ्जाता: 'स्वेदबिन्दव:' श्रमजलकणा यस्मिन् तादृशेन 'वदनेन [इत्थम्भूतेति तृतीया] 'विनमितो' नाकृष्टेन 'अपसृताभ्याम्' आनताभ्यां 'बाहुभ्याम्' [ इत्यम्भूतेति तृतीया] 'इषत्परिश्रान्ता इव किञ्चिदिव जातश्रमा [केशबन्धशैथिल्य" स्वेदोद्गम, भुजापसरणम् इति त्रीणि श्रमोपलक्षणानि] 'आलिखिता सा शकुन्तला इतरे सख्यौ इति तर्कयामि, ऊहे । [ "शिथिलबन्धन—" ( त- ग्रा- ) —"शिथिलकेशबन्धन" ( रा- म- )—'शिथिलकेशबन्ध" ( वि- ) ] ॥

NOTES

1. मोघदृष्टि:—मोघा विवेकमूढा दृष्टिर्यस्य स: । Refers to Vidushaka, because he is unable to distinguish between the three, and deems them all equally beautiful. The difference is plain to the expert.

2. शिथिल &c.—Comp. "स्रस्तांसावतिमात्र—" (1, sl. 26.) In the reading शिथिलकेशबन्धन the word केश is redundant.

राजा– निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिन: ।

अश्रु च कपोलपतितं दृश्यमिदं वर्णकोच्छ्वासात् ॥१४॥

चतुरिके, अर्द्धलिखितमेतद्विनोदस्थानम् । गच्छ वर्त्तिकां तावदानय ।

KING—You are clever. There is here indication of my emotion At the edges of the drawing is visible the dark imprint of my perspring finger, and here my tear that dropped on her cheek is noticeable from the puff ( bloatedness ? ) of paint. Chaturika, this source of my solace is halfdrawn. Go and fetch me the brush.

राजेति । 'भवान् निपुण:' अभिज्ञ:, विवेचित इत्यर्थ: 'अत्र' शकुन्तला-

प्रतिकृतौ 'मे भावचिह्नम्' अनुरागलक्षणम् 'अस्ति'। अन्वय.—रेखाप्रान्तेषु मलिनः स्विन्नाङ्गुलिविनिवेशो दृश्यते, इदञ्च कपोलपतितम् अश्रु वर्णकोच्छ्वासात् दृश्यम्॥ व्याख्या—'रेखाया.'' तूलिकाङ्कस्य 'प्रान्तेषु पार्श्वदेशेषु मलिनः कलुषः 'स्विन्नाया:' भावोदयात् सखेदाया: 'अङ्गुल्या विनिवेशः' सन्स्थापनं विन्यासः दृश्यते' लक्ष्यते। भावात् स्वेदः, स्वेदान्मलिनोऽङ्कः। अतएव अङ्कस्य मालिन्यात् भावोदयानुमानम्। 'इदञ्च कपोले' गण्डे चित्रस्थाया: शकुन्तलाया गण्डे इत्यर्थः 'पतितम् अश्रु' नयनोदकं नेत्रजलं 'वर्णकस्य' चित्रोपयोगिकौसुम्भादिरागस्य 'उच्छ्वासात्' उच्छूनतया 'दृश्यं' द्रष्टुं शक्यम्। वर्णकोच्छ्वासात् अश्रुसम्पर्कः। अश्रुच मम नयनात् पतितम्। तेनापि भावोदयानुमानम्। ["वर्णक—" (त-, व्या-)—"वर्तिक—" (वि-, म)— —"वर्त्तिक—" (रा-)]॥

'एतत् इदं विनोदः' मदहृदयस्य समाश्वासनम्, तस्य 'स्थानम्' उपायभूतम्, एतच्चित्रमित्यर्थः; अद्य' लिखितम्' असमाप्तमित्यर्थः। अतो 'गच्छ वर्त्तिकां' तूलिकाम् "पदलेपे पविभेदे तूलिकायाश्च वर्त्तिका'' इति राघवभट्टधृतमञ्जरवचनम्] 'आनय तावत्'। तावदित्यवधारणे [यथा 'कुरुष्व तावत् करभोरु' इत्यादि रघौ]।

NOTES

1. भावचिह्नम्—These are two—(i) स्विन्नाङ्गुलिविनिवेश (भावोदयात् स्वेदः)। c f. सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा'। ii) अश्रु (भावादेव अश्रु)।

2. वर्णकोच्छ्वासात्—वर्णिकोच्छ्वासात् requires वर्णिका in the feminine. Raghava reads वर्त्तिकोच्छ्वासात् and explains "वर्त्तिका चित्रपटे निर्विशेष:''। इतो भ्रमौ।

चतुरिका—अज्ज माढव्व, अवलम्ब चित्तफलअं जाव आअच्छामि। [आर्य माधव्य, अवलम्बस्व चित्रफलकं यावदागच्छामि]।

CHATURIKA—Noble Madhavya, hold the picture board till I return.

राजा—अहमेवैतदवलम्बे।

(यथोक्तं करोति। निष्क्रान्ता चेटी)।

KING—I hold it myself.

(Dose as said ; exit the maid servant)

राजा—

साक्षात् प्रियामुपगतामपहाय पूर्व
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम् ॥ १५ ॥

KING—Having previously abandoned my darling when she personally came near, and greatly esteeming her as transferred to the picture, I have become. O friend, solicitious of the mirage after having passed on my way a river with plenty of water.

अनुरक्षेति । 'यावदागच्छामि' [ यावद्योगे भविष्यति लट् ] तावत् 'अवलम्बस्व' धारय । यावदवधौ [ "यावत्तावदिवावधौ' हैम: ] ।

राजेति । अन्वयः—हे सखे, पूर्वं साक्षात् उपगताम् इमां प्रियाम् अपहाय चित्रार्पितां बहु मन्यमानः निकामजलां स्रोतोवहां पथि अतीत्य मृगतृष्णिकायां प्रणयवान् जातः । व्याख्या—हे 'सखे पूर्वं' प्रथम 'साक्षात्' स्वयम् 'उपगतां' समीपं प्राप्ताम् 'इमां प्रियां वल्लभाम् 'अपहाय' उपेक्षया अतिक्रम्य, पश्चात् 'चित्रे अर्पिताम्' आलेख्ये लिखितां 'बहु मन्यमानः' तस्यां महदादरं कुर्वन् 'अहं 'निकामजलां' भूरिसलिलां 'स्रोतोवहां' नदीं पथि वर्त्मनि 'अतीत्य' अतिक्रम्य, मार्गवशादेव अनायासेन प्राप्तामुपेक्ष्य 'मृगाणां' पशूनां वा 'तृष्णा' लोभः सा अस्ति यस्यां तस्यां 'मृगतृष्णिकायां मरीचिकायाम् [षष्ठीसमासः । अर्श-आद्यच् । स्वार्थे कन् ॥ "मृगतृष्णा मरीचिका" इत्यमरः ] प्रणयवान् साकाङ्क्षो 'जातः' । वर्त्मन्येव प्राप्तां स्वादूदकां नदीं त्यक्त्वा मरीचिकानुसरणं, यथा हास्यकरं, स्वयमागतां शकुन्तलां विहाय कालपरिणती तच्चित्रे समादरोऽपि तथैव इति भावः । [ "राजा" ( चि )—"राजा ( निश्वस्य )" ( त-, व्या ) – 'राजा-अहं हि" ( रा-, म- ) ॥ 'अहमिमाम्" ( त-, वि, व्या )—'पुनरिमाम्" ( रा- ) 'मुहुरिमाम्' ( म-, ) ] ॥

1. (a) बहु मन्यतामः—बहु is not compounded. (b) चक्षुरिमाम्— Raghava reads पुनरिमाम्। पुनर् signifies भेद (difference). भेद is possible when something having been predicated a second predication is made to modify it. Thus साक्षादुपगता अपहीना चिराःपि'ता पुनर्व'इमता। The first predication is here absent. अपि does not complete predication. In fact अपि here serves the purpose of पुनर्। Compare स्वयम् अपि आकुलीकृतत्य अश्रुकारणं पृच्छसि which is fully equivalent to अपि आकुलीकृतवानसि अश्रुकारणं पुनः पृच्छसि। Raghava's reading is therefore defective.

2. (a) स्रोतोवहाम्—वहतीति वह + अच् कर्त्तरि स्त्रियाम् = वहा bearer. स्रोतसां वहा, ताम्। Or स्रोतसा वहतीति स्रोतस + वह + अच् कर्त्तरि। A river flows by its currents, so this derivation rather seems logical. (b) निकामजलाम्—निहतः कामः अस्मात् अनेन वा निकामम् plenty. निकामं जलं यस्यां ताम्। (c) प्रणयवान्—प्रणीयते अनेन इति प्र + नी + अच् करणे = प्रणयः solicitation. सः अस्ति अस्य इति प्रणय + मतुप्। This is a Vedic usage. In भाषा the form is प्रणयी because प्रणय is of the सुखादि class and hence takes इनि exclusively in the sense of मतुप by the rule "सुखादिभ्यश्च।" Both प्रणयिन् and प्रणयवत् however occur in the writings of Kalidasa. c p "स हि प्रणयवत्यासीत्—Raghu. "प्रणयिनीव नखक्षतमण्डनम्"—ibid. (d) मृग—&c.—मृगाणां तृष्णा मृगतृष्णा। सा अस्ति अस्मिन् इति मृगतृष्णा + अच् मत्वर्थे स्त्रियाम् मृगतृष्णा। सा एव इति मृगतृष्णा + क स्त्रियाम् = मृगतृष्णका or मृगतृष्णिका, because मृगतृष्णा is not भाषितपुंस्क and in such cases, इकार is optional by the rule 'अभाषितपुंस्काच्च'। (e) Remark—The अलङ्कार is निदर्शना (see under इदं किलाव्याजमनोहरं वपुः Act I)

विदूषकः (आत्मगतम्)—एसो अत्तभवं णदिं अदिक्कमिअ मिअतिह्णिआए संकन्तो [एष अत्रभवान् नदीमतिक्रम्य मृगतृष्णिकया संक्रान्तः]। (प्रकाशम्) भो भवरं किं एत्थ लिहिदव्वं [भोः अपरं किमत्र लेखितव्यम्]।

VIDUSHAKA (Within himself)—His Highness has

indeed met with a mriage after having crossed the river. (Aloud) well, what else has to be painted here ?

सानुमती—जो जो पदेसो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे [ यो यः प्रदेशः सख्याः मे अभिरूपस्तं तमालेखितुकामो भवेत् ]।

SANUMATI—Possibly he has the desire to paint all those places that are favourites of my friend.

विदूषक इति। सत्यमेव उक्तमनभवता। एषः अनभवान् नद्यौ शकुन्तलारूपाम् 'अतिक्रम्य मृगतृष्णिकया' चित्ररूपया 'स क्रान्तः समृतः। एतत् तु राज्ञा श्रुत चेत् तस्य तापो वर्द्धेत इत्यात्मगतमुक्तम्। [ "लेखितव्यम्" ( वि ) "लिखितव्यम्" ( रा-, म- ) "आलिखितव्यम्" ( त-, न्या ) ]॥

सानुमतीति। 'यो यः प्रदेशः स्थानं मे 'सख्याः' शकुन्तलायाः 'अभिरूपः रम्यः [ "अभिरूपो बुधे रम्ये" इति विश्वमेदिन्यौ ] तं तम् 'आलेखितुं' चित्रयितुं 'कामः' अभिलाषो यस्य तथाविधः [ "कर्त्तरि कृतः" इत्युत्सर्गात् समानाधिकरणपदो बहुव्रीहिः "अव्ययकृतो भावे" इति पक्षे तु व्यधिकरणपदः। 'तुङ्कामम‍नसोरपि' इति मकारलोपः ] 'भवेत्' [ सम्भावनायां लिङ् ]।

NOTES

1. लेखितव्यम्—Raghava reads लिखितव्यम्। There seems to be no reason why लिख should not take गुण with तव्य। We can not say लिख is of the कुटादि class for then लेखन becomes inadmissible. But आलेखन is used by पाणिनि himsef in the rule 'अपाङ्गुष्पाङ्कुलिख्यालेखने। Bhattoji says "विलेखितुम्" under the rule इषरे तोसुन्कसुनौ"। I think लिखितव्यम् is not defensible.

2. आलेखितुं &c.—आ + लिख + तुमुन् कर्त्तरि = आलेखितुम्; आलेखितुं कामोयस्य। The म of आलेखितुम् disappears by the कारिका—लुम्पेदवश्यमः कृत्ये तुङ्कामम‍नसोरपि। समो वा हितततयोर्मांसस्य पचियुड्घञोः॥" The भाष्यकार has अव्ययकृतो भावे, i. e., a कृत affix producing an अव्यय is attached

in the आर्ष्याप। तुम् is thus in the भाववाच्य। Hence आलेखितुम् means आलेखनम् painting, आलेखितुं कामो यस्य means आलेखनं कामो यस्य and the बहुव्रीहि is व्यधिकरणपद। Here again Raghava reads आलिखितुकाम: which is not good. See लेखितव्यम् above.

राजा—श्रूयताम्,

कार्य्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरो: पावना:।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यध:
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १६ ॥

KING – Listen. The stream malini has to be shown with pairs of swans resting on its sandy banks on both sides of it the holy hillocks of the father of Gauri (Himalaya) with antelops reclining on them. Also I wish to represent a doe scratching her left eye on the horn of a black buck under a tree on the boughs of which are suspended bark-garments.

कार्य्येति। अन्वय:—सैकतलीनहंसमिथुना स्रोतोवहा मालिनी कार्य्या। ताम् अभित: निषण्णहरिणा गौरीगुरो: पावना पादा: (कार्य्या:)। शाखालम्बितवल्कलस्य तरो: अध: कृष्णमृगस्य शृङ्गे वामनयनं कण्डूयमानां मृगीञ्च निर्मातुमिच्छामि। व्याख्या— सैकते' पुलिने 'लीनं सुखासीनं 'हंसमिथुनं'' मरालयुगलं यस्या: तादृशी 'स्रोतोवहा' नदी 'मालिनी कार्य्या' लेखितव्या। 'तां मालिनीम् 'अभित:' पार्श्वत: [ अभितोयोगे द्वितीया ] 'निषण्णा:' उपविष्टा 'हरिणा' येषु तथाविधा 'गौर्य्या:' भिवाया:' गुरो:' पितु: [ जनक्यातु: पिता इति पावनास्तत्पादा: ] 'पावना:' पवित्रा: 'पादा:' प्रत्यन्तपर्वता: कार्य्या इति लिङ्गवचनविपरिणाम:। 'शाखासु लम्बितानि' अवसक्तानि 'वल्कलानि' यस्य यस्य तादृशस्य कस्यचित् तरो: वृक्षस्य अध: तले [ षष्ठिप्रत्यय:। तसर्थेत्यात् षष्ठी ] 'कृष्णमृगस्य' कृष्णसारस्य शृङ्गे आत्मनो 'वामनयनं' वामाक्षि 'कण्डूयमानां' निकषन्तीं मृगीञ्च निर्मातुं कर्त्तुम् 'इच्छामि' [ निषण्णहरिणा:— रा·, वि·, म·, )—"निषण्णमृगा" ( त·, आ· ) ] ॥

## NOTES

1. (a) सकत &c.—सिकताः सन्त्यस्मिन् इति सिकता + अच् मत्वर्थे = सैकतम्। सिकताः is usually in the feminine plural. "आपः सुमनसो वर्षा अप्सरस् सिकताः समाः। एते स्त्रियां बहुत्वे स्युः काले प्रायत्रयम्"। (b) स्रोतो वहा—See above. (c) निषण्ण &c.—नि + सद + क्त कर्तरि = नि + सन् + न by the rule "रदाभ्यां निष्ठातो नः पूर्वस्य च दः"। This gives निषन् न by the rule 'सदिरप्रतेः'। Next weget निषण् न by the rule "रषाभ्यां नो णः समानपदे"। Lastly निषण्ण by the sandhi-rule "ष्टुना ष्टुः" i, e. तवर्ग becomes टवर्ग when joined to टवर्ग। हरिणाः here are other than कृष्णसार (b)* Remark—the king's objects is so to paint the backgrounds as to at once declare the place as hermitage. लीन and निषण्ण are significant. They suggest that the swans and antelopes were at ease in presence of the girls They are not so when people from town are near. The hills are corroborative. The bark-garment and black antelopes are decisive.

विदूषकः (आत्मगतम्)—जह अहं देक्खामि, पूरिदव्वं णेण चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहि (यथा अहं पश्यामि, पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः)॥

VIDUSHAKA (Aside)—As I see, the picture board is going to be filled up by him with multitudes of long-bearded ascetics

राजा—वयस्य अन्यच्च। शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः। • ४९०) ६२, ७६२ ; १०२ भ्रम -

KING—Yet another thing, my friend. Sakuntala's favourite. [Or—intended] decoration is here forgotten by me.

विदूषकः—किं विअ [किमिव]?

VIDUSHAKA—What can it be?

---

* Adopted by Prof. Gajendragadkar.

सानुमती—वणवासस्स सोउमारस्स अ जं सरिसं भविस्सदि [ वनवासस्य सौकुमार्य्यस्य च यत् सदृशं भविष्यति ]।

SANUMATI—What will be appropriate to forest-residence and tenderness.

विदूषक इति। 'यथा अहं पश्यामि' मया एवमनुमीयते ["यथाशब्दस्तु निर्दिष्ट-तुल्ययोगानुमानयोः" इति विश्वः। अत्र अनुमाने]—'अनेन राज्ञा "लम्बकूर्चानां दीर्घश्मश्रूणाम ["कूर्चमस्त्री भ्रुवोर्मध्ये श्मश्रु कैतवयोरपि" इति विकाण्डशेषः] 'ताप-सानां कदम्बैः समूहैः [इति करणे ३या] "चित्रफलकं पूरयितव्यम्"। अयमेतच्चित्र-फलकं पूरयिष्यति इत्यहं मन्ये।

राजेति। हे 'वयस्य अन्यच्च' अपरमपि लेखितव्यमस्ति। 'शकुन्तलायाः अभिप्रेतं' प्रियं मया उद्दिष्टं वा प्रसाधनम्' अलङ्करणम् 'अत्र अस्मिन् चित्रे 'अस्माभिः विस्मृतं' विस्मरणात् अकृतम् अधुना तु कर्त्तव्यम्।

विदूषक इति। 'किमिव' तत अभिप्रेतं प्रसाधनं विस्मृतं भवता ['इव इति इवदर्थोपमोतप्रेक्षालङ्कारेषु" इति वर्द्धमानः। अत्र वाक्यालङ्कारे]।

सानुमतिति। 'यत् वस्तु शकुन्तलाया यो वने वासः स्थितिः तस्याः, यच्च तस्याः यत् 'सौकुमार्य्यं मार्दवम् ( भावे ष्यञ् ) तस्य 'च सदृशं' योग्यं भवेत्' तदेव विस्मृतम् अभिप्रेतं प्रसाधनम् अस्य कर्त्तुरमना अयम्। वनवासिभिः सुलभम् अतिकोमलञ्च तत् इत्यर्थः। विदूषककृतप्रश्नस्य उत्तरमेतत्।

## NOTES

Remark—After सौकुमार्य्यस्य Raghava reads अविनयस्य। I do not see the propriety.

राजा—

कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेशरम्।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥१०॥

KING—Friend, neither is the Sirisha flower shown with

its stalk attached to the ear and the filaments reaching down to the cheek, nor again is drawn between the breasts the garland of lotus-shoots delicate like the autumnal moon-shine

विदूषकः—भो किणणु तत्तहोदो रत्तकुवलअसोहिणा अग्गहत्थेण मुहं अवारिअ चइदचइदा विअ ट्ठिदा [ भोः किं नु तत्रभवती रक्तकुवलयशोभिना अग्रहस्तेन मुखमावार्य चकितचकिता इव स्थिता ]। ( सावधानं निरूप्य ) आः एसो दासीए पुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणकमलं अहिलङ्घदि महुअरो [ आः एष दास्याःपुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनकमलमभिलङ्घते मधुकरः ]।

VIDUSHAKA—Well why has her ladyship stood as if very much frightened having caused her face to be covered by her hand which looks like a red-lotus ? (Looking closely Oh ! this son of a slave, a bee the stealer of the honey of flowers, is rushing at her ladyship's lotus-face.

राज्ञेति—अन्वयः—हे सखि कर्णार्पितबन्धनम् आगण्डविलम्बिकेशरं शिरीषं न कृतं स्तनान्तरे शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं न रचितं वा। व्याख्या—हे सखि शकुन्तलायाः 'कर्णे' [ जातावेकवचनम् ] अर्पितं निवेशितं 'बन्धनं' वृन्तं यस्य तत् अतएव 'आगण्डं गण्डपर्यन्तं 'विलम्बिनो' लम्बमानाः 'केशराः' किञ्जल्काः यस्य तत् शिरीषं शिरीषकुसुमम् ( जातावेकवचनं ) 'न कृतं न विहितम्। चिरं अभूषितः कर्णौ गण्ड अद्य शिरीषेण भूषयिष्यति, तत् तस्याः प्रियम्। 'स्तनयोः अन्तरे' अवकाशे 'शरच्चन्द्रमरीचिः ज्योत्स्ना इव 'कोमलं' स्निग्धं शुभ्रञ्च मृणालसूत्रं बिसमालिका 'न रचितं वा' नालिखितमपि [ वा इति कर्णभूषणस्तनालङ्करणक्रिययोः समुच्चयः ]।

विदूषक इति। 'भोः' इति सम्बोधने। किं प्रश्ने। नु वितर्के। सवितर्कः प्रश्नः पृच्छामि किमर्थं 'तत्रभवती' शकुन्तला 'रक्तकुवलयमिव' रक्तोत्पलमिव 'शोभते' इति [रक्तकुवलयं तद्वत्ता तत्वदृशि वर्तते। साधुकारिणि णिनिः] 'अग्रहस्तेन' हस्त

[illegible] अङ्गुल्यग्रपद्मेन यो भागोऽग्रः तेन [“हस्ताग्राग्रहस्तादयो गुणगुणिनो-र्भेदाभेदाभ्याम्” इति वामनः। अत्र अभेदविवक्षायां कर्मधारयः। प्रयोज्ये कर्तरि तृतीया] ‘मुखम् आवार्य’ आच्छाद्य [णौ ल्यप्] ‘चकितात् भीतादपि ‘चकिता’ भीता अतिभीता इत्यर्थः, ‘इव स्थिता’ [अनेन प्रकारस्य उक्तत्वात् द्विर्वचनम् अतिशयमात्रस्य वाचकम्]। [“रक्तकुवलयशोभिना” (त, न्या- )—“रक्तकुवलयपल्लवशोभिना” (रा-, वि-, म- )]॥ “सावधानं’ निपुणं निरूप्य’ दृष्टा। आः क्रोधे। ‘दास्याः पुत्रः दुर्विनीतः [आक्रोशे षष्ठ्याः अलुक्] कुसुमरसस्य’ मधुनः ‘पाटच्चरः’ चोरः मधु-करः’ भ्रमरः ‘तत्रभवत्याः वदनं कमलमिव’ [उपमितसमासः; कमलधर्मेण भ्रमरा-कर्षणम्] ‘अभिलङ्घते’ अभिलक्ष्य धावति [लघिर्गत्यर्थः आत्मनेपदं]। [“अभिलङ्घते (वि)—“अभिलङ्घति” ( रा· म· )—अभिलषति” ( त·, न्या· )]॥

## NOTES

1. (a) आगच्छ &c.—आ is here exclusive ( मर्यादायाम् )। आ गच्छात् आगच्छम्। अवग्रहो—। आगच्छ साधु विलम्बन्ते इति इति आगच्छ + वि + लम्ब + णिनि कर्तरि साधुकारिणि = आगच्छविलम्बिनः। तादृशाः केसरा यस्य तत्। (b) वा—Here वा implies समुच्चय। “वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये इति विश्वः।

2. (a) रक्त etc.—The reading रक्तकुवलयपल्लवशोभिना is rejected because then पल्लव is not red. (b) आवार्य—अग्रहस्तः सुखम् आवृणोति ( अचिचि ) = इयम् अग्रहस्तेन सुखम् आवारयति ( णि चि )। (c) चकितचकिता—Here the rule “प्रकारे गुणवचनस्य” does not apply because प्रकार means सादृश्य and the सादृश्य is expressed already by इव। Hence we explain चकितं भीतम्। सामान्ये नपुंसकम्। चकितात् चकिता चकितचकिता frightened of the frightened, i. e. greatly frighted. सप्सुपेति समासः। Bharavi’s “भीतभीत इव शीतमयूखः’ is similar.

3. (a] दास्याः—पुत्रः—A compound. षष्ठी is retained optionally with पुत्रः as उत्तरपद when abuse is implied, See “षष्ठ्या आक्रोशे” (Pan. 6 3 21). and “पुत्रेऽन्यतरस्याम्” (6 3 29). (b)*Remark—here

* **Adopted by Prof. Gajendragadkar.**

the Vidushaka is misled by the painting; he forgets that it is a mere picture, and takes it for real.

राजा—ननु वार्य्यतामेष धृष्टः।

KING—Pray, let this impudent fellow be stopped.

विदूषकः—भवं एव्व प्रविणीदाणं सासिदा इमस्स वारणे पहविस्सदि [भवानेव अविनीतानां शासिता अस्य वारणे प्रभविष्यति]।

VIDUSHAKA—Thyself alone, the restrainer of the undisciplined will succeed in checking him

राजा—युज्यते। अयि भोः कुसुमलताप्रियातिथे, किमत्र परिपतनखेदमनुभवसि।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥१८॥

KING—Right. Heigh! Ho! The favourite guest of creepers in flower, why dost thou undergo the fatigue of hovering about here? Here, thy devoted mate, though thirsty, is waiting for thee, seated on the flower, She does not indeed drink honey without thee.

राजेति। 'ननु' अनुनये। 'धृष्टः' मधुकरः त्वया 'वार्य्यतां' प्रतिषिध्यताम्।

विदूषक इति। चित्रलाञ्छनेन ब्राह्मणेन मया कथमेषः निषिध्यते 'अविनीतानां' दुर्व्वृत्तानां 'शासिता' विनेता 'भवानेव अस्य वारणे प्रभविष्यति' शक्तो भविष्यति नान्यः कोऽपि तादृशः।

राजेति। 'एतत् युज्यते' युक्तमेव। अहमेव एनं वारयिष्ये। 'अयि' इति कोमलामन्त्रणे। 'भोः कुसुमसमेतायाः लतायाः प्रिय अतिथे भ्रमर 'अत्र' अस्मिन् अकुसुमलासुखे 'किं' कथं वृथा 'परिपतनस्य' उड्डीय परिभ्रमणस्य 'खेदं' श्रमम् 'अनुभवसि'। इदं वत्स, भीतिं न भ्रमराः प्रियः। या तु त्वया तुष्यति तामेव कुसुम-

चित्रलिखितां कुसुमस्थां भ्रमरीं निर्दिश्याह—। अन्वयः—अनुरक्ता एषा मधुकरी तृषिता कुसुमनिषण्णा सत्यपि भवन्तं प्रतिपालयति, त्वया विना न खलु मधु पिबति। व्याख्या—'अनुरक्ता' भवति प्रेमवती 'एषा' इयं पुरोगता "मधुकरी' भ्रमरपत्नी 'तृषिता' पिपासिता अतएव 'कुसुमे निषण्णा' उपविष्टा 'सत्यपि' [मदाभौ प्रतीक्षादुष्करा इत्य र्थः] भवन्तं प्रतिपालयति' त्वामपेक्षते। कारणमाह—त्वया विना त्वां विहाय 'न खलु' न नूनं मधु पिबति। अस्याः स्नेहस्त्वया माननीयः तत् तत्रैव गच्छ; तेन रक्ता भार्या च तुष्यति, कुसुमिता लता 'प्रियातिथिना भवता प्रीयते इत्याशयः।

## NOTES

1. अविनीतानाम् &c - Compare and see कं पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्—Act. I * This is a simple truth uttered in all sincerity. Vidushaka's delusion continues in the next two pages also (see सहसा आत्मगतम् &c. below) Raghava takes it as a taunt. विदूषकस्य चित्रगतस्य वारयितुमशक्यत्वात् सोल्लुण्ठमाह—Raghava

3. (a) कुसुम &c.—कुसुमसमेता लता कुसुमलता। शाकपार्थिवादि। प्रियः अतिथिः प्रियातिथिः esteemed guest. कुसुमलतायाः प्रियातिथि। तत् सम्बुद्धौ। (b) परिपतन etc.—पत् means 'to go'. परि means, सर्वतः। परिपतन is "hovering about." Raghava has परिपतनरूपः खेदः।

3. (a) कुसुम etc.—Sitting on the flower because thirsty Raghava says thirsty because कुसुमनिषण्णा। तृषितत्व कुसुमोपरि उपवेशनादेव। He explains कुसुमनिषण्णा इति। तव अयत्नसाध्यं स्थानम् इति भावः। You have a footing there secured to you without effort on your part. (b) सती—कुसुमनिषण्णा सती अपि is the construction. Raghava takes सती as पतिव्रता। (c) Remark—Here the female bee is only painted. Hence she was not sipping honey but merely sitting still. The king considers the whole scene as a reality. Hence he is under the influence of मोह। Thus the अलङ्कार according to Dandin is मोहोपमा because the sitting still resembles waiting (see Kavyadarsa, 11. 2. 5.). If however, we suppose that delusion of the king extends only so far as to

* **Adopted by Prof. Gajendragadkar**

the motive of the female bee, then the sitting still though only like waiting, is deliberately taken by the king as the waiting itself. The figure is then समासोक्ति (See under चलापाङ्गां दृष्टिं &c.—Act. I).

सानुमती—अज्ज, अभिजादं क्खु एसो वारिदो [ आर्य अभिजातं खल्वेष वारितः ]।

SANUMATI—Noble Sir he is very well and nobly stopped!

विदूषकः—पडिसिद्धा वि वामा एसा जादो [ प्रतिषिद्धापि वामा एषा जातिः ]।

VIDUSHAKA—This is a class that remains perverse though prohibited.

राजा—एवं भो न मे शासने तिष्ठसि। श्रूयतां तर्हि सम्प्रति—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ १८ ॥

KING—Ho! You do not attend to my injunction! Then be it known now—O Bee if you touchest the Bimba like lower lip of my darling attractive like the unfaded young leaf of a tree, drunk by me tenderly indeed in 'love's banquet,' I will have thee placed in bondage inside a lotus.

सानुमतीति। हे आर्य, एष भ्रमरः अभिजातं खलु वारितः यथा तथैव ["आर्यो कुलीनसुधयोरभिजातवद् विदुः" इति यादवः] "वारितः" इति शेषः। आर्यो भवान् आर्योचितं यथा भवति तथैव वारयति, न तु अनार्य इव कठोरं दण्डयति। इति वारणप्रकारं प्रति कटाक्षः। [cp. अभिजातं मन्त्रितम् in swpna]

विदूषक: इति। 'एषा जातिः' तिर्यग्जातिः सुतराम् अनार्या 'प्रतिषिद्धापि

प्रतिभाति 'भाला' प्रतिभूता। तेन 'वारय' नयनगति [ 'काम: प्रतिभूवीऽपि मोक्ता' ]।

रोक्रोति। 'एवम्' अनेन विधिना मकरन्दास्वादाभिमुखमेव भावनू 'मे भाषनं' निर्दिष्टे 'न तिष्ठसि' न वर्तसे। तेन भाग्नालक्कनेनापि दण्डनीयोऽसि 'तर्हि सम्प्रति श्रूयताम्'—। अन्वय·—हे भ्रमर, अक्लिष्टबालतरुपल्लवलोभनीयं मया रतोत्सवेषु सदयमेव पीतं प्रियाया बिम्बाधरं स्पृशसि चेत् त्वां कमलोदरबन्धनस्थं कारयामि [ व्याख्या हे 'भ्रमर' कामुक इति च 'अक्लिष्ट:' अम्लदित: अमुग्ध इति वा यो 'बाल:' नूतन: 'तरुपल्लव: वृक्षपत्रं तद्वत् 'लोभनीयं' चित्ताकर्षकं 'मया रतोत्सवेषु सदयमेव पीतं प्रियाया बिम्बाकारम्' अधरम्' [ शाकपार्थिवादि: ] स्पृशसि चेत् यदि दशसि तदा 'त्वाम्' अपराधिनं 'कमलस्य' कस्यचित् पद्मस्य 'उदररूप'' यत् 'बन्धन''कारागृह तत्र' तिष्ठति यस्मात्तथा 'कारयामि'। राजाहं त्वां परदारधर्षणापराधेन निरुच्छ्वास तमसा, घोरमवाससचारं पद्मोदरस्थ ते कारा भविष्यति इति भाव:।

## NOTES

1. बिम्बाधरम्—Avoid अधर:बिम्बमिव। That would give अधरबिम्बम्।

विदूषक:—एव्वं तिक्खदण्डस्स किं ण भाइस्सदि [ एवं तीक्ष्णदण्डस्य किं न भेष्यति ]। ( प्रहस्य आत्मगतम् ) एसो दाव उम्मत्तो। अहं वि एदस्स सङ्गेन ईदिसवण्णो विअ संवुत्तो [ एष तावत् उन्मत्त:। अहमपि एतस्य सङ्गेन ईदृशवर्ण इव संवृत्त:]। (प्रकाशम्)—भो चित्तं क्खु एदं [भो: चित्रं खल्वेतत्]।

VIDUSHAKA—Would he not be afraid of such strict disciplinarian! (Laughing—Within himself) He is indeed mad. I too, through his companionship have become as if of similar complexion. ( Aloud )—Ho (friend), it is only a picture.

विदूषक: इति। 'एवं तीक्ष्ण: कठोर: 'दण्डो यस्य तस्य उपशासनस्य [ चैष-विषयया षष्ठी ] 'किं न भेष्यति'। 'प्रहस्य' उपहासं कृत्वा 'आत्मगतमाह'। कासख राजा खल एव। 'एष' उन्मत्तवान्' उन्मत्त इव [ तावदवधारणे ]। अहमपि

एतस्य' उन्मत्तस्य 'दर्शन' समानात् 'ईदृशो वर्णो' इव' अत्र तथाविध: [ "वा: स्यादुपमेदयो:" इति शाश्वत: ] 'संवृत्तो' जात 'इव'। "संसर्गजा दोषगुणा भवन्ति" इति मन्ये अहमपि उन्मत्तसंसर्गादुन्मत्तो जात इत्यर्थ:।

## NOTES

1. * एवं तीक्ष्ण &c —This is a taunt uttered under the impression that the king has lost the power of discrimination because he is temporarily insane. Just then Vidushaka realises that the subject under discussion is but a picture. But simple-minded as he is, he does not see that his own momentary spell was due to the king's supreme skill as a painter. On the contrary he believes that the king's malady is catching him and he also was about to lose reason through keeping company with an insane person. The thought of an insane taunting an insane brings on the laugh (प्रहस्य)। The प्र intensifies the हास। The laugh is of course aloud; only the speech following is आत्मगत।

राजा—कथं चित्रम्।

KING—How so A picture?

सानुमती—अहं वि दाणिं अवगदत्था, किं उण जहालिहिदाणुभावो एसो [ अहमपि इदानीमवगतार्था, किं पुनर्यथालिखितानुभावो एष: ]।

SANUMATI—I too have now realised the fact; what to say of the person who feels as he painted it!

राजा—वयस्य, किमिदमनुष्ठितं पौरोभाग्यम्।
दर्शनसुखमनुभवत: साक्षादिव तन्मयेन हृदयेन
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २० ॥
( बाष्पं विहरति )

* Adopted by Prof. Gajendragadkar.

KING—Why is this mischief done friend? To me with the heart full of her enjoying the rapture of beholding her as if personally present, my darling is yet again turned into a picture by you recalling my memory. (Sheds tears).

सानुमतीति। 'अहमपि इदानीम्' अ अत्र व चतो 'अवगत:' ज्ञात: 'अर्थ:' वस्तु चित्रत्वमित्यर्थ:, यथा तादृशी सचाता किं पुनर्यथालिखितं लिखितानुरूपम् 'अनुभवति' ध्यायति यस्य इत्थ: [ चित्रि: ] 'एष' राजा। मयापि ज्ञात सखीमेव पुर: पश्यामीति, शकुन्तलामय हृदय एष राजा चित्रस्यामिमां स्वयमुपस्थितां मन्यते इति न चित्रम्। [ 'यथालिखितानुभावी'' ( रा-, वि-, म )—''यथालिखितानुसारी'' (न, का· )] ॥

राजेति। हे 'वयस्य किं' किमर्थम् 'इद पुरोभागिनी दुष्कर्मनिरतसा। [ "दोषैक-दृक् पुरोभागी" इत्यमर: ] कार्यमकार्य । मत्यर्थ· [ष्यञ् प्रत्यय: ] 'अनुष्ठितम्' आच-रितम्। कुतो दुष्कर्म इति चेत् अत्र = अन्वय:—स्मृतिकारिणा त्वया तन्मयेन हृदयेन साक्षादिव दर्शनसुखमनुभवतो मे कान्ता पुनरपि चित्रीकृता। व्याख्या—'स्मृति स्मरणं' प्रकृतस्मरणं करोति कारयति वा यथायथाविधेन 'त्वया तन्मयेन' शकुन्तलामयेन 'हृदयेन' चेतसा [ करणे इया ] 'साक्षादिव' प्रत्यक्षमिव [ "साक्षात् प्रत्यक्षतुल्ययो:" इत्यमर: ] 'दर्शनसा' प्रत्यक्षदृष्टे: "सुखम् अनुभवत:' उपलभमानसा मे कान्ता शकुन्तला पुनरपि' भूयोऽपि 'चित्रीकृता' चित्ररूपेण परिणमिता। पूर्वं मया चित्रीकृता अद्य तन्मयत्वात् पुन: प्राप्ता। सा भूयोऽपि त्वया चित्रीकृता। 'वाष्पं' नेत्रजलं विहरति मुञ्चति। प्राक् नष्टा पुन: प्राप्ता भूयोऽपि नष्टा इति रोदनकारणम्।

NOTES

1. यथालिखित &c.—लिखितस्य अनतिक्रम: यथालिखितम् agreement with what is painted. अव्ययी— तत् अनुतिष्ठति इति यथालिखित + अनु भावि = यथा लिखितम् that which agrees with &c,—Now see Tika.

2. पौरोभाग्यम्—भावे ष्यञ्। See Tika. Bhasa in Swapna uses पुरोभागिता ( with तल् )।

3. स्मृतिकारिणा—स्मृति is स्मरण recollection. तां करोति जनयति इति स्मृति + कृ + णिनि साधुकारिणि कर्तरि = स्मृतिकारी one who promotes recollection तेन। Or we may derive from कृ + णिच्। Qual. त्वया

* Adopted by Prof. Gajendragadkar.

सानुमती - पुव्वावरविरोही अपुव्वो एसो विरहमग्गो [ पूर्वापरविरोधी अपूर्व एष विरहमार्गः । ]

SANUMATI—Strange is the course of this love-sickness with a contradictory start and sequel.

राजा—वयस्य, कथमेवमविश्रान्तं दुःखमनुभवामि—

प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २१ ॥

KING—Friend how can I undergo such ceaseless torture? Through wakefulness is barred her vision in sleep, and tears do not suffer me to see her drawn in a picture too.

सानुमती । 'एष विरहमार्गः' इष्टवियोगशोकस्य मार्गः पन्थाः रीतिरित्यर्थः 'पूर्वस्य प्रथमावस्थायाः 'अपरस्य, अन्यस्य, उत्तरावस्थायाश्च यो 'विरोधः' परस्परप्रतिषेधः तद्वान् अतएव 'अपूर्वः' अदृष्टपूर्वः नूतन इत्यर्थः । चित्रस्य प्रथम चित्रत्वेन ज्ञानं ततः सत्यत्वेन पुनश्च चित्रत्वेन इति पूर्वापरविरोध इति राघवः । [ "अविश्रान्तं दुःखम्" (वि) —"अविश्रामं दुःखम् ( त , च्या )—"अविश्रान्तदुःखम्" ( रा०, म० ) ] ।

राजेति । अन्वयः—प्रजागरात् तस्याः स्वप्ने समागमः खिलीभूतः । बाष्पस्तु चित्रगतामपि एनां द्रष्टुं न ददाति । व्याख्या—'प्रजागरात्' रात्रिजागरणात् तस्याः' शकुन्तलायाः [ कर्त्तरि कृद्योगा षष्ठी ] 'स्वप्ने निद्रायां समागमः' मत्समीपागमनं "खिलीभूतः" निरुद्धः ["खिलमप्रहते क्लीबम्" इति मेदिनी । "अप्रहत एव उपचारात् निरुद्ध इति ] अनिद्रा सा जाग्रता मया नैव दृश्यते । स्वप्ने पश्येयं यदि निद्रां लभेय न च लभे । तत् तस्याः चित्रदर्शनं विना न मे शरणमन्यत् । तत्र 'बाष्पस्तु' तां तां पूर्वावस्थां स्मरतो मे दुःखात् जात नैवजलं पुनः 'चित्रगतामपि' आलेख्यलिखिताम् [अपिः समुच्चये] द्रष्टुं न ददाति ( भिन्नेऽपि कर्त्तरि कविविवक्षया तुमुन् ) इत्थं द्विविधेऽपि विनोदनोपाये विहते कथय वयस्य कथमविश्रान्तं दुःखमनुभवामि । अधुना तु मया आत्मविस्मृतिवशात् चतुर्थोऽपि तस्याः दर्शनोपायो लब्धोऽभूत् । त्वं पुनस्तत्र पौरोभाग्यमाचरन् मौ कुर्वि इतवानसि ( स्वप्ने समा—" ( रा०, वि० म० ) "स्वप्नसमा—" ( त०, च्या० ) ॥

## NOTES

1. अपूर्वः—पूर्व is पूर्वं इव by transferance of epithets. न पूर्वः। अद्य तत्—। विरहमार्गे is अपूर्व for it is पूर्वतरविशेष (see Tika).

2. अविश्रान्तम्—वि + श्रम + क्त कर्तरि = विश्रान्तम्। न विश्रान्तम्। अद्यवत्।—The emphasis is on the 'ceaselessnes' of the torture. Hence अविश्रान्त should not be compounded. Besides the presence of एवम् is also a bar to समास। We have therefore rejected the reading अविश्रान्तदुःखम्।

3. (a). प्रजागरात्—See प्रजागरकृशः, in Act III. For a similar sense compare 'कथमुपलभे निद्रां स्वप्ने समागमकारिणीम्'—'Vikramorvasi' (b) स्वप्ने—The compounded स्वप्नसमागमः is avoided because स्वप्न is emphasised. (c) *'Remark'—The verse explains 'how' the दुःख is अविश्रान्त। The दुःख is—I cannot see her. When awake, she is not seen 'bodily' because lost to me. She cannot be seen on the canvas too for I am weeping (c. f. बाष्पं विहरति, above). The only chance of seeing her is a dream. But I cannot sleep (प्रजागर), so that chance too is lost. Just now through my temporary delusion, I was neither awake nor asleep and was enjoying her company. My दुःख ceased, but you have wickedly aroused me and brought meback to ceaseless (अविश्रान्त) misery (दुःख)। How (कथम्) can I bear it (अनुभवामि)।

सानुमती— सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए [सर्वथा प्रमृष्टं त्वया प्रत्यादेशदुःखं शकुन्तलायाः]।

SANUMATI—Sakuntala's sorrow for repudiation is thoroughly wiped off by you.

(प्रविश्य) चतुरिका—जेदु भट्टा। वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थिदम्हि [जयतु भर्ता। वर्तिकाकरण्डकं गृहीत्वा इतोमुखं प्रस्थितास्मि—]।

---

* Adopted Prof. by Gajendragadkar.

CHATURIKA (Entering)—Prosper. O Sire prosper. I proceeding this way having taken up the casket of brushes—

राजा—किं च ?

KING—What then ?

चतुरिका—सो मे हत्थादो अन्तरा तरलिआदुदिआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्सं त्ति सबलक्कारं गहीदो [स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्या अहमेवार्य्य-पुत्रस्योपनेष्यामि इति सबलात्कारं गृहीतः ]।

CHATURIKA—On my way it was forcibly taken away from my hand by Queen Vasumati with Taralika as her second saying "I will myself carry it to my husband."

वसुमतीति। 'प्रत्यादेशात्' निराकरणात् यत् तस्या 'दुःखं तत् 'त्वया सर्वथा सर्वप्रकारेण 'प्रमृष्ट'' क्षालितम्। एतत् श्रुत्वा अद्य अपि दुःखं तस्या न स्यात्।

चतुरिकेति। 'वर्त्तिकायाः तूलिकायाः 'करण्डकं भाजनं 'गृहीत्वा इतोमुख'' भवदभिमुखं प्रस्थितास्मि गन्तुमारब्धास्मि [ आदिकर्मणि कर्त्तरि क्तः ]।

राजेति। प्रस्थितासि 'किं च जातं ततः कथय।

चतुरिकेति। 'अन्तरा' मध्ये, वर्त्मनि इत्यर्थः, तरलिकया तदाख्यया' परिचारिकया या 'द्वितीया' तथाविधया 'देव्या वसुमत्या' परिचारिकासहायया तया इत्यर्थः:—'अहमेव आर्य्यपुत्रस्य उपनेष्यामि' समीपे प्रापयिष्यामि 'इति एतदुक्त्वा—'बलात्कारेण' हठकारितया 'सह [बलादिति हठार्थेऽव्ययम्] 'स वर्त्तिकाकरण्डकः 'मे हस्तात् गृहीतः'।

NOTES

1. (a) वर्त्तिका &c.—वर्त्तते इति वृत + ण्वुल् कर्त्तरि स्त्रियाम् = वर्त्तिका paint, or वर्त्तका a duck. See Tika (b) इतोमुखम्—इतः अस्यां दिशि मुखं यस्मिन् कर्मणि यथा तथा। Qualifies प्रस्थानक्रिया।

2. (a) तरलिका &c.—तरलिका द्वितीया यस्याः or यया: supposing द्वितीया to mean सहाय। बहु—। Or again इतत्-(See Tika). (b) आर्य्यपुत्रस्य—कर्मणि षष्ठी। Related to उप uncompounded; or उपनेष्यामि।

विदूषकः—दिट्ठिआ तुमं मुक्का ( दिष्ट्या त्वं मुक्ता )।

VIDUSHAKA—Luckily you are let off !

चतुरिका—जाव देवीए विडवलग्गं उत्तरीअं तरलिआ मोचेदि दाव मए णिव्वाहिदो अप्पा [ यावत् देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा ] ।

CHATURIKA—While Taralika was disengaging the queen's mantle which was caught in a twig my person was carried off by me.

राजा—वयस्य, उपस्थिता देवी बहुमानगर्विता च । भवान् इमां प्रतिकृतिं रक्षतु ।

KING—Friend the queen is at hand and she is sensitive through much attention ( on my part ) Do thou save this picture.*

यावदिति । 'विटपे' वृक्षशाखायां 'लग्नं' संसक्तं 'देव्याः उत्तरीयं' पूर्वकायांशुकं 'यावत् यत्कालं 'तरलिका मोचयति' [ यावद्योगे भविष्यति लट् ] 'तावत् तत्कालम्, उभयोरप्यौत्सुक्यासक्ततया तत्क्षणे अवसरे 'मया आत्मा स्वदेहः [ 'आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु' इति विश्वः ] निर्वाहितः दूरं नीतः । तेनैवाहं मुक्ता न [illegible] तयोः ।

राजेति । 'देवी उपस्थिता' आसन्नप्राया । सा 'च बहुमानेन' बहुलेन मदीयेन आदरेण 'गर्विता जातगर्वा, जातबहुमानगर्वा इत्यर्थः । अहमितरास्वपि युवतिषु बहुमता अभिमानवती देवी यदि प्रयत्नलिखितां मे शकुन्तलामूर्तिं पश्येत् तत् मम ईर्ष्यया एनां नाशयेत् । तत् 'भवानिमां प्रतिकृतिं रक्षतु' एनां गृहीत्वा अपयातु इत्यर्थः ।

## NOTES

1. (a) *यावत् &c.—This is in reply to Vidushaka I was not let off through kindness but managed to run away while they were busy. (b) उत्तरीयम्—उत्तरस्मिन् देहे भवम् इति उत्तर + छ—A loose garment worn on the upper part of the body A wrapper. (c) निर्वाहितः—निर् + वह् ( to lead ) + णिच् + क्त कर्मणि । Let off For similar use compare 'यदात्म निर्वाहयितव्य मे प्रियम्'' – Buddhacharita.

* Adopted by Prof. Gajendragadkar.

विदूषकः—अत्ताणंत्ति भणाहि [ आत्मानमिति भण ]। (चित्रफलकमादायोत्थाय च) जइ भवं अन्तेउरकूडवाउरादो मुञ्चीअदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि [ यदि भवानन्तःपुरकूटवागुरातो मुच्यते ततो मां मेघप्रतिच्छन्दे प्रासादे शब्दाययतु ]। (द्रुतपदं निष्क्रान्तः)।

VIDUSHAKA—Say "Save thyself" ! [Taking the picture board and getting up ] If thou art released from the noose of perfidy of the harem then shout for me at the house (palace) named Meghapraticbhan..a (Exit in quick steps).

सानुमती – अण्णसंकन्तहिअओ वि पढमसंभावणं अवेक्खदि सिढिलसोहदो दाणिं एसो [ अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनामपेक्षते शिथिलसौहृद इदानीमेषः ]।

SANUMATI—This person with his affection less ardent, respects his first love though his heart is transferred to another.

विदूषक इति। किं मन्यसे प्रतिकृतिमात्र मात्मर्थेन् मामपि इत्यात् यदि पश्येत्। तत् 'भण आत्मान' रक्षतु भवान् 'इति'। 'अन्तःपुरस्य' लक्षणया तवस्थागादेव्या वा 'कूटवागुरा' मायारूपं जालम् [ "मायानिश्चलयन्त्रेषु" प्रस्तुत्य "सीराङ्गे कूटमस्त्रियाम् इति, 'वागुरा मृगबन्धनी' इति चामरः ] तस्मात्' यदि मुच्यसे' मत्तो भवति [ कर्म-कर्त्तरि लट् ] 'ततो मां मेघप्रतिच्छन्दे' तदाख्ये 'प्रासादे शब्दाययतु' शब्दं कारयतु तव भवदाह्वानं श्रुत्वा अहं शब्दं करिष्यामि [ "शब्दवैर—" इति क्यङ् करवै। ततो णिच्। अविवक्षितः कर्मसंज्ञा ]। 'द्रुतानि त्वराणि 'पदानि यस्मिन् तत् यथा तथा निष्क्रान्तः' [ कूटवागुरा—" (त- श्या- )—कालकूट" ( रा- वि- म- )॥ शब्दायस्व" (वि )—शब्दापय" ( रा- )—शब्दः" ( म- ) शब्दा-यिष्यते" ( ता- श्या- ) ]॥

सानुमतीति। इदानीं शिथिलं मन्दं सौहृदं तथाविधः ( सौहृदमिति अपि हृदभावः इत्यादि व्याख्यातं प्राक् ) एषः राजा अन्यस्यां शकुन्तलायां संक्रान्तम् आसक्तं

'कृतकृत्ये'..... त्वयोऽपि 'प्रथमा शाकुन्तला वा सर्वा ...' इत्यभिधा पूर्वप्रदर्शिता ... प्रीतिः ... ताम् 'अर्धपथे ... । ... अपि ... अवर्धं ... निवृत्ति तत्र कारणं ... च निर्मम।

NOTES

1. आत्मानम्—The meaning is—Instead of saying भवान् प्रतिकृतिं रचत' you should say भवान् आत्मानम् रचतु"। चतुरिका has escaped somehow but she will not let me off so easily. We two have been helping you in this matter, but my offence is greater in her eyes.

2. कूटवागुरा—This seems to suit मृग better than कालकूट। (b) शब्दाययत—शब्दं कुर्वन्तं प्रेरयतु इति शब्द+क्यङ्+णिच+लोट् त = शब्दाय (नाम धातु)+णिच्+लोट् तु शब्दाययतु। Here शब्दाय is अकर्मक because the कर्म i. e. शब्द is included in the धात्वर्थ (धात्वर्थोपसंग्रहात्)। Thus अहं शब्दाये (अविधि) = भवान् मां शब्दाययतु the अणिकर्ता becoming कर्म by the rule "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता सणौ। The भाष्यकार however directs तृतीया in the अणिकर्ता of शब्दाय। Thus "शब्दायते देवदत्तः। शब्दाययति देवदत्तेन"—Bhashya. I. 4. 52. The poet disregards the Bhashya in Act. IV. c. f. "हस्तिनापुरगामिनः ऋषयः शब्दायन्ते")। We may note that there the Beng. Ed. reads शब्दायन्ते and here Vidyasagara's reading is शब्दायस्व। If these are adopted the grammatical difficulty in Act IV. is overcome. There ऋषयः शब्दायन्ते means the sages are talking. But मां शब्दायस्व raises fresh difficulty, because शब्दाय being अकर्मक it cannot govern माम "शब्दस्य च त्यागाय कर्मणः अन्तर्भावात् कर्मान्तरायोगाच्च अकर्मकत्वात्—Kaiyata. Haradatta and Bhottoji are also to the same effect. Nagesa differs. He believes that like पुत्रमाच्छयति we may have पुत्रं शब्दायते ("अविभूतपुत्रादि कर्म—Sabdendushekhara). On the whole, it seems better to suppose that Kalidasa does not strictly follow the Bhashya and has attached णिच् to शब्दाय। Nor is this the only instance of his disregard of Panini's teaching.

( प्रविश्य पत्रहस्ता )—प्रतीहारी—जेदु जेदु देवो ( जयतु जयतु देवः )।

(Entering with a letter in hand) THE WARDER—Prosper, let Sire prosper.

राजा—वेत्रवति, न खल्वन्तरा दृष्टा त्वया देवी।

KING—Vetravati, was not the Queen noticed by you midway ?

प्रतीहारी—अह इं। पत्तहत्थं मं देक्खिअ पडिणिउत्ता ( अथ किम्। पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता )।

WARDER—Yes, Seeing me with a letter in hand she has gone back.

राजा—कार्यज्ञा कार्य्योपरोधं मे परिहरति।

KING—Knowing what is prosper, she avoids interruption of my state-affairs.

प्रतीहारी—देव, अमच्चो विण्णवेदि अत्थजादस्स गणणाबहुलदाए एक्क एव्व पोरकज्जं अवेक्खिदं देवो पत्तारूढं पच्चक्खीकरेदुत्ति [ देव, अमात्यो विज्ञापयति—अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्य्यमवेक्षितम्। तद्देवः पत्रारूढं प्रत्यक्षीकरोतु इति ]।

WARDER—Sire, the minister reports that owing to the length of the counting of the several receipts only one case of the citizens has been investigated. Let Sire see the same put on paper,

राजेति। 'देवी' वसुमती 'त्वया अन्तरा' मध्ये मार्गे न दृष्टा न खलु दृष्टा' न किं दृष्टा ( खलु जिज्ञासायाम्। "निषेधवाक्यालङ्कारजिज्ञासानुनयेत खलु" इत्यमरः )।

[illegible]ति। कार्यं गरीयः मन्यते या तथाविधा कार्याकार्यविवेकवती इयं 'मे कार्येषु' राजकार्येषु उपरोधं विघ्नं 'परिहरति' त्यजति। राजकार्यस्य विघ्नजननम् अकार्यम् इति मत्वा निवर्तते देवी।

प्रतीहारीति। 'अर्थजातस्य' तत्तदधिकारिकैः प्रेषितस्य वित्तसमूहस्य ("अर्थः प्रकारे विषये वित्तकारणवस्तुषु" इति "जातं व्यक्तौघजन्मसु" इति च कोषः) 'गणनायाः' संख्यानस्य 'बहुलतया' बाहुल्येन (हेतौ तृतीया) 'एकमेव पौरकार्यम् अवेक्षितम्' आलोचितं मया। एतत् आरूढं पत्रस्थं 'तत् देवः प्रत्यक्षीकरोतु' स्वयमालोचयतु।

NOTES

1. अथविम् &c.—The poet here very skillfully keeps Vasumati away. Up till now Sanumati has not disclosed the birth of Sarvadamana or that arrangements are being made by the gods for the re-union of Dushyanta and Sakuntala. Vasumati's presence would have prevented the disclosure altogether, and this purpose of introducing Sanumati would have been defeated.

2. प्रत्यक्षीकरोतु—अक्ष्णोः प्रति इति प्रति + अक्षि + टच् समासान्त = प्रत्यक्षम्। Now प्रत्यक्ष + च्वि + कृ + लोट् तु ; no समास for Bhattoji says "अतिक्रमणार्थं समासः" (See प्रदक्षिणीकृत्य, प्रत्यक्षीकरिष्यामि, &c. Ante)

राजा—इतः पत्रं दर्शय। (प्रतीहारी उपनयति)।

KING—Here show the letter. (The warder takes it up to him).

राजा (अनुवाच्य)—कथम्। समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः। अनपत्यश्च किल तपस्वी। राजगामी तस्यार्थसञ्चय इत्येतदमात्येन लिखितम्। कष्टं खलु अनपत्यता। वेत्रवति, बहुधनत्वाद्बहुपत्नीकेन तत्रभवता

भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

KING ( Having read )—How so ! A merchant named Dhanamitra trading by the sea died in ship-wreck and the poor fellow is childless ; the wealth hoarded by him has to go to king. This is what is written by the Minister. Childlessness is misery indeed ! Vetravati, having great wealth, his good self must be one with wives. Let it be ascertained if among his wives any one be quick with child.

राजेति । 'अनुवाच्य' पठित्वा । 'कथम्' इत्याश्चर्ये । 'समुद्रे व्यवहरति' पण्यैः क्रयविक्रयकर्म कुर्वन् यस्तथाविधः 'सार्थान्' वणिक्समूहान् 'वाहयति' प्रापयति द्वीपान्तराणि यस्तथाविधः वणिक्पतिः 'धनमित्रो नाम नौव्यसने' पोतानां व्यसनं विपत्तिः, जलनिमज्जनमित्यर्थः ["व्यसनं विपदि भ्रंशे" इत्यमरः] तत्र विपन्नः' मृतः । 'तपस्वी' अनुकम्प्यः स च वणिक् अनपत्यश्च निःसन्तानश्च । तस्य अर्थानां सञ्चयो बाहुल्यं प्रभूतमर्थजातमिति भावः ; तथा 'अर्थसञ्चयो' वित्तसमूहः [बहुत्वविवक्षायामच् न तु राशीकरणे । अप्राणिषु वा अच्] राजानम्' अवश्यं गच्छति' यस्मादित्थम् । 'अनपत्यता' सन्तानहीनता 'कष्टं खलु' क्लेश एव । 'बहुधनत्वात्' आढ्यत्वात् 'बहुपत्नीकेन भार्याबहुलेन' [नद्यृतश्च कप्] भवितव्यम् । विचार्यतां आसां निर्धार्यताम् [ कर्मणि लोट् ] 'सत्त्वं' जीवम् आपन्ना, यद्वा आपन्नं सत्त्वं यया तादृशी गर्भिणी इत्यर्थः ।

NOTES

1. अर्थसञ्चयः—सम् + चि + अच् भावे = सञ्चयः plenty बाहुल्यम् । It does not mean राशि a heap; for then then the rule "निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः" will require घञ्, and च will change into क given सङ्कायः । The Vritti thus comments on निचय—इह कस्मान्न भवति महान् काष्ठनिचयः । बहुत्वमत्र विवक्षितम् न उपसमाधानम् (heaping—राशीकरण") । अर्थानां सञ्चयः । This means सञ्चिता अर्थाः ।

प्रतीहारी—देव दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा जाआ से सुणीअदि [ देव, इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जाया अस्य श्रूयते ] ।

It is reported that his wife, the daughter of a of Ayodhya, has her Pumsavana ceremony just performed.

राजा—ननु गर्भः पित्र्यं रिक्थमर्हति। गच्छ एवममात्यं ब्रूहि।

KING—Surely, the foetus deserves (inherits) the paternal property. Go say this to the minister.

प्रतीहारी—जं देवो आणवेदि [ यत् देव आज्ञापयति ]। ( प्रस्थिता )।

WARDER—What Sire commands. (Proceeds to go).

राजा—एहि तावत्।

KING—Do comeback.

प्रतीहारी—इअम्हि [ इयमस्मि ]।

WARDER—Here I am.

राजा—किमनेन सन्ततिरस्ति नास्तीति।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २२ ॥

KING—What is gained by considering if there is or is not progeny? With whomsoever loving kinsman the subjects are separated by death, that one, save the sinful, is Dushyanta unto them—Let this be proclaimed.

प्रतीहारीति। 'अस्य जाया' पत्नी 'साकेतः' अयोध्या यस्य निवासः तस्य [साकेत-श्रेष्ठी इमा इव पश्यन। तनः श्रेष्ठिका वत्स] श्रेष्ठिनः' वणिजः' दुहिता इदानीमेव निवृत्त'' सम्पन्न पुंसवनं गर्भाधानात् तृतीये मासि कर्त्तव्यः संस्कारविशेषो यस्याः तादृशी इति श्रूयते'

राजेति। 'ननु' अवधारणे। 'गर्भः' गर्भस्थमपत्यं ''पित्र्यं'' पितुरागतं 'रिक्थं' धनम् [''रिक्थमृक्थं धनं वसु''] 'अर्हति'

राजेति। अपरमपि किञ्चित् सार्थवाहः 'धनमित्रः' इति प्रकृतं प्रतीहारी निवर्त्तयति।

राजेति। 'सन्ततिः अस्ति इति' 'सन्ततिः नास्ति' इति अनेन वा किम्? विद्यमाने अपत्ये अविद्यमाने च फलं तुल्यम्। कुत इत्याह—अन्वयः—प्रजाः येन येन स्निग्धेन बन्धुना वियुज्यन्ते पापात् ऋते दुष्यन्तस्तासां स स इति घुष्यताम्। व्याख्या— 'प्रजा' जनाः येन येन स्निग्धेन स्नेहयुक्तेन बन्धुना' बान्धवेन पित्रादिस्वजनेन वियुज्यन्ते' वियुक्ता भवन्ति 'पापात् पापनिरतात 'ऋते' विना पापिनं स्वजनं वर्जयित्वा इत्यर्थः 'दुष्यन्तः' [स्वनामग्रहणेन 'दुष्यन्तो मे बन्धुः'' इति महती गौरववार्त्ता सूचिता] 'तासां प्रजानां 'स स बन्धुः'' बन्धुस्थाने स्थितः 'इति एतत् घुष्यताम्' विज्ञाप्यताम्। यो यो मृतः दुष्यन्तस्तस्य तस्य स्थाने आस्ते। तत् मृते वा स्थिते वा फलं तुल्यमेव। किन्तु यः पापो म्रियते तस्य स्थाने दुष्यन्तो न स्थास्यति।

NOTES

1. (a) साकेतकस्य—The Parkrita साकेदअस्य should not be renderedas साकेतस्य as has been done by Raghava साकेतस्य श्रेष्ठी is an awkward phrase—the षष्ठी in such eases being unusual साकेते जातः साकेते भवः or साकेते वसति इति साकेत + वुञ् = साकेतक of Saketal. तस्य Qualifies श्रेष्ठिनः। (b) श्रेष्ठिनः—अतिशयेन प्रशस्यानि इति प्रशस्य + इष्ठन् = श्रेष्ठानि, श्रेष्ठवस्तूनि इत्यर्थः, तानि यस्य सन्ति इति श्रेष्ठ + इनि मत्वर्थे = श्रेष्ठी merchant.

2. (a) येन वियुज्यन्ते—This is from युजिर् to join रुधादि। वियुज is to disjoin. यः प्रजाः वियुनक्ति gives येन प्रजाः वियुज्यन्ते in the कर्मवाच्य। पापात्—पापानि अस्य सन्ति इति पाप + अच्, मत्वर्थे = पापः wiccked. ऋते योगे पञ्चमी। (c) घुष्यताम् - घुषिर् विशब्दने चुरादि + लोट् ताम् कर्मणि। विशब्दन is declaration of views, "अनित्योऽयं णिच्"—Madhava. The भ्वादिगणीय root has a different sense.

प्रतीहारी— एव्वं णाम घोसइदव्वं [एवं नाम घोषयितव्यम्]। (निष्क्रम्य पुनः प्रविश्य) काले पवुट्टं विअ अहि-

* Adopted by Prof. Gajendragadkar.

अभिनन्दितं देवस्य शासनम् [ काले प्रवृष्टमिव अभिनन्दितं देवस्य शासनम् ]

WARDER—It shall be so praclaimed. (Going out and coming back) Sire's command it welcomed like a time by shower.

राजा ( दीर्घमुष्णञ्च निःश्वस्य )—एवं भोः सन्ततिच्छेद-निरवलम्बना मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ते। ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः।

KING—(sighing deep and warm—Thus O do riches at the death of the original owner, being supportless by the lapse of progeny pass to a stranger. After my demise too such will be the fate of the fortune of Puru's race.

प्रतीहारीति। 'काले' यथाकाले यत् 'प्रवृष्टं' सुवृष्टः [भावे क्तः] तत् इव देवस्य शासनमभिनन्दितं पूजितम्।

राजेति। 'भोः' इति अव्ययामन्त्रणे प्रतीहारीसम्बोधनं वा। 'सन्तत्याः छेदेन अभावेन निरवलम्बना निराश्रयाः 'सम्पदः' विभवा 'मूलपुरुषस्य' अर्जयितुः अधरस्य 'अवसाने' अन्ते, अभावे, नाशे इत्यर्थः 'एवम्' अनेन विधिना 'परम्' अन्यं जनम् 'उपतिष्ठन्ते' समश्नुवन्ते [सङ्गतिकरणे आत्मनेपदम्। उपतिष्ठन्ति इति पाठे आश्रयन्ति इत्यर्थः]। 'ममापि अन्ते' अवसाने, मृते मयि इत्यर्थः पुरुवंशश्रियः पौरव-लक्ष्म्याः 'एष वृत्तान्तः' एवं प्रकारः, पराश्रयत्वं भविता इति वार्ता। ['—निरवलम्बना ( त-, व्या- )—उपतिष्ठन्ति ( रा-, वि-, म- )। "श्रिय एष वृत्तान्तः ( त-, व्या- )—"पौरवाधरवीजवीजा भूरिवंहता' ( रा-, वि-, म- )॥

## NOTES

1. (a) उचम्—It is difficult to see how उचित.वाम has to be acted (b) सन्ततिच्छेद &c.—The reading निरवलम्बानां कुलानाम् makes कुल as निरवलम्ब। But if there is सन्ततिच्छेद where is the कुल? When कुल itself does exist, the question whether निरवलम्बन or

सावलम्बन does not arise. On the other hand निरवलम्बनाः qualifying सम्पदः is perfectly intelligible. There being no सन्तति the wealth amassed has no one to go to—becomes निरवलम्बन। (c) उपतिष्ठन्ते—उपाद्देवपूजासङ्गतिकरणमित्रीकरणपथिषु" इति सङ्गतिकरणे आत्मनेपदम्। (d) *Remark*—The reading भीरकाल &c, gives no good sense.

प्रतीहारी—पड़िहदं अमङ्गलं [ प्रतिहतममङ्गलम् ]।

Warder—Let the evil be averted !

राजा—धिङ्मामुपस्थितश्रेयोऽवमानिनम्।

King—Fie on me that disregarded the luck that came to hand.

सानुमती—असंसअं सहीं एव्व हिअए करिअ णिन्दिदो णेन अप्पा [ असशयं सखीमेव हृदये कृत्वा निन्दितः अनेन आत्मा ]।

Sanumati—Undoubtedly his self is blamed by him having that very friend of mine in his mind.

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा।
कल्पिष्यमाना महते फलाय वसुन्धरा काल इवोप्तबीजा ॥२३॥

King—Though my own self was caused to germinate in her, the wife entitled to join me at sacrifices, the support of my family, was foolishly abandoned by me like a tract of land with seed sown in time and about to become fit for a great havest.

प्रतीहारीति। 'अमङ्गलं' भवदन्तरूपं पौरवप्रियः परामयणश्च 'प्रतिहतं' निराकृतं भवतु।

राजेति। 'उपस्थितं स्वयंप्राप्तं' यत् 'श्रेयः' मङ्गलं सापत्यदारकपम्, तत 'अवमन्यते' यस्तथाविधम् ( साधुकारिणि णिनिः ) 'मां धिक्'।

राजेति। अन्वय:—काले उप्तबीजा महते फलाय कल्पिष्यमाणा वसुन्धरा इव कुलप्रतिष्ठा धर्मपत्नी आत्मनि संरोपितेऽपि मया त्यक्ता नाम। व्याख्या—'काले' यथासमये 'उप्तम्' ( वप+क्त ) आहितं 'बीजं यस्यां तादृशी (पत्नीपक्षेऽपि योज्यम्) अतएव 'महते' प्रभूताय 'फलाय' शस्याय ( पत्नीपक्षे पुत्रफलाय ) 'कल्पिष्यमाणा प्रभविष्यन्ती ( क्लपियोगे सम्पद्यमाने चतुर्थी ) 'वसुन्धरा रत्नधात्री धरित्री 'इव कुलस्य' पुरुवंशस्य 'प्रतिष्ठा आलम्बनस्वरूपा वसुन्धरायामपि योज्यमेतत्। ("द्वे प्रतिष्ठे कुलस्य मे। समुद्ररशना चोर्वी सखी च युवयोरयम्॥" इति प्रागुक्तः) 'धर्मार्था' प्रजाप्रयोजना 'पत्नी' (शाकपार्थिवादिः)। (यद्वा—तादर्थ्ये ङतत्)। शकुन्तला 'आत्मनि' स्वरूपे संरोपितेपि' मत्प्रेरणया संरूढेऽपि ( 'आत्मा वैपुत्रनामासि' इत्यात्मनः पुत्रत्वञ्च तैः ) मया त्यक्ता नाम कुत्सितमेतन्म ( नाम कुत्सायाम्। "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इत्यमरः )।

TES

1. प्रतिहतम् &c.—Act V. प्रतिहतं भवतु is the construction,

2. (a) संरोपित—सम+रुह+णिच+क्त कर्मणि। *(b) नाम Implies censure. मया·धर्मपत्नी त्यक्ता। This is reprehensible from consideration of afterlife ( परलोक )। Again मया कुलप्रतिष्ठात्यक्ता, आत्मनि संरोपितेऽपि त्यक्ता is censurable from wordly ( इहलोक ) considerations directly, and indirectly from consideration of परलोक so far as it affects the Pitris by पिण्डलोप। (c) The root क्लप is आत्मनेपदी; but in लट् the forms are क्लप्स्यति—कल्पिष्यते &c. as in the case of वृत ante.

सानुमती—अपरिच्छिण्णा दाणिं दे संददी भविस्सदि [अपरिच्छिन्ना इदानीं ते सन्ततिर्भविष्यति ]।

Sanumati—Your progeny will now continue uninterrupted.

चतुरिका—(जनान्तिकम्)—अए इमिणा सत्थवाहवुत्तन्तेण दिउणुव्वेओ भट्टा। णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छेहि। [ अये अनेन सार्थवाहवृत्तान्तेन

द्विगुणोद्वेगो भर्त्ता। एनमाश्वासयितुं मेघप्रतिच्छन्दात् आर्य्यमाधव्यं गृहीत्वा आगच्छ ]।

Chaturika—(*Aside*)—Ah! By this story of the merchant, Sire has double the anxiety now. Go and come back fetching noble Madhavya from Meghapratichhanda palace to console him.

प्रतीहारी—सुट्‌ठु भणासि [ सुष्ठु भणासि ] (निष्क्रान्ता)।

Warder—Thou sayest well (*Exit*).

मानेमतीति। 'इदानीम्' अधुना, शकुन्तलायां जाते सर्वदमने इत्यर्थः ते सन्ततिः कुलप्रवाहः 'अपरिच्छिन्ना विच्छेदरहिता भविष्यति'।

चतुरिकेति। 'सार्थवाहस्य (प्राकृव्याख्यातः) वणिक्पतेर्धनमित्रस्य 'वृत्तान्तम्' वार्त्तया 'द्विगुणः' समधिक इत्यर्थः उद्वेगः पीड़ा यस्य तथाविधो जातो 'भर्त्ता'। 'एवं भर्त्तारम् 'आश्वासयितुं' सान्त्वयितुं 'मेघप्रतिच्छन्दात्' तन्नामकात् प्रासादात् 'माधव्यं' गृहीत्वा आगच्छ (माधव्यस्य ग्रहणे प्रासादस्य "ध्रुवमपाये—" इत्यपादाने पञ्चमी। भवत्कर्तृको माधव्यकरणक आश्वास इति समानकर्त्तृकता नेया)।

NOTES

1. अपरिच्छिन्ना—परिच्छिन्ना is इयत्तया निर्णीता। *c. f.* "परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना—*Kumara*. Hence अपरिच्छिन्ना is *endless*.

2. आश्वासयितुम्—Here the कर्तृत्व of आश्वासनक्रिया is attributed to प्रतिहारी। माधव्य is only instrument. Otherwise आगमनक्रिया and आश्वासनक्रिया will have different कर्त्ता and तुमुन will be barred.

राजा—अहो दुष्यन्तस्य संशयमारूढ़ा पिण्डभाजः। कुतः,

अस्मात् परं वत यथाश्रुतिसम्भृतानि
को नः कुले निवपनानि करिष्यतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥२४॥

King—Alas ! The participators of the rice-cakes offered by Dushyanta here reach adubious situation. For, surely of the water offered by me, destitute of progeny, the *forefathers drink* what is left after washing their tears brought forth by the thought—"Alas. who in our race, after this person, will do the libations, prepared according to the Srutis" (*Goes into a swoon*).

चतुरिका ( ससम्भ्रमम् अवलम्ब्य )—समस्ससदु समस्ससदु भट्टा [ समाश्वसितु समाश्वसितु भर्त्ता ]।

Chaturika—(*Hastily holding*)—Take comfort, let Sire take comfort.

राजेति। 'अहो' खेदे। दुष्यन्तस्य' ( नामग्रहणात् प्रख्यातिर्द्योतनम्। तेन प्रख्यातस्य ममाप्येवं वृत्तम् इति महत् खेदकारणम ) "पिण्ड' भजन्ते ये ते, पितर इत्यर्थः 'संशयं' सङ्कटम् . 'आरूढ़ाः' आपन्नाः। नूनमनन्तरमुत्पश्यन्ति पितरः। 'कुतः' इत्याह। अन्वयः—नूनं वत अस्मात् परं नः कुले यथाश्रुतिसम्भृतानि निवपनानि कः करिष्यति इति पितरः प्रसूतिविकलेन मया प्रसिक्तमुदकं धौताश्रुशेषंपिवन्ति। व्याख्या—'नूनं निश्चितं 'वत खेदे (अव्ययम्) 'अस्मात्' दुष्यन्तात् 'परं' पश्चात् मृते दुष्यन्ते इत्यर्थः 'नः' कुले पुरुवंशे "यथाश्रुति वेदोक्तविधानेन 'सम्भृतानि' सम्यक् चितानि 'निवपनानि पितृदानादिपिण्डोदककर्माणि 'कः करिष्यति' न कोऽपि। 'इति' एवं सचिन्त्य पितरः पूर्वे पौरवाः 'प्रसूत्या सन्तत्या 'विकलेन रहितेन' निःसन्तानेन 'मया प्रसिक्तं' दत्तम् 'उदकं जलं 'धौतानि अश्रूणि' येन तस्मात् 'शेषम्' अवशिष्टं यथा तथा 'पिवन्ति'। पितरो हि प्रथमं मद्दत्तेन जलेन अश्रुपूर्णं नयनं प्रक्षालयन्ति पश्चात् अवशिष्टं जलं पिवन्ति। तेन मन्ये संशयं गतास्त इति। [ "सम्भृतानि" ( रा-, वि- ) )—"सङ्कलितानि" ( त, व्या )॥ "करिष्यति" ( त, व्या )—"नियच्छति" ( रा, वि, म )॥ "अश्रुशेषम्" ( रा, वि, म )—"अश्रुसेकम्" ( त, व्या ) ]॥ मोहं सज्ञाहीनतां मूर्च्छाम् 'उपागतः प्राप्तः।

( "अवलम्ब्य" (वि)—"अवलोक्य" (रा, म)—बङ्गीयास्त्वेतत् न पठन्ति )॥ 'भर्त्ता समाश्वसितु' आश्वस्तो भवतु।

## NOTES

1. (a) यथाश्रुति—श्रुतेः अनतिक्रमः यथाश्रुति in accordance with the Vedas. अव्ययी—। तत् यथा तथा सम्भृतानि सहसुपेतिसमासः। (d). निवपनानि—नि+वप means to offer, specially to the pitris. नि+वप्+ल्युट् भावे=निवपनानि offering पितृदानानि। (c) प्रसूति &c—प्र+सू+क्तिन् कर्मणि=प्रसूति progeny अपत्यम्। विगताः कला भागाः अस्य इति विकलः one whose parts are gone, क्षीण deficient बहु—। प्रसूतया विकलः। इतम्—। तेन। (d). धौताश्रु &c.—धाव शुद्धौ+क्त कर्मणि=धौतानि wiped. Here we have व replaced by ऊठ् by the rule "च्छ्वोः शूडनुनासिके च"। This gives धाऊ+त। Now धाऊ becomes धौ by the rule "एत्येधत्यूठ्सु"। शिष्यते इति शिष्+घञ् कर्मणि=शेषम् remainder. धौतानि अश्रूणि येन तत् धौताश्रु। तस्मात् शेषम् the remainder after what is used in wiping tears with. Raghava has धौताश्रु च तत् शेषञ्चेति कर्मधा—। Qualifies पिबन्ति or उदकम्। The idea is—They do not get the benefit of all the *water* I offer them—a part being used up in washing their faces with. Hence their thirst is unappeased. c f "न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः"—*Raghava* (c). *Reading*—(i) निवप्स्यति is the Devanagari reading. But निवपन being श्राद्ध &c—निवपनानि करिष्यति like श्राद्धं करिष्यति sounds more natural. (ii) धौताश्रु सेकम् does not necessarily imply that they do not get enough for drink or that the water is polluted. शेष puts forth prominently the fact—which is what Dushyanta deplores—that a part of the water serves another purpose hence the supply is *insufficient.*

सानुमती—हद्धी, हद्धी सदि क्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि। अहं दाणिं एव्व णिव्वुदं करेमि। [हा धिक् हा धिक् सति खलु दीपे व्यवधानदोषेण एषः अन्धकारदोषम् अनुभवति। अहमिदानीमेव निर्वृतं करोमि]।

अहवा सुदं मए सउन्दलं समास्सासअन्तीए महेन्दजणीणए मुहादो जण्णभाअस्सुआ देवा एव्व तह अणुचिट्टिस्सन्दि जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदित्ति। ता जुत्तं एदं कालं पड़िपालिदुं। जाव इमिणा वुत्तन्तेण पिअसहीं समासासेमि (अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्—यज्ञभागोत्सुका देवाएव तथा अनुष्ठास्यन्ति यथा अचिरेण धर्मपत्नीं भर्ता अभिनन्दिष्यति इति। तत् युक्तम् एतं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि)। (उद्भ्रान्तकेन निष्क्रान्ता)।

Sanumati—O Fie, O Fie, the lamp being there to be ıre he suffers the evil of the gloom through obstruction will even now make him happy. Or I have heard from e mouth of the mother Mahendra who was comforting akuntala that the gods themselves, anxious for their are at sacrifies, will so arrange that the husband will ithout delay welcome his wife that is entitled to join m at holy rites. So it is poper to bide that time. eanwhile I will console my dear friend with this news. *'xit dancing an Udbhrantaka).*

सानुमतीति। 'दीपे सति खलु' सत्येव "व्यवधान" दूरता अन्तर्हितर्वा, तद्रूपेण ष्टेण एष अन्धकाररूपं दोषम् अनुभवति। अस्ति कुलदीपः सर्वदमनः, अयन्तु शुस्तमपश्यन् निराशान्धकारे मज्जन् सीदति। 'ह्राधिक्' एतत्। "इदानीमेव म्' एव निर्वृतं' सुखितं प्रवृत्तिप्रदानेन इति शेषः 'करोमि'। 'अथवा अयुक्तमेतन्मे'। भागे उत्सुकाः उत्कण्ठाः' दुर्जयेन दानवगणेन ह्रतयज्ञभागाः पुनर्लाभे। 'देवा एव तथा अनुष्ठास्यन्ति' विधास्यन्ति 'यथा 'अचिरेण सत्वरं 'भर्ता स्वामी त्नीं शकुन्तलाम 'अभिनन्दिष्यति इति मया शकुन्तलां समाश्वासयन्त्याः महेन्द्रजन:' अदितेः 'मुखात् श्रुतम्' 'तत्' तस्मात् एषं कालं' यावता कालेन देवा एनं निर्वृतं

कुर्वन्ति तं कालमित्यर्थः 'प्रतिपालयितुं प्रतीक्षितुं 'युक्तम्'। यत्र कर्मणि देवा नियुक्ता तत्र प्रयुक्तो मे व्यापारः। 'यावत्' च ,र्थो। तत्कालम 'अनेन वृत्तान्तेन'' राज्ञो वार्त्तया। अथवा 'यावत्' अवधारणे—'प्रियसखीं समाश्वासयामि यावत्' इत्यन्वयः ( युक्तमेतम्' (म)—"न युक्तम्" ( रा, वि-, त, न्या )॥ ( कालं प्रतिपालयितुम् ( रा, वि, म)—"मे अत्र विलम्बितुम" ( त न्या )॥ उद्भ्रान्तकेन तदाख्येन नृत्यभेदेन 'निष्क्रान्ता'।

NOTES

1. (a). मति &c—Here दोष is सर्वदमन। व्यवधान means a *screen* and also *distance.* अन्धकार is the उपमान of the *despair* of the king. Hence the अलङ्कारis समासोक्तिः। (b). अथवा—implies आक्षेप। She makes up her mind to reveal every-thing to Dush-yanta (निवेदितं करोमि) and then checks herself.

2. (a) यज्ञभाग &c—यज्ञसम्बन्धः यज्ञदत्तो वा भागः यज्ञभागः, शाकपार्थिवादि। or यज्ञभागः मयूरव्यंसकादित्वात्... or यज्ञभागे or यज्ञभागेन उत्सुकाः। सहसुपेति समासः—This is suggested in the Tika. Prof Gajendragadkar thinks this improbable., because the Durjayas were in heaven. But there was nothing to bar their way from heaven to earth. The demon Tadaka is supposed by Kalidas to have done this and seized the God's share's. Compare—

"यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु यः।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः॥

—*in Kumara.* Prof. Gs own theory is that—The king had probably forbidden the performances of sacrifices like the celebration of the spring festival. But as prohibition is a greater evil than obstruction, this makes Dushyanta a greater enemy of the gods than even the Rakshasas who only obstruct. The text itself, however, furnishes evidence that there was no such prohibition Thus (a) The performance of पुंसवन is spoken of in "इदानीमेव—निर्वर्त्तपुंसवना"। पुंसवन requires यज्ञ। (b) Dushyahta himsel

meant to continue performing श्राद्ध &c. as is implied by "आम्नातपरं वत· यथाश्रुतिसम्भृतानि" &c. यथाश्रुति is a significant epithet in this connection (b) अचिरेण—अपवर्गे तृतीया। (c) धर्मपत्नीम्—धर्मार्था पत्नी धर्मपत्नी। शाकपार्थिवादि; or धर्मस्य पत्नी, तादर्थ्ये अश्वघासादिवत् षष्ठीतत् (b) उद्भ्रान्तकेण—उद्+भ्रम+क्त भावे+कन् स्वार्थे =उद्भ्रान्तक literally *going up in the air*. Technically it is a kind of dance in which first the right foot is lifted, the left is then bent and the body turned rapidly in a direction opposite to the hands of a watch. But Raghava takes it in a literal sense. करणे तृया।

नेपथ्ये—अब्बम्हणं अब्बह्मणं [ अब्रह्मण्यम् अब्रह्मण्यम् ]।

In the Dressing Room—This must not be done to a a Brahmana! Must not be done to a Brahmana! (Or murder, Murder.),

राजा—( प्रत्यागतः कर्णं दत्त्वा )—अये माधव्यस्येवार्त्तस्वरः। कः कोऽत्र भोः।

King—(*Recovering and listening*)—Ha! The note of distress is like that of Madhavya. Who is here! Ho! Who is here.

(प्रविश्य) प्रतीहारी (ससम्भ्रमम्)—परित्ताअदु देवो संसअगदं वअस्सं [ परित्रायतां देवः संशयगतं वयस्यम् ]।

[*Entering*] Warder (*With alarm*)—Let Sire save his riend who is in danger.

नेपथ्ये इति। 'अब्रह्मण्यं' ब्राह्मणे वेदे वा हितं साधु वा 'ब्रह्मण्यम्' ( यत् प्रत्ययः) न ब्रह्मण्यं ब्राह्मणविषये वेदे वा यत् निषिद्धं तत्, ब्रह्महत्या इत्यर्थः हिंसा वा। यदा पाततायिनं प्रति उक्तं तदा 'ब्रह्महत्या क्रियते त्वया, विरम पापादस्मात्' इति अर्थः। यदा तु रक्षितारमुद्दिश्य उच्यते तदा 'ब्रह्महत्या जायते, निवार्यतां भोः' इत्यर्थः। द्वावपि सम्भवतः।

राजेति। 'प्रत्यागतः' लब्धसंज्ञः। एष 'आर्त्तस्य भीतस्य स्वरः' नादः 'माधव्यस्य' इव प्रतिभाति।

प्रतीहारीति। 'ससम्भ्रमेण' त्वरया 'सह'। 'संशयं' सङ्कटं 'गतं' 'प्राप्तं' वयस्यं देवः परित्रायतां रक्षतु।

राजा—केनात्तगन्धो माणवकः ।

King—By whom is the poor fellow humbled ?

प्रतीहारी—अदिट्ठरूवेण केन वि सत्तेण अदिक्कमिअ मेघप्पडिच्छन्दस्स पासादस्स अग्गभूमिम् आरोविदो [ अदृष्टरूपेण केनापि सत्त्वेन अतिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्य अग्रभूमिम् आरोपितः ] ।

Warder—By some invisible being, after having been over-powered, he is placed on the top-floor (roof) of the Meghapratichhanda palace.

राजा—(सहसोत्थाय)—मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथवा—

अहन्यहन्यात्मन एव तावज् ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयातीत्यशेषतो वेदितुमस्ति शक्तिः ॥२५॥

King—(*Suddenly rising*)—Indeed not [*Or*—This must not be]. Are my palaces too infested by evil beings ? Or—Even my own lapses every day through carelessness are not possible to be known, is there the power exhaustively to perceive who among the subjects proceeds by which route ?

राजेति । मनोः कुत्सितमपत्यं 'माणवकः माधव्यः ( कुत्सितापत्ये णत्वम् च अनुकम्पायां कन् ) 'केन जनेन, केन विधिना वा 'आत्तो गृहीतो 'गन्धो गर्वो यस्य तादृशो जातः ( "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः." इति विश्वः ) ।

प्रतीहारी । 'अदृष्टं रूपम् आकृतिर्यस्य तथाविधेन 'केनापि सत्त्वेन जीवेन 'अतिक्रम्य अभिभूय 'मेघप्रतिच्छन्दस्य प्रासादस्य 'अग्रे शिखरे या 'भूमिः ताम् 'आरोपितः प्रापितो माणवकः ।

राजेति । 'मा तावत्' एवं ब्रूहि । 'ममापि विश्रुतप्रतापस्य दुष्मन्तस्य 'गृहाः : दैत्ययोनिप्रभृतिभिर्जीवैः 'अभिभूयन्ते अतिक्रम्यन्ते ? [illegible]

काकुः। तदश्रद्धेयं वचो मा तावत् ब्रूहि। यद्वा—मा तावत् विपर्ययतां माधव्यः। ममापि गृहा अभिभूयन्ते इत्याश्चर्य्यम्। 'अथवा पश्चान्तरे तदपि सम्भवेत्। अन्वयः—अहनि अहनि आत्मन एव प्रमादस्खलितं तावत् ज्ञातुं न शक्यम्, प्रजासु क केन पथा प्रयाति अशेषतो वेदितुं शक्तिरस्ति? व्याख्या—'अहनि अहनि' प्रतिदिनम् 'आत्मनः एव स्वस्यापि 'प्रमादेन अनवधानतया यत् 'स्खलितं धर्मप्रच्युतिः तत् तावत् साकल्येन ("यावत् तावच्च साकल्ये" इत्यमरः) ज्ञातुं न शक्यम्। अन्यथा कथं मे अज्ञानाद्धर्मपत्नीपरित्यागः। यदि सन्निहिततमे आत्मन्यप्येवं भवेत्, तदा अगोचरासु 'प्रजासु जीवेषु मध्ये 'को जनः केन पथा सत्पथेन असत्पथेन वा प्रयाति चरति इति अशेषतः साकल्येन 'वेदितुं' ज्ञातुं 'शक्तिः मे अस्ति किं, नास्त्येव इति काकुः। आत्मसम्बन्धेऽपि यस्य सम्यक् ज्ञानं न स्यात्, स कथं ब्रूयात् प्रजासु मे पापः कोऽपि नास्ति, स्थितोऽपि स मदीयेषु गृहेषु पापं माचरेत्।

## Notes

1. माणवकः—मनोरपत्यं कुत्सितम् इति मनु+अण्=माणवः One deformed. न becomes ण by the कारिका="अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।' नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणवः॥" अनुकम्पितो मानव इति मानव+कन्=माणवकः। The Vidushaka was deformed and the pity is caused by his sad plight.

2 (a) प्रमाद &c —स्खल+क्तभावे=स्खलितम् slip. Here he hints at his own प्रमाद in discarding शकुन्तला। (b) अशेषतः—अविद्यमानः शेषः अस्मात् इति अशेषः without anything left. बहु—। अशेषेण इति अशेष+तृतीया+तसि स्वार्थे। आद्यादि। तृतीया करणे। 'क्रिया विशेषणानां क्वचित् फलभवनां प्रतिकरणत्वात्''। Qual. वेदितुम्।* (c) Remark—The report is disbelieved. 'Evil spirits dare not enter my palace. something else must have happened to poor Madhavya." [Or—Madhavya must be saved. Strange! My house too is infested by evil sprits.] The next moment he corrects himself "I cannot detect the failngs of even

* Adopted by prof. Gajendragadkar.

my ownself, how can I hope to control my subjects ?" He counts the spirits also among his प्रजा। The whole of this is substantially adopted by prof. Gajendragadkar with the remark, "Ray does not understand the proper meaning of the stanza" !!

नेपथ्ये—भो वअस्स, अविहा अविहा [ भो वयस्य, अविहा अविहा ]।

In The Dressing Room—Ah ! Friend, Alas ! Alas !

राजा ( गतिभेदेन परिक्रामन् )—सखे, न भेतव्यं, न भेतव्यम्।

King (Stepping in a different gait)—Nothing to fear, friend nothing to fear.

नेपथ्ये (पुनस्तदेव पठित्वा)—कहं ण भाइस्सं। एस मं को वि पच्चवणदसिरोहरं इक्खुं विअ तिण्णभङ्गं करेदि [ कथं न बिभेमि। एष मां कोऽपि प्रत्यवनतशिरोधरम् इक्षुमिव त्रिभङ्गं करोति ]।

In The Dressing Room (Repeating the same)—How can I not fear. Here, someone, with my neck bent backwards, is making me bent in three places like a sugar-cane.

राजा ( सदृष्टिक्षेपम् )—धनुर्धनुः।

King—(Casting his eyes round)—My bow ! My bow !

( प्रविश्य शार्ङ्गहस्ता ) यवनी—जअदु जअदु भट्टा, एदं हत्थावावसहिदं सरासणं [ जयतु जयतु भर्ता। एतत् हस्तावापसहितं शरासनम् ]। ( राजा सशरं धनुरादत्ते )।

(Entering bow in hand) Yavani—Be victorious, let Sri be victorious, Here is the bow with the hand-guard, (The king takes the bow with arrow).

नेपथ्ये इति। 'अविद्दा' इत्यव्ययं खेदे। सप्तमी विभक्तिः।

राजेति। 'गतेर्भेदः' पार्थक्यं तेन, भिन्नया गत्या, क्रोधोद्धतगत्या इति भावः।

नेपथ्ये इति। 'तदेव' अविद्दा अविद्दा इत्येव। 'कोऽपि' अज्ञातस्वरूपः 'एष' जनः 'मां प्रत्यवनता' पृष्ठतो वक्रा 'शिरोधरा' ग्रीवा यस्य तथाविधम् अतएव 'इक्षुमिव त्रिषु स्थानेषु भङ्गो' वक्रता यस्य तथाविधं करोति। मध्येऽग्युक्तः पृष्ठे कुब्ज इति द्विभङ्गीऽहं प्रागेवासम्। अधुना पुनः कोऽप्येष ग्रीवायां प्रत्युञ्जं विधाय त्रिभङ्गं करोति।*

यवनीति। शृङ्गस्य महिषविषाणस्य विकारः 'शार्ङ्गं' धनुः 'हस्ते' यस्या तादृशी। 'हस्तम् आवपति' रक्षति ज्याघातात् इति हस्तावापः वामहस्ते परिधेयचर्मविशेषः (अनेकार्थत्वाद्धातूनां वपिरत्र रक्षणार्थः)। यद्वा—'हस्तम् अवाप्नोति लभते रक्षत्वेन इति 'हस्तावापः' (कर्मण्यण्)। तेन 'सहितं शरासनम्'।

1. प्रत्यवनत &c.—प्रति against *i. e.* the wrong way—backwards. धरतीति धृ+अच् कर्त्तरि स्त्रियाम्=धरा holder. शिरसो धरा शिरोधरा neck. प्रत्यवनता शिरोधरा यस्य whose neck is pushed back so as to get good bite at the throat (*c. f.* अभिनवकण्ठशोणितार्थी below).

2. (a) हस्तावाप &c—हस्त+आ+वप+अण्,कर्मणि=हस्तावापः। Also see Tika. सम्+धा+क्त कर्मणि=सहित or संहित, the म or सम् disappearing optionally by the karika—समो वा ततहितयोः।

(b) शरासनम्—शरा अस्यन्ते अनेन इति शर+अस+ल्युट् करणे।

नेपथ्ये—

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम्॥ २६॥

In The Dressing Room—Here, thirsting after fresh

*Adopted by prof. Gajendragadkar

blood, I slay thee struggling, as a tiger slays a beast. Let Dushyanta, who takes up his bow to remove the fright of the distressed, be thy protector now.

राजा ( सरोषम् )—कथं मामेवोद्दिशति ! तिष्ठ कुणपाशन ; त्वमिदानीं न भविष्यसि । ( शार्ङ्गमारोप्य )—वेत्रवति, सोपानमार्गमादेशय ।

King (*With fury*)—How so ! Hints at me ! Stay o eater of the dead (carrion-eater), then shalt not be now. (*Stringing the bow*) Vetravati, show me the way to the stair case.

नेपथ्ये इति । अन्वयः—अभिनवकण्ठशोणितार्थी ( अहं ) शार्दूलः पशुमिव चेष्टमानं त्वाम् एष हन्मि । आर्त्तानां भयमपनेतुम् आत्तधन्वा दुष्यन्तः इदानीं तव शरणं भवतु । व्याख्या—अभिनव नूतनम् उष्णमित्यर्थः यत् 'कण्ठशोणितं गलरक्तं प्रवाहेण आगतं धारोष्णं रक्तमिति यावत् । तत् 'अर्थयते' काङ्क्षति यस्तादृशोऽहं 'शार्दूलो' व्याघ्रः 'पशुमिव चेष्टमानं' मद्ग्रासात्मुक्तये यतमानं त्वाम् एष हन्मि' एवाधुना । आर्त्तानां पीडितानां 'भयमपनेतुं' दूरीकर्त्तुम् 'आत्तधन्वा' धृतशरासनः ( "धनुषश्च" इति अनङ् समासान्तः ) आपन्नाभयसत्रेषु दीक्षितः अधुनापि आर्त्तस्य ते त्राणाय धृतचापः 'दुष्यन्तः इदानीं'' अस्मिन् मत्पराक्रमप्रकाशक्षणे 'तव शरणं, रक्षिता 'भवतु' यदि तस्य शक्तिरस्ति । आस्तां दुष्यन्तः प्रभुः प्राङ्गनेषु, मत्समीपे को नाम सः । पश्यतस्तस्य त्वां हन्मि इत्युद्दीपनम् ।

राजेति । 'कथम्' आश्चर्य्ये । 'उद्दिशति' अभिलक्ष्य भाषते । जानन्नपि मामपराध्यति तद्वध्य एव । कुणपं शवम् अश्नाति' भक्षयति यस्तत्सम्बुद्धौ ( कर्त्तरि ल्युट् वा युच् ) । 'इदानीं त्वं न भविष्यसि मरिष्यसि इत्यर्थः । शार्ङ्गं धनुः 'आरोप्य' अधिज्यं कृत्वा आह—ः ।

1. (a) एष—Implies here *immediate execution.* एष हन्मि= I forthwith kill you. (b) [illegible]—Always-center

प्रतीहारी—इदो इदो देवो [ इत इतो देवः ]। ( सर्वे सत्वरमुपसर्पन्ति । )

Warder—This way, Sire, (*All approach hastily*).

राजा ( समन्ताद्विलोक्य )—शून्यं खल्विदम् ।

King—(*Looking round*)—This is indeed vacant !

नेपथ्ये—अविहा, अविहा। अहं तुमं पेक्खामि तुमं मं ण पेक्खासि । विड़ालग्गहीदो मूसओ विअ णिरासो म्हि जीविदे संवुत्तो [ अविहा अविहा । अहं त्वां पश्यामि ( ? प्रेक्षे) त्वं मां न पश्यसि ( ? प्रेक्षसे) । विड़ालगृहीतो मूषक इव निराशोऽस्मि जीविते संवृत्तः ] ।

In The Dressing Room—Alas ! Alas ! I see you but you do not see me. Like a mouse, seized by a cat, I have become hopeless of life.

राजा—भोस्तिरस्करिणीगर्वित मदीयमस्त्रं त्वां द्रक्ष्यति । एष तमिषुं सन्दधे—

यो हनिष्यति बध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २७ ॥

( अस्त्रं सन्धत्ते ) ।

King—Oh ! The proud in thy magic of invisibility, my weapon will see thee. Here I aim the shaft that will kill thee deserving death and protect the Brahmana worthy of protection. The swan indeed accepts milk and rejects the water mixed up with it. (*Fits the arrow*).

नेपथ्ये इति । 'विड़ालेन गृहीतो' इतो 'मूषकः इव जीविते' मा ेषु 'निराशो' भवामि । तत्र कारणम्—'अहं त्वां पश्यामि त्वं मां न पश्यसि इति । अपश्यन कथं

राजेति । भोः 'तिरस्करिण्या' अदर्शनविद्यया 'गर्वित' साहङ्कार, मया अदृश्योऽपि त्वं ममास्त्रेण द्रक्ष्यसे । तेन च हनिष्यसे । तत् अदृष्टोऽहमिति ते गर्वो मा भूत । ( "अस्त्रम्" ( त, न्या, म )—"शास्त्रम्" ( रा, वि ) ]॥ अन्वयः—यः वध्यं त्वां हनिष्यति रक्ष्यं द्विजं रक्षिष्यति तमिषुम् बाणम् एष (अहं) सन्दधे । हि हंसः क्षीरम् आदत्ते तन्मिश्रा अपः वर्जयति । व्याख्या—'यः' 'वध्यं' पापकरणात् वधार्हं त्वां हनिष्यति रक्ष्यं रक्षणार्हं 'द्विजं' ब्राह्मणं माधव्यं रक्षिष्यति तम् 'इषुं' बाणम् 'एष सन्दधे' अयमहं धनुषि योजयामि । नैतच्चित्रम् । तथा 'हि हंसः क्षीरं दुग्धम् आदत्ते गृह्णाति 'तेन क्षीरेण 'मिश्राः' सम्भिन्ना 'अपः' जलं 'वर्जयति' त्यजति । हंस इव मे बाणः, क्षीरमिव त्वम्, आपइवायं ब्राह्मणः । तत् त्वमेव बाणस्य मे ग्राह्यः, ब्राह्मणस्त्याज्यः । ( "रक्षिष्यति" ( त, न्या )—"रक्षति च" ( रा, वि, म ) ]॥

1. अविहा *&c.*—A cry of despair because Dushyanta can not see him.

2. (a) तिरस्करिणी &c.—For तिरस्करिणी see *Ante.* तिरस्करणी is more easily derived, thus :—तिरस्+कृ+ल्युटकरणे स्त्रियाम् । तिरस्करिणी requires णिनि and वृद्ध्यभावः । (b) एष सन्दधे—This is the counterpart of एष हन्मि above. सर्वत्र कर्त्रभिप्राये आत्मनेपदम् ।

3. रक्षिष्यति—The reading रक्षति च is not in accord with हनिष्यति which is in the *future.* It is better to have either both *present* or both *future.*

( ततः प्रविशति मातलिर्विदूषकश्च ) मातलिः—

कृताः शरव्यं हरिणा तवासुराः शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंषि न दारुणाः शराः ॥२८

(*Then enter Matali and Vidushaka*), Matali—The Asuras are made your target by Hari, at them let this bow be drawn. Of the good, on friendly person, fall eyes

राजा (ससम्भ्रममस्त्रमुपसंहरन् ) अये मातलिः ? स्वागतं महेन्द्रसारथे ।

King (*Hastily withdrawing the arrow*)—Ah ! Matali ! Welcome O Mahendra's charioteer.

मातलिरिति । अन्वयः—हरिणा असुरास्तव शरव्यं कृताः तेषु इदं शरासनं विकृष्यताम् । सतां सुहृज्जने प्रसादसौम्यानि चक्षूंषि पतन्ति, दारुणाः शरा न । व्याख्या —'हरिणा' इन्द्रेण 'असुराः दानवाः 'तव शरव्यं लक्ष्यम् ( शरव्यमिति क्लीवं कत्वं नित्यम ) 'कृता' दानवास्त्वया हन्यन्ताम् इति हरेरभिलाषः इत्यर्थः । अतः तेषु असुरेषु 'इदं सज्यं शरासनं धनुः 'विकृष्यताम्, सबाणमाकृष्यताम् इत्यर्थः । स्वयमिन्द्रेण प्रार्थितो दानवान् जहि, मास्तु ते मयि शरत्यागः । मयि विषये तु 'सतां साधूनां भवादृशां सुहृज्जने मादृशे बान्धवजने प्रसन्नतया 'सौम्यानि' शोभनानि 'चक्षूंषि पतन्ति दारुणाः' घोराः 'शराः न' पतन्ति । सुहृदहं न ते वध्यः ।

( "मातलिर्विदूषकश्च" (त, न्या )- 'विदूषकमुत्सृज्य मातलिः' ( रा वि म ) ॥

राजेति । 'सम्भ्रमेण त्वरया 'अस्त्रम् उपसंहरन् तूणंप्रतिप्रेरयन् । 'अये चित्रं 'मातलि.' एषः । हे 'महेन्द्रस्य 'सारथे स्वागत शोभनमागमनमस्तु ते ।

Notes

1. मातलिर्विदूषकश्च—The reading विदूषकमुत्सृज्य मातलिः leaves विदूषक outside. But we find he too is on the stage (see below). Hence we prefer the first reading.

2. इदम्—This i. e. सज्यं सबाणमेव । Your bow is already strung and it is fitted with an arrow too. It remains now to *draw* and shoot. Let the last two actions be on *demons* and not on me.

विदूषकः—अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि [ अहं येन इष्टिपशुमारं मारितः सः अनेन स्वागतेन अभिनन्द्यते ] ।

Vidushaka—He, by whom I was almost killed like a sacrificial animal, is being greeted by him with welcome !

मातलिः (सस्मितम्)—आयुष्मन्, श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः ।

Matali (*With a smile*)—O Long-lived One, hear why I am sent to your presence by Hari ( Indra ).

राजा—अवहितोऽस्मि ।

King—I am attentive.

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

Matali—There is a race of demons Durjaya by name, the descendants of Kalanemi.

राजा—अस्ति । श्रुतपूर्वं मया नारदात् ।

King—There is, I heard this before from Narada.

विदूषक इति । 'येन' अनेन 'अहम् इष्टेः' यज्ञस्य यः 'पशुः' स इव 'मारितः' ईषदून हतः ( इति पशुशब्दे कर्मण्युपपदे उपमाने मारयतेर्णमुल् ) 'सः' अनेन राज्ञा 'स्वागतेन स्वागतशब्दोच्चारणेन 'अभिनन्द्यते'—विसदृशमेतत् वयस्यस्य ।

मातलिरिति । 'सस्मित'मिति विदूषकवचनात् स्मितम् ॥ अस्तीति । 'कालनेमेः' 'प्रसूतिः' सन्ततिः 'दुर्जयः नाम' दुर्जय इति प्रसिद्धः 'दानवानां गणः समूहः 'अस्ति' ।

राजा । एतत् नारदात् मया पूर्वं श्रुतम् ("भूतपूर्वे चरट्" इति ज्ञापकात् पूर्वशब्दस्य परनिपातः ) ।

1. इष्ट etc.—इष्टिपशुरिव मारितः इति इष्टिपशु+मृ+णिच्+णमुल भावे =इष्टिपशुमारम्, by the rule "उपमाने कर्मणि च" । यज+क्ति=इष्टि ।

2. अस्मि—construe प्रेषितः अस्मि or take अस्मि as an अव्यय meaning अहम् । Compare "अन्यत्र यूय कुसुमावचायं कुरुध्वमत्रास्मि करोमि—*Rudrata*.

मातलिः—

सख्युस्ते स किल शतक्रतोरजय्यस्
तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिस्-
तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ २९ ॥

स भवानात्तशस्त्र एव इदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ।

Matali—That race is really not conquerable by your friend Satakratu, and you are thought of ( by him ) as its destroyer in the front of battle. The nocturnal gloom which Shptasapti ( Sun ) is not able *to* destroy, the moon removes. Let this self of thine even with arms taken up, proceed now for victory, having ascended that car of Indra.

राजा—अनुगृहीतोऽहमनया मघवतः सम्भावनया । अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ।

King—I am favoured by this consideration of Maghavat ( Indra ). Well, why was this procedure, adopted by you upon Madhavya ?

मातलिरिति । अन्वयः—स ते सख्युः शतक्रतोः अजय्यः किल । त्वं रणशिरसि तस्य निहन्ता स्मृतः । सप्तसप्तिः (सूर्य्यः) यत् नैशं तिमिरम् उच्छेत्तुं न प्रभवति तत् चन्द्रः अपाकरोति । व्याख्या—'सः' दुर्जयो नाम दानवगणः 'ते सख्युः' मित्रस्य 'शतक्रतोः' इन्द्रस्य ( अनुक्त कर्त्तरि वैकल्पिको षष्ठी ) 'अजय्यः किल' जेतुमशक्य एव (जय्यः इति शक्यार्थे निपात्यते )। 'त्वं रणशिरसि' युद्धाग्रभागे 'तस्य' दानवगणस्य 'निहन्ता' घातकः स्मृतोऽसि अर्थ्यसे इन्द्रेण। एहि भो आगत्य एतान् जहि इन्द्रस्त्वां स्मरति इत्यर्थः। न च तेन शतक्रतोर्लाघवम्। 'सप्त सप्तयः' अश्वा यस्य स सूर्यः 'यत् नैशं' रात्रिजातं 'तिमिरं' तमः 'उच्छेत्तुं' नाशयितुं 'न प्रभवति' न शक्नोति 'तत् तिमिरं

'चन्द्रः' अपाकरोति' निरस्यति। स 'भवान्' तथाविधस्त्वम्, असुरसंहारार्थमात्तास्त्र-मित्यर्थः 'आत्तानि' गृहीतानि 'शस्त्राणि' आयुधानि येन तथाविध एव एतदस्य 'एव' अविलम्बमिति यावत्, इदानीम्' अधुना तं' प्रसिद्धम् (प्रसिद्धार्थत्वात् यच्छब्दोपादानापेक्षते) इन्द्रं रथामारुह्य विजयाय विजयं लब्धुं प्रतिष्ठता प्रस्थितो भव (समवप्रविभ्यः स्थः" इत्यात्मनेपदम्)।

राजेति। 'मघवतः' इन्द्रस्य 'अनया सम्भावनया' सम्भावनेन 'अहम् अनुगृहीतः। यदसौ देवेन्द्रो मामेव समर्थं मन्यते तत् तस्य महाननुग्रहः। 'अथ' इत्यारभ्य। प्रस्तुतमुपसंहृत्य प्रस्तावान्तरमारभते इत्यर्थः। 'किम् एवम् ईदृशं 'प्रयुक्तम्' अनुतिष्ठतम् त्वया।

Notes

1. अजय्य'—जेतुं शक्यः इति जि+यत् कर्मणि=जय्यः capable of being conquered. This is by निपातन in the rule "क्षय्यजय्यौ शक्यार्थे"। The usual form is जि+यत् कर्मणि=जेय, ought to be conquered जेतुमर्हः। न जय्यः अजय्यः unconquerable. Similarly अक्षय्यः as in "तप.षड्भागमक्षय्यं ददत्यारण्यका हि नः"—Act. II ante.

2. स भवान् &c.—The punctuation may be done differently thus—स भवानात्तशस्त्र एव। इदानीं तम् &c—Translate—That self of thine is armed already, proceed now &c.

3. (a) मघवत्—The stem is मघवन्। This optionally changes into 'मघवत् by the rule 'मघवा बहुलम्'। In the षष्ठी we get मघोनः and मघवतः in the singular. For practical purpose मघवन् and मघवत् are two different words declined of course differently (b) सम्भावनया—सम+भू+णिच् युच् भावे स्त्रियाम्=सम्भावना। It is the same as सम्भावन which means "कार्येषु योग्यताध्यवसानम्" —*Vritti*.

मातलिः—तदपि कथ्यते। किञ्चिन्निमित्तादपि मनः-सन्तापादायुष्मान् मया विक्लवो दृष्टः। पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि। कुतः—

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः॥ १०॥

Matali—That too is (being) explained. Your Long-lived Self was noticed by me dispirited through affliction of mind from some reason or other. Then to provoke Your long-lived Self, I acted thus. For, fire blazes up when the fuel is stirred ; the snake shows its hood when molested. Usually people attain their own greatness through provocation alone.

मातलिरिति। 'किञ्चित् किमपि अज्ञातं वस्तु 'निमित्तं' कारणं यस्य तस्मात् 'अपि मनसः सन्तापात्' हेतोः 'आयुष्मान् मया विक्लवो दृष्टः'। (भवद्गमनार्थ-मागतवान् मोहं गतश्च भवन्तं दृष्टवान् इति बुद्धिस्थः समुच्चयः अपेरर्थः)। अन्वयः—अग्निः चलितेन्धनो ज्वलति। पन्नगः विप्रकृतः फणं कुरुते। हि जनः प्रायः क्षोभात् स्वं महिमानं प्रतिपद्यते। व्याख्या—'अग्निः वह्निः 'चलितानि' घट्टितानि' 'इन्धनानि एधांसि यस्य (कम्पने चलतेर्णिचः मित्वम्) तादृशः सन् 'ज्वलति निजस्वरूपं प्रकाशयति। 'पन्नगः फणी 'विप्रकृतः' उद्वेजितः' सन् फणं कुरुते' दर्शयति (करोतिः सर्वधात्वर्थे वर्त्ति)। 'हि' खलु: 'प्रायः' बाहुल्येन (प्रायम् इति बाहुल्यार्थे अव्ययम्) 'क्षोभात्' अभिघातात् 'परकृतधर्षणात् 'स्वं' निजं महिमानं प्रभावं प्रतिपद्यते गृह्णाति धत्ते। यद्वा—'हि' इत्यवधारणे, क्षोभाद्धि प्रतिपद्यते—क्षोभात् प्रतिपद्यते हि—इति वा अन्वयः। वयस्यस्य माधव्यस्य निग्रहात् धर्षितो भवान् प्रकृतिमापन्नः। एतदुद्दिश्यैव माधव्यं प्रति मया एवं प्रयुक्तम् इति।

## NOTES

1. (a) अपि—I take it as implying समुच्चय ( See Tika ). We cannot say that it adds indefiniteness of the निमित्त because the चित् has already done this.

2. (a) चलितेन्धनः—चल+णिच्+क्त कर्मणि=चलितानि stirred. If the sense is 'to drag' the root is not of the घटादि class and the form is चालित with वृद्धि। See the गणसूत्र "कम्पने चलिः (घटादिः)"।

राजा (अनात्मिकम्)—वयस्य, अनतिक्रमणीया दिवस्पते-

त्वन्मतिः केवला तावत् परिपालयतु प्रजाः ॥
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः ॥ ३१ ॥

King (*Aside*)—Friend, the command of the Lord of the heaven is not to be transgressed. So, making him acquainted with facts in this matter, tell Minister Pisuna in my word—"This bow with the string on, is engaged in another work. Till then let your intellect alone protect the people."

विदूषकः—जं भवं आणवेदि [ यद्भवानाज्ञापयति ] ।
( निष्क्रान्तः ) ।

Vidushaka—What (or-As) Your Highness commands. (*Exit*).

मातलिः—आयुष्मान् रथमारोहतु । ( राजा रथारोहणं नाटयति ) । ( निष्क्रान्ताः सर्वे ) ।

Matali—Let Your Long-lived Self ascend the car. (*The king acts ascending the car*). (*Exeunt all*).

राजेति ! 'दिवः स्वर्गस्य 'पत्युः' इन्द्रस्येत्यर्थः, ( कस्कादिषु दिवस्पतिशब्दः पठ्यते । तेन सत्वं पाठसामर्थ्यात् अलुक च ) 'आज्ञा अनतिक्रमणीया' अलङ्घनीया इदानीमेव मया गन्तव्यम् 'तत्' तस्मात् 'अत्र' अस्मिन् विषये 'अमात्यपिशुनं' पिशुनाख्यममात्यं 'परिगतार्थं' विदितवृत्तान्तं 'कृत्वा मद्वचनात्' मद्वचनमवलम्ब्य ( ल्यब्लोपे पञ्चमी ) 'ब्रूहि । सत्वरं गतोऽहं स्वयं वक्तुमसमर्थः । त्वं गमनकारणमुक्त्वा वक्ष्यमाणञ्च ब्रूहि इत्यर्थः । अन्वयः—केवला त्वन्मतिस्तावत् प्रजाः परिपालयतु । इदमधिज्यं धनुः अन्यस्मिन् कर्मणि व्यापृतम् । व्याख्या—'केवला' एका असहाया त्वन्मतिस्तावत् त्वदीया सर्वदर्शिनी बुद्धिरेव 'प्रजाः परिपालयतु' रक्षतु । तस्या भवद्बुद्धेः यः सहायः तत् 'इदम अधिज्य'' दत्तगुणं मे 'धनुः अन्यस्मिन् राज्यरक्षाव्यतिरिक्ते 'कर्मणि व्यापृतं' नियुक्तम् । त्वदीया शास्त्रेषु अकुण्ठिता बुद्धिः मम च सज्यं धनुः इति द्वे मिलिते राज्यं रक्षतः । धनुस्तु सम्प्रति कार्य्यान्तरे व्यापृतं, बुद्धिरेव ते केवला राज्यं रक्षतु इति भावः ।

NOTES

1. (a) दिवस्पतेः—दिवः पतिः दिवस्पतिः। अलुक् समास (तत्)। The षष्ठी does not disappear and the विसर्ग is replaced by स। This the गणकार explains saying that दिवस्पति occurs in the कस्कादि list. Hence the list wants स for विसर्ग therefore the विसर्ग is *not* dropped (अलुक्) as is usual in a समास। Nagesa first appeals to the rule "तत्पुरुषे कृति बहुलम्"। 'वाचस्पत्यादौ तत्पुरुषे कृति इति अलुक्'—*Sekhara.* He has then to refer to the कस्कादि list for the स; The कस्कादि list is आकृतिगण, but so far as given by पाणिनि the word दिवस्पति does not appear in it. If however we take it as a Vedicusage we may refer to the rule "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" which enjoins सत्त्व and perhaps by implication अलुक also. Comp—"कथं तर्हि वाचस्पतिः इत्यादि ? उच्यते, क्वचित् छान्दसा अपि भाषाया प्रयुज्यन्ते कस्कादिषु वा द्रष्टव्यम्"—दुर्घटवृत्तिः।

*Remark*—Throughout, Matali addresses the king as आयुष्मान् as a सारथि has to do towards the रथिन्।

**षष्ठोऽङ्कः**—The Sixth Act.

# सप्तमोऽङ्कः

**( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च )।**

**राजा—मातले, अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये।**

**(*Then enter by aerial flight the king seated on a car with matali*). King—Matali, although I have executed the orders, I deem myself unworthy as it were owing to the profusion of honours (done to me) by Indra**

मातलिः—( सस्मितम् )—आयुष्मन् उभयमप्यपरितोषं समर्थये ।

प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यवदानविस्मितो भवतः सोऽपि न सत्क्रियामिमाम् ॥१

Matali—( *With a smile* )—O long-live one, I see both of you dis-satisfied. You from the honour, deem light the prior benefit conferred upon Indra. He too surprised at your feat, does not reckon this honour done unto you.

वत इति । 'आकाशेन विहायसा यत् 'यानं' स्वर्गात् भूतले प्रत्यावर्त्तनं तेन । राजति । 'अनुष्ठित' कृतः 'निर्देशः' आज्ञा, दानववधरूपा येन: सः कृतकर्मा इति यावत् । 'मघवत इन्द्रस्य 'सत्क्रया' पूजा, तस्य 'विशेषः' अतिशय उत्कर्ष इति यावत् तस्मात् ( मघवत इति निर्देशेन सत्क्रियया च सापेक्षम । गमकत्वात् समास' । उभयसापेक्षत्वात् स्वग्रसमस्तम् ) । 'आत्मानम्' माम् 'अनुपयुक्तम् अयोग्यम्, अपात्रम् 'इव समर्थये' मन्ये ।

मातलिरिति । 'स्मितेन' ईषद्धासेन 'सह' ( यथा तथा ) । 'उभयं द्वयं भवन्तम् इन्द्रञ्च । 'अपरितोषं स्वस्वकृत्या असन्तोषम् मन्ये । इन्द्रस्त्वा प्रपूज्य असन्तुष्टः भवांश्च महदपि कर्म कृत्वा असन्तुष्टः । कौतुककरमेतत् इति हास' । अन्वयः....भवान् मरुत्वतः प्रतिपत्त्या प्रथमोपकृतं लघु मन्यते । सोऽपि भवतः अवदानविस्मितः इमां सत्क्रियां न गणयति । व्याख्या···'भवान् मरुत्वतः देवराजस्य 'प्रतिपत्त्या' गौरवेण, इन्द्रकृतया पूजया इति यावत ( 'प्रतिपत्तिस्तु गौरवे' इति हैमः ) 'प्रथमं' प्राक् यत् उपकृतं दानववधेन त्वया उपकारः कृतः 'तत् तुच्छं' 'मन्यते' सम्भावयति । 'सोऽपि' इन्द्रश्च 'अवदानेन' कर्मणा भवत्कृतेन दानववधकर्मणा ('अवदानं खण्डने स्यादितिवृत्ते च कर्मणि' इति मेदिनी ) 'विस्मितः' साश्चर्यः सन् 'इमाम्' आत्मकृता 'सत्क्रियां' पूजा न गणयति कथमयोग्यां न मन्यते । अहो अवदानं, तुच्छा मे सत्क्रिया इति मघवतः, अहो सत्कारः, तुच्छं मे कर्म इति भवतो भावना । ( 'प्रथमोप...भवान् ( रा-, म-वि ) —'उपकृत्य हरेस्तथा भवान् लघु सत्कारमवेत्य मन्यते ( त-, मा ) ॥ 'विस्मितः'

( रा, वि ) 'तोषितः' ( म )—॥ 'सम्मितां' ( त. न्या ) । 'इभाम्' ( त, न्या—)'गुणान्' ( रा, वि, म ) ) ] ॥

## NOTES

*Summary*—अथ विजित्य दैत्यान् प्रत्यावर्त्तमानो राजा हेमकूटशिखरं प्राप । तत्र तपस्यन्तं मारीचं द्रष्टुमवातरत् । अवसरप्रतीक्षश्च स्थितः तपस्विनीभ्यामनुगतं बालमेकं चक्रवर्त्तिलक्षणमैक्षिष्ट । तञ्च चापलात् वारयितुं तापसीभ्यामनुरुद्धः स्पृशन् स्पर्शसुखाद्विसिस्मिये । ततः कथाप्रसङ्गेन पौरवोऽयं बालः पिता चास्य दारत्यागी शकुन्तलेति च मातुर्नाम इति ज्ञात्वा यावन्निश्चयं नाधिगच्छति तावदपश्यत् भूपतितं बालस्य रक्षाकरण्डकम् । तदादाय राज्ञा बालाय समर्पितम् । सा तु औषधिः पितरौ आत्मानञ्च वर्जयित्वा भूपतिता यदि गृह्यते ततो गृहीतारं सर्पोभूत्वा दशति इति स्थितेऽपि राजानमक्षत दृष्ट्वा दुष्यन्त एवायमिति निश्चित्य तापसीभ्यां राजानं बोधयित्वा गत्वा शकुन्तला विज्ञापिता । बालस्तु गन्तुमिच्छन् पुत्र इति आभाष्य निरुद्धः 'दुष्यन्तो मे पिता न त्वम्' इति विप्रतिपेदे । इत्थं प्रतिवादात् निश्चयश्च जातः । शकुन्तला च तत्र प्राप्ता प्रत्यभिज्ञाता च राज्ञा । एवं समागतौ दम्पती मारीचमभ्युपेतौ । तेन च महर्षिणा तदा दुर्वाससा दत्तः अङ्गुरीयदर्शनावसानः शाप आख्यातः मनश्च दम्पत्योः प्रससाद । ततो दारापत्यसंयोगात सिद्धार्थो राजा मुदा परमया स्वनगरं प्रत्यागतः ।

## NOTES

1. (a) आकाश &c.—See *Ante.* (b) मघवतः—Connected with both निदेश and सत्क्रिया । (c) अनुपयुक्तम्—उप + युज + क्त कर्त्तरि = उपयुक्तः worthy, serviceable कृतकर्मा । अनुपयुक्तमिव as if I have done nothing adequate to the reward.

2. (a) मरुत्वतः—मरुतः सन्ति अस्य इति मरुत + मतुप = मरुत्वान । Here मरुत् is not a पद owing to the rule "तसौ मत्वर्थे" । Hence we do not get मरुद्वान् । प्रतिपत्त्या—इतौ तृतीया । (c) अवदान &c.—अव + दै शोधने + ल्युट् करणे = अवदानम् an achievement. Bhanuji has भावे ल्युट् । तेन विस्मितः ।

3. *Reading*—(a) The first half as given in the Beng-

Rec. is more compact if not more idiomatic. The only thing against it is उपकृत्य लघु मन्यते which does not state clearly *what* is considered लघु। But does it really sin against perspicuity to say उपकृत्य लघु मन्यते = उपकृत्य तत् उपकृतं लघु मन्यते (The service itself is deemed insignificant)? (b) विस्मित better describes the character of the service rendered than तोषित:। (c) गुणान in the *plural* serves no special purpose; स्मास draws special attention to *recent* honours and seems more appropriate.

राजा—मातले, मा मैवम्। स खलु मनोरथनामप्यभूमिर्विसर्जनावसरसत्कारः। मम हि दिवौकसां समक्षमर्द्धासनोपवेशितस्य—

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥२॥

King—No, Matali, say not so. The honour at the time of dismissal is indeed not within the range of thought even. For by Hari, as he smiled looking up to Jayanta who stood near with an inward longing, was put on me, seated on half his seat in presence of the gods, the Mandara garland marked by the yellow sandal, rubbed off from his chest.

राजेति। 'स' इति अनुभूताहत्वात् यच्छब्दोपादानं नापेक्षते। 'विसर्जनस्य' राजधानीं प्रति प्रेरणस्य 'अवसरे' समये यः 'सत्कारः स खलु' ननं मनोरथानामपि अभूमिः अविषयः। ईदृशी मे पूजा भविष्यति इत्यहं मनसापि नाकरवम्। अभूमित्वं दर्शयति—अन्वयः—हि अन्तिकस्थम् अन्तर्गतप्रार्थनं जयन्तमुद्वीक्ष्य कृतस्मितेन हरिणा आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला दिवौकसां समक्षम् अर्द्धासनोपवेशितस्य मम पिनद्धा। व्याख्या ..'हि' यतः 'अन्तिकस्थं' समीपवर्त्तिनम् अतएव प्रीतिमन्तम् 'अन्तर्गता' हृदयस्थिता 'प्रार्थना' मालाभिलाषो यस्य तथाविधम् अतएव दुष्परिहरं जयन्तं निजतनयम् अतएव अप्रत्याखेयम् 'उद्वीक्ष्य ऊर्द्धं प्रेरितनेत्रं दृष्ट्वा (एतेन जयन्तस्य अन्येषाञ्च देवानामनुपवेशनं सूच्यते) 'कृतं स्मितम्' ईषद्धासो येन तथाविधेन

अन्तर्यामितया पुत्रस्य मनोगतं पश्यन् 'अहो ईदृशी ते दुराशा' इति ईषद्धसितवता 'हरिणा इन्द्रेण 'आमृष्टं' चालितं 'वक्ष:स्थितं' यत् हरिचन्दनं पीतचन्दनं तदेव 'अङ्कः' यस्या: तादृशी 'मन्दारमाला' मन्दाराख्यसुरपादपपुष्पमालिका 'दिवौकसां' देवानां 'समक्षं' समीपे ( अव्ययीभाव: । टच् समासान्त: ) 'अर्द्धासने' आत्मनाधिकृतस्य तुल्ये भागे ( 'अर्द्धं' नपुंसकम्' इत्येकदेशिसमास: ) उपवेशितस्य' स्वयमेव दत्तासनस्य इत्यर्थ: मम ( सम्बन्धे ) पिनद्धा' आसञ्जिता । यद्वा—'हरिणाहि' स्वयमिन्द्रेण 'पिनद्धा'। यद्वा वा—मम हि न तु जयन्तस्य 'पिनद्धा' इत्यन्वय:। देवा स्थिता अहमुपविष्ट: इत्येक: सत्कार: उपवेशनञ्च हरिप्रयुक्तं हरिणैव एकासने इति द्वितीय:, प्रीतिमान् पुत्र: प्रार्थयमान: समीपे एवास्ते तमुपेक्ष्य मे मालादानम् इति तृतीय:, सा च माला स्वयमुपभुक्ता इति चतुर्थ: । एषाम् एकैकमपि मनसाप्यचिन्तितम् इत्यभिप्राय: । *

## NOTES

1. (a) मम—Construe with पिनद्धा in the verse following. (b) दिवौकसाम्—दिव is here अकारान्त meaning स्वर्ग । "मन्दार: सेरिभ: शक्रभवनं स्वर्दिवं नभ:" इति त्रिकाण्डशेष: quoted by Bhanuji, दिवम् ओको येषाम् । (c) समक्षम्—अक्ष्णो: समीपे इति सम्+अक्षि+टच् समासान्त by the गणसूत्र—"प्रतिपर (?) समनुभ्य: अक्ष्ण:" ।

2. (a) अन्तर्गत etc—The force of गत is प्रार्थनम् अन्तरेवगतं न तु वाग्वृत्त्या वेदितम् । Also see Tika. (b) अन्तिकस्थम्—for force see Tika. (c) उद्वीक्ष्य--उद् implies upward motion. Hence जयन्त was standing and Indra was *seated* with Dushyanta. (b) आमृष्ट &c.—वक्षस् implies that Indra took the garland off his own neck. Hence the magnitude of the honour.

**मातलि:—किमिव नाम आयुष्मानमरेश्वरान्नार्हति । पश्य—**

**सुखपरस्य हरेरुभयै: कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।**
**तव शरैरधुनानतपर्वभि: पुरुषकेसरिणश्च पुरा नखै: ॥३॥**

* देवा: स्थिता:...चतुर्थ: adopted by Prof, Gajendragadkar.

MATALI—What possibly is that which Your Long-lived Self does not deserve o. the Lord of the immortals. Behold the heaven rendered thoroughly weeded of the thorns of demons unto Hari, addicted to pleasure, by both these—now by the smooth-jointed arrows of thine, previously by the claws of the Man-lion. ( Vishu ).

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां विभेत्ता
तञ्चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

King—In this matter verily the majesty of Indra alone is to be belauded That agents succeed even in great enterprises, consider that as the effect of their estimation by the mighty. Could Aruna have become the piercer of darkness, had not the thousand-rayed sun placed him in front of his car ?

मातलिरिति ॥ 'किं' प्रश्ने । 'इव' अनिश्चये ॥ 'नाम' सम्भाव्ये । अमरेश्वरात् देवराजात् 'न अर्हति' लब्धुं न योग्या भवति । 'पश्य' एतत् चिन्तय । किं तदित्याह —अन्वयः—अधुना आनतपर्वभिः तव शरैः पुरा च पुरुषकेसरिणो नखैः—उभयैः त्रिदिवं सुखपरस्य हरेः उद्धृतदानवकण्टकं कृतम् । व्याख्या—'अधुना' सम्प्रति 'आनतानि' अनुन्नतानि, मसृणानि इत्यर्थः 'पर्वाणि' ग्रन्थयः येषां तथाविधैः 'तव शरैः', बाणैः । 'पुरा च' कृतयुगे च 'पुरुषकेसरिणो' नरसिंहरूपस्य भगवतो नारायणस्य 'नखैः' इति 'उभयैः' द्वाभ्यां गणाभ्याम् ( शराणां नखानाञ्च प्रत्येकं बहुवचनम् ) त्रिविधं दीव्यति इति 'त्रिदिवं' स्वर्गः ( इगुपधलक्षणः कः । दिवशब्देन समासो वा ) 'सुखपरस्य भोगनिरतस्यसमर्थस्यापि 'हरेः' इन्द्रस्य सम्बन्धे 'उद्धृतानि समुत्सादितानि 'दानवरूपाणि कण्टकानि सुखविघातकानि यस्मात् तथाविधं कृतम् ; पूर्वं हिरण्यकशिपोर्वधात् या शान्तिः स्वर्गस्य आसीत् अद्य दुर्जयजयात् सैव भवता भूयोऽपि विहिता । तत् इत्थमुप कृतवतो भवतः किमदेयमस्ति देवेन्द्रस्य इति भावः ।

राजेति। 'अत्र' अस्मिन् मच्छरे: कण्टकोद्धारे 'खलु नूनं 'शतक्रतोरेव' न मम 'महिमा' प्रभाव: स्तुत्य:' (क्यप्प्रत्यय:) प्रशस्य:। मम विजयोऽपि इन्द्रस्यैव प्रसादात् तत् का मे स्तुति: इति भाव:। तदेव दर्शयति। अन्वय:—महत्स्वपि कर्मसु नियोज्या: सिध्यन्ति (इति) यत् तम् ईश्वराणां सम्भावनागुणम् अवेहि। अरुण: तमसां विभेत्ता किं वा अभविष्यत चेत् सहस्रकिरण: तं धुरि न अकरिष्यत्। व्याख्या— 'महत्स्वपि' गुरुषु अपि कर्मसु नियोज्या: नियोक्तुं वा नियोजयितुं शक्या: भृत्या इत्यर्थ: (शक्यार्थेण्यति कृत्यप्रतिषध:) 'सिध्यन्ति' सिद्धिमन्तो भवन्ति फलं घटयन्ति इति 'यत्' भृत्यानां या कृतार्थता 'तम्' ( विधेयप्राधान्यात् पुंलिङ्गता ) 'ईश्वराणां' शक्तिमतां स्वामिनां सम्भावनाया:' अयमत्र क्षम: इत्येवंरूपाया: समर्थनाया: इति विद्यासागरपादा: 'गुणं महिमानम् अवेहि जानीहि। 'अरुण: 'अनूरु: गरुडाग्रज. 'तमसां ध्वान्तानां 'विभेत्ता' निरासक: 'किं' वा अभविष्यत्' नैव अभविष्यत् चेत् यदि सहस्रं किरणा यस्य अतएव शक्तिमान् अंशुमाली 'त धुरियानमुखे न अकरिष्यत् न अस्थापयिष्यत्। धुरि चेत् अकरणं तमसामविभेद: तत् तमोविभेदे धुरि करणरूपा सम्भावना एव कारणम्। अतएव दानवजये इन्द्रेण मदीयो नियोग: कारणं नाहम्। (अकरणाविभेद-रूपयो: क्रियो: हेतुहेतुमद्भावे सति एकस्य वैगुण्यात् अन्यस्य अनिष्पत्ति:। ततो लृङ्) ॥ मूलम् (रा-, वि-म, )—'किं प्राभविष्यदरुणस्तमसां वधाय' (त, न्या ) ] ॥

## NOTES

1. (a) * सुखपरस्य—Indra was *pleasure-loving*. This does not imyly that he was weak or timid, but only shows his *aversion to make an effort.* (b) उभये:—उभ+अयच्=उभयम् a group of two. उभय is usually *singular*. The plural may be defended as in, "उभये देवमनुष्या:"—*Bhashya.* Also see Tika (c) त्रिदिवम्—त्रि+दिव्+क कर्त्तरि—त्रिदिवम्। Or त्रावयवं दिवं त्रिदिवम् शाकपार्थिवादि etc.

2. (a) सिध्यन्ति—सिध of the दिवादि class means निष्पत्ति as in सिद्धमन्नम्। Hence secondarily it means to succeed which is the sense here. Comp. स्वयमसिद्ध: कथमन्यान् साधयेत्। (b) सम्भावना &c.—सम्+भू णिच्+युच् भावे=सम्भावना estimation.

* Adopted by Prof Gajendragadkar.

'सम्भावनं क्रियासु योग्यताध्यवसानम्'...*Vriti.* योग्यताध्यवसानम्=a surmise of one's abi-lity thinking that so and so is able to do such and such work. This thought ( सम्भावना ) on the part of the Mighty ( ईश्वर ) actually gives his agent the power to do the work ( सम्भावनागुण ) । Dushyanta wants to say —I have succeeded simply because Indra thought I should succeed, such is Indra's greatness that his mere thought has endowed me with the power necessary to succeed Hence. 'अत खलु शतक्रतोरेव महिता स्तुत्य.।' This is somewhat like—'ऋषीणा पुनराद्याना वाचमर्थोऽनुधावति'। For an exactly similar idea compare. "ननु वज्रिण एव वीर्यमेतद्विजयन्ते द्विषतो यदस्य पत्त्या:'—*Vikrama* (c) तमसा विभेत्ता वि+भिद+तृच कर्त्तरि=विभेत्ता। We cannot have तृन so to say, for that would bar the षष्ठी in तमसाम्! Besides, no habit in it is implied here but simply success through specially favourable circumstances. Hence तृन् should be out of the question

3. *Rhetoric*=From अत खलु to नाकरिष्यत we have a complete syllogism. The object is to establish the particular case "अत शतक्रतोर्महिमा स्तुत्य:।" Towards this is cited the general proposition "सिध्यन्ति · तमीश्वराणम्"। This much consitutes an अर्थान्तरन्यास। The portion "किं वा···नाकरिष्यत is only an *illustration* of the general proposition, hence it furnishes a दृष्टान्त।

मातलि:—सदृशं तवैतत्। ( स्तोकमन्तरमतीत्य ) आयुष्मन्, इत: पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशस:।

विच्छित्तिशेषै: सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु।
विचिन्त्य गीतक्षममर्थजातं दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

MATALI—This is worthy of you. (*Passing a short distance*) O Long-lived One, in this behold the good luck of your fame that has established itself on the surface of the heaven. Yonder denizens of the heaven, with paints left over after the decoration of the heavenly beauties, and on their garments, obtained from the kalpa-creeper.

are depicting your ( recent ) exploits, having thought out materials capable of being set to music ( *Or*—worthy of divine melody ).

मातलिरिति। 'एतत् विनयवचनं 'तव सदृशं' योग्यम्। शूरा अविकत्थना भवन्ति इति भावः। ( 'तव' ( त, न्या )—'एव ( रा, वि-म ) )! श्लोकं किञ्चित् 'अन्तरं' दूरम् 'अतीत्य गत्वा आह—'इतः' अस्यां दिशि इत्यङ्गुल्या निर्देशः 'नाकस्य' स्वर्गस्य 'पृष्ठ' उपरि 'प्रतिष्ठितस्य' कृताधिपत्यस्य 'आत्मनो यशसः'—दानवजयजातायाः कीर्त्तेः 'सौभाग्य'' शुभादृष्टं 'पश्य'। तदेव दर्शयति—अन्वयः—अमी दिवौकसः गीतक्षमम् अर्थजातं विचिन्त्य सुरसुन्दरीणां कल्पलतांशुकेषु विच्छित्तिशेषैर्वर्णैः त्वच्चरितं लिखन्ति। व्याख्या—'अमी' दूरं दृश्यमाना 'दिवं' स्वर्गः 'ओको' निवासो येषां ते देवा इत्यर्थः 'गीतस्य' गानस्य 'क्षमं' योग्य' सुरसुन्दरीभिर्गानार्हम् अर्थानां वस्तूनां 'जात' समूहं पदावलीमित्यर्थः ( 'अर्थः प्रकारे विषये वित्तकारणवस्तुषु' इति 'जातं जात्योघजन्मसु' इति च विश्वः ) 'विचिन्त्य ध्यायं ध्यायं निरूप्य 'सुरसुन्दरीणां' देवस्त्रीणां प्रत्येकं पदावलिं' रचयित्वा स्वर्वनितानां कल्पलतायाः' यानि अंशुकानि वस्त्राणि तेषु कल्पपादपपल्लवेषु निजवनितावसनेषु इत्यर्थः 'विच्छित्तेः' अङ्गरागात्' ( विच्छित्तिरङ्गरागेऽपि इति विश्वः ) 'शेषैः अवशिष्टैः' 'वर्णैः' तत् उद्धृत्य इति भावः तव चरितं' दुर्जयजयावदानं लिखन्ति'। प्रियजनेन गेयं प्रियसाधनवर्णेन प्रियपरिहित-वसनेषु स्वहस्तेन लिखितं ते यशः। अहो सौभाग्यम् इति भावः।*

Notes

1. तव—The Devangari reading एव entirely misses the meaning.

2. (a) विच्छित्ति &c.—वि+छिद्+क्तिन् भावे=विच्छित्तिः painting. शिष+घञ् भावे कर्मणि शेष. residue. विच्छित्तेः ( पञ्चमी ) शेषः। सुप्सुपा। (b) विचिन्त्य—वि indicates *effort* on the part of the thinkers. They wanted the composition to be worthy of the subject-matter. Hence effort. (c) गीतक्षमम्...गीतं क्षमते इति गीत+क्षम+अ कर्त्तरि। Or गीतस्य क्षमं योग्यम्। The female voice is sweet.

* प्रियजनेन &c. adopted by Prof, Gajendaragdker.

hence सरसुन्दरीणाम् not सुराणाम्। Comp. "इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणो-दयम्। आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः॥"—*Raghu.*

**राजा—मातले, असुरसम्प्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितोऽयं प्रदेशो मया। कथमस्मिन् मरुतां पथि वर्त्तामहे।**

King—Matali, yesterday this region was not noticed by me while ascending the heaven eager as I was for the fight with the demons. In which course of the winds are we ?

**मातलिः—**

> **त्रिस्रोतसं वहति यो गगनप्रतिष्ठां**
> **ज्योतींषि वर्त्तयति च प्रविभक्तरश्मि।**
> **तस्य व्यपेतरजसः प्रवहस्य वायोर्-**
> **मार्गो द्वितीयहरिविक्रमपूत एषः॥६॥**

Matali—This is the region, sanctified by the second foot-step of Hari, free from the operation of the quality of Rajas, the region of the wind pravaha which bears the tripple-streamed riv r that is in heaven and causes the luminaries to revolve with their rays duly apportioned.

राजेति। 'पूर्वेद्युः पूर्वस्मिन् दिने ('सद्यःपरुत्...' इति निपातः) 'दिवमधिरोहता असुरैः' सह यः 'सम्प्रहारः युद्धं तत्र 'उत्सुकेन मया अयं प्रदेशो न लक्षितः। सप्त मरुतां पन्थानः सन्ति। तत्र 'कतमस्मिन् पथि' अधुना 'वर्त्तामहे' तिष्ठामः। अत्र हि राजा विनयात् कथान्तरावतारणाया आत्मस्तुतिप्रस्तावं परिहरति।

मातलिरिति। अन्वयः...यः गगनप्रतिष्ठां त्रिस्रोतसं वहति ज्योतींषि प्रविभक्तरश्मि वर्त्तयति च, तस्य व्यपेतरजसः प्रवहस्य वायोः एष द्वितीयहरिविक्रमपूतो मार्गः। व्याख्या...यः गगने 'प्रतिष्ठा' स्थितिर्यस्याः तथाविधां 'त्रिस्रोतसं' त्रिमार्गगाम् आकाशगङ्गामित्यर्थः 'वहति' धारयति वितनोति वा, 'ज्योतींषि' तारकादीनी 'प्रविभक्ताः यथाभागं व्यवस्थापिता 'रश्मयो' भासः यस्मिन् कर्मणि यत् यथा तथा वर्त्तयति च' मण्डलशो भ्रमयति च 'तस्य, अतएव स्वर्गादिलोकसम्पर्कात् 'व्यपेतं दूरीभूतं 'रजो' रजोगुणो यस्मात् तस्य—प्रवहस्य तन्नाम्नोभूवायोरन्तरस्य 'वायोः एषः' द्वितीयेन हरेः

वामनावतारे त्रिविक्रमरूपस्य श्रीविष्णोः विक्रमेण पादन्यासेन 'पूतः' पवित्रः शुद्धसत्त्वमय इत्यर्थः मार्गः पन्थाः। आवहप्रवहादिषु द्वितीयस्य प्रवहस्य वायोरयमधिकारः। स्वयं ज्योतिर्विभागकर्तुरस्य तमसः कथैव नास्ति। परन्तु अयं पूतां मन्दाकिनीं वहन् रजसोऽपि मुक्तः। ततश्च हरिपादपातेन पुनः परमे सत्त्वे स्थित एष पन्थाः। * (प्रविभक्त रश्मि ( रा )...'प्रविभक्तरश्मिः' ( वि, म, त, न्या )। मूलम् ( त न्या ) ··'तस्य द्वितीयहरिविक्रमनिस्तमस्कं वायोरिमं परिवहस्य वदन्ति मार्गम्' ( रा, वि, म )।

## Notes

1. (a) असुर...सुरा+अच् मत्वर्थे=सुरः one having a share of the nectar. न सुरः सुरविरोधी an opponent to the gods. विरोधार्थे नञ्। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः। सम implies *reciprocity* व्यतिहार। सम्प्रहरन्ते अस्मिन् इति सम्+प्र+हृ+घञ् अधिकरणे=सम्प्रहारः battle. Or घञ् भावे meaning *fight*. असुरैः सम्प्रहारः। सुपसुपा। तस्मिन् तेन वा उत्सुकः। सुप्सुपा। (b) कतमस्मिन् &c—Seven courses of the wind are enumerated. These are आवह, प्रवह उद्वह, संवह, सुवह, परिवह, परावह in order of distance from the earth. But the names are diff. given by different authorities. (c) *Remark*—Raghava thinks that the king introduces a new subject purposely to stop Matalis laudatory remarks.

2. (a) त्रिस्रोतसम्...त्रीणि स्रोतांसि यस्याः सा त्रिस्रोताः the three streamed *i. e.* the Ganges which is supposed to have one stream in the heaven ( the Milky way ), one on earth, and a third in the nether region (b) प्रविभक्त &c—रश्मि conveys a pun. It also means the *reins of a horse*. Just as a trainer turns the horse round and round catching hold of the reins, so does प्रवह with regard to the heavenly bodies.

3. (a) *व्यपेत &c—रजस् has a pun. It means धूलि also. The मार्ग is *devoid of* dust, because it is above भूवायु which alone con-

*Adopted by prof. Gajendragadkar.

tains dust (b) द्वितीय &c.—The allusion is to the वामनावतार of Hari. This was to relieve Indra of the oppression of the demon Bali. Vishnu appeared before him in the form of a Brahmana dwarf and asked for the grant of such space as he could cover in three steps. He said he wanted this for then he would be able to practise penances on his own land, asceticism observed on another's soil brings no merit. Bali agreed. But lo! No sooner he pronounced the formula of gift than the manikin assumed gigantic proportions and covered the entire earth with one step, and the heavens with another. The demon, who was a devout Vaishnava, saw that it was his own Lord that had come to treat with him, and in ecstasy he put forth his head to the Lord to place his third foot on.

4. (a) प्रविभक्तरश्मि—This is a क्रियाविशेषण refers prominently to the *manner* of spinning, and is therefore preferable to the attributive प्रविभक्तरश्मि. qualifying य.* (b) तस्य द्वितीय ··मार्गम् —This refers to परिवह the *sixth* course. But Mahamahopadnyaya Nayapanchanana has the following quotations —'भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः। पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम।'—*Suryasiddhanta* "भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन' —*Siddhantasiromani*. 'यस्माज्ज्योतींषि वहति प्रवहस्तेन सम्मतः—*Vishnupurana.* This leaves no doubt that "ज्योतींषि वर्त्तयति च प्रविभक्तरश्मि' applies to प्रवह and *not* to परिवह। The Bengali reading is therefore peferable. This is confirmed by the king's remark—मेघपदवीमवतीर्णौ स्व. (see below).

राजा—अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति। (रथाङ्गमवलोक्य) मेघपदवीमवतीर्णौ स्वः।

King—Hence, surely, my innerself with the internal and external senses, enjoys tranquillity. (*Looking* at the *wheels*) We have descended to the region of clouds.

---

* Adopted by Prof. Gajendragadkar.

मातलिः—कथमवगम्यते ।

Matali—How is that known !

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

King—This chariot of yours with the rims of its wheels wet with sprays, with Chatakas rushing out of the interstices of the spokes, and with the horses, tinged with the glow of lightning, indicates passage over clouds having water inside their cavities.

राजेति । 'अतः' खलु' अतएव कारणात्' सत्वमये मार्गे स्थितत्वात् इत्यर्थ । 'बाह्यैः' श्रोत्रनेत्रादिभि. 'करणैः इन्द्रियैः 'अन्तः' अन्तःस्थितेन 'करणेन आभ्यन्तरेण मनसा ( अन्तः शब्दोऽत्र लक्षणया अन्तःस्थवाची ) 'सह मम अन्तरात्मा इत् 'प्रसीदति' सत्त्वसम्पर्कजमात्मप्रसादं लभते । 'रथाङ्ग'' रथचक्रम् । 'मेघानां पदवीं स्थानं समनन्तरस्य भुवायोरावहस्य मार्गम् 'अवतीर्णौ स्वः' ।

राजेति । अन्वय.—अयं ते शीकरक्लिन्ननेमिः रथः अरविवरेभ्यो निष्पतद्भिश्चातकैः, अचिरभासा तेजसा अनुलिप्तैः हरिभिश्च, वारिगर्भोदराणां घनानामुपरि गतं पिशुनयति । व्याख्या—'अय ते' तव, त्वत्परिचालित इत्यर्थः 'शीकरैः' जलकणैः क्लिन्ना आर्द्रा 'नेमय चक्रधारा यस्य तादृशो 'रथ.' (इदं तावत् प्रथमं सूचकम् ) 'अराणां' चक्राङ्गविशेषाणां विवरेभ्यः' अन्तरालेभ्यः 'निष्पतद्भिः उड्डीय बहिरागच्छद्भिः 'चातकैः मेघप्रियैः पक्षिभिः ( द्वितीयमेतत् सूचकम् ) 'अचिरा' क्षणिका 'भाः' दीप्तिः यासां तासां, विद्युतामित्यर्थः 'तेजसा' दीप्त्या 'अनुलिप्तैः' रञ्जितैः 'हरिभिश्च' त्वदीयैरश्वैश्च ( एतत्त तृतीयं लिङ्गम् ) 'वारिगर्भं जलपूर्णम् 'उदरम्' 'अभ्यन्तरं' येषां तथाविधानां 'घनानां' मेघानाम् 'उपरि पृष्ठे गतं गमनं 'पिशुनयति सूचयति । दृष्टिपातप्रत्यायया सन्निहिता-

चातकाः चक्राङ्गाणामवकाशभिःसरन्ति। अश्वाः ते विद्युत्प्रभारञ्जिताः। आर्द्रं च चक्राङ्गम्। तन्मन्ये समतीत्य सुरवत्मं मेघमार्गमवतीर्णा वयमिति।

Notes

1. सबाह्य &c.—बाह्यानि च अन्तश्च बाह्यान्तः external and internal द्वन्द्व। The whole is an अव्यय। बाह्यान्तः करणानि बाह्यान्तःकरणानि कर्मधा—। तैः सह वर्तमानः। बहु—।

2. *मेघ &c —This shows transition to the course *immediately* below. Now मेघपदवी is in the course of भुवायु। भूमेर्बहिर्द्वादश योजनानि भवायुरत्राम्बुदविद्युदाद्यम्—*Siddhanta siromani* quoted by *Nayapanchanana* Hence the subject matter of the previous remark must be the *immediately above* भुवायु, *i e.* प्रवह and *not* परिवह, *Cf* भुवायुराबह प्रवहस्तदूर्ध्वं। We say *immediately*, because 'अन्तरात्मा प्रसीदति' and 'मेघपदवीमवतीर्णौ स्व' are spoken of *in the same breath.*

3. अचिर &c—चिर is चिरस्थायिनी by लक्षणा। न चिरा = अचिरा transient, नञ्तत्—। तादृशी भाः यासां तासाम्। बहु—। *Cf.* 'अचिरांशुविलासचञ्चला' in Kirata 19 also

4. वारि &c.—वारि गर्भे यस्य तत् वारिगर्भम्, व्यधिकरण बहु—of the गड्वादि class like कमण्डलुपाणि। Now see Tika.

मातलिः—क्षणादायुष्मान् स्वाधिकारभूमौ वर्त्तिष्यते।

Matali—In a moment the Long-lived One will be in the regions owned by himself.

राजा—( अधोऽवलोक्य )—मातले वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।
सन्तानात्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

King—( *Looking below* )—Matali, the region of men

* Adopted by Prof. Gajendragadkar.

appears of ( or presents ) a strange spectacle through descent with speed. Thus—Behold the land descends as it were from the summit of up-rising mountains ; trees leave their concealment within leaves through the exhibition of their trunks , rivers whose waters had disappeared through thinness, undergo manifestation from expansion, the world is being brought to my side as it were by some one throwing it up.

मातलिरिति। 'उपगात्' उपगमतिवाह्य ( ल्यब्लोपे पञ्चमी, कारकमध्ये वा ) 'स्वस्य अधिकारस्य' नियोगस्य 'भूमौ' स्थाने भूपृष्ठे 'वर्त्तिष्यते स्थास्यति।

राजेति। 'वेगेन अवतरणात्' हेतोः 'मनुष्याणां लोकः' भुवनं पृथिवी इत्यर्थः 'आश्चर्यं' विचित्रं 'दर्शनं' यस्य तथाविधं 'संलक्ष्यते'भाति। तदेव वर्णयति। अन्वयः—पश्य मेदिनी उन्मज्जतां शैलानां शिखरादवरोहतीव। पादपाः स्कन्धोदयात् पर्णाभ्यन्तरलीनतां विजहति। तनुभावनष्टसलिला आपगाः सन्तानात् व्यक्तिं भजन्ति, भुवनम् उत्क्षिपता केनापि मत्पार्श्वम् आनीयते इव। व्याख्या—'पश्य' आश्चर्यमवलोकय ( वाक्यमन्यत्कर्माथं कर्म )। 'मेदिनी' भूमिः 'उन्मज्जतां' सहसा उत्प्लुत्य इव प्रकटीभवतां 'शैलानां' पर्वतानां 'शिखरात्' शृङ्गात् 'अवरोहतीव' अधःपततीव। न हि शैला उन्मज्जन्ति, नापि मेदिनी अवरोहति। किन्तु वेगात् शैलानामुन्मज्जनं मेदिन्याश्च अवरोहणं इयमेतदाश्चर्यं दृश्यते। 'पादपाः' वृक्षाः 'स्कन्धस्य' प्रकाण्डस्य 'उदयात्' आविर्भावात् 'पर्णानां पत्राणाम् 'अभ्यन्तरे' मध्ये ये 'लीनाः' गुप्ताः, तद्भावं 'विजहति' त्यजन्ति। पूर्वं पत्रपुञ्जमात्राणि इव दृष्टाः पादपाः सहसा काण्डादिमन्तो दृश्यन्ते। एतच्चाश्चर्यं वेगाज्जातम्। 'तनुभावेन' क्षीणतया 'नष्टानि' अलक्षितानि 'सलिलानि' जलानि यासां तथाविधाः 'आपगाः' क्षीणस्वल्पः नद्यः 'सन्तानात्' विस्तारात् तनुभावविगमात् इत्यर्थः 'व्यक्तिं' प्रकटतां 'भजन्ति' गच्छन्ति। यत्र तत्र दूरात् सूक्ष्मतया अलक्ष्यं सहसा सजला नद्य एव दृश्यन्ते। इत्यप्याश्चर्यं वेगादेव। 'भुवनं मनुष्यलोकः 'उत्क्षिपता' ऊर्ध्वं प्रेरयता 'केनापि' अतिसुरासुरसत्त्वेन 'मत्पार्श्वं मम समीपम् 'आनीयते इव' उपस्थाप्यते इव। वस्तुतस्तु अहमेवाधः पतामि। वेगात् पुनर्भुवनमुत्पततीव भाति। यच्च दूरात् एकपृष्ठमेकवर्णञ्च आभात्, तदेव भुवनं सहसा गिरितरुसरिदादिरूपेण विभक्तपृष्ठभागमुत्पततीव इत्यहो आश्चर्यम्। ( सन्तानात्'

( म )—सन्तानैः ( रा, वि )—'सस्थानं ( त, न्या ) ॥ मूलम ( रा, वि, म ) 'तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः ( त, न्या ) ] ॥

Notes

1. चरणात—ल्यबलोपे पञ्चमी ( See Tika ), or पञ्चमी by the rule 'सप्तमीपञ्चम्यौ कारकमध्ये'। The latter allows alternative चरणे। अस्मिन् मुहूर्त्ते मेघपदव्या वर्त्तमानो भवान् चरणात् चरणे वा स्वाधिकारभूमौ वर्त्तिष्यते is the construction.

2. तनु &c.—तनुनः भावः तनुभाव.। सामान्ये नपुंसकम। We avoid the feminine तन्व्या भावः because that gives तन्वीभावः। A similar description occurs in Bhasa's अविमारक।

3. *Reading*—सन्तानः has the plural needlessly. सस्थान तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः of the Beng. Rec. may be explained thus 'आपगा. नद्यः ' तनुभागेषु' सूक्ष्मांशेषु 'नष्ट' दूरत्वात् अदृष्टं यत् 'सलिलं' तस्य 'व्यक्त्या' आविर्भावेन दर्शनेन इत्यर्थ. 'सस्थानं' व्रजन्ति कृतसंस्थाना इव भान्ति। Comp यदर्द्धा विच्छिन्नं भवति कृतसन्धानमिव तत्' Act. 1

मातलिः—आयुष्मन्, साधु दृष्टम्। (सबहुमानं विलोक्य)—अहो उदाररमणीया पृथिवी।

Matali—Well observed, O Long-lived One, (*Watching with great appreciation*) Oh! How grand and charming is the earth!

राजा—मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिस्यन्दी सान्ध्य इव मेघपरिघः सानुमानालोक्यते।

King—Matali, what mountain is this that has descended into the eastern and the western seas and pouring liquid gold, appears like a bar of evening clouds?

मातलिः—आयुष्मन्, एष खलु हेमकूटो नाम किम्पुरुषपर्वतः परं तपस्विनां सेत्रम्। पश्य—

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति॥ ८॥

Matali—O long-lived One, this is the mountain of the Kimpurushas, Hemakuta by name, the great resort ( for the success ) of ascetics. Behold, that progenitor of gods and demons, the Lord of Creation that was born of Mar'chi, the son of the Self-progenitor, here practises penance with his wife.

मातलिरिति। 'उदारा' महती च 'रमणीया' दर्शनीया च इति विस्मयोक्तिः।

राजेति। 'अयं' कतमः सानुमान्' पर्वतः 'पूर्वं' च अपरं च पश्चिमश्च 'समुद्रम् अवगाढः' प्रविष्टः 'कनकरसस्य सुवर्णद्रवस्य 'निस्यन्दः स्रवः'। तद्वान्, द्रवसुवर्णोद्गारी इत्यर्थः अतएव 'सन्ध्याकालीनः 'मेघपरिघः' मेघमाला 'इव आलोक्यते'।

मातलिरिति। 'किम्पुरुषाणां 'पर्वतः' तदध्युषितत्वात्। 'तपस्विनां' परं श्रेष्ठं 'चैव' सिद्धस्थानम् ( 'सिद्धस्थानेऽपि च चैवम्' इति विकाण्डशेषः )। तदेव स्थानमाहात्म्यं दर्शयति—'पश्य' वक्ष्यमाणमेतदालोकय।—अन्वयः—स्वायम्भुवात् मरीचेः यः प्रजापतिः प्रबभूव सुरासुरगुरुः स सपत्नीकः अत्र तपस्यति। व्याख्या—स्वयं भवतीति स्वयम्भूः ब्रह्मा। तस्यापत्यम् 'स्वायम्भुवः' ( अणि सति 'ओर्गुणः' इति गुणे प्राप्ते— 'अरीदिति—वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यात्'—तेन स्वायम्भुव इति सिद्धं भवति' इति वृत्तिकारः )—ब्रह्मणो मानसः पुत्रः। तस्मात् 'मरीचेः मरीचिसंज्ञकात् ब्रह्मणो मानसपुत्रात् 'यः प्रजापतिः 'लोकस्रष्टा कश्यप इति नाम 'प्रबभूव जज्ञे सुराणां देवानाम् 'असुराणां दानवानाञ्च 'गुरुः' पिता स मारीचः 'पत्न्या' अदित्या 'सह अत्र' अस्मिन् हैमकूटपर्वते 'तपस्यति' तपश्चरति ( क्वचित् 'तपसःपरस्य बदस्व' इति परस्मैपदम् )। पिता ब्रह्मणः पुत्रः। स्वयञ्च सर्वलोकगुरुः। सोऽपि अत्र तपस्यति। अहो हैमकूटस्य माहात्म्यम् इत्याशयः।

1. (a). पूर्वापर &c.—अव+गाह+क्त कर्त्तरि=अवगाढ। पूर्वश्च अपरश्च पूर्वापरौ। तौ च तौ समुद्रौ पूर्वापरसमुद्रौ। तौ अवगाढः। (b) कनक &c.—नि+स्यन्द+घञ् भावे=निस्यन्दः or निष्यन्दः, the ष being optional by the rule 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु' (P. 8 3 72). We have स्रव इति (See Tika) and not क्षरणं इति because स्यन्द is rather अकर्मक। (b) साध्यः—सन्ध्यायां भव इति सन्ध्या+अण्=सान्ध्यः। सन्ध्या though

कालवाची takes अण instead of टञ् by the rule 'सन्ध्यवेलाद्यृतुनक्षत्रेभ्य अण्' (p. 4 3 16). It is of the सन्ध्यवेलादि class (c) परिघः—परिहन्यते अनेन इति परि+हन+अप् करणे=परिघः or पलिघः the ल being optional by the rule 'परेश्च घाङ्कयोः' (p. 8 2. 2 ).

2. किम्पुरुष &c.—कुत्सितः पुरुषः किम्पुरुषः a kind of demigod. तत्पुरुष by 'किं क्षेपे' (p 2 1 64) 'कुत्सा च कस्यचिन्नरमुखाश्वकायत्वात् कस्यचित् अश्वमुखनरशरीरत्वात्'—*Bhanuji*.

3. (a). स्वायम्भुवात्—स्वयम् आत्मना भवति इति स्वयम्+भू+क्विप् कर्त्तरि—स्वयम्भूः a name of Brahman. स्वयम्भुवः अपत्यम इतिस्वयम्भू +अण=स्वायम्भुवः। We do not get स्वायम्भवः because the गुण enjoined by the rule ओर्गुणः (p 6. 4 142) has exceptions, and this is one of them. Thus 'ओर्गुणः' being barred, the rule 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' applies and भू becomes भुव्। (b) सुरासुर &c —सुराश्च असुराश्च सुरासुराः or सुरासुरम्। द्वन्द्व। सुर and असुर are antagonists. If the antagonism is emphasised and somehow deemed eternal we get सुरासुरम् by the rule 'येषाञ्च विरोधः शाश्वतिकः (p. 2 4 9), otherwise these being प्राणिजाति, we have सुरासुराः as in 'पूजितो य सुरासुरैः'।

राजा—तेन हि अनतिक्रमणीयानि श्रेयांसि। प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।

King—Then surely here are blessings not to be passed by. I wish to go after having circumambulated the reverend sage.

मातलिः—प्रथमः कल्पः। ( नाट्येनावतीर्णौ )।

Matali—An excellent resolve. (*They act alighting*)

राजा—( सविस्मयम् )—

उपोढशब्दा न रथाङ्गनेमयः प्रवर्त्तमानं न च दृश्यते रजः।
अभूतलस्पर्शतया निरुद्धतिस्तवावतीर्णोऽपि रथो न लक्ष्यते॥१०

King—(*With surprise*)—Not being in contact with the

ground, the rims of the wheels have made no noise no dust too is seen rising, upward shock is absent. Your car though descended, is not noticed as such.

राजेति । 'तेन हि निमित्तेन, अतोऽत्र प्रजापतिराश्रमे सतः इत्यर्थः 'अनतिक्रमणीयानि' अतिक्रम्य गन्तुमनर्हाणि 'श्रेयांसि' शुभानि अत्र सन्ति । तदेव स्पष्टयति । 'भगवन्तं कश्यपं प्रदक्षिणीकृत्य प्रदक्षिणक्रियया प्रपूज्य ( अव्ययीभावस्तिष्ठद्‌ग्वादिः । ततो गतिसमासः । नानेन समासः अयन्तु समस्यत एव' इति भोजवचनात् साधुः । प्रादिसमासादगतिसमासो वा ) 'गन्तुमिच्छामि' ततश्च श्रेयो भावता । भगवत्प्रदक्षिणं सङ्गते हि शुभाय, तच्चशुभ न उपेक्ष्यम् इति भावः ।

मातलिरिति । 'प्रथमो' मुख्यः उत्तम इत्यर्थः 'कल्पः संकल्पः । 'नाट्येन अभिनयकर्मणा 'अवतार्णौ अवतरणमभिनीय स्थितौ इत्यर्थः ।

राजेति । अन्वयः—अभूतलस्पर्शतया रथाङ्गनेमयः उपोढशब्दाः न । रजश्च प्रवर्त्तमानं न दृश्यते । निरुद्धतलस्य रथः अवतीर्णोऽपि न लक्ष्यते । व्याख्या—अविद्यमानः भूतलस्पर्शः' भूमिसम्पर्को यस्य तस्य भावेन, भूमिसम्पर्कविरहात् इत्यर्थः. रथाङ्गानां चक्राणां नेमयः' प्रान्ताः 'उपोढाः' प्राप्ताः 'शब्दाः' यैस्तथाविधाः 'न' येनाह शब्दविरामात् क्रान्तः पन्था इति वक्तुं शक्यः स्यात् । 'रजश्च' धूलयश्च ( जातावेकवचनम् ) प्रवर्त्तमानं चक्रैरभ्युत्थितं सत् प्रसर्पत 'न दृश्यते' येन रजसामप्रवृत्तिं दृष्ट्वा गमननिवृत्तिं जानीयाम । एतयोरुपरि पुनः निर्गता उद्गतिः प्रतिघातजः क्षोभः यस्मात् तथाविधः 'तव रथः अवतीर्णोऽपि हैमकूटशिखरे पतितोऽपि 'न लक्ष्यते, पतितत्वेन न ज्ञायते । यद्वा गिरिशिखरे पतितोऽपि रथः सम्पर्कशून्यतया स्थितत्वात् चक्रसम्पातशब्दो न जातः न च धूलिरुत्थिता. नाप्यनुभूतो रथक्षोभः । तत्पतित इति न ज्ञातो मया रथ इति भावः ।

1. प्रदक्षिणीकृत्य—प्रकृष्टत्वं दक्षिणस्य प्रदक्षिणम् । reference of the right side—अव्ययभाव of the तिष्ठद्‌ग्वादि class. तत् अस्यस्य इति प्रदक्षिण + अच् मत्वर्थे प्रदक्षिणः one placed preferably to the right Or प्रगतः दक्षिणं प्रदक्षिणं placed to the right. प्रादितत्— । अप्रदक्षिणं प्रदक्षिणं कृत्वा इति प्रदक्षिण + च्वि + कृ + ल्यप्, गतितत्— । प्रथमः कल्पः—An excellent idea or resolve ; or primary duty ; *Cf.* प्रथमः कल्पः in Swapna IV etc.

3. उपोढ &c.—उप+वह+क्त कर्मणि=उपोढा: commenced.

4, Reading—Raghava reads अभूतलस्पर्शतयानिरुद्धत: and dissolves अभूतलस्पर्शतया अनिरुद्धत: अरोधात्। So he first obtains अनिरुद्धम् with भावे क्त meaning अनिरोध: and then attaches तसि। Vidyasagaara reads निरुन्धत: with the construction निरुन्धत: तव &c. Neither of these seem to give aclear idea. निरुद्धान is the Bengali reading, and is evidently much better than either of the above.

मातलि:—एतावानेव शतक्रतोरायुष्मतश्च विशेष:।

Matali—Just this much is the difference between Indra and Your Long-lived Self.

राजा—मातलि, कतमस्मिन् प्रदेशे मारीचाश्रम:।

King—Matali, in which quarter is the hermitage of Maricha ?

मातलि:—( हस्तेन दर्शयन् )—

वल्मीकार्द्धनिमग्नमूर्त्तिरुरसा सन्दष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीड़ित:।
अंसव्यापि शकुन्तनीड़निचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थित: ॥११॥

Matali--( *Pointing with his hand* )—Where stands, motionless like a tree-trunk younder ascetic, facing the solar orb, with his body half-buried in an ant-hill, with his chest having a snake-skin adhering on to it, the neck excessively pressed by a coil of withered tendrils of creepers, bearing a mass of clotted hair spreading over his shoulders and filled with bird's nests.

मातलिरिति। 'एतावान्' एतत्परिमाण: एव 'विशेष' भेद: नाधिक:। भुवि विचरणे शतक्रतो: रथ: अस्पृष्टो गच्छति तव तु स्पृष्ट:। एतस्मात् युवयोर्भेद: अथवा स इव भवानप्यानाकरथवर्त्मा इति भाव:।

मातलिरिति ।—अन्वय:—यत्र असौ वल्मीकार्द्धनिमग्नमूर्त्ति:, सन्दष्टसर्पत्वचा उरसा जीर्णलताप्रतानवलयेन कण्ठे अत्यर्थसम्पीडित: अंसव्यापि शकुन्तनीडनिचितं जटा-मण्डलं विभ्रत स्थाणुरिव अचल: मुनि: अभ्यर्कविम्बं स्थित: । व्याख्या—'यत्र असौ' दूरे दृश्यमान: 'वल्मीके' पिपीलिकाविशेषकृतस्तूपे 'अर्द्धं यथा तथा 'निमग्ना' निहिता 'मूर्त्ति:' यस्य तथाविध: 'सन्दष्टा' सम्यक् लग्ना 'सपत्वक्' निर्मोकी यस्मिन् तथा-विधेन 'उरसा' वक्षसा ( अचलत्वोपलक्षणम् । उपलक्षणे तृतीया ) 'जीर्णाना' शुष्काणां' लताप्रतानानां वल्लीतन्तूना 'वलयेन वेष्टनेन, वलयितलतातन्तुभिरित्यर्थ: ( भावानयने द्रव्यानयनम् ) 'कण्ठे अत्यर्थं'' यथा तथा सम्पीडित:. अंसौ स्कन्धौ 'व्याप्नोति' यत् तादृशं 'शकुन्तानां पक्षिणां 'नीडै: कुलायै: ( वहुवचनेन जटामण्डलस्य महत्वम ) 'निचितं परिव्याप्तं 'जटामण्डलं विभ्रत्' धारयन्, अतएव 'स्थाणुरिव काण्डशेषो वृक्ष इव 'अचल:' स्थिर: मुनि', अर्कस्य' सूर्य्यस्य विम्बं मण्डलम् तत् 'अभि' ( अव्ययीभाव: ) सूर्य्यमण्डलमभिलक्ष्य इत्यर्थ: 'स्थित:' तिष्ठति । तत्र मारीचाश्रम इति वाक्यशेष: ।

## NOTES

1. (a) वल्मीक etc.—This indicates motionlessness for a great length of time. अर्द्धं निमग्ना अर्द्धनिमग्ना । वल्मीके अर्द्धनिमग्ना वल्मीकार्द्धनिमग्ना । सुपसुपा । तादृशी मूर्त्तिर्यस्य । वह् । Or अर्द्धनिमग्ना मूर्त्ति-र्यस्य स: अर्द्धनिमग्नमूर्त्ति: । वल्मीके अर्द्धनिमग्नमूर्त्ति: सुपसुपा । (b) उरसा, सन्दष्टत्वचा &c—This implies अचलत्व । Hence इत्थम्भूतलक्षणे तृतीया । (c) अभ्यर्क etc—अर्कस्यविम्बम् अर्कविम्बम् । तत् अभि इति अभ्यर्कविम्बम् अव्य-यीभाव by the rule 'लक्षणेनाभिप्रती आभिमुख्ये ( p. 2. 1. 14 ). Or we may have अभि and अर्कविम्बम् uncompounded, the latter taking द्वितीया owing to अभि which is a कर्मप्रवचनीय here in the sense of लक्षण ( indicator ).

**राजा—नमस्ते कष्टतपसे ।**

**King—Salutation to thee of severe Penance.**

मातलिः—(संयतप्रग्रहं रथं कृत्वा)—एतावदितिपरिवर्धित-मन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः।

Matali—(*Restraining the reins of the chariot*)—Here we have entered the hermitage of the Lord of creation where Mandara trees have been reared by Aditi.

राजा—स्वर्गादधिकतरं निर्वृतिस्थानम्। अमृतह्रदमिवावगाढोऽस्मि।

King—An abode of bliss greater than Heaven. I am as if immersed in a lake of nectar.

मातलिः (रथं स्थापयित्वा)—अवतरत्वायुष्मान्।

Matali—(*Having fixed the chariot*)—Let Your Long-lived Self alight.

राजा—(अवतीर्य)—मातले, भवान् कथमिदानीम्।

King—(*Having alighted*)—Matali, how art thou disposed now ?

मातलिः—संयन्त्रितो मया रथः। वयमप्यवतरामः। (तथा कृत्वा) इत आयुष्मान्। (परिक्रम्य) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः।

Matali—The chariot is secured by me. I am alighting too (*Doing so*) This way O Long-lived One. (*Going round the stage*) Let the sites of hermitages of the noble sages be observed.

राजेति। 'कष्टं कठोरं 'तपो' यस्य तस्मै नमः।

मातलिरिति। संयताः प्रग्रहाः' रश्मय यस्य तम्। 'एतौ' इमौ आवाम् 'अदित्या' इन्द्रजनन्या 'परिवर्धिता' लालिता 'मन्दारवृक्षा' यस्मिन् तादृशं 'प्रजापतेः' कश्यपस्य 'आश्रमं प्रविष्टौ स्वः।

राजेति। 'निर्वृतेः सुखस्य 'स्थानम्' आस्पदम् एष मारीचाश्रमः। 'अमृतस्य ह्रदं' कुण्डम् 'अवगाढः' प्रविष्ट 'इव अस्मि'। नेदृशं स्वर्गेऽपि लब्धं सुखं मे इति भावः।

मातलिरिति। 'स्थापयित्वा' सुसंयतं कृत्वा।

राजेति। 'इदानीं सम्प्रति 'भवान् कथं केन प्रकारेण आत्मानं व्यापारयिष्यति। मातलिरिति। 'सयन्त्रितः' सम्यक् यन्त्रितः स्थापित इत्यर्थः। 'तपोवनानां भूमयः स्थानानि दृश्यन्तां भवता। दर्शनयोग्या हि ताः।

1. अदिति &c—Shows the sanctity of the Place. Indra's mother here rears the Mandara saplings.

2. भवान् कथम् &c—He inquires if Matali will stay in the chariot or get down. *

राजा—ननु विस्मयादवलोकयामि।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

**King**—I am indeed observing with wonder. In a forest where Kalpa tree abound, the necessary sustenance of life is secured with air, in water that is brown with the pollens of golden lotuses, is done the holy act of *abtution for merit*; in house of rocks of gems, is performed *meditation*; in the presence of heavenly maidens, is practised *self-restraint*. These are practising penance scorning all that to which other sages aspire by their austerities,

* Adopted by prof. Gajendragadkar,

राजति । अन्वयः—सत्कल्पवृक्षे वने उचिता प्राणानां वृत्तिः अनिलेन (भवति) । काञ्चनपद्मरेणुकपिशे तोये पुण्या अभिषेकक्रिया । रत्नशिलागृहेषु ध्यानम् । विबुधस्त्री-सन्निधौ संयमः । अन्यमुनयस्तपोभिः यद्वाञ्छन्ति तस्मिन् अमी तपस्यन्ति । व्याख्या—'सन्तो' विद्यमानाः 'कल्पवृक्षा यस्मिन् तादृशे वने कल्पतरुकानने इत्यर्थः 'उचिता' तपश्चरणयोग्या 'प्राणानां वृत्तिः' जीवनधारणम 'अनिलेन' वायुना भवति ( एकोऽपि कल्पपादपो बहुभोगाय प्रभवति । अत्र कल्पपादपकाननमेव वर्त्तते. तथापि एते वायु-भक्षा जीवन्ति तदपि तपसे यत पर्य्याप्तं तन्मात्रमेव भवति । इति आश्रमस्य तापसानाञ्च उत्कर्षः) । काञ्चनपद्मानां सुवर्णकमलानां 'रेणुभिः' परागैः 'कपिशे' पिङ्गलवर्णे 'तोये' जले पुण्या पावनी 'अभिषेकक्रिया' नियमस्नानकर्म क्रियते । (सुचारुपङ्कजं जलमलं विहार-प्रवृत्तिं जनयितुम् । तच्च पङ्कजमत्र सौवर्णम् । तथाप्यमी नितरां विहारविमुखा नियमस्नानमात्रपरायणा इत्यहो उत्कर्षस्तापसानामाश्रमस्य च । 'रत्नविकारा' याः 'शिलाः' तन्निर्मितेषु 'गृहेषु ध्यानम्' आत्मसमाधानकार्य्यं भवति ( शिलागृहमेकमेव भोगाय सम्पद्यते । अत्र च बहूनि । तानि पुनरहो रत्नमयानि । अमी तु तेषु ध्यानम-भ्यस्यन्ति इति भूतिप्रकर्षस्तापसानामाश्रमस्य च ) । 'विबुधस्त्रियः' सुरनार्य्यः । तासां 'सन्निधौ' समीपे संयमः' पञ्चेन्द्रियनिग्रहः अभ्यस्यते ( स्त्रीसन्निधानमेव तपसो विघ्नः । अत्र तु सुरस्त्रीणां सन्निधिः । तथाप्येते जितेन्द्रिया वर्त्तन्ते । अहो ऐश्वर्य्यं तापसानामा-श्रमस्य च ) । किं बहुना —'अन्ये मुनयः विश्वामित्रादयः तपोभिः तपश्चरणैः 'यत्' वस्तु 'वाञ्छन्ति' लब्धुं काङ्क्षन्ति 'तस्मिन्' स्थितमपि तदनादृत्य ( अनादरे भावलक्षणे सप्तमी ) अमी दृश्यमाना मारीचाश्रमगता 'मुनयः तपस्यन्ति ( क्यङ् परस्मैपदञ्च ) । ( पुण्या...गृहेषु—वाञ्छन्ति ( भो, त, न्या )—धर्मा—तत्रैव...काङ्क्षन्ति' ( रा, वि, म ) ) ॥

## Notes

1. (a) उचिता—योग्या, i. e. enough to keeep body and soul together. Some explain उचिता = अभ्यस्ता and construe—अनिलेन प्राणानां वृत्तिः उचिता have practised to live upon air. (b) सत etc.

* Adopted by Prof. Gajendragadkar.

There is here quite a forest of Kalpavrikshas, any amount of luxuries can be got from them for the mere asking. But they eat air. This indicates contempt of luxuries, (c) काञ्चन etc,—कपिश indicates abundance of golden lotuses also their constant presence. (d) तस्मिन्—Raghava renders तस्मिन् स्थाने In that case यत् means स्थानम्। But do ascetics practise penance to go to Hemakuta ? See Tika also.

मातलिः—उत्सर्पिणी खलु महतां प्रार्थना। (परिक्रम्य आकाशे) वृद्धशाकल्य, किमनुतिष्ठति भगवान् मारीचः। (आकर्ण्य) किं ब्रवीषि दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति।

Matali—High-soaring indeed is the aspiration of the great. (*Going round—in the air*) Vriddha Sakalya, what is His Holiness Maricha doing ? (*Acting hearing*) Do you say that questioned by Dakshayani with reference to the duties of those, that are devoted to their husband, he is telling her along with the wives of other great sages !

राजा—(कर्णं दत्वा)—अये प्रतिपाल्यावसरः प्रस्तावः।

King—(*Listening*) Ha ! the subject deserves waiting for an apportunity.

मातलिरिति। 'महतां प्रार्थना' आशा 'उत्सर्पिणी' ऊर्द्ध्वगामिनी 'खलु'। 'आकर्ण्य' श्रुत्वा, श्रवणमभिनीय इत्यर्थः। 'दाक्षायण्या' दक्षकन्यकया अदित्या 'पतिव्रतानां' भर्तृनिरतानां 'धर्मं' सतीत्वमित्यर्थः 'अधिकृत्य पृष्टः' सन् सतीत्वमाहात्म्यविषयके प्रश्ने कृते सति 'महर्षीणां पत्नीभिः सहितायै तस्यै' कथयति इति 'ब्रवीषि किम्'।

राजेति। 'प्रतिपाल्यः' प्रतीक्षायोग्यः 'अवसरः' विरामो यस्य तादृशः अयं प्रस्तावः पतिव्रताधर्मकथनप्रस्तावः। विरते प्रस्तावे उपसर्पावः। अयुक्तः अन्तरा प्रतिबन्धः।

Notes

1. (a) वृद्धशाकल्य—This is some attendant of मारीच। (b)

स्य—सम्प्रदाने चतुर्थी। The complete sentence is तस्य पतिव्रताधर्मं कथय'त। Hence the कर्म of कथयति is पतिव्रताधर्मं, and is intended for मा। Hence the rule 'कर्मणा यमभिप्रैति स सम्प्रदानम्' applies. The followers of the Vritti restrict this rule to the कर्म of दा। They have therefore to cite क्रियायोगे ऽर्थो, or 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' which gives कर्मणि चतुर्थी, with the construction मा बोधयितुं कथयति। But सम्प्रदाने चतुर्थी being the view of the Bhashyakara must be allowed to overrule the Vritti and taken as the morecorrect explanation. (c) इति—it refers to the whole sentence 'दाचायण्या—कथयति। It is the कर्म of ब्रवीषि।

2. अये etc —He means to wait till the discourse is finished.

मातलिः—(राजानमवलोक्य)—अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान् यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि।

Matali—( *Looking at the king* )—Let your long-lived Self stay at the foot of this Asoka tree whilst I continue on the look out for an opportunity to report you to Indra's father.

राजा—यथा भवान् मन्यते। [ स्थितः। मातलिनिष्क्रान्तः ]।

King—As you deem proper. (*Stays—Exit Matali*)

राजा [ निमित्तं सूचयित्वा ]—

मनोरथाय नाशंसे किं बाहो स्पन्दसे मुधा।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्त्तते ॥ १३ ॥

King (*Acting an omen*)—I hope not for (the object of) my desire; why, O Arm, dost thou throb needlessly; my bliss has beed slighted before, misery alone surrounds me (now) [*Or*—bliss, previously slighted, turns into misery].

मातलिरिति। 'इन्द्रस्य गुरुः' पिता कश्यपः। तस्मै 'निवेदयितुं' विज्ञापयितुम् (चतुर्थी सम्प्रदाने) 'अन्तरम्' अवकाशम् साधु 'अन्विष्यति' यः तादृशो 'भवामि'।

राजेति। 'निमित्त' दक्षिणबाहुस्फुरणं 'सूचयित्वा' अभिनीय।* अन्वयः—मनोरथाय न आशंसे। हे बाहो मुधा किं स्पन्दसे। श्रेयः पूर्वावधीरितम्। दुःखं हि परिवर्त्तते—। व्याख्या—'मनोरथाय स्वाभिलषिताय, शकुन्तलारूपाय, मनोरथं लब्धु —मित्यर्थः ('क्रियार्थोपपदस्य'—इति चतुर्थी) 'न आशंसे न प्रार्थये। हे 'बाहो' मद्भुज 'मुधा' (अव्ययमेतत्) 'किं स्पन्दसे' स्फुरसि। 'श्रेयः' मङ्गलं 'पूर्वं प्राक् "अवधीरितम्' अवज्ञातं मया ('ज्ञापकसिद्धं न सर्वत्र' इति पूर्वशब्दस्य परनिपातो न)। 'दुःखं' हि दुःखमेव अधुना 'परिवर्त्तते मां परिवृत्य तिष्ठति। यद्वा— 'श्रेयो हि पूर्वम् अवधीरितं सत् 'दुःखं' परिवर्त्तते दुःखरूपेण परिणमति। प्रागेव शकुन्तला त्यक्ता दुःखैः परिवृतोऽस्मि। तस्याला‌भे निराशोऽहम्। तत् किमर्थं वृथा मे बाहुः स्फुरति इति वितर्कः।

Notes

1. इन्द्रगुरवे—सम्प्रदाने चतुर्थी। For reasons see तस्य above. Remember 'क्रियाग्रहणमपि कर्त्तव्यम्' also gives सम्प्रदाने चतुर्थी, but acc. to some it applies only to अकर्मक roots.

2. पूर्वाव &c—अवधीर is a चुरादि धातु। अवधीर+क्त कर्मणि= अवधीरितम्। पूर्वम् अवधीरितम्। सुपसुपा। In such cases पूर्व usually appears last in the compound. This is by implication (ज्ञापक) in the rule 'भूतपूर्वे चरट्' in which पाणिनि writes भूतपूर्वं instead of पूर्वभूत। But what is inferred by implication (ज्ञापकसिद्धम्) is not *universal* (न सर्वत्र)। Hence we get पूर्वावधीरित also.

**नेपथ्ये—मा क्खु चावलं करेहि। कथं गदो एव्व अत्तणो पकिदिं [मा खलु चापलं कुरु। कथं गत एव आत्मनः प्रकृतिम्]।**

**In the dressing Room—You must not indeed practise haugthtiness. How! Have you already gone back to your nature!**

---

* **Adopted by Prof. Gajendragadkar.**

राजा (कर्णं दत्त्वा)—अभूमिरियमविनयस्य। को नु खल्वेष निषिध्यते। (शब्दानुसारेणावलोक्य सविस्मयम्) अये को नु खल्वयम् अनुवध्यमान [ अवरुध्यमान- ] स्तपस्विनीभ्याम् अबालसत्त्वो बालः—

> अर्द्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।
> प्रक्रीड़ितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

King—(*Lending his ear*)—This is no place for turbulence. Who could he possibly be that is being checked? (*Looking in the direction of the voice—With amazement*) Ha! Who indeed should be this boy, attended by two female ascetics,—this boy of un-boy-like-strength that for sport is forcibly dragging away from its mother a lion cub that has halfsucked its mother's teats, its manes disordered by the rough encounter.

नेपथ्ये इति। 'चापलं चपलतां खलु मा कुरु'। इति निषेधः। अगस्थिते निषिधे 'कथम् इत्याश्चर्ये 'आत्मनः प्रकृतिं स्वभावं चपलभावमित्यर्थः गत एव।

राजेति। 'अविनयस्य' औद्धत्यस्य 'इयम् अभूमिः' अस्थानम्। अत मारीचाश्रमे' अविनयस्य अवकाशो नास्ति इति भावः। 'निषिध्यते अविनयात् वार्य्यते। शब्दस्य अनुसारः अनुसरणम। तेन। यतः शब्द आयातः तं देशं प्रति नेत्रं प्रेर्य्य आह। अये इति विस्मये। 'नु' वितर्के 'खलु' अवधारणे। 'तपस्विनीभ्याम् अनुवध्यमानः' अनुगम्यमानः 'अबालस्य' किशोरस्य 'सत्त्वं बलमिव 'सत्त्व' यस्य तादृशः 'खलु' को नु अय बालः 'सिंहशिशु'' कर्षति इति परेण सम्बन्धः। अन्वयः—प्रक्रीडितुम् आमर्द्दक्लिष्टकेशरम् अर्द्धपीतस्तनं सिंहशिशुं बलात्कारेण मातुः कर्षति। व्याख्या— 'प्रक्रीड़ितु'' क्रीड़ां प्रकर्त्तुम् 'आमर्देन सकलविचोभेण 'क्लिष्टा' विकीर्णाः केसराः स्कन्धवाला यस्य तत् 'अर्द्धम्' असमग्र' यथा तथा 'पीतः' स्तनो येन तादृशम् अतएव स्वेच्छया अनायासं 'सिंहस्य' कस्यचित् आश्रमकेसरिणः 'शिशु'' शावकं 'बलात्' प्रसह्य (अव्ययमेतत्) यः 'कारः' करणं तेन 'मातुः' जनन्याः सिंहकोपमपि अगणयित्वा

इत्यर्थः ( अपाययोगात् पञ्चमी ) 'कर्षति' अपनयति। यथा—'मातुः स्तनम्' इति सम्बन्धः।

Notes

1. अशालसत्त्वो बालः—Compare 'बालोऽप्यबालप्रतिभो बभूव'—*Buddhacharita*, 11-23.

2. (a) अर्द्ध &c —अर्द्धं पीतः अर्द्धपीतः सुप्सुपा। Next बहु—। Or पीतस्तनः बहु—। अर्द्धं पीतस्तनः सुपसुपा। (b) मातुः—* The construction is मातुः कर्षति draws away from the mother. Hence there is अपाय and we get अपादाने पञ्चमी। Raghava takes it with स्तन and makes a शेषषष्ठी। But in that case मातुः is well-nigh superfluous—को हि नाम पितुः स्तनं पिबेत्? (c) बलात् &c— कृ+घञ्, भावे कारः। बलात् is an अव्यय in the sense of हठ। 'बलादिति हठार्थे'—Ganakara. बलात्कारः forcible performance. कर्मधा—। तेन। तृतीया करणे। See Swapna IV. also.

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः )

बालः—जिम्भ सिङ्घ दन्ताइं गणइस्सं [ जृम्भस्व सिंह, दन्तांस्ते गणयिष्यामि ]।

(*Then enter the child engaged as described with two female ascetics*). Boy—Yawn, Lion, I will count thy teeth.

प्रथमा—अविणीद किं णो अपच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि। हन्त वड्ढइ दे संरम्भो ठाणेक्खु इसिजणेण सव्वदमणोत्ति किदणामहेओसि [ अविनीत, किं नः अपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि। हन्त, वर्द्धते ते संरम्भः। स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ]।

First Hermit Undisciplined child, why do you tease the animals, that are not different from our own children.

---

* Adopted by prof Gajendragadkar.

Ha ! your turbulence increases. Rightly are you named Sarvadamana by the sages.

राजा—किं नु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे मनः। नूनमनपत्यता मां वत्सलयति।

King—Why indeed does my mind soften towards this boy as towards a heart-begotten son. Surely, childlessness makes me affectionate.

तत इति। 'यथानिर्दिष्ट' निर्देशानुरूपं 'कर्म' यस्य सः यथोक्तव्यापारो 'बालः' सिंहशिशुं कर्षन्नित्यर्थः।

बाल इति। जृम्भस्व जृम्भनं कुरु। यदा जृम्भा ते मुखं व्यादास्यते तदा ते दन्तान् गणयिष्यामि।

प्रथमेति। हे 'अवमोत्' शीत 'नः अपत्येभ्यः सन्ततेः' 'निर्विशेषाणि' अभिन्नानि 'सत्त्वानि' प्राणिनः किं विप्रकरोषि' प्रधर्षयसि। मा एवं कुरु। एतेन अनिवारिते बाले—'हन्त' विषादे (अव्ययम्)। 'ते संरम्भः' कोपः 'वर्द्धते'। 'स्थाने खलु युक्तमेव 'सर्वदमन इति कृतं नामधेयं नाम ( स्वार्थेधेयप्रत्ययः ) यस्य तथाविधोऽसि।

राजेति। 'किं नु' वितर्कगर्भः प्रश्नः। खलु' अवधारणे। स्नेहं प्रत्यवधारणम्। 'उरसो' हृदयात् जाते 'इव पुत्रे ( अङ्गादङ्गाद्विनिष्क्रान्तो हृदयादभिजायसे। आत्मा वै पुत्रनामासि जीवस्व शरदां शतम्॥' इत्युक्तेः ) स्निह्यति स्नेहं भवति। स्वयमेवोत्तरमाह—'अनपत्यता' सन्ततिशून्यता मां 'वत्सलं सस्नेहं करोति ( तत्करोत्यर्थे णिच् )।

Notes.

1. (a) अपत्य &c.—वि+शिष घञ्, भावे=विशेषः difference, निर्गतः विशेषः यस्मात् निर्विशेषाणि without difference. बहु—। अपत्येभ्योनिर्विशेषाणि। सुप्सुपा। (b) स्थाने—in अव्यय here meaning युक्तम्।

द्वितीया—एसा तुमं केसरिणी लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि [ एषा त्वां केसरिणी लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि ]॥

Second Hermit—This lioness will surely hurt you if you do not release her whelp.

**बाल: (सस्मितम्)—अम्महे, बलिअं क्खु भीदोम्हि [अम्महे, बलीय: खलु भीतोऽस्मि] ( अधरं दर्शयति )।**

Boy—( *Smiling* )—Ho ! Ho ! Iam terribly frightened indeed. (*Shows his lower lip* )

**राजा ( सविस्मयम् )—**

**महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।**
**स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थित: ॥ १५ ॥**

King—(*With astonishment*)—This boy, the germ of mighty energy. appears to me like fire remaning in the state of a spark and awaiting fuel.

द्वितीयेति। 'एषा केशरिणी सिंही 'त्वा' लङ्घयति' अभिभवति ( समीपे भविष्यति वर्तमानप्रयोग:। 'वर्तमानसमीप्ये वर्तमानवद्वा' इति सूत्रेण )।

बाल इति। 'अम्महे' इति विस्मये। उपहासार्थं विस्मयाभिनय:। 'बलीय:' अत्यर्थं यथा तथा भीतोऽस्मि, नैव भीत: इत्यर्थ:। 'अधरं दर्शयति' इत्यवज्ञाप्रकाश.।

राजेति। † अन्वय:—महतस्तेजसो बीजम् अयं बाल: स्फुलिङ्गावस्थया एधापेक्ष: स्थितो वह्निरिव मे प्रतिभाति। व्याख्या—'महत:' प्रबलस्य 'तेजस:' प्रतापस्य 'बीजं' निदानम् 'अयं बाल: स्फुलिङ्गस्य अग्निकणस्य या 'अवस्था' रूपं तया ( इत्थं तृतीया ) अतएव 'एधान्' काष्ठानि 'अपेक्षते' स्वरूपलाभाय यस्तादृश: ( कर्मण्युपपदे ण: कर्त्तरि) 'वह्निरिव' ज्वलन इव 'मे मम 'प्रतिभाति' प्रकाशते। अचिरादेव 'तेजसा जाज्वल्यमानो जगदयमभिभविष्यति इत्य. मन्ये इति भाव: ( ऐधापेक्ष:' ( रा, वि, स )—'एधोपेक्ष:' ( त, न्या ) )।

Notes

1. अम्महे—An अव्यय implying विस्मय ? 'विम्हे अम्महे अम्मा नित्यं स्त्रीभि: प्रयुज्यते' इति कोष:।

---

* Adopted by Prof. Gaj ndragadakar,

2. महत:—This is differently construed thus—अयं बाल: महतस्तेजसो बीजम्। स्फुलिङ्गावस्थया स्थित: एधापेक्ष: वह्निरिव मे प्रतिभाति—*Raghava.* ऐधापेक्ष: स्फुलिङ्गावस्थया स्थित: वह्निरिव अयं बाल: महतस्तेजसोबीजं मे प्रतिभाति—*Vidyasagara, Nyaya-Panchanana.* Raghava wants a nominative to प्रतिभाति। He has disconnected बाल: from it. In the second construction मे प्रतिभाति is superfluous; because, that this बाल is महतस्तेजसोबीजम् is undoubted—every one will admit this after witnessing his treatment of the lion-cub. मे प्रतिभाति better suits cases where difference of opinion is very likely; in our construction मे प्रतिभाति goes with एधापेक्ष: स्थित. admitting the बाल to be महतस्तेजसो बीजम् one may doubt the एधापेक्षिता। But the king does not doubt it, hence he ought to say मे प्रतिभाति। The king's surmise is true as will be seen from Maricha's remark 'रंघनानुहारित etc.—*Infra.* sl. 33.

प्रथमा—वच्छ, एदं वालमिइन्दअं मुञ्च, अवरं दे कीलणअं दाइस्सं [ वत्स, एतं बालमृगेन्द्रकं मुञ्च, अपरं ते क्रीडनकं दास्यामि ]।

First. H.—My child, let his poor lion-whelp go, I will give something else to play with.

बाल:—कहिं देहि णं [ कुत्र। देह्येतत् ]

Boy—Where? Give it.

राजा—कथं चक्रवर्त्तिलक्षणमप्यनेन धार्य्यते! तथाह्यस्य—

प्रलोभ्यवस्तुप्रणयप्रसारितो विभाति जालग्रथिताङ्गुलि: कर:।
अलक्ष्यपत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम्॥ १६॥

King—How so! The sign of mastery over the whole circle of kings is also borne by him! Thus, his hand, opened from his longing for a desired object, having the fingers arrayed in contact, seems like a beautiful lotus tinged [*Or*—( opened )] by early dawn that has enhanced its redness and in which the interstices between the petals are not perceptible.

प्रथमेति। 'बालो मृगेन्द्रः' विग्रहः 'बालमृगेन्द्रः'। तथा पीड्यमानत्वादनुकम्पितम् (अनुकम्पायां कन्) तं 'मुञ्च'। क्रीडनक' क्रीडार्थं द्रव्यम् ते दास्यामि।

राजेति। 'कथम्' इत्याश्चर्ये। 'अनेन बालक' राजसम्बन्धी 'वर्त्तते' प्रभुभावेन यः तस्य 'लक्षणं चिह्नम् 'अपि धार्य्यते'। 'तदेव दर्शयति'। अन्वय.—प्रलोभ्यवस्तुप्रणय-प्रसारितः जालग्रथिताङ्गुलिः अस्य करः इद्धरागया नवोषसा भिन्नम् अलक्ष्यपत्रान्तरम् एकपङ्कजमिव विभाति। व्याख्या—'प्रलोभ्ये' लोभयोग्ये 'वस्तुनि' यः 'प्रणयः' प्रार्थना अभिलाषो वा तेन 'प्रसारितः' उन्मीलितः 'जालमिव ग्रथिताः संश्लिष्टाः अङ्गुलयोयस्मिन् तादृशः अस्य करः' पाणिः 'इद्धः' दीपितः वर्द्धित इत्यर्थः 'राग.' पद्मस्य लौहित्यं यया तथाविधया 'नवया' अचिरप्रवृत्तया 'उषसा' प्रभातेन 'भिन्न' भिन्न' विकासितं वा 'अलक्ष्याणि अदृश्यानि 'पत्राणां दलानाम् 'अन्तराणि' अवकाशः यस्मिन् तथाविधं 'एक मुख्यं पङ्कजं पद्मम् 'इव विभाति' प्रकाशते। रक्ततलः पाणिरित्यर्थः। ('नवोषसा' (रा, वि म)—'नवोषया' (त, न्या))॥

Notes

1. चक्रवर्त्ति &c.—Raghava quotes—'अतिरक्तः करो यस्य ग्रथिता-ङ्गुलिको मृदुः। चापाङ्कुशाङ्कितः सोऽयंचक्रवर्त्ती भवेद् ध्रुवम् ॥'

2. a) जाल &c—Comp. 'जालावनद्धाङ्गुलिपाणिपादम्—'*Buddha charita*· 1 65, 'सुजातजालावतताङ्गुलौ मृदु' *Ibid VIII*, 55. (b) *इद्धरागया—Commentators all take राग here as belonging to उषस्। This represents उषस् as beautifully red, excessively red. This serves no purpose. We want excessive redness *in* the *lotus* to compare with the *excessively red* (अतिरक्त) कर of the चक्रवर्त्ति लक्षणान्वित boy (see note preceding). The reason why they adopt this undesirable construction is that the root इन्ध is taken by them as अकर्मक and therefore the exposition इद्धो रागो यया is considered by them as grammatically indefensible. They all derive इद्ध with कर्त्तरिक्त

† Adopted by Prof. Gajendragadkar.

Thus—इद्धः समृद्धः रागो लोहित्यं यस्याः तया'—*Raghava, Nyapanchanana.* इद्धः दीप्तः &c.—*Vidyasagara.* To the contrary we say that कर्मणि क्त may be had also, supposing the root to be अन्तर्भावितण्यर्थः। The root however is often seen as सकर्मक। Westergard quotes—'इन्धते हव्य इद्धम्'—*Rigveda.* 'यदाग्निर्नित्यमिध्यते' —*Mahabharata.* 'समिन्धानोऽन्वकोशलम्—*Bhatti,* 6. 37 &c. Hence इद्धः दीपितः रागः पङ्कजलौहित्यं यया as in the Tika is perfectly legitimate. (c) नवोषसा—नवा उषा· नवोषाः कर्मधा—. तया। उषस् is neuter according to Amara, but the लिङ्गानुशासन of पाणिनि has it in the feminine The rule is—प्रतिपदापदिपत संपच्छरत् परिषद्उष संविन्क्षुदःन्मृत्नभिघः (Ling 27)

द्वितीया—सुव्वदे, ण सक्को एसो वाआमित्तेण विरमाविदुं [ सुव्रते, न शक्य एष वाचामात्रेण विरमयितुम् ]। ता गच्छ मम केरए उडए मक्कण्डेअस्स इसिकुमारस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि तं से उवहर [ तत् गच्छ। मदीये उटजे मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्योपहर ]।

Second H.—Suvrata, he cannot be stopped by mere words So you go. In my cottage there is a colour-painted clay-peacock belonging to the hermit-boy Markandeya. Present him with that

प्रथमा—तह [ तथा ]। ( निष्क्रान्ता )।

First —So be it (*Exit*).

बालः—दाव इमिणा एव्व कीलिस्सं ·[ तावदनेनैव क्रीडिष्यामि ]। (तापसीं विलोक्य हसति )।

Boy—Till then it is with this that I shall play. *(Laughs looking at the female ascetic).*

द्वितीयेति। 'सुव्रता' इति प्रथमाया नाम। 'वाचा' वाक्यमेव इति 'वाचामात्र' तेन केवलेन वचसा इत्यर्थः ( नित्यसमासः। मयूरव्यंसकादिः। वाचा इति आबन्तः 'आपञ्चापि हलन्तानां यथा वाचा निशा दिशा' इति निर्देशात् ) 'विरमयितुं', निवर्त्तयितुम् न शक्यः। 'वर्णैः विविधैर्वर्णैः 'चित्रितः' आलेपितः। मृत्तिकानिर्मितः मयूरः' (शाकपार्थिवादिः)। 'तं' मयूरम् 'अस्य' ( सम्बन्धसामान्ये षष्ठी ) 'उपहर' प्रापय।

बाल इति—'तावत्' यावत् तन्मयूरो नानीतः (अवधौ तावत्)।। 'हसति' इति बालस्वभावः। इह तपस्विन्या कृते निषेधवाक्ये अवज्ञायाः सूचकः।

Notes

1. वाचामात्रेण···वाच् produces the stem वाचा by the maxim 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपञ्चापि हलन्तानां यथा वाचा निशा दिशा॥ So वाच्+आप् or टाप=वाचा word, speech. See Tika also.

राजा—स्पृहयामि दुर्ललितायास्मै।

आलक्ष्यदन्तमुकुलाननिमित्तहासैर्
अव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति॥ १७॥

King—I really long for this naughty disposed boy. The blessed alone carrying their sons—whose buds of teeth are slightly visible by causeless laughs—whose flow of speech is charming by indistinct syllables—who long to cling to their lap,—become soiled with the dust of their body.

तापसी—भो, ण मं गणेसि [भो न मां गणयसि]। (पार्श्वमवलोक्य) को एत्थ इसिकुमाराणं [कः अत्र ऋषिकुमाराणाम्]। (राजानमवलोक्य) भद्दमुह, एहि दाव मोआवेहि इमिणा दुम्मोअहत्थग्गाहेण डिम्भलीलाए बाहीअमाणं बालमिअन्दअं [ भद्रमुख,

**एहि तावत् मोचय अनेन दुर्मोचहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रकम् ]।**

*Hermit*—What ho, You do not heed me! (*Looking to one side*). Who is here of the hermit-boys? (*Seeing the king*) Gentle Sir, do come and release this poor young lion which is being teased in boyish play by this boy the grasp of whose hand is hard to unloose.

राजेति। (लड विलासे भ्वादिषु। भावे क्तः। उलयोरभेद) 'ललितं विलासः। 'दुष्टं ललितं यस्य तस्मै अस्मै दुर्विलासाय बालाय ('स्पृहेरीप्सितः' इति सम्प्रदाने चतुर्थी) 'स्पृहयामि खलु'। सत्यपि दुर्विनीतत्वे एतदर्थे मे अभिलाषो वर्तते एव। अन्वयः—धन्या अनिमित्तहासैः आलक्ष्यदन्तमुकुलान् अव्यक्तवर्णरमणीयवचःप्रवृत्तीन् अङ्काश्रयप्रणयिनः तनयान् वहन्तः तदङ्गरजसा मलिनीभवन्ति। व्याख्या—'धन्याः' सुकृतिनो जना 'अनिमित्त' अकारणा ये हासाः, तैः कारणैः 'आलक्ष्या' ईषद्दृश्या 'दन्तानां मुकुलाः' कोरकाः, नवोद्गता दन्ता इत्यर्थः, येषां तान् 'अव्यक्तैः' अपरिस्फुटैः 'वर्णैः' अक्षरैः 'रमणीयाः' मनोहारिण्यः 'वचसां प्रवृत्तयो' वाक्योच्चारणानि येषां तान्, अङ्के 'आश्रयः' निवासः तस्मिन् यः 'प्रणयः' प्रार्थना तद्वतः 'तनयान् वहन्त' क्रोडे कुर्वन्तः 'तेषां' तनयानाम् 'अङ्ग' यत् रजः धूलिः (जातावेकवचनम्) तेन अमलिना 'मलिना भवन्ति। *पुत्रगात्रधूलिजनिता या मलिनता धन्यता नाम सा, मम तु अधन्यस्य नास्ति अतएव परपुत्राय स्पृहयामि इति भावः।

तापसीति। 'न गणयसि' तृणमिव मन्यसे। 'ऋषिकुमाराणां क अत्र अस्ति' इति तर्जनम्। [मूलम् (त, न्या)—'भवतु न मामयं गणयति (रा, वि, म)॥

'अवलोक्य (त न्या)—'अवलोकयति' (रा, वि, न्या))।] 'भद्रं मङ्गलं मुखं' यस्य तत् सम्बुद्धिः। हे 'भद्रमुख सौम्य 'एहि तावत्' आगत्य 'दुर्मोच' दुष्परिहरः 'हस्तेन ग्रहः' ग्रहणं मुष्टिरित्यर्थः यस्य तथाविधेन 'अनेन डिम्भेन' बालेन 'लीलया विलासेन बालसुलभया क्रीडया 'बाध्यमानं पीड्यमानं 'बालमृगेन्द्रकं मोचय। यद्वा—

'अनेन' कर्त्रा 'दुर्मोचेन हस्तग्रहेण' करणेन 'बाध्यमानम्' इत्यन्वयः। (मूलम् (वि)—दुर्मोक' (रा)—'दुर्मोच' (त न्या)—'ग्रहेण' (म))॥

---

* Adopted by Prof. Gajendragadkar.

## Notes

1. (a) अनिमित्त &c.—अविद्यमानं निमित्तं येषां ते अनिमित्ताः। बहु—। तादृशा हासाः। हेतौ तृतीया। The boy has laughed for no cause (c. f.—'तापसौ विलोक्य हसति above).

2 Reading—(i) भवत् &c- This evidently is the style of an आत्मगत remark. But the speech is not स्वगत। (b) अवलोकयति The लट् is used at the termination of a speeh, ल्यप् is usual in the middle. Hence अवलोक्य is better.

3. दुर्मोच &c—दुःखेन मुञ्चति परिहरति एतम् इति दुर्+मुच+खल्कर्मणि =दुर्मोच.। ग्रह+अप् भावे=ग्रहः। Now see Tika. Raghava reads दुर्मोक। There is no reason to change च into क। Monier. William has ग्राहेण for ग्रहेण। But ग्रह does not take घञ् and cannot give ग्राह in the भावावाच्य। The rule is 'ग्रहवृदृनिश्चिगमश्च' (P 3 3 58). The defence—ग्रहः एव ग्राहः in unnecessary here.

राजा—(उपगम्य—सस्मितम्)—अयि भो महर्षिपुत्रक-

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मनस्त्वया

सत्त्वसंश्रयगुणोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः॥ १८॥

King—(*Approaching— With a smile*)—O thou child of a great sage. why is thy progenitor's self-restraint even that from which comes the virtue of being the resort of all creatures—being thus defiled by thee with a disposition opposed to a hermitage, as a Sandal-tree is by the young black-serpant (cobra).

तापसी—भद्दमुह, ण हु अअं इसिकुमारओ [ भद्रमुख, न हि अयम् ऋषिकुमारः ]।

Hermit—Gentle Sir, he is in fact not the son of a sage.

राजेति। अयि' इति कोमलामन्त्रणे। अन्वयः—एवम् आश्रमविरुद्धवृत्तिना त्वया जन्मनः सत्त्वसंश्रयगुणोऽपि संयमः कृष्णसर्पशिशुना चन्दन एव किमिति दूष्यते। व्याख्या—'एवम् अनेन प्रकारेण 'आश्रमस्य विरुद्धा' विसंवादिनी 'वृत्तिः व्यापारो यस्य तादृशेन 'त्वया जन्मनः' महर्षेः पितुः ( अपादाने मनिन् ) 'सत्त्वानां प्राणिनां संश्रयः

सम्यगाश्रयणं तदेव 'गुणो' धर्मो यस्य तथाविधोऽपि 'संयम.' आत्मदमनं येनात्मदमनेन स हि सर्वप्राणिशरणं, तदपि 'कृष्णसर्पस्य शिशुना 'चन्दन:' तदाख्यो वृक्ष: 'इव किमिति कथं दूष्यते' कलुषीक्रियते। यथा सुभगोऽपि चन्दन. सर्पैस्तत्वात् लोकैस्त्यज्यते, तथा सर्वाश्रयोऽपि ते पिता त्वत्संसर्गात् सत्त्वैस्त्यक्ष्यते इति भाव:। ( संयम:' ( रा, वि, म )—'संयमो' ( त, न्या )॥ जन्मन:' ( म )—'जन्मत:' ( रा, वि )—जन्मद.' ( त, न्या )॥ 'गुण: ( त, न्या )—'सुख.' ( रा, वि, म )॥ 'चन्दन:' (त, न्या रा, भो) = 'चन्दनम्' (रा वि म) )॥

Notes

1. (a). जन्मन:—जायते अस्मात् इति जन+मनिन् अपादाने—जन्म source. i. e. that father. तस्य। शेषे षष्ठी। Construe—जन्मन: संयम:। (b) कृष्णसर्प etc.—कृष्णसर्प is a kind of cobra. A नित्यसमास with अस्वपदविग्रह (or—अविग्रह)। Thus सविष: सर्प कृष्णसर्प.। कर्मधा—( नित्यतत् )। सर्पिपुत्रक is compared to कृष्णसर्पशिशु for contrast. Think what you are, and what you are acting like. (c). *Metes*—The metre is रथोद्धता defined as रान्नराविह रथोद्धता लगौ' with the scheme—⌒—⌒⌒⌒——⌒——⌒—(b). The following are compared—boy, snake; boy's father's संयम—sandal tree. Both संयम and tree are सत्त्वसंश्रयगुण and both are दूष्यत and shunned. Here in the previous editions I had inadvertently stated "boy's father—Sandal tree'; father's संयम—fragrance &c, of the Sandal tree. It was an obvious slip contradicting the Tika.

1. *Readings*—(a) संयमो for 'यम: and जन्मद: for जन्मन: refer to the father. The construction being जन्मद: दूष्यते। (b) Raghava's readings are adopted by Vidyasagara and thus explained—

'आश्रमविरुद्धा तपोवनविसंवादिनी वृत्तिर्व्यापारो यस्य तथोक्तेन त्वया सत्त्वानां संश्रयेण अभिरक्षणेन सुखं प्रीति: यस्मात् तादृशोऽपि संयम: तपोवनवासिनां सहज: सर्वहिंसानिवृत्तिरूप आचार: कृष्णसर्पशिशुना चन्दनमिव किमिति किमर्थं जन्मत: जन्मन: आरभ्य आशैशवादित्यर्थ: एवम् उक्तप्रकारेण दूष्यते सदोष: क्रियते'। Raghava explains सत्त्वसंश्रयसुख: as सुखयतीति सुख:। सुसंश्रयणासौसुखश्च।

Prof. Gajendragadkar rightly objects that जन्मन् in the sense of father is not expected from Kalidasa. This is undoubtedly a blemish in our explanation. But Raghava's which the prof. adopts seems still mere faulty. For ( a ) जन्मत: from the very birth—is superfluous. किमिति संयमोदूष्यते answers equally well, (b) It implies-that it would not be so serious if the boy did it later in more advanced years. This is absurd, because such pranks are possible with thoughtlessness of childhood alone,

It will thus be seen that I have adopted the less objectionable of the two faulty interpretations. Indeed I have grave doubts about the authenticity of the verse. The verse preaches a sermon and to a mere infant. Kalidasas sense of proprietey perhaps would not have allowed the verse here. After having addressed the boy as महर्षि-पुत्रक the comparison with a कृष्णसर्पशिशु heightens the contrast no doubt ; but is utterly lost to the child who wants a lion-cub to yawn so that he might count its teeth !

राजा—आकारसदृशं चेष्टितमेवास्य कथयति। स्थानप्रत्ययात्तु वयम् एवंतर्किन:। ( यथाभ्यर्थितमनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य आत्मगतम् )—

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम्।
कां निर्वृत्तिं चेतसि तस्य कुर्य्याद् यस्यायमङ्गात् कृतिन: प्ररूढ़:॥ १८॥

King—His action, which befits his body, indeed declares it. But from our reliance in the place we guess thus. (*Aside—on feeling the touch of the boy while doing as requested* . Such is my joy on being touched in the limbs by this shoot of the race of some one , what rapture then must he produce in the heart of the lucky person from whose body he has sprung !

तापसी (उभो निर्वर्ण्य)—अच्छरिअं अच्छरिअं [ आश्चर्य-माश्चर्यम ]।

Hermit—(*Marking*)—Strange ! Strange !

**राजा—आर्य्ये, किमिव ।**

King—What is it, noble lady.

राजेति । 'आकारेण आकारस्य वा 'सदृशम्' अनुरूपं चेष्टितं' कर्म 'एवं कथयति, यत् अयम् ऋषिकुमारको न । आकारेण कर्मणा च कथ्यते नायंऋषिकुमारक इति । 'स्थाने' अवाश्रमे यः 'प्रत्ययः' विश्वासः, ऋषिजुष्टमिदं स्थानमिति या मे मतिः तत इव 'एवम्' ईदृश' 'तर्कयति' यस्मादृशोऽहं जातः ऋषिकुमारकमेनं मन्ये इत्यर्थः (एवंतर्किनः' इति तु विधीयते । तेन 'अस्मदो द्वयोश्च' इति बहुवचनम्) । 'यथा यद्वत् 'अभ्यर्थितं प्रार्थितं तथा, प्रार्थितानुरूपमित्यर्थः 'अनुतिष्ठन्' कुर्वन् सिंहशिशु-मस्य मुष्टेर्मोचयन् इति भावः । 'स्पर्शं गात्रसम्पर्कम् उपलभ्य' प्राप्य । अन्वयः—कस्यापि कुलाङ्कुरेण अनेन गात्रेषु स्पृष्टस्य मम एवं सुखम्, अयं कृतिनः यस्य अङ्गात् प्ररूढः तस्य चेतसि कां निर्वृतिं कुर्य्यात् । व्याख्या—'कस्यापि' मया निःसम्बन्धस्य जनस्य 'कुलस्य' वंशस्य 'अङ्कुरेण' वंशसन्तानवीजेन 'अनेन' बालेन 'गात्रेषु' केष्वपि प्रत्यङ्गेषु 'स्पृष्टस्य न तु आलिङ्गितस्य 'मम एवम्' अनिर्वचनीयं' 'सुखं' यदि जातं तदा अयं कृतिनः' कृतकृत्यस्य, धन्यस्य यस्य अङ्गात् देहात् 'प्ररूढः 'तस्य चेतसि 'काम्' अवाङ्मनसगोचरां 'निर्वृतिं सुखं' 'कुर्य्यात्' विदध्यात् । न कोऽप्य-हमस्य, तथाप्यस्य स्पर्शमात्रेणापि एवमभावनीयं सुखम् योऽस्य पिता स एनं निर्भर-मालिङ्ग्य किं सुखं लभेत वद, मम तु मनसाप्यशक्यं चिन्तयितुम् इत्याशयः ।

Notes

1. एवंतर्किनः—एवम् तर्कयति इति एवम्+तर्क+णिच्+णिनि कर्त्तरि ।

2. (a. कुलाङ्कुरेण—अङ्कुर speaks of the continuity of the race. Hence it hints at the extincition of the पुरुवंश । (b). कृतिनः—Indirectly deplores his own अकृतित्व । See ante.

**तापसी—इमस्स बालअस्स रूवसंवादिणी दे आकिदित्ति । विम्हिदम्हि अपरिइदस्सवि दे अप्पडिलोमो संवुत्तो त्ति [ अस्य**

बालकस्य रूपसंवादिनी ते आकृतिरिति। विस्मितास्मि अपरिचितस्यापि अप्रतिलोमः संवृत्त इति ]।

Hermit—It is that your appearance resembles the features of this boy, I am surprised that he has proved not untractable to you, though a stranger.

राजा—( बालकमुपलालयन् )—न चेत्मुनिकुमारोऽयम् अथ कोऽस्य व्यपदेशः।

King ( *Fondling the boy* )—If he is not a hermit-boy, then what is his race.

तापसी—पुरुवंसो [ पुरुवंशः ]।

तापसीति। 'अस्य बालकस्य' यत् रूपं तेन साधु 'संवदति' सङ्गच्छते या तादृशी 'ते आकृतिः रूपम् 'इति' एतदाश्चर्यम्। 'किमिव' इति राज्ञः प्रश्नस्य प्रतिवचनमेतत्। 'अपरिचितस्य' अदृष्टपूर्वस्य 'ते अप्रतिलोमः' अविरुद्धः ( प्रादितत्—। अच समासान्तः। ततो नञ तत्—॥ अव्ययीभावपक्षे तु टच् समासान्तः ततो मत्वर्थीयोऽच्। नञ् समासः] संवृत्तो" जातः इति अनेन हेतुना 'विस्मितास्मि'। ( 'विस्मिता ( त. च. )—'विस्मापिता' ( रा, वि, म ) )॥

राजेति। 'बालम् उपलालयन्, उपलालयमानम् इच्छानुरूपं प्रवर्त्तमानं बालकं प्रेरयन् ( ईप्सार्थे वर्त्तमानात् चौरादिकात् लल धातोः हेतुमण्णिच् )। अथ प्रश्न। 'अस्य व्यपदेशः कुलं 'कः।

Notes

1. (a). रूपसंवादिनी—रूपेण साधु संवदति इति रूप+सम्+वद्+णिनि कर्त्तरि साधुकारिणि। (b). अप्रतिलोमः—*प्रतिगतो लोमानि इति प्रति-लोमन्+अच् समासान्त प्रतिलोमः against the hair, i. e., refractory ादितत्—। The अच् is attached by the rule अच् प्रत्यन्ववपूर्वात्

* Adopted by prof. Gajendragadkar.

सामलोम्यः। An अव्ययीभाव is not easily available here, If allowed the form will be प्रतिलोम+अच्, मत्वर्थे=प्रतिलोमः opposed. न तथा। (c). विस्मिता—विस्मापिता supposes इति to be the agent ( हेतु ) that causes विस्मय। This is unnecessarily round-about.

2° उपलालयन्—The root लल् is चुरादि आत्मनेपदी giving उपलालयमानः। The परस्मैपद however is seen in cases like 'लालयेत् पञ्च वर्षाणि'—Chanakyasatak. 'उपलालयन्तमपि ते सखी न लक्षयिष्यति—*Malavikagnimitra.* The defence is that in these examples a प्रेरणार्थकणिच् is attached to the चुरादि root Hence अकर्त्रभिप्राये क्रियाफले परस्मैपदम्। Thus बालकः उपलालयते with स्वार्थिक णिच् only ; उपलालयमानं बालकं प्रेरयन्=उपलालयन् with additional णिच् in the sense of प्रेरणा।

**राजा ( आत्मगतम् )—कथमेकान्वयो मम। अतः खलु मदनुकारिणमेनमत्रभवती मन्यते। अस्त्येतत् पौरवाणामन्त्यं कुलव्रतम्—**

**भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम्।**
**नियतैकयतिव्रतानि पश्चात् तरुमूलानि गृहीभवन्ति तेषाम्॥२०॥**

**(प्रकाशम्) न पुनरात्मगत्या मानुषाणामेष विषयः॥**

King—(*Aside*)—How so! My collineal! Hence surely does this noble lady consider him as resembling me ; there exists this final family vow to the descendants of Puru, that of those who for the protection of the world, wish residence in houses, abounding in pleasures in early life, in later days the roots of trees, with solely the vow of hermits attached to them become their homes. (*Aloud*) But this is not a place for mortals ( to come to ) through their own motion or emotion.

**तापसी—जह भद्दमुहो भणादि। अच्छरासम्बन्धेण उण इमस्स जणणी एत्थ देवगुरुणो तवोवणे प्पसूदा [ यथा भद्रमुखो**

भवति। अप्सरःसम्बन्धेन पुनरस्य जननी अत्र देवगुरोस्तपोवने प्रसूता ]।

Hermit—As gentle sir says. But this boy's mother owing to her relationship with the Apsaras, was delivered here in the hermitage of the progenitor of the gods.

राजेति। 'कथम्' इत्याश्चर्ये। 'मम' (सम्बन्धसामान्ये षष्ठी) एकः अन्वयो' वंशो 'यस्य सः। 'अतः खलु अवभवतो एन' बालकं 'माम् अनुकरोति मया सह संवर्दति रूपेण यस्मादृशं 'मन्यते। अन्ते वयसि कर्त्तव्यं कुलव्रतं, कुलाचारः। तदेव स्फुटयति। अन्वयः—पूर्वं ये क्षितिरक्षार्थं रसाधिकेषु भवनेषु निवासम उशन्ति पश्चात् तेषां नियतैकयतिव्रतानि तरुमूलानि गृहीभवन्ति। व्याख्या—पूर्वम् आद्ये वयसि 'ये क्षितेः धरायाः 'रक्षार्थं' रक्षणाय, न तु इन्द्रियसेवार्थं रसैः भोगद्रव्यैः 'अधिकेषु बहुलेषु भोगाढ्येषु इत्यर्थः 'भवनेषु निवासं' स्थितिम् 'उशन्ति वाञ्छन्ति (वश कान्तौ' इति धातुः) 'पश्चात् अन्तेवयसि 'तेषां नियतं व्यवस्थितम् 'एकं केवलं यतिव्रतं वानप्रस्थो येषु तथाविधानि तरुमूलानि अगृहाणि 'गृहाणि भवन्ति सम्पद्यन्ते। सदा धर्मपराः पौरवा धर्मार्थमेव यौवने गृहिणः वार्द्धके मुनिव्रतं तरुतलं भजन्ते। यस्य तापसो पुरुवंश इत्याह तत्र पृच्छति एष पुनः अयन्तु मारीचाश्रमः आत्मनो गत्या स्वेच्छया मानुषाणां न विषयः अभूमिः॥ अत्र मानुषा दैवयोनिभिर्देवैर्वा प्रेरिताः आगच्छेयुः न हि स्वेच्छया। तत् कथमिह पौरवा प्राप्ता इति पृच्छामि इति भावः।

तापसीति। 'भद्रमुखो यथा भवति' तदेव एतत्। सत्यमेव मानुषाः स्वयमत्र आगन्तुमशक्ताः। अप्सरोभिः' यः सम्बन्धः सम्पर्कः तेन पुनः (पुनरिति भेदे) अस्य जननी अत्र देवानां गुरोः पितुः कश्यपस्य 'तपोवने प्रसूता'।

Notes

1. रसाधिकेषु—रस्यन्ते इति रस (आस्वादने चुरादि)+णिच्+अच्, or घञ् कर्मणि=रसाः enjoyments, Now सुपसुपा (See Tika).

राजा (अपवार्य)—हन्त द्वितीयमिदमाशाजननम्। (प्रकाशम्) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी।

King (*Aside*)—Ha ! Here is a second creator of hope. (*Aloud*) Well, of what royal sage (by name) is she, the noble lady, the wife.

तापसी—को तस्स धम्मदारपरिच्चाइणो णाम सङ्कीत्तिदुं चिन्तिस्सदि [ कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्त्तयितुं चिन्तयिष्यति ] ।

Hermit—Who will think of pronounci n the name of the deserter of his lawful wife ?

राजा ( स्वगतम् )—इयं खलु कथा मामेव लक्ष्यीकरोति। यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवा अनार्य्यः परदारव्यवहारः ।

King (*Aside*)—Surely this story points to me alone. Suppose I do ask to know the mother of this boy by name ; or reference to another's wife is ignoble.

( प्रविश्य मृन्मयूरहस्ता ) तापसी—सव्वदमण सउन्तलावस्सं पेक्ख [ सर्वदमन, शकुन्तलावण्यं प्रेक्षस्व ] ।

First Hermit (*Entering with a clay peacock in hand*)—Sarvadamana see the *Sakunta-lavanya* or bird's beauty.

राजेति । 'हन्त' हर्षे अव्ययम् । 'इद' तापसीवचन द्वितीयम् आशाया जननं' हेतुः । भुजस्पन्दनं एकान्वयतादि च प्रथमम्, इदन्तु द्वितीयम् । 'अथ' इति प्रश्न । 'सा' तव-भवती अस्य जननी 'का आख्या' नाम यस्य तस्य 'पत्नी' । यस्य सा पत्नी तस्य का आख्या इत्यर्थः ।

तापसीति । 'धर्मार्था धर्मप्रयोजना धर्मसहाया वा 'दाराः' (शाकपार्थिवादिः । ) यद्वा—धर्मस्य दाराः' (तादर्थ्ये षष्ठीसमासः)। तान् यः साधु 'परित्यक्तवान्' ( इति णिन् ) तस्य 'नाम कः संकीर्त्तयितुम् उच्चारयितुं 'चिन्तयिष्यति' । पापकारणं पापिनामोच्चारणम् इति भावः ।

राजेति । 'इयं कथा' दारत्यागकथा । 'माम्' अलक्ष्यं लक्ष्यं विषयीभूतं करोति। अस्य शिशोर्मातरं यदि तावत् नामतः ( तृतीयार्थे तसिः ) पृच्छामि । अथवा परस्य

दाराणां व्यवहारः आलोचना तत्सम्बन्धा कथा 'अनार्यः' आर्यजनविगर्हितः। 'मृन्मयःमयूरो हस्ते यस्याः। ('मृन्मयूरः' (म)—मृण्मयूरः' (रा, वि, त, न्या)॥ तापसीति। 'शकुन्तस्य' पक्षिणो मयूरस्यास्य 'लावण्यं' माधुरीं 'प्रेक्षस्व। दर्शनीयमस्य रूपमित्यर्थः।

1. सङ्कीर्त्तयितुं चिन्तयिष्यति—Even the *thought* ( चिन्तयिष्यति ) to utter is sinful, let alone actual utterance. Cp. 'कथापि खलु पापानामलमश्रेयसे यतः'' ।

2. (a) यदि तावत्—Highly idiomatic. Indicates forming a resolve, making a suggession &c. Compare 'यदि तावदेवं क्रियताम्'—Act. V. (b). अनार्य—अर्यतेगम्यते आश्रीयते इति ऋ+ण्यत् कर्मणि=आर्यः anything good or noble. न आर्यः। Or taking आर्य to mean the महत् great men, we have by लक्षणा here आर्य=pertaining to the great, (c) परदार &c.—वि+अव+हृ +घञ् भावे=व्यवहारः। 'वि नानार्थेऽव सन्देहे हार उच्यते। नानासन्देहहरणाद् व्यवहार इति स्मृतः॥—*Katyayana.*

3. मन्मयूर &c.—मदो मयूरः or मृन्मयो मयूरः मृन्मयूरः। The reading मृण्मयूर is very common. But it is faulty, मृद्+मयूर changes द into न by the rule-यरोऽनुनासिकेऽनुनासिको वा ( P. 8, 4 45) giving मृन्मयूर or मृद्मयूर। Now the rule-रषाभ्यां नो णः समानपदे (P. 8. 4. 1) does not apply to मृन्मयूर owing to the injuction पूर्वत्रासिद्धम् (P. 8. 2. 1), Even if it did apply, the न here would not become ण because of the prohibition पदान्तस्य (P. 8, 4. 57) as मृन् has न at the end of the पद।

**बालः (सदृष्टिक्षेपम्)—कहिं वा मे अज्जुआ [ कुत्र वा मे अम्बा ]।**

Boy (*Casting his looks about*)—Where could my mother be ?

**उभे—णामसारिस्सेण वञ्चिदो माउवच्छलो [ नामसादृश्येन**

Both—Devoted to his mother, he is deceived by the imitation of the name.

द्वितीया—वच्छ, इमस्स मित्तिआमोरस्स रम्मत्तणं देक्खेत्ति भणिदो सि [ वत्स, अस्य मृत्तिकामयरस्य रम्यत्वं पश्य इति भणितोऽसि ]।

Second Hermit—my child "See the beauty of this clay-peacock—"this is what you have been told.

राजा ( आत्मगतम् )—किं वा शकुन्तलेत्यस्य मातुराख्या। सन्ति पुनर्नामधेयसादृश्यानि। अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते।

King (*Within himself*)—Really, is Sakuntala his mother's name? Or, there are resemblances in names. It is possible the mention of the mere name, like a mirage is developing for my distress?

बाल इति। मातुर्दर्शनार्थे 'दृष्टिं पातयित्वा तान्च अदृष्ट्वा आह 'कुत्र वा मे अम्बा' माता स्यात्, सा मया न दृश्यते।

उभे इति। 'नाम्नः सादृश्यं' तुल्यता तेन मातरि वत्सलः प्रेमवान् अयं बालो वञ्चितः' प्रतारितः। 'सउन्दलावण्णं' इत्यत्र 'शकुन्तलावर्णं' शकुन्तलाया वर्णं पश्य' इति वञ्चितः।

राजेति। किं वा अस्य मातुः शकुन्तला इति आख्या। इति तृतीयमाशाजननं विधूय चाह 'नामधेयेषु' नामसु 'सादृश्यानि' तुल्यता 'पुनः सन्ति' तेन शकुन्तलेति मातृनाम सैव सुतराम् आशाजननम्; मृगतृष्णिका' यथा जलसादृश्यं प्रदर्श्य विषादाय ( सम्पद्यमाने ४र्थी ), कल्पते' तथा अपि नाम' किमेतत् सम्भावितं यत् 'नाममात्रस्य' ( नाम एव नाममात्रं ) केवलस्य शकुन्तलानाम्नः 'प्रस्तावः' अवतारणा अधुना आशां जनयित्वा विषादं घटयितुं प्रवृत्तः* ।

## NOTES

1. कुत्र वा—वा implies परिप्रश्न inquiry. कुत्र in भाषा was sparingly used by early writer. They used क instead. Nowadays both क and कुत्र are used in भाषा। Cp.—'सप्तम्यन्तात् किमः अत्रा स्यात् पक्षे वल्' । See also our Swapna II. and charudata III.

---

*Adopted by prof. Gajendragadkar

2. भणित:—भण+क्त कर्मणि। The root has the sense of ब्रू। Hence it is द्विकर्मक। Here अप्रधाने कर्मणि क्त by the maxim 'अप्रधाने दुहादीनाम्'।

3. मृगतृष्णिका—See मृगतृष्णिकायाम्, Act VI. ante.

**बाल:—अन्तिए, रोअदि मे एसो भद्दमोरओ [अन्तिके, रोचते मे एष भद्रमयूर: ]। ( क्रीड़नकमादत्ते )।**

Boy—Sister, this nice peacock pleases me. (*Takes the toy*).

**प्रथमा ( विलोक्य सोद्वेगम् )—अम्हहे, रक्खाकरण्डअं से मणिबन्धे ण दीसदि [ अम्महे, रक्षाकरण्डकम् अस्य मणिबन्धे न दृश्यते ]।**

First—(*Having noticed—With alarm*)—Oh ! the amulet of protection is not seen on his wrist.

**राजा—अलमावेगेन। ननु इदमस्य सिंहशावविमर्दात् परिभ्रष्टम ( आदातुमिच्छति )।**

King—Away with anxiety. Here indeed it is slipped through his tussle with the lion-cub (*Wants to pick it up*).

**उभे—मा क्खु मा क्खु। एदं अवलम्बिअ—। कहं गहिदं णेण [ मा खलु, मा खलु। एतदवलम्ब्य—। कथं गृहीतमनेन ]। ( विस्मयादुरोनिहितहस्ते परस्परमवलोकयत: )।**

Both—O don't O don't. Having touched it. :—How so ! Taken by him ! (*Through amazement they stare at each other with hands placed on their chest.*)

बाल इति। हे 'अन्तिके' (भगिनी) 'एष भद्र:' शोभनो' मयूर: मे' मह्यम् ( प्रीयमाणत्वात् सम्प्रदाने चतुर्थी ) 'रोचते'। प्रीतोऽहमनेन इत्यर्थ: ( 'अन्तिके' (त, न्या) —'मात:' ( रा, वि )—'आर्य्यके' ( म ) )। 'आदत्ते' गृह्णाति ( कर्त्रभिप्राये क्रियाफले अत्र आत्मनेपदम् )।

अथमेति। 'उद्वेगेन' सम्भ्रमेण सह। 'करण्डः' पुष्पपत्रादिकृतो ग्रन्थिबन्धः। क्षुद्रः करण्डः करण्डकम्' ( ह्रस्वे वा अल्पार्थे कन् ) 'रक्षार्थं' दत्तं 'करण्डकं मणिबन्धे न दृश्यते। तददर्शनादुद्वेगः।

राजेति। 'ननु इदमस्य' इति अङ्गुल्या निर्देशः। 'सिंहशावेन' यो विमर्द:' सङ्घर्षः। तस्मात् 'परिभ्रष्टं' च्युतं सत् भूमौ पतितम्।

उभे इति। 'मा खलु' आदत्स्व इति आदाननिषेधः। ( आवेगे द्विरुक्तम् )। निषेधकारणमाह—'एतत्' रक्षाकरण्डकम 'अवलम्ब्य आदाय'—म्रियते इति वाक्यशेषः। असमाप्ते एव वाक्ये राजा तदादत्ते न तु मृत इतिविस्मयात् ते आहतुः 'कथम्' आश्चर्ये। 'उरसि' वक्षसि 'निहितः' स्थापितः 'इमां' ययोः ते अवलोकयतः राजा एवायमिति प्रत्यये जाते विस्मयाधिक्यात् वचसि निरुद्धे परस्परावलोकनमात्रं कृतं न च किञ्चिदुक्तम्।

## NOTES

1. अत्तिके—अत्तिका is used in Dramas for the elder sister. 'बुद्धायां ज्येष्ठभगिन्याञ्च नाट्योक्तौ कोत्तिरतेऽत्तिका' इति विश्वमेदिन्यौ।

2. (a) अम्महे—indicates विस्मय surprise, विस्मये अम्महे चम्म मित्यं स्त्रीभिः प्रयुज्यते' इति कोषः। (b) न दृश्यते—She noticed this when the boy put his hand to take the toy.

**राजा—किमर्थं प्रतिषिद्धाः स्मः।**

King—For what purpose have I been prohibited ?

**प्रथमा—सुणादु महाराओ। एसा अवराजिदाणाम ओसही इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा। एदं किल मादापितरो अप्पाणं वज्जिअ अवरो भूमिपड़िदं ण गेण्हादि [ शृणोतु महाराजः। एषा अपराजिता नाम ओषधिः अस्य जातकर्मसमये भगवता मारीचेण दत्ता। एतां किल मातापितरौ आत्मानं च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति ]।**

First Hermit—Listen, mighty king. This ...

named Aparajita given by his Sublime Highness Maricha at the time of his natal ceremony. No one indeed, excepting the father, the mother and self takes it up if dropped on the ground.

राजा—अथ गृह्णाति ।

King—if he does take up ?

प्रथमा—तदो तं सप्पो भविअ दंसइ [ ततस्तं सर्पो भूत्वा दशति ] ।

First Hermit—Then, becoming a snake, it bites him.

प्रथमेति । 'मातापितरौ आत्मानञ्च वर्जयित्वा अपरः किल भूमौ पतिताम् एतां न गृह्णाति' अकर्त्तव्यं बुद्ध्या ग्रहणात् निवर्त्तते ।

राजेति । 'अथ' विकल्पे । अपरो भूपतितां 'गृह्णाति' इति विकल्प किम् इत्यर्थः ( 'अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकात्स्न्यारम्भसमुच्चये ॥' इति मेदिनी ) ।

NOTES

1. महाराजः—They know it now for certain that he is the king.

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृताविक्रिया ।

King—Has its transformation ever been seen by your Honoured Selves ;

उभे—अणेअसो [ अनेकशः ] ।

Both—Several times.

राजा (सहर्षमात्मगतम्)—कथमिव सम्पूर्णमपि मे मनोरथं नाभिनन्दामि । ( बालं परिष्वजते ) ।

King—(*Within himself with joy*)—How is it I do not greet my desire though fulfilled. (Embraces the child)

द्वितीया—सुब्बदे, एहि इमं वुत्तन्तं णिअमव्वावुताय सउन्दलाए निवेदेम्ह [ सुव्रत, एहि इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयामि ] । ( निष्क्रान्ते ) ।

Second Hermit—Suvrata, come, we shall report this fact to Sakuntala engaged in (her) austerities. (Exeunt)

बालः—मुञ्च मं जाव अम्बाए सआसं गमिस्सं [ मुञ्च मां यावदम्बायाः सकाशं गमिष्यामि ] ।

Boy—Release me I will go to my mother.

भवतीभ्यामिति । 'अम्बा' औषधेः विक्रिया विकारः सर्पभवनम् 'कदाचित् प्रत्यक्षीकृता साक्षाद्दृष्टा किम् ?

उभे इति । 'अनेकशः' बहुशः बहुषु कालेषु विक्रिया प्रत्यक्षीकृता ( कालाधिकरणे शस् "बह्वल्पार्थात्---" इति सूत्रेण ) ।

राजेति । 'सम्पूर्णमपि मे मनोरथम्' अनुरूपपुत्रलाभरूपं 'कथमिव' किमिव कारणं 'न अभिनन्दामि न सम्भावयामि । अनुचितमेतत्, तदेष: अभिनन्दामि । 'परिष्वजते' आलिङ्गति ।

द्वितीयेति । 'एहि इत आगच्छ 'नियमे' तपश्चरणे 'व्यापृतायै नियुक्तायै शकुन्तलायै ( 'कर्मणा यमभिप्रैति—' इति सम्प्रदानत्वात् चतुर्थी ) वृत्तान्तं निवेदयामि ।

बाल इति । 'यावत्' इत्यवधारणे । ( 'अम्बायाः' ( त, न्या, म )—'मातुः' ( रा, वि ) ) ।

## NOTES

1. अनेकशः—न एकः अनेकः which is a सर्वनाम । अनेकस्मिन् काले इति अनेक+शस् अधिकरणे=अनेकशः by the rule 'बह्वल्पार्थात् शस् कारकादन्यतरस्याम्' ( P. 5. 4. 42 ). See also अनेकशः in our Bb, II. and K. V. etc.

2. सम्पूर्णमपि—He has no doubt that this is his boy.

3. नियम—etc.—नि+यम+अप् भावे=नियमः vow व्रतम । 'नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते' इति मेदिनी । यम is expected to take घञ्, but it has अप् optionally by the rule 'यमः समुपनिविषु च' । नियाम

is also correct and has the same sense. वि+आ+पृ+क्त कर्त्तरि स्त्रियाम्=व्यापृता engaged. Now see Tika.

4. सकाशम्—समानं काशते इति समान+काश+ अच् कर्त्तरि—सकाशम्। समान becomes स by योगविभाग in the rule समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु (P. 6. 3. 84).

राजा—पुत्रक, मया सहैव मातरमभिनन्दिष्यसि।

King—My son, even with me you will congratulate your mother.

बालः—मम क्खु तादो दुस्सन्दो ण तुमं [ मम खलु तातो दुष्यन्तः न त्वम् ]।

Boy—Dushynanaa indeed is my father, not you.

राजा ( सस्मितम् )—एष विवाद एव प्रत्याययति।

King—(*Smiling*)—The contradiction itself convinces.

( ततः प्रविशत्येकवेणीधरा शकुन्तला )। शकुन्तला—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ णमे आसा आसि अत्तणो भाअहेएसु। अहवा जह साणुमदीए आचक्खिदं तह सम्भावीअदि एदं [ विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्य ओषधिं श्रुत्वा न मे आशा आसीत् आत्मनो भागधेयेषु। अथवा यथा सानुमत्या आख्यातं तथा सम्भाव्यते एतत् ]।

(*Then enters Sakuntala with her hair twisted into a single braid*) Sakuntala—Even having heard Sarvadaman's herb to be in its natural state when there was an occasion for transformation, I placed no hope in my luck. Or from what is related by Sanumati, this seems possible.

राजेति। 'विवादः' पुत्रस्य इति सम्भाषणस्य प्रतिवादः। 'प्रत्याययति' प्रत्ययं

जनयति ( बोधनार्थत्वात् न गम्यादेशः )। 'मम तातो दुष्यन्तः' इति स्फुटोक्ते प्रत्ययः। तत इति। 'एकस्या वेण्या धरा' एकामेव वेणीं धारयन्ती इत्यर्थः। प्रोषितपतिकाया एकवेणीधारणमाचारः।

शकुन्तलेति। 'सर्वदमनस्य औषधिं' रत्नाकरण्डकवलिनीमपराजितां 'विकारस्य' सर्पीभावस्य 'काले प्रकृतौ' औषधिभावे या तिष्ठति तादृशीं 'श्रुत्वा अपि' आर्य्येणैव एव प्राप्त इत्यसंशयितेऽपि 'आत्मनः' स्वस्य 'भागधेयेषु' भाग्येषु विषये 'मे आशा न आसीत्, प्रसन्नं मे भाग्यमिति प्रत्ययो मे न जातः। 'अथवा' पक्षान्तरे मे आशास्थानमस्ति। 'सानुमत्या यथा' यद्वत् आख्यातं कथितं मे तथा तद्वत् 'एतत् सम्भाव्यते'। सानुमत्युक्तं सत्यं चेत् नैतदसम्भवम् ( यथा तथा इत्यनुमाने अव्ययम् )।

NOTES

1. विवाद एव—The conviction comes after all from the contradiction.

2 एकवेणी—&c —एकाविणी। तस्य धरा If we attach कर्मधारय with the वाक्य—एकवेणीं धरति या सा we get एकवेणीधारी।

3. विकार—&c. अपि is misplaced. It should be taken with श्रुत्वा।

राजा (शकुन्तलां विलोक्य)—अये सेयमत्रभवती शकुन्तला येषा—

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति ॥२१॥

King—(*Seeing Sakuntala*)—Ha ! Here is her Ladyship Sakuntala—She who, with a pure conduct, wearing two pieces of very good garments, with her face wasted by penances bearing a single braid of hair, undergoesthe long observance of separation from me who was excessively unkind (cruel) to her.

शकुन्तला (पश्चात्तापविवर्णं राजानं दृष्ट्वा)—न क्खु अज्जउत्तो विअ। तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे

**गत्तसंसग्गेण दूसेदि [ न खलु आर्य्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ] ।**

Sakuntala—(*Seeing the king pale with remorse*)—Certainly not like my husband! Who then is this with the contact of his body defiling my boy unto whom auspicious guard was provided?

राजेति। अन्वयः—अये या अत्रभवती एषा परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणिः सा इयं शुद्धशीला शकुन्तला अतिनिष्करुणस्य मम दीर्घं विरहव्रतं बिभर्त्ति। व्याख्या—'अये इति स्मरणे। 'या अत्रभवती' मान्या 'एषा' दृश्यमाना 'क्षामं शुष्कं 'मुखं यस्याः तादृशी, धृता एका वेणिः' यया तादृशी इतोमुखमागच्छति 'सा इयं शुद्ध'' निष्कलङ्कं' शीलं स्वभावो यस्याः तादृशी शकुन्तला अतिनिष्करुणस्य सुतरां क्रूरस्य 'मम दीर्घं विरहस्य विरहोचितं वा 'व्रतम् आचारं बिभर्त्ति धारयति। *गुरुशोकेन रूपे विकृते प्रथमं मलिनवसना रमणीमात्रमिति ज्ञातम्। ततो नातिदूरे क्षामेण कपोलेन कठोरं तपश्चरन्ती काचित् तापसीति। ततश्च समीपे एकमात्रया वेण्या नेयं तापसी किन्तु विरहिणीति। अनन्तरं प्रत्यभिज्ञा—अपि सेयं शुद्धशीला शकुन्तला इति च क्रूरस्य ममैव विरहव्रतम् इति—तेन आवेगातिशयः। अन्येतु—परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणिः (अतएव) शुद्धशीला या एषा अतिनिष्करुणस्य मम दीर्घं विरहव्रतं बिभर्त्ति सा इयमत्रभवती शकुन्तला इत्यं व्याचक्षते। अत्र सा इयं शकुन्तला इत्यभिज्ञानात् प्राक् मम विरहव्रतं बिभर्त्ति इत्यनुपपत्तिः स्पष्टैव। (वस आच्छादने अदादि+शानच=वसाना)।

शकुन्तलेति। पश्चात्तापेन विवर्णं विरूपम्। न खलु नूनम् आर्य्यपुत्र इव अयं लक्ष्यते। यदि नायमार्य्यपुत्र ततः क एष इदानीम् (वाक्यालङ्कारे) कृतं विहितं रक्षारूपं मङ्गलं यस्य तादृशं मे दारकं पुत्रं गात्रस्य स्वशरीरस्य संसर्गेण सम्पर्केण 'दूषयति' कलुषीकरोति। अपराजितामप्यभिभूय 'बालं' मे स्पृशत्ययं क इति शङ्कागर्भो वितर्कः। दूरत्वादश्रुतमेतद्राज्ञा।

---

*गुरुशोकेन...आवेगातिशयः Adopted by prof. Gajendaragadkar.

Notes

1. (a) वसने – The upper and the lower garments. (b) परि धूसरे—धूसर is पाण्डु grey, परि is intensive. Indicates the absence of all care after toilet. (c) नियम &c —क्षै+क्त+कर्त्तरि= क्षामम् wane. नियमेन (See नियमव्यापृता, above) क्षामम्। सुप्सुपा। तादृशं मुखं यस्याः। बह्—। नियमक्षाममुखा is an optional from by the rule 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (P. 4. 1. 54). (b) धृतैक &c—एका वेणिः एकवेणिः। Both वेणि and वेणी are correct (See एकवेणीधरा above), the ङीष् being optional by the Ganasutra 'कृदिकारादक्तिनः। (e) विरहव्रतम्—See Tika. the व्रत consists of several observations of which केशाङ्गसंस्कारवर्जन is prominent.

2. कृतरक्षा &c.—रक्ष्यते अनया इति रक्ष+अङ् करणे स्त्रियाम्=रक्षा guard. Now see Tika

**बालः ( मातरमुपेत्य )—अम्ब, एसो को वि पुरिसो मं पुत्तेत्ति आलिङ्गदि [ अम्ब, एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति ]।**

Boy (*Approaching his mother*)—Mother, here is a man who embraces me as his son.

**राजा—प्रिये, क्रौर्यमपि त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तं यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि।**

King—My darling, even the crueltly inflicted by me on you has turned out to be of a favourable termination, since I see myself recognised by you.

**शकुन्तला (आत्मगतम्)—हिअअ, समस्सस समस्सस। परिच्चत्तमच्छरेण अणुअम्पिदम्हि देव्वेण। अय्यउत्तो क्खुएसो [हृदय, समाश्वसिहि समाश्वसिहि। परित्यक्तमत्सरेण अनुकम्पितास्मि दैवेन। आर्य्यपुत्रः खल्वेषः ]।**

Sakuntala (*Within herself*)—Take courage, takecourage

my heart, I am pitied by destiny that has renounced its spite. This is indeed my husband.

राजेति। 'त्वयि त्वां प्रति 'प्रयुक्तम्' आचरितं 'क्रौर्य्यमपि' क्रूरतापि 'अनुकूल:' सरम: परिणामो' विपाको यस्य तथाविधं 'संवृत्त'' जातम्। कुत एवमित्याह—यत् यस्मात् 'अहम् आत्मान'' मत्स्वरूपं त्वया प्रत्यभिज्ञातं संस्मृतं 'पश्यामि'। साधु ते शीलं यत् विमानितापि विरमासि न मे। पाठान्तरे—'अनुकूलपरिणामं संवृत्त:' सुत-स्पर्शसुखलाभात्। 'तत्' तस्मात् 'इदानीमहमात्मन' त्वया प्रत्यभिज्ञातमिच्छामि' तेन पूर्णता स्यादानन्दस्य। ('यत्···पश्यामि' (रा, वि. म)—'तत्···इच्छामि' (त, न्या)।

शकुन्तलेति। 'परित्यक्त:' परिहृत: 'मत्सरो' मच्छुभद्वेषो येन तथाविधेन दैवेन' विधिना 'अनुकम्पितास्मि'। पुरा वामो यो हि विधिरार्य्यपुत्रेण मे सङ्गतिं न सेहे, स एवाद्य सदय इह तं समानीय मया योजितवानिति भाव:।

Notes

1. एव इति—This is elliptcal for एव इति आभाष्य।

9. परित्यक्त &c.—मत्सर is अन्यशुभद्वेष spite; परश्रीकातरता। See now Tika.

राजा—प्रिये,

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते शशिन: समुपगता रोहिणी योगम् ॥२२॥

King—My darling, O thou with fine face (Or—with a gracious expression of face)—Through luck thou standest before me whose gloom of delusion is dispelled by recollection. Rohini has approached union after the eclipse of the moon.

शकुन्तला—जेदु जेदु अय्यउत्तो [जयतु जयत्वार्य्यपुत्र:]। (अर्द्धोक्ते वाष्पकण्ठी विरमति)।

Sakuntala—Prosper, let my husband prosper. (*Stops with tears in her throat when half uttered*).

राजा—सुन्दरि,

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्टपुटं मुखम् ॥ २३ ॥

King—O fair one, I have prospered though the pronouncement of prosperity was checked by tears. Because I have seen your face with lips pale-red through absence of decoration (or—red though without decoration).

राजेति । अन्वयः—हे सुमुखि, दिष्ट्या स्मृतिभिन्नमोहतमसो मे प्रमुखे स्थितासि । शशिन उपरागान्ते रोहिणी योगं समुपागता । व्याख्या—हे 'सुमुखि' प्रसन्नवदने, शोभनानने वा 'दिष्ट्या' भाग्येन (अव्ययमेतत् वा) 'स्मृत्या' प्रतिप्राप्तेन स्मरणेन 'भिन्नं' निरस्तं 'मोहरूपं तमः' अन्धकारः उपचारात् आवरणं यस्य तस्य मे प्रमुखे अग्रे स्थितासि तिष्ठसि । भाग्यमेव मे प्रसन्नं सत् त्वामानीय पुरो निदधे । कीदृशमेतत् तदाह—'शशिनः' चन्द्रस्य यः 'उपरागः' राहुग्रासः तस्य 'अन्ते' अवसाने 'रोहिणी' प्रिया शशिनः पत्नी 'योगं' भर्त्तृसन्निधिं 'समुपगता' सम्प्राप्ता । एतदपि कालात्यये भाग्येनैव घटते ( 'शशिनः' ( रा, त, न्या, म ) 'शशिना' ( वि ) ) ।

शकुन्तलेति । 'वाष्पः' दुःखजम् उष्मा 'कण्ठे' यस्याः तादृशी सती ( व्यधिकरणपदो बहुव्रीहिः—ग वादि ) ।

राजेति । अन्वयः—जयशब्दे वाष्पेण प्रतिषिद्धेऽपि मया जितम् । यत् असंस्कार-पाटलोष्टपुटं ते मुखं दृष्टम् । व्याख्या—'जयस्य शब्दे' राजसन्निधौ उच्चारणीये 'जयतु जयतु' इत्यादि शब्दे वाष्पेण दुःखजेन उष्मणा 'प्रतिषिद्धेऽपि' अस्पष्टमनुच्चारितेऽपि 'मया जितं' मया ऋद्धिः प्राप्ता ( अकर्मकोऽयं जयतिः प्रकर्षलाभे वर्त्तते ) । कुत एवमित्याह—'यत्' यस्मात् 'असंस्कारात्' संस्काराभावात् 'पाटलम्' ईषद्रक्तम् यद्वा—असंस्कारेऽपि 'पाटलं' रक्तं स्वभावरक्तम् 'ओष्ठयोः पुटं' यस्मिन् तत् 'ते' तव 'मुखं दृष्टम्' । भूयोऽपि त्वां द्रक्ष्यामि इत्याशा नासीत्, तथापि यत् त्वमद्य दृष्टा परा हि सा मे ऋद्धिः काष्ठा इति भावः ।

NOTES

1. (a) प्रमुखे—प्रगतं मुखम् । प्रादितत्—। तस्मिन् । (b) सुमुखि—सुमुखी and सुमुखा are optional forms ( See नियमक्षामसुखी above ).

(c) उपराग &c.—उपरञ्जनम् or उपरज्यते अनेन इति उप+रञ्ज+घञ् भावे करणे वा=उपरागः। This is restricted to mean राहुग्रास (eclipse), (उपरञ्जन) at the time of eclipse, तस्य अन्तः। तस्मिन्। (d) शशिनः—this agrees better than शशिना with मे।

2. *Remark*—Raghava construes प्रमुखे स्थितासि इति यत् तत् रोहिणी योगं समुपगता। Hence he takes this as an instance of निदर्शना or निदर्शनम् (See under 'शुद्धान्तदुर्लभ—', Act 1) 'अर्थाभ्यां यत्तद्भ्याम् एकवाक्यत्वात सम्भवद्वस्तुसम्बन्धा निदर्शना'—*Raghava*. The printed text of Raghava is here unreliable. I have made obvious corrections. If we take the first half as one complete sentence and the second half another, then it becomes an instance of प्रतिवस्तूपमा ( See under 'शुद्धान्तदुर्लभ—',—Act 1 ). दृष्टान्त is not recognised by Dandin as a separate अलङ्कार। Note, however the दृष्टान्त of later writers is "दृष्टान्तः पुनरेतेषां सर्वेषा प्रतिविम्बनम'। But in the present case the तुल्यधर्म is not reflected (प्रतिविम्बम्)। Hence we should not call it a दृष्टान्त।

3. (a) वाष्पकण्ठी—ङीष् is optionally attached in the feminine by the Varttika 'अङ्गगात्रकण्ठेभ्यश्च'। (b) विरमति—'व्याङ्परिभ्यो रमः' इति परस्मैपदम्।

3. असंस्कार &c.—This gives a विभावना ( See इदं किल=Act 1 ) if पाटल is *bright* red. Others make their lips red by संस्कार, yours are ruddy without संस्कार। It seems better to take पाटल as *pale* red. संस्कार makes it bright red.

**बालः—अम्ब को एसो [ अम्ब क एषः ]।**

Boy—Mother, who is this ?

**शकुन्तला—वच्छ दे भाअहेआइं पुच्छेहि [ वत्स, ते भागधेयानि पृच्छ ]। ( रोदिति )।**

**Sakuntala—My child, ask thy destiny. (*Weeps*).**

राजा—सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥२४॥
( पादयोः पतति ) ।

King—O fair one, let the grief of repudiation disappear from thy heart. Somehow a powerful delusion of my mind occured at the time. Of those in whom Tamas is supreme, such indeed is generally the disposition towards blessings. Even a garland placed on his head the blind man tossess off taking it for a snake. (*Falls at her feet*).

शकुन्तलेति । 'ते' तव 'भागधेयानि' भाग्यानि 'पृच्छ' । 'क एष' इत्यस्य उत्तरं ते भाग्यमेव दातुं प्रभवति । प्रत्यादिष्टाहं कथं ब्रूयां क एषः यदि सम्राट् सुतश्चक्रवर्ती भवेः इति ते भाग्यं तदा 'अयं ते पिता' इति वक्तुं न्याय्यम् । अथ ईदृशं ते भाग्यं यदिहैव वने वसन् तपश्चरिष्यसि तदा 'धराधिपोऽयं दुष्यन्तः' इत्येवास्य पर्याप्तः परिचयः ।† इति मनसा प्राग्वृत्तमालोचयन्त्यो दुःखदग्धा 'रोदिति' ।

राजेति । इत्थं नवमिव प्रत्यादेशदुःखं भूयोऽप्यनुभवन्तीमेनां वीक्ष्याह । अन्वयः— हे सुतनु, ते हृदयात् प्रत्यादेशव्यलीकम् अपैतु । तदा किमपि मे बलवान् मनसः सम्मोहः अभूत् । शुभेषु प्रबलतमसां वृत्तयः एवंप्राया हि । अन्धः शिरसि क्षिप्तां स्रजमपि अहिशङ्कया धुनोति । व्याख्या—हे 'सुतनु' चारुवपुः शकुन्तले 'ते' तव 'हृदयात्' मनसः 'प्रत्यादेशात्' मत्कृतात् प्रत्याख्यानात् जातं यत् व्यलीकं' दुःखं तत् 'अपैतु' दूरेयातु दुःखं त्यज इत्यनुनयः । 'तदा प्रत्याख्यानकाले 'किमपि' कुतोऽपि अनिर्वचनीयात् कारणात् 'मे बलवान्' गुरुः 'मनसः सम्मोहः' चेतोविकृतिः 'अभूत्' जातः । प्रत्याख्यानञ्च अज्ञानकृतम् इत्यनुनयानुकूला युक्तिः । 'शुभेषु मङ्गलेषु विषये 'प्रबलं घोरं 'तमः' मोहः अन्धकारश्च येषां तेषां 'वृत्तयः' व्यापाराः 'प्रायेण' बाहुल्येन

---

†Adopted by Prof. Gajendaragdker.

('प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः) 'एवम् हि' तादृश्य एव (तत्पुरुषपक्षे मयूरव्यंसकादिः। अन्यथा सुपसुपा इति समासः। प्रायशब्दस्य पूर्वनिपातफलकोपसर्जनत्वाभावात् परनिपातः) इतुरक्तायाः युक्तः समर्थनम्। 'अन्धः' सदा तमसा अभिभूतः सन् 'शिरसि' निजमस्तके 'चिप्ताम्' अनेन स्थापिता स्रजमपि' मालामपि यात्वतमाम् 'अहेः सर्पस्य शङ्कया' भ्रान्त्या 'धुनोति कम्पयति, शिरसो व्यस्यति। इति समर्थनं प्रति दृष्टान्तः। ('राजा' (त, न्या) 'राजा शकुन्तलायाः पादयोः प्रणिपत्य' (रा, वि, म))। 'पादयोः पतति' इति प्रसादनम् (राघवादीनामेतन्नास्ति)।

otes

1. रोदिति—the pathos is very deep (See Tika).

2. (a) *सुतनु &c,—Sakuntala avoids replying to the boy's question and she weeps. The king sees what is passing in her mind (See Tika on भागधेयानिपृच्छ,) and is anxious to appease her. (b) सुतनु—सु शोभना तनुः इति सुतनुः, कर्मधा and with ऊङ् attached in the feminine, here तनुशब्द is कान्तावाची। See also our "व्याक्रुष्टम्ले सुतनु'—Uttar. III. sl 15. Hence the vocative singular is सुतनु and not सतनो। or —सुशोभना तनुः यस्याः वह। then ऊङ् etc. (c), प्रत्यादेश etc— व्यलीकं त्वप्रियेऽनृते' इत्यमरः। The renunciation still rankles in your heart, or you would not have wept and avoided the answer to the boy.

3. एवंप्रायाः—प्रायेण एवम् एवम्प्रायाः usually such, मयूरव्यंसकादि or सुपसुपा। To account for the परनिपात of प्राय in such cases, take the example प्रायेण जिताः शत्रवः। This gives जितप्रायाः शत्रवः। The compound will take different case-endings according to the compound. Thus जितप्रायाः शत्रवः प्रणिपेतुः, जितप्रायान् शत्रून् अयाक्षीत्, जितप्रायैः शत्रुभिः उचे etc—If we had not compounded we should have said प्रायेण जिताः शत्रवः प्रणिपेतुः, प्रायेणजितान् शत्रून् अयाक्षीत्, प्रायेण जितैः शत्रुभिः ऊचे etc,—In these प्रायेण does not change its विभक्ति, it is एकविभक्ति। Its पूर्वनिपात् is prohibited by the rule एकविभक्ति चापूर्वनिपाते।

4. पादयोः पतति—Raghava etc. make the king fall at her feet

* **Partially adopted by Prof. Gajendragadkar.**

before the speech. But the repetition उट्ठेदु उट्ठेदु shows how shocked Sakuntala was at this movement of the king. It is therefore impossible for her to wait for him to finish his speech lying prostrate at her feet. The king fell at her feet after uttering the verse and was *immediately* raised by Sakuntala.

शकुन्तला—उट्ठेदु उट्ठेदु अज्जउत्तो। गुणं मे सुअरिअप्पडिवन्धअं पुरा किदं तेसु दिअहेसु परिणाममुहं आसि। जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो [ उत्तिष्ठतु उत्तिष्ठतु आर्य्यपुत्रः। नूनं मे सुचरितप्रतिवन्धकं पुरा कृतं तेषु दिवसेषु परिणाममुखम् आसीत्। येन सानुक्रोशोऽपि आर्य्यपुत्रो मयि विरसः संवृत्त ]। ( राजोत्तिष्ठति )।

Sakuntala—Rise, let my husband rise, surely something formerly done by me obstructing my good work (merit), was by these days about to bear its fruit (mature) through which my husband though kindly disposed towards me, became pitiless. (*The King rises*).

शकुन्तलेति। 'मे' मया इत्यर्थः 'पुरा कृतम्' अनुष्ठितं 'सुचरितस्य' पुण्यकर्मणः 'प्रतिबन्धकं प्रतिरोधकं पुण्यफलरोधकमित्यर्थः तेषु दिवसेषु' प्रत्याख्यानवेलासु 'परिणामे' परिणतौ 'मुख' यस्य 'तादृशं' पाकाभिमुखमिति यावत् आसीत्। 'येन' हेतुना सानुक्रोशोऽपि सदयोऽपि सानुरागोऽपि' आर्य्यपुत्रः मयि 'विगतो रसो' रागः अनुरागः इत्यर्थः ( 'शृङ्गारादौ विषे वीर्य्ये गुणे द्रवे रसः' इति कोषः ) यस्य तथाविधः, निरनुरागः इति यावत् संवृत्तः। पुरा पुण्यमाचरितं मया तेन त्वया सङ्गता। पापञ्चापि कृतं यस्य फलं प्रत्याख्यानवेलाया विपक्कमासीत। तेन पुण्यफलं निरुद्धम् अहञ्च प्रत्याख्याता नृप मसैव पापस्यायं विपाकः न ते दोषः।

शकुन्तला—अह कहं अज्जउत्तेन सुमरिदो दुक्खभाई अअं जनो [ अथ कथमार्य्यपुत्रेण स्मृता दुःखभागी अयं जनः ]?

Sakuntala—How was this miserable person remembered by my husband?

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते प्रमृज्य विगतानुशयो भवामि ॥ २५ ॥

( यथोक्तमनुतिष्ठति ) ।

King—With the dart of grief extracted, I will tell you. O fine-framed One, having wiped off the tear-drop sticking in your slight-curved eye-lashes to day—that tear-drop which through delusion, was formerly disregarded by me (though) paining your lower lip—O my darling, I shall indeed [ *Or*—I shall first] be free from remorse (*Does as said*).

'अथ' इति प्रश्न । 'दुःख भजते प्राप्नोति यस्तादृश. ( इति भजतेः चिनुण् ) 'अयं' जनः ( इत्यात्मनिर्द्देशः ) अहमित्यर्थः 'कथं स्मृतः' ।

राजेति । "उद्धृतम् उत्खातं विषादरूपं शल्यं" शङ्कुः येन तादृशो भूत्वा 'कथयिष्यामि कथं स्मृत इति । शल्योद्धरणप्रकारं वर्णयति । अन्वयः—हे सुतनु कान्ते, यो बाष्पबिन्दुः पूर्वं ते अधरं परिबाधमानः मया मोहात् उपेक्षितः तमद्य आकुटिलपक्ष्मविलग्नं प्रमृज्य विगतानुशयो भवामि तावत् । व्याख्या—हे 'सुतनु' वरगात्रि 'कान्ते' प्रिये शकुन्तले 'यो बाष्पस्य' नेत्रजलस्य बिन्दुः पूर्वं प्रत्याख्यानकाले 'ते' तव 'अधरं' परितो 'बाधमानः' पीडयन् नेत्रयोः निर्गत्य, कपोलौ अतिक्रम्य, अधरे न केवलं स्थितः' किन्तु एकैकश ईषद्दूरमागत्य उपचयेन चिरावस्थानेन च अधरं पीडयन्नपि 'मया मोहात् चित्तवैकल्यात् उपेक्षितः औदासीन्येन दृष्टः अतएव यो विषादशल्यभूतो मे हृदयमनुदिनं दारयति 'तं' तथाविधं बाष्पम् मद्हृदयशल्यम्' अद्य आकुटिलेषु, ईषद्वक्रेषु' पक्ष्मसु नेत्रलोमसु 'विलग्नं' स्थितं न तु ततः प्रसृतं प्रमृज्य शोषयित्वा 'विगतः अनुशयः' पश्चात्तापो यस्य तथाविधो 'भवामि तावत्' भवाम्येव (तावदवधारणे । तच्चिह्ना नेयम् । बाष्पं प्रमृज्य एव नान्यथा । अथश भवाम्येव ततः कथयामि) । पूर्वं चिरोपेक्षया शल्यवेधः अद्यदृष्टे एव नष्टे शल्योद्धारः इति तात्पर्य्यम् । ( 'बाष्पबिन्दुः ( रा, त

न्या, म )—'बहुविन्दुः' (वि) ॥ 'कान्ते' ( त, न्या )—'बाष्पम्' ( रा, वि म ) )
यथोक्तं वाष्पविन्दुप्रमार्जनम् इत्यर्थः अनुतिष्ठति ।

NOTES

1. उद्धृत &tc —The विषाद here is the same as the अनुशय in the verse following.

2. *Reading*—(a) वाष्पविन्दुः—बहुविन्दु is rare and has no special recommendation, we have retained the more common reading. ( b ). कान्त—Here वाष्पम् becomes a repetition and should be avoided.

शकुन्तला ( नाममुद्रां दृष्ट्वा )—अज्जउत्त, एदं तं अङ्गुलीअअं [ आर्य्यपुत्र एतत्तदङ्गुलीयकम् ] ।

Sakuntala—(*Seeing the signet-ring*)—My husband, this is that ring.

राजा—अस्मादङ्गुलीयोपलम्भात् खलु स्मृतिरुपलब्धा ।

King—From the recovery of this ring, was indeed memory recovered.

शकुन्तला—विसमं किद' णेण जं तदा अज्जउत्तस्स पच्चाअणकाले दुल्लहं आसि [विषमं कृतमनेन यत् तदा आर्य्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत् ] ।

Sakuntala—It did what was not proper, for it—became scarce at the time of convincing my husband,

राजा—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

King—Then let the creeper do bear flower as a token ( witness ) of its union with the season.

राजेति । 'अङ्गुलीयस्य उपलम्भः' प्राप्तिः तस्मात् 'खलुतत एव स्मृतिः स्मरणम् 'उपलब्धा' प्राप्ता ।

शकुन्तलेति। 'अनेन अङ्गुरीयकेन 'विषमं विसदृशं ज्ञातम्'। 'यत् यस्मात् 'तदा प्रत्यायनस्य' प्रत्ययोत्पादनस्य काले दुर्लभमासीत्'।

राजेति। तेन तस्मात् यदि एतेनैव प्रत्यायनं तत इत्यर्थः 'लता लतेव तन्वी त्वम् 'ऋतुना' वसन्तेन, मया इति गूढम्, यः समवायः 'समागमः' पुनः समागम इति भावः तस्य 'चिह्न'' सूचकम् इदं' कुसुमम् अङ्गुरीयकमित्याशयः प्रतिपद्यतां गृह्णातु। इत्यङ्गुलीयकं भूयोऽपि दातुमिच्छति।

## NOTES

1. नामसुद्रा दृष्ट्वा—She notices it while the king wipes off tear from her eyes.

2. तेन हि—The flower in the creeper bears testimony to the advent of the season so let the ring be witness of union. The flower is in the creeper, let the ring be with you.

**शकुन्तला—ण से विस्ससिमि। अज्जउत्तो एव्व धारेदु [ नास्य विश्वसिमि। आर्य्यपुत्र एव एतत् धारयतु ]।**

Sakuntala—I do not trust it. Let my husband do wear it

**( ततः प्रविशति मातलिः )। मातलिः—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन च आयुष्मान् वर्द्धते।**

(*Then enters Matali*) Matali—O joy, Then Long-lived One thrives by union with his lawful wife and by seeing his son's face.

**राजा—अभूत् सम्पादितस्वादुफलो मे मनोरथः। मातले, न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात्।**

King—My desire appears with a sweet fruit developed. Matali, I guess this event is not known by Indra.

**मातलिः ( सस्मितम् )—किमीश्वराणां परोक्षम्। एत्वायुष्मन्, भगवान् मारीचस्ते दर्शनं वितरति।**

Matali ( *Smiling* )—What is out of sight of the omnipotent ? Come, O Long-lived One, Maricha the Perfect, grants you a visit.

शकुन्तलेति । 'अस्य' अङ्गुलीयकस्य ( सम्बन्धमात्रविवक्षया षष्ठी अन्यथा सप्तमी स्यात्) न विस्मृमिमि' पूर्वं प्रत्यायनकाले आत्मनः असान्निध्येन विषमावरणादिति भावः ।

मातलिरिति । 'दिष्ट्या' इति हर्षे अव्ययम् ('दिष्ट्या हर्षे मङ्गले च' इति मेदिनी) अहो आनन्दे 'आयुष्मान् धर्मपत्न्या' यः 'समागमः' तेन पुत्रमुखस्य' यत् 'दर्शनं' तेन च 'वर्द्धते' । भवद्वृद्ध्या हर्षों मे इति भावः ।

राजेति । 'मे मनोरथः सम्पादितं' विधिना विपाचितं स्वादु मधुरं 'फलं यस्य तादृशः अभूत । अयं वृत्तान्तः' पुत्रपत्नीसमागमो मे इत्यर्थः 'आखण्डलेन' इन्द्रेण 'न खलु' ( खलु वाक्यालङ्कारे ) 'विदितः स्यात्' ( सम्भावनाया लिङ् ॥ विदित इति यथाप्राप्तं भूते क्तः । तेन आखण्डलेन इति न षष्ठी ) ।

मातलिरिति । देवेन्द्रेऽपि राज्ञा अज्ञानारोपात् 'स्मितं कृत्वा आह—'ईश्वराणां' प्रभूणां 'परोक्षम्' अगोचरं किं वस्तु अस्ति, न किमपि । विज्ञातमेवं तदिन्द्रस्य ।

1. धर्मपत्नी &c.—धर्मार्था पत्नी धर्मपत्नी। शाकपार्थिवादि etc, तया समागमः । पत्नी in connection with धर्म is more appropriate than भार्य्या, कान्ता &c. because पत्नी implies यज्ञसंयोग by the rule "पत्युर्नो यज्ञसंयोगे" (p. 4. I. 33)

2. अभूत—भूतसामान्ये लुङ् ।

3. सस्मितम्—Smiles at the king's simplicity.

4. विसरति—वर्त्तमानसामीप्ये भविष्यति लट् ।

**राजा—शकुन्तले, अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।**

King—Sakuntala, let the boy be supported by you. I wish to see the perfect One, having placed thee in front.

**शकुन्तला—ह्रिरिआमि अज्जउत्तेन सह गुरुसमीवं गन्तुं [ जिह्रेमि आर्य्यपुत्रेण सह गुरुसमीपं गन्तुम् ] ।**

Sakuntala—I feel shame (bashful) to go with my husband near my superiors.

राजा—अप्याचरितव्यमभ्युदयकालेषु। एह्येहि।

King—This may be done on auspicious occasions. Come, do Come.

( सर्वे परिक्रामन्ति। ततः प्रविशति अदित्या सार्द्धमासनस्थो मारीचः )। मारीचः ( राजानमवलोक्य )—दाक्षायणि,

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्मन्त इत्यभिहितो भुवनस्य भर्त्ता।
चापेन यस्य विनिवर्त्तितकर्म जातं
तत् कोटिमत् कुलिशमाभरणं मघोनः॥ २६॥

*(All go round the stage. Then enters Maricha with Aditiseated.)* Maricha *(seeing the king)*—Dakshayani, this is the one that marches in front at the head of thy sons's battles called as Dushyanta, the sustainer of the world—the one by whose bow, with the work fully performed, that keen-edged thunder-bolt has become a piece of jewellery (only) to Indra.

शकुन्तलेति। 'गुरुसमीपं गन्तु'' जिह्रेमि' लज्जे। आर्य्यपुत्रसाहचर्य्यात् लज्जा ( गन्तुम् इति 'कर्त्तरि कृत्' इति पक्षे 'गन्ता अहं जिह्रेमि' इत्यर्थः। 'अव्ययकृतो भावे' इति पक्षेतु 'गन्तु'' गमनं तस्मात् 'जिह्रेमि' इति )। ह्री इति धातुः।

राजेति। 'अभ्युदयस्य समृद्धेः कालाः क्षणाः तेषु 'आचरितव्यमपि' कर्त्तव्यमपि। आभ्युदयिकेषु गुरुसाक्षात्कारे यथेष्टं भर्त्रा सह वा यायात्। तत्र न दोषः ( अपि कामचारकरणे )। यद्वा—'अभ्युदयकालेषु आचरितव्यमपि' आचरोऽपि अनुसर्त्तव्यः। भर्त्रा सह गुरुसाक्षात्कार आचारः। तमाचारं प्रतिपद्यस्व ( अपि समुच्चये )।

मारीच इति। अन्वयः—अयं दुष्मन्त इत्यभिहितः भुवनस्य भर्त्ता ते पुत्रस्य रणशिरसि अग्रयायी। यस्य चापेन विनिवर्त्तितकर्म (सत्) कोटिमत् तत् कुलिशं मघोनः

आभरणं जातम्। व्याख्या—'अयम्' एष दृश्यमानो जनः 'दुष्यन्तः इति अभिहितः ख्यातः, दुष्यन्त इति नाम्ना लोके प्रसिद्धः 'भुवनस्य भुवः भर्त्ता' पालकः, तेनव 'पुवस्य इन्द्रस्य ये 'रणाः' समराः तेषां 'शिरसि' समरमूर्द्धनि 'अग्रयायी' पुरोगामी। साक्षात् भुवो भर्त्ता, परोक्षतो दिवोऽपि इति भावः। मघ्नस्य अग्रगमनमावं समरेषु, किन्तु स एवायं 'यस्य चापेन धनुषा 'विनिवर्त्तितं' सुसम्पादितं 'कर्म' अव हननरूपं यस्य तथाविधं सत् 'कोटिमत्' प्रशस्तकोटियुक्तं 'तत्' प्रसिद्धं 'कुलिशं' वज्रं मघोनः इन्द्रस्य 'आभरणं' भूषणमावं 'जातम्'। सत्यं कोटिमता वज्रेण इन्द्रस्य भुजो भूष्यते, अव-पातस्तु अस्य चापेन क्रियते भावः।

## NOTES

1. गन्तु जिङ्क्षेमि—The तुमुन् may be here explained in two ways. In the अष्टाध्यायी it is not specifically stated in what वाच्य it is attached It is natural to say then that the general rule "कर्त्तरि कृत्" applies, not being barred by special injunction. This requires तुमुन to be in the कर्त्तृवाच्य। गन्तुम् then meant गन्ता। The Bhashyakara simplifies the matter by laying down that a कृत् producing an अव्यय word is to be in the भाववाच्य। गन्तुम् then means गमनम। गन्तुं जिङ्क्षेमि=गमनात् जिङ्क्षेमि।

2. अपि आचरितव्यम—&c. (a) अपि implies option कामचार, (b) आचरितव्यम् has एतत् (i.e, भर्त्ता सह गुरुसाक्षात्कारः) for its कर्म understood. In the alternative exposition (See Tika) आचरितव्यम्=आचारेण वर्त्तितव्यम्। यथाआचारः तथा कर्त्तव्यम्। (c) एहि एहि The repetition implies *impatience*. See also pratima I 29 note 8.

3. (a) दाक्षायणि···दक्षस्य अपत्यंस्त्री इति दक्ष+फक स्त्रियाम् दाक्षायणी तत्सम्बुद्धौ। अदिति was Daksha's daughter (b) ते—Yours; hence you should feel interested in him. (c) तत—*That* thunderbolt i e. that one which in days of yore had done such service. प्रसिद्धार्थत्वात् यच्छब्दोपादनं नापेक्षते। (d) मघोनः—See मघवतः, *Ante*.

अदितिः—सम्भावणीआणुभावा से आकिदी [सम्भावनीयानुभावा अस्य आकृतिः]।

Aditi—His form (frame) is one from which prowess is capable of being inferred.

मातलिः—आयुष्मान्, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः। तदुपसर्प।

Matali—O Long-lived One these parents of the denizens of heaven are beholding you with eyes that speak of affection as towards a son. So approach.

राजा—मातले,

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्त्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।
यस्मिन्नात्मभु (भ) वः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम्॥ २७॥

King—Matali, with Daksha and Marichi for its origin, screened from the Creator by a single generation, is this the pair which sages call the Source (parents) of the energy that exists in twelve forms,—(the pair) which brought forth the sustainer of the three worlds, the disposer of the share at sacrifices—the pair in which the Soul higher than even the self-existent [Or—even the self-born Soul Supreme] took up abode for birth?

अदितिरिति। 'अस्य आकृतिः शरीरं' 'सम्भावनीयः' अनुमेयः 'अनुभावः' प्रभावः सामर्थ्यं दानवजययोग्यता इत्यर्थः यस्याः तादृशी। ईदृ दृष्टा एव सामर्थ्यमस्य अनुमीयते इति भावः।

मातलिरिति। 'एतौ दिवौकसां देवानां 'पितरौ' अदितिकश्यपौ 'पुत्रे' या 'प्रीतिः' तस्या यत् 'पिशुनं सूचकम् ('पिशुनौ खलसूचकौ' इत्यमरः) तेन 'चक्षुषा' (आतावेशवचनम्) 'आयुष्मन्तं' त्वाम् 'अवलोकयतः। इन्द्रतुल्योऽसि इत्यर्थः। प्रीतौ भगवन्तौ त्वयि; 'तत्' तस्मात् उपसर्प' समीपे गच्छ।

राजेति। अन्वयः—हे मातले, इदं तत् दक्षमरीचिसम्भवं स्रष्टुरेकान्तरं द्वन्द्वं यत्

मुनयो द्वादशधा स्थितस्य तेजसः कारणं प्राहुः, यत् भुवनत्रयस्य भर्त्तारं यज्ञभागेश्वरं सुषुवे, यस्मिन् आत्मभवः परः पुरुषोऽपि भवाय आस्पदं चक्रे । व्याख्या—'हे मातले' अनु पृच्छामि इदं दृश्यमानं तत् 'दक्षस्य मरीचिश्च सम्भवः उत्पत्तिस्थानम् ( अपादाने अप्) यस्य अतएव 'स्रष्टः ब्रह्मणः 'एकम्' एकमात्रम् 'अन्तरम् 'अन्तर्धिः' व्यवधायक-मित्यर्थः यस्य तत्, एकपुरुषव्यवहितमित्यर्थः द्वन्द्वं मिथुनं किम् । इदं किं तत् द्वन्द्वम् इति काकुमुखेन प्रश्नः । कतमत् द्वन्द्वमित्याह—'यत्' द्वन्द्वं मुनयः' वेदनिष्णाता महर्षयो द्वादशधा' द्वादशसु भागेषु द्वादशात्मना स्थितस्य तेजसः' आदित्यस्य इत्यर्थः कारणं जनकं 'प्राहुः' वदन्ति । पुनः कतमत् द्वन्द्वम्—'यत् द्वन्द्वं भुवनानां त्रयस्य त्रिभुवनस्य 'भर्त्तारं पालकं यज्ञेषु ये 'भागाः' तेषाम् 'ईश्वरं' प्राधान्येन ग्रहणात् स्वामिनम् । यद्वा—यज्ञभागाः सन्ति येषां तेषां देवानामित्यर्थः ( मत्वर्थीयोऽच् ) 'ईश्वरं स्वामिनम् इन्द्रमिति यावत् 'सुषुवे' जनयामास । पुनश्च कतमत् द्वन्द्वम्—'यस्मिन् द्वन्द्वे 'आत्मनो भवो जन्म यस्यतादृशः स्वयं जातः अजः इत्यर्थः 'परः' परमः सर्वातिशायी 'पुरुषोऽपि' पुरुषोत्तमो विष्णुरपि 'भवाय' जन्मने आस्पदं स्थानं चक्रे यत् भवाय समुपस्थितमित्यर्थः । 'आत्मभुवः' इतिपाठे 'आत्मभुवो ब्रह्मणोऽपि 'परः' अधिकः श्रीविष्णुरित्यर्थः ( वामनावतारे बलेश्छलनार्थं कश्यपाददितौ जातो हरिः ) । ( 'आत्मभवः' ( रा, थि, म )—'आत्मभुवः' ( त, न्या ) ।

## Notes

1. (a) द्वादशधा—द्वादशसु भागेषु इति द्वादश+धाच । Refers to the Sun, The sun changes its character apparently in different months The summer-sun is supposed not to be the same as the mid-winter-sun. This leads to the assumption of the existence of twelve suns. (b) यज्ञ &c—यज्ञस्य भागः यज्ञभागः । सः अस्ति एषाम् इतियज्ञभाग+अच मत्वर्थ=यज्ञभागाः those who enjoy a share in sacrifice i. e, the gods. तेषाम् ईश्वरः । तम् Also see Tika.

2. (a) आत्मभवः—Qual. पुरुषः । Refers to Vishnu. See Tika. आत्मभुवः is पञ्चम्यन्त । आत्मभूः is Brahman. "ब्रह्मात्मभूः सुरज्येष्ठः" इत्यमरः । (b) अपि—Even the आत्मभवः (Self-born) went to him for the sake of भव (birth)=इति परं हि विशालविरोधं स्थानम् । (c)

भवाय=भू+अप कर्त्तरि or अ करणे=भव: birth. तस्मै। तादर्थ्ये चतुर्थी। (b) आस्पदम्=आ समन्तात् पद्यते अस्मिन् इति आ+पद+अ अधिकरणे= आस्पदम् residence, abode, प्रतिष्ठा। The सुट् comes in by निपातन in the rule 'आस्पदं प्रतिष्ठायाम्'। (e) द्वन्द्वम्—द्वयम् अभिव्यज्यते इति द्वि द्वि=द्वन्द्वम् by निपातन in the rule 'द्वन्द्वं रहस्यमर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग-अभिव्यक्तिषु'' (P. 8 1. 15). 'द्विशब्दस्यद्विर्वचनं पूर्वपदस्य अम्भाव:, अत्वञ्चोत्तरपदस्य निपात्यते'—*Vrtti* (f) स्रष्टु:—From the creator. ध्रुवमपादानमाश्रित्यपञ्चमी। (g) एकान्तरम्—Each separated by *one* step. Thus (1) Brahman Marichi, Kasyapa. (2) Braman Dakha, Aditi.

3. *Remark*—*आत्मभव: seems to be the better reading. It brings out the विरोधाभास more Prominently. Thus—It is *absurd* to speak of भव of one who is आत्मभव: (आत्मभवो भूत इति विरोध:)। But the majesty of the Lord Supreme (पर: पुरुष:) is incomprehensible. Every thing is possible with him (परोऽसौ पुरुष: अचिन्त्यमहिमा महिम्नं व आस्पदं चक्रे इति विरोधपरिहार:)। Hence the अलङ्कार is विरोधाभास:।

**मातलि:—अथ किम्।**

Matali—What else ( yes ) ?

**राजा ( प्रणिपत्य )—उभाभ्यामपि वासवनियोज्यो दुष्यन्त: प्रणमति।**

King—(*Prostrating himself*)—Dushyanta, Indra's servant salutes both of you.

**मारीच:—वत्स, चिरं जीव। पृथिवीं पालय।**

Maricha—My son, live long. Protect the earth

**अदिति:—वच्छ अप्पडिरहो होहि [वत्स, अप्रतिरथो भव]॥**

Aditi—My son, be you without a rival car.

**( शकुन्तला पुत्रसहिता पादयो: पतति )।**

*Adopted by Prof. Gajendragadkar.

(*Sakuntala with her ehild prostrates herself attheir feet*)

मारीचः—वत्से,

आखण्डलसमो भर्त्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न योग्या पौलोमीसदृशी भव ॥ २८ ॥

Maricha—My child, thy husband is Indra's equal, thy son resembles Jayanta. No other benediction is suitable to you—Be you like Paulomi (i e, Sachi).

अदितिः—जादे, भत्तुणो बहुमदा होहि । अअञ्च दीहाऊ वच्छओ उहअकुलनन्दनो होदु । उवविसह [ जाते, भर्त्तुर्बहुमता भव । अयञ्च दीर्घायुर्वत्सक उभयकुलनन्दनो भवतु । उपविशतम् ] ।

Aditi—My child, mayest thou be much esteemed by thy husband : and may this little darling be long-lived and —the delighter of both (paternal and maternal) families. Sit down.

राजेति । 'नियोज्य.' भृत्यः ( शक्यार्थेऽर्यति कृत्याभावः ) । 'वासवस्य' इन्द्रस्य नियोज्य.' । 'उभाभ्याम्' उभे अपि अनुकूलयितुं 'प्रणमति' इत्यर्थः (क्रियार्थोपपदस्य—' इति कर्मणि चतुर्थी ) ।

अदितिरिति । प्रतिकूलो रथः 'प्रतिरथः' उपाचारात् प्रतिद्वन्द्वी । 'अविद्यमानः प्रतिरथो' यस्य तादृशो 'भव' ।

मारीच इति । अन्वयः—भर्त्ता आखण्डलसमः, सुतः जयन्तप्रतिमः , वत्से पौलोमी—सदृशी भव । अन्या आशीः ते योग्या न । व्याख्या—'भर्त्ता' पतिः दुष्यन्तः 'आखण्डलेन' इन्द्रेण 'समः' तुल्यः । ततः 'सुतः' पुत्रः सर्वदमनः 'जयन्तेन' इन्द्रपुत्रेण तुल्यः 'जयन्तप्रतिमः' [नित्यसमासः । यद्वा—प्रतिमाति इति प्रतिमः सदृशः । जयन्तस्य प्रतिमः ) । अतएव हे 'वत्से' पौलम्या' इन्द्रपत्न्या शच्या 'सदृशी' तुल्या अविधवा इत्यर्थः 'भव' । भर्त्तुः सुतस्य च तथाविधत्वात् 'अन्या आशीः ते योग्या' अनुरूपा 'न' । ( पौलमीसदृशी' ( रा, म )—'पौलोमीसदृशी' ( त, न्या ) ) ॥

अदितिरिति । 'भर्त्तुः' बहुमता पूजिता 'भव' । अयञ्च वत्सकः' (अल्पार्थे कन्) 'दीर्घमायुः यस्य तथाविधः सन् 'उभयोः' द्वयोरपि पैतृकस्य मातृकस्य च कुलयोः' वंशयोः 'नन्दनः' प्रीतिप्रदः 'भवतु' ।

## NOTES

1. उभाभ्याम्—कर्मणि चतुर्थी (See Tika). Or treating प्रणमति as अविवक्षितकर्मा we get सम्प्रदाने चतुर्थी by the Varttika 'क्रियाग्रहणमपि कर्त्तव्यम्' ।

2. (a) जयन्तप्रतिमः—Amara has 'स्युरुत्तरपदे त्वमी ! निभसङ्काशनीकाशप्रतीकाशोपमादयः ॥' By आदि several other words are included, If प्रतिम is one of these, it can mean *equal* only when final in a compound (उत्तरपद)। So the वाक्य-जयन्तस्य प्रतिमः does not mean *Jayant'as equal.* The वाक्य thus should not contain प्रतिम i. e, the समास is obligatory ( नित्यसमास )। If however प्रतिम is *not* included, or if some derivation may be given to make it mean सम then of course an ordinary समास becomes possible (See Tika). पौलमी &c.—पौलमी is पुलोमजा, i. e. शची, Indra's wife. 'पुलोमजा शचीन्द्राणी' इत्यमरः। पौलम्या सदृशी Sachi's equal. † This also implies अवैधव्य and luck which the sage thought was the best benedication he could pronounce. See swapna VI and prat.

3. *Reading*—The Beng. reading, पौलोमीमङ्गला means the same. मङ्गलम् is *an auspicious thing.* पौलम्या मङ्गलम् इति auspicious luck of Pauloml, i. e, अवैधव्यम्। तत् अस्ति अस्याः इति पौलमीमङ्गल + अच् मत्वर्थे स्त्रियाम् ।

4. *बहुमता—As awoman, she prizes the husband's favours more than अवैधव्य। Besides, her benediction seems to have reference to Sakuntala's त्याग by Dushyanta. Be thou the husband's favourite so that repudiation may not occur again.

( सर्वेप्रजापतिमभितः उपविशन्ति ) ।

---

*Adopted by Prof. Gajendragadkar.

(*All sit down round the Progenitor*).

मारीचः ( एकैकं निर्दिशन् )—

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् ॥ २८ ॥

Maricha—(*Pointing to each one at a time*)—How auspicious! Virtuous Sakuntala, this noble child, and thyself—indeed the celebrated triad, viz, Faith, Wealth Action—have come together!

राजा—भगवन्, प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमित्यपूर्वः खलु वोऽनुग्रहः । कुतः—

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः ॥३०॥

King—O Perfect One, first the fulfilment of wish afterwards your sight! Thus the favour is strange indeed! For, flower appears first, then the fruit. The rise of clouds happen's first, after that the shower. This is the order of the cause and the caused. But of your favour the prosperity is in advance

मातलिः—एवं विधातारः प्रसीदन्ति ।

Matali—Thus do ordainers show favour.

'प्रजापतिं' कश्यपम् 'अभितः' तं परिवार्य्य इत्यर्थः ।

मारीच इति । 'एकम् एकम्' इति वीप्सा ( द्विर्वचनम् । बहुव्रीहिवद्भावः ) 'निर्दिशन्' अङ्गुल्या दर्शयन् । अन्वय.—दिष्ट्या साध्वी शकुन्तला, इदं सदपत्यं, भवान्—श्रद्धा वित्तं विधिः इति तत् च त्रितयं—समागतम् । व्याख्या—'दिष्ट्या' मङ्गलार्थे अव्ययम् । अहो मङ्गलम् । यद्वा—'दिष्ट्या' हर्षे । अहो आनन्दः । साध्वी पतिव्रता 'शकुन्तला' इदं 'सत् साधु 'अपत्यं' सन्ततिः इत्यर्थः, 'भवान्' त्वं राजोत्तमो दुष्मन्तः—'श्रद्धा' शास्त्रोक्ता भक्तिः, 'वित्त' शास्त्रीयक्रियायाः द्रव्यसंग्रहोचितं धनं, 'विधिः'

आश्रीयकर्मानुष्ठानम् 'इति तत् च तदेव प्रसिद्धं' त्रितयं त्र्यवयवं वस्तु समागतम्' एकत्रमिलितम् (भाविनमवयवसमागममुद्दिश्य तयप्प्रत्ययः)। मङ्गलमेतत् (आनन्दो मे इति वा) यत् श्रद्धारूपा शकुन्तला, वित्तरूपः सर्वदमनः विधिरूपी भवान् इति त्रयमत्र युक्तम्।

राजेति। हे 'भगवन् एष समागमो भवदनुग्रहस्य फलम्। अनुग्रहश्च मे पुण्येन स्यात्। पुण्यञ्च भवद्दर्शनमेव मदभिमतफलप्रसवे समर्थम्। किन्तु अद्य दर्शनात् 'प्राक् अभिप्रेतस्य' अभिलषितस्य फलस्य 'सिद्धिः' निष्पत्तिर्जाता। पश्चात् दर्शनं जातम् इति अपूर्वः नूतनो 'हि अनुग्रहः'—प्राक्फलं पश्चात् दर्शनम् इत्यपूर्वता। 'कुतः' इति चेत् शृणु—अन्वयः—पूर्वं कुसुमम् उदेति ततः फलम्। प्राक् घनोदयः तदनन्तरं पयः। अयं निमित्तनैमित्तिकयोः क्रमः। तव प्रसादस्य तु पुरः सम्पदः। व्याख्या—'पूर्वं' प्रथमं कुसुममुदेति पुष्पमाविर्भवति ततः तदनन्तरं तत्र क्रमं फलं दृश्यते। प्राक् आदौ 'घनोदयः' मेघसञ्चा 'तदनन्तरं' तत् परं ततकृतं 'पयः' जलम्। 'अयम् एष निमित्तस्य कारणस्य निमित्तेन संसृष्टस्य नैमित्तकस्य कार्य्यस्य च 'क्रमः' नियमः आनुपूर्वी। 'प्रथमं कारणं पश्चात् कार्य्यं' इत्येव कार्य्यकारणयोः क्रमः। भवतः किं तेन इत्याह—'तव प्रसादस्य तु भवतोऽनुग्रहस्य पुनः 'पुरः' पूर्वं तत्र कार्य्यं 'सम्पदः' प्रसादपात्रस्य श्रियः। प्रसन्नो भविष्यति भवानस्मिन् इति मानन्य सम्पदः प्रागेव प्रसादपात्रमुपतिष्ठन्ते। यद्वा—मयि सानुग्रहो भगवान् इति ज्ञानात् पूर्वमेव अनुगृहीतस्य सम्पदः सम्पद्यन्त इति भावः।

मातलिरिति। 'विधातारः कर्त्तारः ईशाः इत्यर्थः एवम् अनेन विधिना प्रसीदन्ति अनुगृह्णन्ति। भवतां लौकिकः कार्य्यकारणक्रम उक्तः। अलौकिके तु क्रमो भिन्न एव। सर्वसिद्धय इच्छासिद्धय ईशा यदेवेच्छन्ति तत्क्षणं तदेव सम्पद्यते। इह भगवानिच्छति दुष्यन्तस्य पुत्रकलत्रसमागमो भवतु इति। यदि तत्क्षणसम्पन्ना सा इच्छा भवत्कृतं भगवद्दर्शनमपेक्षते तर्हि अनीशता भगवत आपद्येत।

## NOTES

**1.** त्रितयम्—त्र्यवयवं वस्तु इति त्रि+तयप्=त्रितयम् a triad. But we cannot speak of a *group* before the constituents become समागताः। त्रीणि समागतानि त्रितयं भवति। त्रितयंसमागतम् is defended

saying that the language is used with an eye to the *future concurrence*. See Tika 'भाविनम्' &c.

9. निमित्तं &c—निमित्त is cause. निमित्तं कारणम्। निमित्तेन संसृष्टम् इति निमित्त+ठक=नैमित्तिकम् effect कार्य्यम्।

राजा—भगवन् इमामाज्ञाकरीं वो गान्धर्वेण विवाह-विधिना उपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य। पश्चादङ्गुलीयकदर्शनादूढ़पूर्वां तद्दुहितरमवगतोऽहम् तच्चित्रमिव मे प्रतिभाति।

यथा गजो नेति समक्षरूपे तस्मिन्नपक्रामति संशयः स्यात्।
पदानि दृष्ट्वा तु भवेत् प्रतीतिस्तथाविधो मे मनसो विकारः ॥३१

King—O Perfect One, having wedded this handmaid of thine by Gandharva rites of marriage and rejecting through laxity of memory when brought by friends after sometime, I had become an offender to your kinsman, the Revered Kanva. Afterwards through seeing the ring I knew the daughter as previously married by me. This appears strange to me. perversion of my mind is of that kind by which, with the form before the eyes, the belief can be "It is not an elephant". (then) doubt can arise when it is passing out of sight, but conviction can come after seeing the foot-prints.

राजेति। 'वः आज्ञां करोति या तां परिचारिकां शकुन्तलाम् (अङ्गुल्या निर्देशः) 'कस्यचित् कालस्य परस्तात् (गम्यमानातसर्थप्रत्यययोगात् षष्ठी)। 'आनीतां' मत्-समीपमुपस्थापिताम्। 'स्मृतेः शैथिल्य दुर्बलता, तस्मात् 'प्रत्यादिशन् निराकुर्वन्। गोत्रवान् सगोत्रः। 'युष्माभिः' भवता 'सगोत्रस्य' गोत्रवतः भवद्वंशीयस्य इत्यर्थः 'तत्र-भवतः पूज्यस्य 'कण्वस्य' (सम्बन्धसामान्ये षष्ठी) अपराद्धोऽस्मि कृतापराधोऽहम्। 'पश्चात्' प्रत्याख्यानकृतादपराधात् परं पूर्वम् ऊढाम्' (भूतपूर्वे चरट्' इति निपातनात्

पूर्वशब्दस्य परनिपात:भाष्यमत्या तद्रीत्या पुंवद्भावश्च) 'अवगतोऽहम्' (कर्त्तरि क्तः)। तत् एतत् साक्षाददृष्टायामज्ञानम्, अङ्गुरीयक दर्शनात् ज्ञानम्, 'चित्रमिव' आश्चर्य 'प्रतिभाति'।

अन्वय:—यथा समक्षरूपे गजो न इति, अतिक्रामतितस्मिन् संशय: स्यात्, पदानि दृष्ट्वा तु प्रतीति: भवेत् मे मनसो विकारस्तथाविध:। व्याख्या—यथा येन प्रकारेण यादृशेन विकारेण इत्यर्थ: 'समक्षं प्रत्यक्षं 'रूपं यस्य तादृशे कस्मिंश्चित् सत्व अयंगजो न इति मिथ्याज्ञानं तत: 'अपक्रामति दूरे गच्छति 'तस्मिन् जीवे गजो वा स्यात् इति 'संशय: स्यात् पश्चात् 'तु पदानि' भूमौ पदचिह्नानि दृष्ट्वा' सत्यं गज एव इति 'प्रतीति. सम्प्रत्ययो भवेत्'—'मे मम 'मनसो विकार. चित्तभ्रम: 'तथाविध: तादृश:। प्रथमं साक्षादवगताया शकुन्तलाया नेयं मतपरिग्रह इति मे ज्ञानमासीत्। तत: पुरोधसा दूरे नीयमानायां तस्यां दूयमानेन हृदयेन सन्देहोऽभूत्। पश्चात् अङ्गुलीयकदर्शनेन परिग्रह: एव इति प्रतीतिर्जाता। अङ्गुलीयकदर्शनसाध्या प्रतीति: साक्षाद्दर्शनान्न जायते इति किमेतत् चित्रं न बुध्यते मया।

## NOTES

1. (a) आज्ञाकरीम्—आज्ञा करोति इति आज्ञा कृ+ट कर्त्तरि ताच्छील्ये स्त्रियाम=आज्ञाकरी a maid-servnt ताम्। (b) अवराद्ध: अव+राध+क्त कर्त्तरि। (c) युष्मत् &c—सगोत्र is well-known in the sense of समानं गोत्रमस्य where समान becomes स by the rule 'ज्योतिर्जनपदरात्रिनाभि-नामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ( P: 5, 8, 85,), युष्माभि सगोत्र: having the same गोत्र with thyself. But this sounds improper because कश्यप himself is the originator of the गोत्र ( स्वयंगोत्रप्रवर्त्तकस्य पुन: किं गोत्रम् )। We therefore propose to expound गोत्रेण सह सगोत्र: *having a gotra*. युष्माभि: सगोत्र: **now** means having a *gotra because of thee* i, e, you have **given** him his *gotra* from you.

2, (*a*) समक्षरूपे—सामीप्यमक्ष्णो: इति सम+अक्षि+टच्, समासान्त=समक्षम् vicinity of eyes, अव्ययो—। The टच् comes in by the Ganasutra "प्रति (पर) समनुभ्योऽक्ष्ण:"। समक्षम् अक्षि अस्य इति समक्ष+अच् मत्वर्थे ( अर्श आदि)=समक्षम्, before the eyes, तादृशं रूपं यस्य तस्मिन्

(b) पदानि—पदचिह्नानि। The strangeness lies in this—समचरूपे गजो न इति ज्ञानं परोचरूपे तस्मिन् पदानि दृष्ट्वा गज इति प्रतीतिः।

[N. B.—'we therefore &c," notes (a) above is adopted by Prof. Gajendragadkar].

मारीचः—वत्स, अलमात्मापराधशङ्कया। सम्मोहोऽपि त्वय्युपपन्नः। श्रूयताम्—

Maricha—My son, away withsuspicion of your own offence. Delusion too in you is accountable. Listen—

राजा—अवहितोऽस्मि।

King—I am attentive.

मारीचः—यदैव अप्सरस्तीर्थावतरणात् प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता, तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टेति। स चायमङ्गुलीयकदर्शनावसानः।

Maricha—When menaka came to Dakshayani carrying Sukuntala whose distress was personally witnessed by her owing to her descent to Apsarastirtha, at that very moment I learnt from meditation that through the curse of Durvasas this poor co worker in the path of the virtue was disowned by you. And that curse had its termination at the sight of the ring.

मारीच इति। 'आत्मनः अपराधः'। तस्य 'शङ्का' अपराद्धोऽ कथमस्मि इति ज्ञानम्। 'त्वयि' यत्तदा 'सम्मोहः' चेतोविकृतिरभूत् सोऽपि 'उपपन्नः युक्त एव कारणाधीन इत्यर्थः। ( 'उपपन्नः'—( त, वि, व्या ) 'अनुपपन्नः' ( रा—म ) ]।

यदैवेति। 'अप्सरस्तीर्थ यत् 'अवतरणं' पर्य्यायप्राप्तं सान्निध्यं कर्तुं गमनं तस्मात् हेतोः 'प्रत्यक्षं' साक्षाद्दृष्टं 'वैक्लव्यं' कातरता यस्याः तथाभूतां शकुन्तलामादायमेनका, दाक्षायणीं' दक्षकन्यकामदितिम् 'उपगता' प्राप्ता। स्वयं कन्यायाः शोकं पश्यन्ती अनुकम्पमाना तां गृहीत्वा प्राप्ता इत्यर्थः। 'तपस्विनी दीना ( एतेन तथा एव प्राप्तः शाप इति सूच्यते )। ( 'प्रत्यादिष्टा' ( त, व्या )—प्रत्यादिष्टा नान्यथा' ( रा, वि,

म ))॥ 'स च अयं शापः। अवसीयते अनेन इति 'अवसानम्' अन्तकरणम् ( करणे ल्युट् )। 'अङ्गुलीयकदर्शनम् अवसानं यस्य तादृशः। यद्वा—अङ्गुलीयकदर्शनात् अवसानं यस्य तादृशः ( भावे ल्युट् )।

Notes

1. उपपन्नः—The reading अनुपपन्नः contradicts सम्मोहः। But सम्मोहः is a *fact* and cannot be denied. The sage only explains how the सम्मोह was caused.

राजा—( सोच्छ्वासम् )—एष वचनीयान्मुक्तोऽस्मि।

King—(*With a sigh of relief*)—Here, I am cleared of infamy.

शकुन्तला ( स्वगतम् )—दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो। ण उण सत्तं अत्ताणं सुमरेमि। अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो। जदो सहीहिं सन्दिट्ठम्हि भत्तुणो अङ्गुलीअअं दंसइदव्वं त्ति [ दिष्ट्या अकारणप्रत्यादेशी न आर्यपुत्रः। न पुनः शप्तमात्मानं स्मरामि। अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः। यतः सखीभिः सन्दिष्टास्मि भर्त्रे अङ्गुलीयकं दर्शयितव्यमिति।

Sakuntala (*To herself*)--O Joy! It is not that my husband disowned me without reason. But I do not remember myself as cursed. Or I must have come by the curse which was not known by me with my heart, a blank through separation. For I was told by the friend that the ring had to be shown to my husband.

उच्छ्वासेन उत्साहजनितश्वासत्यागेन सह। 'एषः अयमहं वचनीयात् निन्दायाः 'मुक्तोऽस्मि'। धर्मदारत्यागी अहं दुष्यन्तः, अस्य नाम न कर्तव्यम्, इति या मे निन्दासीत् सा अद्य अपगता।

शकुन्तलेति। 'दिष्ट्या' हर्षे। अहो आनन्दः। आर्यपुत्रो मे अविद्यमानं

कारणं यस्मिन् तद् यथा तथा 'प्रत्यादिशति' निराकरोति यस्माद्धेतो 'न'। अस्माद्धं ततः प्रत्यादिष्टा, कोऽस्य दोषः। 'न पुनः' किन्तु नाहम् 'आत्मानं शप्तं स्मरामि'। स्मृत्यभावे कारणमाह—'अथवा' पक्षान्तरे 'शापः प्राप्तः अपि तु विरहेण शून्यं' हृदयं यस्याः तथाविधया मया 'न विदितः' ज्ञातः। तत्रापि प्रमाणम्—'यतः' यस्मात् 'भर्त्रे' प्रत्यभिज्ञानमन्यराय आर्य्यपुत्राय 'अङ्गुलीयकं दर्शयितव्यमिति सखीभिः' आश्रमत्यागकाले सन्दिष्टास्मि। असति शापे ताभिरेवमुक्तं न स्यात्।

NOTES

1 वचनीयात—वच्+अनीयर् कर्मणि=वचनीयम that which has to be said The *say* here is a *censure*. Hence वचनीय means that for which one is *censured*, निन्दा तस्मात्। अपादाने पञ्चमी।

2. अकारण &c—अकारण is a बहुव्रीहि (See Tika). अकारण+प्रति+आ+दिश+णिनि कर्त्तरि साधुकारिणि। She was under the impression that the king had wantonly repudiated her. Now she sees what happened was not without reason. This gives her great relief and her mind is now perfectly clear to her husband.

मारीचः—वत्से, विदितार्थासि। तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्य्य.। पश्य—

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्त्तर्य्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा॥ ३२॥

Maricha—My child, thou art now informed of the facts. So now no resentment must be cherished by thee towards thy co worker in the path of virtue. Know that your were baffled in (had a rebuff from) your husband on his becoming rough by obstruction of memory through the curse; the obstruction having departed from him, yours surely is the ascendancy. Theimage

appears not on the surface of a mirror with its polish marred by dirt, but finds room or access easily when it is clear.

मारीच इति। 'विदित: ज्ञात: 'अर्थ:' वस्तु, वृत्तान्त इति यावत् यया तादृशी 'असि'। 'तत्' तस्मात् 'सह' त्वया एकत्र 'धर्म' चरति' यस्तं प्रति' पतिं प्रति इत्यर्थ: 'मन्यु:' कोप: 'न कार्य्य:'। अन्वय:—शापात् स्मृतिरोधरूक्षे भर्त्तरि प्रतिहता असि। अपेततमसि (भर्त्तरि) तव प्रभुता एव। छाया मलोपहतप्रसादे दर्पणतले न मूर्च्छति, शुद्धे तु सुलभावकाशा। व्याख्या—स्मृतिं रुणद्धि यत् यत्, स्मृतिरोधं स्मरणावरणकं तम इत्यर्थ:। 'शापात्' दुर्वाससा दत्तात् जातं यत् स्मृतिरोधं तम: तेन (यद्वा—स्मृते: 'रोधेन' विलोपेन हेतुना) 'रूक्षे' कर्कशे अमसृणे इत्यर्थ: 'भर्त्तरि' पत्यौ 'प्रतिहता' प्राप्तप्रतिघाता 'असि' 'अपेतं दूरे यतं 'तमो यस्मात्तस्मिन्पत्यौ 'तव प्रभुता प्रसर 'एव। यथा चलितमर्य्यागोलकमुखावचेषु प्रतिहतं सत् गमनात विरमति मसृणेषु पृष्ठेषु च चलति, तथा त्वमपि रूक्षे पत्यौ प्रतिहता, मसृणे तस्मिन्नधुना प्राप्तप्रसरा एव। दृष्टान्तमाह—'छाया' प्रतिबिम्ब' 'मलेन' श्यामिकया 'उपहत. नष्ट: प्रसादो' निर्मलता यस्य तस्मिन् 'दर्पणस्य मुकुरस्य 'तले' पृष्टे 'न मूर्च्छति न प्रसरति' 'शुद्धे तु' निमले पुनस्तस्मिन् 'सुलभ.' सुखप्राप्य: 'अवकाश:' स्थानं यया तादृशी भवति।

## NOTES

1. विदित:—विद्+क्तकर्मणि। The क्त is अतीते-*not* वर्त्तमाने। The rule 'मतिबुद्धिपूजार्थेभ्यश्च' *allows* वर्त्तमाने क्त but *does not* bar अतीते क्त। Hence we get here तृतीया कर्त्तरि in त्वया।

2. शापात् &c—(a) प्रतिहता—suggests collusion against a hard thing (b) स्मृतिरोध &c.—स्मृते: रोध: स्मृतिरोध—*Raghava.* But see below. Also see Tika. रूक्ष is *harsh* also *rugged.* (c) भर्त्तरि—अधिकरणे सप्तमी। (b) अपेत &c,—तमस् is मोह। The mention of तमस् here seems to support the explanation of स्मृतिरोध in the sense of तमस् as given in the Tika. (e) मलोप &c,—मल here also supports स्मृतिरोध in the sense of तमस्। (f) *Remarks*—The sloka ends in उपमा। The अलङ्कार is प्रतिवस्तूपमा according to दण्डिन्। The counter-part in the

two halves are—(1) भर्तृ and दर्पणतल, (2) स्मृतिरोध and मल (3) रुच and उपहतप्रसाद, (4) प्रतिहता असि and न मूर्च्छति, (5) अपेततमस् and शुद्ध, (6) प्रभूता and सुलभावकाशत्व, (7) त्वम् (understood) and छाया।

राजा—यथाह भगवान्।

King—As the Perfect One says.

मारीचः—वत्स, कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः।

Maricha—My son, I hope, this your boy born of Sakuntala, with his natal ceremony duly performed by me, has been greeted by you.

राजा—भगवन्, अत्र खलु मे वंशप्रतिष्ठा। ( बालं हस्तेन गृह्णाति )।

King—O Worshipful Sage, in him indeed lies the permanance of my race (*Takes the boy by the hand*).

मारीचः—तथाभाविनं चक्रवर्त्तिनमेनमवगच्छतु भवान्। पश्य—

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।
इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्॥ ३३॥

Maricha—Let your noble self know him as destined to became so, and to rule over the circle of kings. Note that, without a rival car, this boy, having crossed the sea in a car with a gliding motion through the absence of obstruction, will very soon conquer the earth with the seven islands. Here known as Sarvadamana through forcible taming of animals he will again acquire the name Bharata from sustaining the world.

वत्सेति। 'कच्चित्' इति कामप्रवेदने अव्ययम्। 'अस्माभिर्विधिवत्' यथाविधि 'अनुष्ठितं' जातकर्म यस्य तथाविधः एष पुत्रः शाकुन्तलेयः ( पुत्र इति सामान्यतोऽभिनन्दनहेतुः। अस्माभिरनुष्ठित इति तु विशेषोक्तिः) 'त्वया कच्चिदभिनन्दितः'। अभिनन्दितो भवतु इति कामो मे।

राजेति। 'अत्र खलु' अस्मिन् शाकुन्तलेये एव मे वंशस्य प्रतिष्ठा' स्थितिः। पुरुवंशसन्ततेरयं निदानम्। तत् अभिनन्दित इति किमु वक्तव्यम्।

मारीच इति। अवश्यं 'तथा भविष्यति' वंशप्रतिष्ठारूपो भविष्यति यस्मादृशम् अपि च 'चक्रवर्त्तिनं' सम्राजम् 'एनमवगच्छतु भवान्'। अन्वयः—अयम् अप्रतिरथः अनुद्घातस्तिमितगतिना रथेन तीर्णजलधिः पुरा सप्तद्वीपां वसुधा जयति, इह सत्त्वानां प्रसभदमनात् सर्वदमनः पुनर्लोकस्य भरणात् भरत इति आख्यां यास्यति। व्याख्या— 'अयम्' एष शाकुन्तलेयः अविद्यमानः प्रतिरथः प्रतियोद्धा यस्य तादृशो भूत्वा 'अनुद्घातेन उद्घाताभावात्, शत्रुकृतप्रतिरोधविरहात् इत्यर्थः 'स्तिमिता' स्थिरा, अविच्छिन्ना इति यावत् 'गतिः' यस्य तादृशेन 'रथेन तीर्णा लङ्घिता 'जलधयः' सप्तद्वीपपरिखाभूताः सप्तसागराः येन तथाविधः सन् 'पुरा' झटित्येव 'सप्तद्वीपा जम्बुप्लक्षादिसप्तसमेतां 'वसुधा' रत्नधात्रीं धरित्रीं 'जयति' जेष्यति ( पुरा इति भविष्यदासत्तौ अव्ययम्। तद्योगे 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट्)। 'इह' अस्मिन्नाश्रमे 'सत्त्वाना' प्राणिनां 'प्रसभं बलात् ( 'क्लीवे तु प्रसभं हठम्' ) 'दमनात् शासनाद्धेतोः सर्वदमनः' सर्वदमननामा अयं 'पुनः' भूयोऽपि 'लोकस्य भरणात् पृथिव्याः पोषणात् 'भरत इति आख्या नाम ( इतिना अभिहितत्वात् प्रथमा ) यास्यति लप्स्यते।

1. कच्चित् &c.—Welcome him because he is your son ( पुत्रः ) also congratulate him because he had the good fortune of having his natal ceremonies done by myself. (b) शाकुन्तलेयः—शकुन्तला: was really not a मानुषी, hence 'स्त्रीभ्यो ढक्' नदीमानुषीभ्यस्तन्नामिकाभ्यः' does not apply and we have ढक्। comp 'मानुषीषु कथं वा स्यात्' etc. in II.

2. (a) तथाभाविनम्—अवश्यं तथा भविष्यति इति तथा+भू+णिनि कर्त्तरि आवश्यके=तथाभावी। तम्। (b) पश्य—there is nothing to see here ;

राजा—भगवता कृतसंस्कारे सर्वमस्मिन् वयमाशास्महे ।

King—We expect all this in this boy whose purification has been performed by Thy Worshipful Self.

अदितिः—भअवं इमाए दुहिदिमणोरहसम्पत्तीए कण्वो वि दाव सुदवित्थारो करीअदु । दुहिदिवच्छला मेनआ इह एव्व उवचरन्ती चिट्ठइ [ भगवन्, अस्या दुहितृमनोरथसम्पत्तेः कण्वोऽपि तावत् श्रुतविस्तरः क्रियताम् । दुहितृवत्सला मेनका इहैव उपचरन्ती तिष्ठति ] ।

Aditi—Worshipful Sir, let Kanva too be made informed of the details of the fulfilment of his daughter's wish; Menaka attached to her daughter, is indeed staying here in attendance.

राजेति । 'भगवत्या कृतःसंस्कारो जातकर्मादि यस्य तस्मिन् 'अस्मिन् शाकुन्तलेये सर्वंवयम् आशास्महे' कामयामहे । सर्वाः सम्पदोऽस्य भगवत्संस्कारश्क्तिमूलाः सम्पत्स्यन्ते इत्याशय. ।

अदितिरिति । 'अस्या.' एतस्याः ( सम्पत्तिविशेषणमेतत् ) 'दुहितुः' यो मनोरथः' अभिलाष भर्त्तृप्रतिग्रहणरूपः तस्य या 'सम्पत्तिः' सिद्धिः तस्याः (विस्तरापेक्षया षष्ठो) श्रुत विस्तर.' व्याप्तोक्ति', आमूलवर्णनमित्यर्थः येन तादृश. ( वस्तर इत्यस्य सम्पत्त्या सापेक्षत्वेऽपि गमकत्वात् समासः ) क्रियताम्' सर्वमेतदामूलं कण्वाय निवेद्यतामिति भावः । 'दुहितरि' शकुन्तलायां 'वत्सला स्नेहवती 'मेनका इहैव उपचरन्ती मा सेवमाना 'तिष्ठति' । श्रुतविस्तरा एव सा इत्याशय. ।

NOTES

I. (a) दुहितृमनोरथसम्पत्तः श्रुतविस्तरः—This is equivalent to श्रुतदुहितृमनोरथसम्पात्तविस्तरः । (b) दुहितृ &c.—वत्स + लच् भत्सार्थे स्त्रियाम् = वत्सला affectionate. Hence, she too ought to be informed. But we are relieved of that duty, as she is here present and knows everything already.

शकुन्तला ( आत्मगतम् )—मणोगदं मे भणिदं भअवदोए [ मनोगतं मे भणितं भगवत्या ] ।

Sakuntala—(*Within herself*)—What is in my mind is said by her Worshipful self.

मारीचः—तपःप्रभावात् प्रत्यक्षं सर्वमेव तत्रभवतः ।

Maricha—Through the power of penance everything is indeed present to his noble self.

राजा—अतः खलु ममानतिक्रुद्धा मुनिः ।

King—Then [*Or*—hence] surely the sage is not very angry with me.

मारीचः—तथाप्यसौ प्रियमस्माभिरावेद्यः । कः कोऽत्र भोः ।

Maricha—Nevertheless we have to report the good news to him. Who is here Ho! Who is here?

( प्रविश्य ) शिष्यः—भगवन्नयमस्मि ।

(*Entering*) Disciple—Worshipful Sir, here I am,

मारीचः—गालव, इदानीमेव विहायसा गत्वा मम वचनात् तत्रभवते कण्वाय प्रियमावेदय, यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

Maricha—Galava, even now having gone by the sky in my words report the good news to noble Kanva that Sakuntala with her son has been accepted by Dushyanta who has recovered his recollection at the expiry of her curse.

शिष्यः—यदाज्ञापयति भगवन् ( निष्क्रान्तः ) ।

शकुन्तलेति । ( 'मनोगतम्' ( वि, त, न्या ]—'मनोरथ.' ( रा—म ) ॥ 'भणितम्' । [ ( वि )→ [ 'भणित:' ( रा म )—व्याहृतम्' ( त न्या, ) ॥

राजेति। 'अतः' अस्माद्धेतोः विदितसर्ववृत्तान्तत्वादित्यर्थः 'मम' सम्बन्धे 'अनतिक्रुद्धः खलु' लघुकोप एव।

मारीच इति। 'तथापि' विदितवृत्तान्तोऽपि 'असौ अस्माभिः प्रियम् आप्रष्टव्यः' 'प्रियमेतद्वृत्तं विदितं किं ते' इत्याभाषितव्यः। 'कः कोऽत्र ( इति न कस्कादिः। तेन सत्वाभावः इति प्रागव्याख्यातम् )॥

मारीच इति। 'इदानीमेव ( अविलम्बार्थम् ) 'विहायसा' आकाशेन ( एतेन शीघ्रगमनम् )। मम वचनात् मम वचनमवलम्ब्य ( ल्यब्लोपे पञ्चमी )। 'तस्याः 'शापः' तया प्रसक्तात्। तस्य 'निवृत्तौ' अवसाने 'स्मृतिमता' लब्धस्मृतिना दुष्यन्तेन।

NOTES

1. (a) तपःप्रभावात्—भू+घञ्, भावे: भावः। प्रकृष्टो भावः प्रभावः। प्रादितत्—। तपसः प्रभाव। तस्मात्। (b) प्रत्यक्षम्—प्रतिमुखत्वमक्ष्णाम् इति प्रति+अक्षि+टच्, समासान्त=प्रत्यक्षम् cognizance of the senses अव्ययी—। The टच् is by the Ganasutra—'प्रति ( पर ? ) समनुभ्योऽक्ष्णः.'। प्रत्यक्षम् अस्ति अस्य अस्मिन् वा इति प्रत्यक्ष+अच्, मत्वर्थे=प्रत्यक्षम cognizable by senses. Or take अक्ष as the word here, meaning इन्द्रिय। प्रतिगतम् अक्षाणि प्रत्यक्षम्। प्रादितत्—।

**मारीचः—वत्स, त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमारुह्य राजधानीं प्रतिष्ठस्व।**

Maricha—My son, you too with child and wife riding the car of your friend Indra proceed to your capital.

**राजा—यदाज्ञापयति भगवान्।**

King—What the Worshipful Sage commands.

**मारीचः—अपि च,**

**तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु,**
**त्वमपि विततयज्ञः स्वर्गिणः प्रीणयस्व।**
**युगशतपरिवर्त्तानेवमन्योऽन्यकृत्यैर्-**
**नयनतमुभयलोकानुग्रहश्लाघनीयैः॥ ३४॥**

,—Moreover, Let Indra be pouring heavily on your subjects: you too with protracted sacrifices gratify the denizers of the heaven. May you two thus pass a cycle of a hundred Yugas with mutual acts laudable because benefiting both the worlds.

मारीच इति। 'अपत्येन' शाकुन्तलेयेन दारैः' शकुन्तलया च (दारशब्दो बहुवे पुंसि) 'सह राजधानीं प्रतिष्ठस्व, प्रतिगच्छ (सापत्यदारः' (त, न्या)—'सापत्य—दारसहितः (वि)—'स्वापत्यदारसहितः' (रा—म)) ॥

अपि चेति—अन्वयः—विडौजा, तव प्रजासु प्राज्यवृष्टिर्भवतु. त्वमपि विततयज्ञः स्वर्गिणः प्रीणयस्व। एवम् उभयलोकानुग्रहश्लाघनीयैः अन्योन्यकृत्यैः युगशतपरिवर्त्तान् नयतम्। व्याख्या—'विट् व्यापकम् 'ओजः' प्रतापो यस्य स 'विडौजाः' इन्द्रः (पृषोदरादिः) 'तव प्रजासु' विषये 'प्राज्या प्रभूता 'वृष्टिः' वर्षणं यस्य तादृशो 'भवतु' (एतत् इन्द्रस्य कृत्यं मनुष्यलोकानुग्रहः)। त्वमपि 'वितता' अजस्र प्रक्रान्ता 'यज्ञा' येन तथाभूतः सन् स्वर्गिणः स्वर्गस्थान् सुरानित्यर्थः 'प्रीणयस्व' तर्पयस्व' (एतद् दुष्यन्तस्य कृत्यं देवलोकानुग्रहः। 'आत्मकृत्यं प्राक् दुष्यन्तः करिष्यते। तत्फलमिन्द्रकृत्यं वृष्टिपातः। एष न हि मुख्यतो देवानुग्रहबुद्ध्या यागः किन्तु यागेनतृप्तेषु देवेषु वृष्टिर्भविता तेन आत्मोपकार इति। ततः कर्तृगामिनि क्रियाफले णिचि प्रीणयतेरात्-न दम्)। 'एवम्' अनेन विधिना 'उभयोर्लोकयोः देवमानवलोकयोः अनुग्रहैः श्लाघनीयैः प्रशस्यैः (वृत्तिविषये उभशब्दात् नित्यमयच्प्रत्ययः)· 'अन्याऽन्यस्य' परस्परस्य 'कृत्यैः' कर्त्तव्यैः कर्मभिः 'युगानां सत्यत्रेतादीनां शतपरिवर्त्तान्' शतसंख्यकानि आवर्तनानि 'नयतम्' अतिवाहयतम् परस्परोपकारेण शतयुग जीवतम् इत्यर्थः। (मूलम् (वि)—'वज्रिणः प्रीणयालम्' (त, न्या)—'स्वर्गिणः प्रीणयालम्' (म)॥ 'परिवृत्तैः (त, न्या)। राघवस्तु एतं श्लोकं न पठति)।

## NOTES

1. (a) सापत्यदारः—अपत्यञ्च दाराश्च अपत्यदारौ; द्वन्द्वः। Here we do not get अपत्यदाराः in the *plural* because only things being mentioned we get dual by rule 'द्व्येकयोर्द्विवचनैकवचने'।'

The Lexicons direct बहुत्व of दार no doubt "भार्या जायाथ पुंभूम्नि दाराः—इत्यमरः। But they say nothing of compounds ending in दार। Hence in the absence of special provisions the general principle द्वेयकयोर्द्विवचन'—applies. This is the view of Nagesa who cites the example 'भर्तृदारयोः अप्रतेजसोः' in support. The compound is in the masculine owing to the rule 'परवल्लिङ्ग' द्वन्द्वतत्पुरुषयोः'। अपत्यदाराभ्यां सह। वह—। सापत्यदारसहित: and सापत्यदारसहित: are unnecessary circumlocutions, (b) प्रतिष्ठस्व—'समवप्रविभ्यः स्थ' इत्यात्मनेपदम्।

2. विड़ौजाः—वेवेष्टि इति वष ( ह्वादि ) क्विप कर्त्तरि=विड् meaning, व्यापकम् all—pervading. Now see Tika. The form expected is विडोजाः but पृषोदरादित्वात् विडौजा इति। Or विड्ति भिनत्ति रिपून इति विड+क कर्त्तरि विडम the cleaver of enemies. तादृशम् ओजो यस्य विडौजा.—no irregularity. A name of indra (b) प्राज्य &c.—आ समन्तात अज्यते इति आ+अञ्ज+क्यप् कर्मणि=आज्यम् clarified butter घृतम्। प्रकृष्टम् आज्यमस्मिन् प्राज्यम् very creamy. Primarly this applies to milk which is very rich. Next we have a double transference. First from *quality* we pass on to *quantity*; next form *milk* we transfer to *water*. Hence प्राज्य applied to rain, means *abundance*. प्राज्या वृष्टियस्य। Vidyasagar has प्राज्या वृष्टिः यस्मात। (e) युग &c.—परि+वृत+घञ् भावे परिवर्त्तः revolution. *शतसंख्याका परिवर्त्ताः आकपाथवादि। युगानां शतपरिवर्त्ताः। तान्। (b) अन्योऽन्य &c—कर्त्तव्यानि इति कृ+क्यप् कर्मणि कृत्यानि duties. अन्यस्य अन्यस्य कृत्यानि has अन्यस्य repeated owing to व्यतिहार (reciprocity) by the Varttikas 'कर्मव्यतिहार सर्वनाम्नो द्वे वाच्य समासवञ्च बहुलम्' and 'अन्यतरयोर्न समासवत्'। Next we get अन्यस्य अन्यस्य कृत्यानि the षष्ठी in the first अन्यस्य becoming स, by the Varttika 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः। Lastly compounding with कृत्यानि we have अन्योऽन्य-कृत्यानि। In this अन्यस does not drop स। This is an irregularity suggested by the word बहुलम् (बहुलग्रहणात् पूर्वपदस्याया विभक्तेर्नलुक)। (c) उभय &c,—उभौ लोकौ उभयलोकौ। the two

*Adopted by Prof. Gajendrakar

worlds, *i,e,* heaven and earth, उभ become 'उभय when compounded (See Tika), Also see our Notes under 'उभयलोक दूषणी in Kirat, *XIII*. तयो: अनुग्रह: उभयलोकानुग्रह: । तेन श्लाघनीयानि । त: ।

3. *Readings*—In वज्रिण: प्रीणयालम the अलम् is superfluous, and the षष्ठी in वज्रिण: is rather awkward to explain. स्वर्गिण: प्रीणयालम् gets rid of the षष्ठी no doubt but the अलम् is still there. These seem to illustrate attempts on the part of scribes to avoid the आत्मनेपद in प्रीणयस्व। But that ought to present no difficuly and does not justify interference with the text, As explained in the Tika, the आत्मनेपद is quite legitimate.

राजा—भगवन् यथाशक्ति श्रेयसे यतिष्ये ।

King—I shall try for the good to the utmost of my power, O Worshipful Sage.

मारीच:—वत्स, किं ते भूय: प्रियमुपहरामि ।

Maricha—My son, what further good can I bring unto you ?

राजा—अत: परमपि प्रियमस्ति ? तथाप्येतदस्तु (भरतवाक्यम् )—

प्रवर्ततां प्रकृतिहिताय पार्थिव:
सरस्वती श्रुतिमहतां महीयताम् ।
ममापि च क्षपयतु नीललोहित:
पुनर्भवं परिगतशक्तिरात्मभू: ॥ ३६ ॥

( निष्क्रान्ता: सर्वे ) ।

King—Does a favour exist greater than even this ? However let this be. (*The principal actor's benedictory speech*)—May the Lord of the earth endeavour for the good of the subjects. May the declaration of those that are eminent in the Vedas receive honour. And may the self-born Nila-Lohita (Siva) whose power is manifest all round, cancel my re-birth.

(*Exeunt all*).

राजेति। 'श्रेयसे' श्रेयो लब्धुमित्यर्थः। मत्कृत्यकरणात् मे श्रेयः। तदर्थं 'यथाशक्ति यतिष्ये यत्नं' करिष्यामि।

मारीच इति। 'ते तुभ्यं' तव वा 'भूयः पुनरपि 'किं प्रियम् उपहरामि' सम्पादयं करोमि।

राजेति। 'अतः' अस्मात् मनोरथसिद्धेः आशिषश्च 'परम्' अधिकम् 'अपि प्रियमस्ति किं—नास्त्येव इति काकुः। यद्यपि नास्ति 'तथापि इदमस्तु'। अत्र एवाभिनयसमाप्तिः। 'इदमस्तु' इतिहस्तसञ्चालनेन उक्त्वा राजरूपो नटो विरमति। 'भरतस्य' नटस्य', विरते राजरूपे नटे तदेव प्रविष्टस्य नटान्तरस्य इत्यर्थः 'वाक्यम्' सामाजिकेभ्यः आशीर्वचनम्। अन्वयः—पार्थिवः प्रकृतिहिताय प्रवर्त्तताम्, श्रुतिमहता सरस्वती महीयताम्, ममापि च परिगतशक्तिरात्मभूर्नीललोहितः पुनर्भवं क्षपयतु। व्याख्या— 'पार्थिवः' पृथिवीपतिः 'प्रकृतीनां प्रजानां 'हिताय' न त्वात्मतुष्टये प्रवर्त्ततां यतताम् राजभिः प्रजाः प्रोष्यन्ताम्। 'श्रुत्या' वेदज्ञानेन ये महान्तः तेषाम्, अनूचानानां ब्राह्मणानामित्यर्थः सरस्वती वाणी 'महीयतां' पूजां लभताम् (महीङ् पूजायां कण्ड्वादिरकर्मकः)। प्रजानाञ्च ब्राह्मणवाक्येषु श्रद्धा वर्द्धताम्। एवं राज्ञे प्रजाभ्यश्च आशिषमुक्त्वा आत्मनः आशास्ते—'ममापि च परिगता' अष्टाभिर्मूर्त्तिभिः परितो दृश्यमाना 'शक्तिः' यस्य तादृशः, सर्वथा आस्तिक्यबुद्धिविधायकः इति यावत् "आत्मनो भवति यः तादृशः। अतएव ततोऽप्यधिकोऽस्ति इति बुद्धेर्निरासकः, कण्ठे अर्द्धे आत्मभागे 'नीलः इतरार्द्धे देवीभागे 'लोहितः' रक्तः अर्द्धनारीश्वरः शिवः पुनर्भवं पुनर्जन्म 'क्षपयतु उच्छिनत्तु (श्रुतिमहतां' (म)—श्रुतिमहता (रा, वि)—'श्रुतिमहती (त, न्या)॥ 'महीयताम् (म)—'महीयताम्' (वि)—'महीयसाम्' (रा,— 'न हीयताम' (त, न्या)॥

## Notes

1. भरतवाक्यम्—The acting is over. The stage Manager now pronounces benediction upon the audience—वरप्रदानप्राप्ति. काव्यसंहारइति नटवाक्यम् भरतवाक्यम्। नाटकाभिनयसमाप्ति सामाजिकेभ्यः नटेन आशीर्दीयते इत्यर्थः :—*Raghava*. The word नट is avoided and भरत substituted for it, because the नट is not supposed to speak after the प्रस्तावना is over. The speech gives out the poet's own wishes (See *Introduction*).

2, (a) प्रवर्त्तताम्—Let him busy himself. (b) प्रकृति &c.—प्रकृतीनां हितं प्रकृतिहितम्। तस्मै। तादर्थ्ये चतुर्थी or प्रकृतिहितं कर्त्तुम् इति 'क्रियार्थोपपदस्य च कर्मणि स्थानिन इति कर्मणि चतुर्थी। (c) *Remark*—This line refers to the adoption of measures by prior kings detrimental to the welfare of the people (See *Introduction*). It is an आशिस् to the ruling king. (b) श्रुति &c—श्रुया or श्रुतौ महान्तः श्रुतिमहान्तः। तेषाम्। (e) सरस्वती &c—Hints at the scepticism and current unbelief in the Vedas. This is intended as a benediction to the people. Do you follow the Vedas and you all will prosper. (1) क्षपयतु—क्षप चुरादि+लोट तु। The root क्षप् does not appear in the धातुपाठ। It is however seen in authoritative writings (शिष्टप्रयोग)। Comp. 'क्षपयन्नमरीनपालभारो दवाग्निः'। Vamana says "लिङ्गाक्रिवित्तपिप्रभृतीनां धातुत्वं धातुगणस्यासमाप्तेः।"* । The धातुपाठ is only *illustrative* and not *exhaustive*. Now roots are constantly being introduced along with the development of the language, "बहवो हि धातुगण इति शब्दविद आचक्षते। तत एषां गणपाठोऽनुमतः शिष्टप्रयोगात्'—*Kavyalamkara Vritti*. *Or* क्षै क्षये (भ्वादि)+णिच्+लोट तु =क्षपयतु। घटादित्वात् ह्रस्वः। Bhattoji says क्षै क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः क्षपयति।' (3) पुनर्भवम्—भवतीति भवः (भू अच् कर्त्तरि) birth (See आत्मभवः' *Ante*) पुनः भूयो भवः पुनर्भवः। सुप्सुपा। तम्। (h) परिगत &c, परितो गता परिगता encompassing all round, प्रादिसत—। तादृशी शक्तिर्यस्य, *i.e.* His majesty is manifest all round. *i.e.* His existence is provided by *direct perception*. Or by His all-embracing (परिगत) power, let him frustrate the operation of my कर्म and cancel my rebirth) (i) आत्मभूः—Amara gives this as a proper name of ब्रह्मन्। Kalidasa here applies it to Siva This is evident from the word नीललोहितः। At the time of Kalidas therefore the word was still an ordinary attributive. The poet flourished long before the lexicographer [See *Introduction*]

*Remark on this verse adopted by Prof. Gajendragadkar. [See our Introduction).

2. *Reading*—[a] 'श्रुतमहताम' means श्रुतेन-शास्त्रेण महताम् [*Raghava*], and is almost the same as 'श्रुतिमहताम्' श्रुतिमहती mighty because of the support of the vedas. [b] महीयताम्' requires a णिच् after महीङ । Sense is not much altered. 'न हीयताम' is about the same. With 'महीयसाम्' construe—श्रुतिमहतां महीयसाम् उत कृष्टाना कवीनां सरस्वती प्रवर्तताम्—*Raghgva*. The construction is evidently faulty. First because a च is wanting. Secondly because with च supplied प्रकृतिहिताय will have to be taken with *both* पार्थिव and सरस्वती । It is doubtful the poet means it If he does, the meaning becomes पार्थिवः श्रुतिमहतां सरस्वती च प्रकृतिहिताय प्रवर्तताम्—A good deal of mischief is being done by the pernicious preaching of the learned who induce kings to adopt measures calculated to work great evil with the people. Let there cease and let the learned hence forth counsel salutary measures and the king adopt them. Remark—the metre is रुचिरा । ( चतुर्ग्रहैरिह रुचिरा जभसजगाः ) with the scheme—

ज भ स ज ग

⏑—⏑, —⏑⏑, ⏑⏑—, ⏑—⏑, ⏑—⏑—

सप्तमोऽङ्कः । The Seventh Act.

[ समाप्तमिदमभिज्ञानशकुन्तलं नाम नाटकम ]

## QUESTIONS

Q. 1.—Mark the characters of Dushyanta and sakuntala here, See Intro.

Also Read the following slokas for examination purposes—Acts I—1, 2. 3, 5, 6, 7, 8, 9, 10, 11, 14, 16, 17, 19, 20, 25, 26, 27, 28.

